## भारतीय ज्ञानपीठ काशी

### ज्ञानपीठ-ग्रन्थागार

"णाणं पयासयं"

कृपया—

( १ ) मैले हाथोंसे पुस्तकको स्पर्श न कीजिये। जिल्दपर काग़ज़ चढ़ा लीजिये।

( २ ) पन्ने सम्हाल कर उलटिये। थूकका प्रयोग न कीजिये।

( ३ ) निशानीके लिये पन्ने न मोड़िये, न कोई मोटी चीज़ रखिये। काग़ज़का टुकड़ा काफ़ी है।

( ४ ) हाशियोंपर निशान न बनाइये, न कुछ लिखिये।

( ५ ) खुली पुस्तक उलटकर न रखिये, न दोहरी करके पढ़िये।

( ६ ) पुस्तकको समयपर अवश्य लौटा दीजिये।

"पुस्तकें ज्ञानजननी हैं, इनकी विनय कीजिये"

॥ अर्हम् ॥

श्रीलब्धिसूरीश्वरजैनग्रन्थमालायाः षड्विंशतितमो मणिः [ २६ ]

तार्किकशिरोरत्नवादीन्द्रश्रीमल्लवादिक्षमाश्रमणविरचितम्

# द्वादशारनयचक्रम् ।

तर्कागमपारङ्गतश्रीसिंहसूरगणिवादिक्षमाश्रमणसन्दृब्धया
न्यायागमानुसारिणीव्याख्यया विभूषितम् ।



एतस्य
व्याख्याधारेण मूलं विशोध्य, विषमपदविवेचनाख्यव्याख्यया
अलङ्कृत्य च सम्पादकः संशोधकश्च

आचार्यश्रीमद्विजयलब्धिसूरीश्वरः ।



तस्य चायं

तृतीय-चतुर्थ-पञ्चम-षष्ठारात्मकः

## द्वितीयो विभागः ।

प्रकाशयिता

छाणीस्थ-श्रीलब्धिसूरीश्वरजैनग्रन्थमाला-सञ्चालकः
शाहेत्युपाह्वः जमनादासात्मजश्चन्दुलालः ।



प्रथमसंस्करणे ७५० प्रतयः

वीरसं० २४७७ आत्मसं० ५५ विक्रमसं० २००७

मूल्यं षड् रूप्यकाः

*Shri Labdhisurishwar Jain Granthamala No. 26*

# THE
# DVADASHARANAYACHAKRAM

OF

## SRI MALLAVADI KSHAMASRAMANA

WITH

## THE NYAYAGAMANUSARINI COMMENTARY

BY

SRI SIMHASURAGANI VADI KSHAMASRAMANA

## PART II

**Edited with**

**Critical Introduction, Index & Vishamapadavivechana**

BY

ACHARYA VIJAYA LABDHI SURI



PUBLISHED BY

CHANDULAL JAMNADAS SHAH



SECRETARY SHRI LABDHI SURISWAR JAIN GRANTHAMĀLĀ

CHHANI (BARODA DIST.)

*FIRST EDITION 750 COPIES*

*A. D. 1951*] **PRICE 6 RUPEES** [*V. S. 2007*

परतश्च जातिव्यक्त्यात्मकं तत्त्वमिति वैशेषिकमतं व्यवस्थाप्यते, जातिः शब्दार्थः, अन्त्यश्च पदं वाक्यार्थः, नैगमैकदेशो द्रव्यार्थः, द्रव्यत्वसामान्यविशेषसम्बन्धाद्द्रव्यमिति निरूपितम् । तत्र तृतीयभङ्गे मूलकृता परिगृहीतानि परेषां वचनानि—

'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यतेऽर्थसद्भावात्, यथा वृक्ष इति, अस्तीति गम्यते' ( महाभा० अ० २ पा० ३ सू० १ )

'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥' ( श्वेता० अ० ४ श्लो० ५ )

'सुखस्य दुःखस्यानुशयश्च वारेणायं सेवते तत्र तत्र । विशन्ति योनिं व्यतिरेकिणस्त्रयः अजस्तु जायामत्ति सत्यशुद्धः ॥' ( युक्तिदीपिकायां पूर्वार्धमात्रसाम्यपाठो दृश्यते । )

'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥' ( मुण्डको० उ० १-१ )

'णिच्छयओ सव्वलहुं' ( )

'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा' ( म० भा० वन० अ० ३० श्लो० २८ )

'एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीराः तेषां सुखं शाश्वतं नेतरेषाम् ॥' ( श्वे० ६-२० )

'दुविहा पण्णवणा पण्णत्ता, जीवपण्णवणा अजीवपण्णवणा च' ( पण्णव० सू० १ )

'किमिदं लोएत्ति पवुच्चई गोयमा ! जीवा चेव अजीवा चेव, एवं रयणप्पभा जाव ईसीपब्भारा समयावलियादि' ( स्था० २ उ० ४ )

## चतुर्थारे

'पृथिवीधातौ किं सत्यं ? विकल्पः, विकल्पे किं सत्यं ? ज्ञानं, ज्ञाने किं सत्यं ? ओम्, तदेतद्ब्रह्म' ( )

'जे एगणामे से बहुणामे' ( आ० १ श्रु० ३ अ० ४ उ०, सू० १२४ )

## पञ्चमारे

'न हीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्त्तमप्यवतिष्ठते वर्द्धते वा यावदनेन वर्द्धितव्यमपायेन वा युज्यते' ( महाभा० अ० ४ पा० १ सू० ३ )

'प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः, प्रत्ययपरैव प्रकृतिः' ( महाभा० अ० १ पा० १ सू० २ )

'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति' ( महाभा० अ० २ पा० ३ सू० १ )

'लः कर्मणि च०' ( पा० अ० ३ पा० ४ सू० ९६ )

'अत्थित्तं अत्थित्ते परिणमति' ( भग० श० १ उ० ३ सू० ३३ )

**षष्ठारे**

'इमाणं भन्ते !' इत्यादि यावत् 'संठाणवज्जवेहिं' (जीवा० ३-१-७८) इति ।

न्यायागमानुसारिणीव्याख्यायान्तु व्याख्याकृद्भिः प्रमाणवचनानि बहून्युपन्यस्तानि, तानि चैतद्ग्रन्थपर्यवेक्षणाय प्रवृत्तास्तत्त्वविदो निभालयन्त्येवेति नात्र पृथक् तान्युद्धृतानि ।

तदेवमन्तर्गर्भीकृतप्रचुरार्थरत्नाकरो नयचक्रशास्त्रमहोदधिः विकस्वरप्रतिभाप्रवहणशालिनां कोविदमतल्लिकानामपि दुरवगाहः क ! क वा पोतकल्पा मे मनीषा !, तथापि जैनजगद्दिनमणीनामाचार्यश्रीमद्विजयकमलसूरीश्वराणामस्मद्गुरुवराणां परमकृपारसमवलम्ब्यैवैतावदेतच्छास्त्रपरिशोधनकर्मानुष्ठितं मया, अत एव बहुलप्रयत्नसाध्येऽस्मिन् संशोधनकर्मणि समुचिताऽऽदर्शप्रत्यभावेन आवश्यककार्यान्तरव्यासङ्गेन सुप्राचीनदर्शनान्तरीयग्रन्थालाभेन अस्मन्मतिमान्द्येन सीसकाक्षरसंयोजकदोषेण संयोजिताक्षरविलोकने दृष्टिदोषेण चावस्थिताः अशुद्धीः गुणैकपक्षपातिनो विद्वद्वरेण्याः परित्यज्य सारतरास्वादनेन सुहिता भवन्त्वित्याशास्यते येन भाण्डागारेषु प्रच्छन्नस्यास्य नयचक्रशास्त्रस्य बहिः प्रकाशनश्रमो मदीयः सफलो भवेदिति निवेद्यते—

विजयलब्धिसूरिणा
पूना केम्प १०-१-१९५१



न्यायागमानुसारिणीसमलङ्कृतस्य

# द्वादशारनयचक्रस्य विस्तरतो विषयक्रमः

## [ द्वितीयो विभागः ]


इति द्वितीयविभागानुक्रमणिका

# तृतीयो विध्युभयारः

कमलदलविपुलनयना कमलमुखी कमलगर्भसमगौरी ।
कमले स्थिता भगवती ददातु श्रुतदेवता सिद्धिम् ॥ १ ॥

इदानीं विध्युभयारावसरः, यद्ययं विधिविधिनयारोक्तो भावो निर्दोषः स्यादरान्तरारम्भोऽनर्थकः स्यात्, स तु सदोष एवेति प्राप्तावसरं सदोषमुक्त्वोत्तरत्र विध्युभयारं निर्दिदिक्षुः प्राच्यदोषाभिधानार्थमेव तावदाह–

**अथ किं भवता प्रतिस्वमात्मनो ग्राहे तथा तथा या एता व्रीह्य[ङ्कु]रादिघटपटादिवस्तु-व्यापि[वृ]त्तयोऽवस्था उक्तास्तासु पुरुषादितत्त्वमवस्थालक्षणं ? उत [पु]रुषादिलक्षणास्ताः ?**

**अथ किं भवतेत्यादि** अथेत्यधिकारोपन्यासे, अनन्तरोक्तपुरुषादिवाददूषणाधिकारोपन्यासार्थोऽथशब्दः, किंशब्दः प्रश्ने, सामान्येन पुरुषनियतिकालस्वभावभावेष्वनन्तरोक्तेषु प्रतिस्वमात्मनो ग्राहे तथा तथा–तेन[1] तेन प्रकारेण पुरुष [ एव ] सुप्तादिचतुरवस्थः, नियतिरेव पूर्वपरादिक्रियाऽक्रियाविनियतावस्थारूपा, काल एव क्रमयौगपद्यभूतभवद्भाव्यवस्थातत्त्वः, स्वभाव एवात्मप्रविभागमात्रप्रतिविविक्तभवनभेदतत्त्वः, भाव एव स्वत्वा[2]स्वत्वाद्यविद्याविकल्पविनिर्मुक्तसत्तामात्रव्याप्यने[3]जनशब्दार्थज्ञानाद्यवस्थाविशेषजगत्तत्त्व इति, या एताः प्रतिस्वं न[ा]शेषाः, व्रीह्यङ्कुरादिघटपटादिवस्तुव्या[4]पिवृत्तयोऽवस्थास्तस्य तस्य पुरुषादिदर्शनस्य व्यापित्वप्रदर्शनार्थमुक्तास्तासु किं पुरुषादितत्त्वमवस्था-

अथ व्याख्याकारः प्राच्यकारिकया मङ्गलमारचयति–**कमलेति** । अथ वक्तव्यनिर्देशपूर्वकं सङ्गतिमाह–**इ[दा]नीमिति** । एतदेव स्पष्टीकरोति–**यद्ययमिति** पूर्वव्यावर्णितस्यापि विधिविधेरवस्थाऽवस्थावद्वैदोपादानस्यावश्यंभावात् परमशून्यक्षणिकाद्यनभिप्रेतवादप्रसङ्गाच्चासन्निधिव्यापत्तिभवनवृत्तिद्वैतवादः श्रेयान्, प्रकाशप्रवृत्तिनियमात्मभोग्यसत्त्वरजस्तमोमयप्रकृतिव्यापारस्योदासीनभोक्तृपुरुषोपभोगार्थं प्रवृत्तेरिति विधिर्विधीयते नियम्यते च न सर्वमेकात्मकं किं तर्हि सर्वं सर्वात्मकमिति, विधिविधिनियमनयदर्शनमस्यैव वा विकल्पान्तरविध्युभयनयदर्शनस्य प्रकृतिपुरुषयोर्गुणत्रयव्यवस्थानुपपत्तेः स्थित्युत्पत्तिविनाशात्मकत्वादसत्त्वापत्तेश्च भावद्वैतं भाव्यभवितृभेदात् प्रतिविशिष्टबुद्धिस्वतन्त्राधिष्ठात्रधिष्ठेयास्वतन्त्रत्वद्वैविध्यात्तदात्मकद्वैतमत्र प्रतिपाद्यमिति पूर्ववादस्य सदोषत्वात्तद्दोषमभिधातुमवसरोऽधुना प्राप्त इति भावः, भावः-पुरुषादिः, तत्समर्थकाभिप्रायविशेषो वा । अथ पूर्वनयदोषोपपादनं विहाय विप्रतिपत्तिप्रदर्शनं तेषां वादिनां तदन्यतरपक्षपरिग्रहव्यतिरेकेण गत्यभावप्रदर्शनार्थं दोषप्रदर्शनसौकर्यार्थं चेत्याशयेन विप्रतिपत्तिमुद्भावयति–**अथेति** । कोऽसावधिकार इत्यत्राह–**अनन्तरेति,** अधिकारः प्रतिपादनम् । स्वं स्वमिति प्रतिस्वं तत्र स्वपदविवक्षितमाह–**सामान्येनेति** । **पुरुषादि**वादिनां स्वस्वाभिप्रायमादर्शयति–**पुरुष एवेति** । चतुरवस्थास्वरूपः पुरुष एव तत्त्वं नान्यः कश्चिदित्यभिप्रायः, **आत्मप्रविभागेति,** भिन्नभिन्नभवनविशेषतया प्रतीयमानानि स्वभावस्यैव प्रविभागरूपाणि, न ततोऽत्यन्तभिन्नानीति भावः । **स्वत्वास्वत्वादीति** भावे स्वकीयत्वपरकीयत्वरूपा येऽविद्याविरचिता विकल्पास्तैर्विनिर्मुक्तः सन्मात्ररूपो व्यापकोऽनजनः निर्विकार एव सन् शब्दार्थज्ञानाद्यवस्थालक्षणविकारात्मकजगत्सर्जनादिस्वभाव इत्यर्थः । समुदितयावदवस्थालक्षणत्वं पुरुषादेर्निवर्तयितुमाह–**प्रतिस्वं नाशेषा इति** । अन्यथा वक्ष्यमाणसर्वाव्यापित्वानेकत्वा[दि]दोषा असङ्गता भवेयुरिति भावः । **तासु किमिति** ।

---

1 सि. क. तेन प्रका० । 2 सि. स्वत्वाद्य० । 3 सि. ष्यनेजन० । 4 सि. क. °व्याहि० ।

लक्षणम्? तस्या न सोऽस्ति व्यतिरिक्तः, यथा रूपादय एव घट इति । उत पुरुषादिलक्षणास्ताः? पुरुषाद्येव सत्यं न ताः काश्चिदवस्थाः, यथा घट एव रूपादयः, न रूपादयो नाम केचिद्घटव्यतिरेके-णेति, द्वयोर्विकल्पयोरन्यतरोऽवधार्यः ।

किञ्चातः—

5 **यद्यवस्थास्वात्मै न पुरुषाद्यात्मावस्थास्ताः, ततः पुरुषो नाम न कश्चिदिति रूपादिसमु-दयमात्रवाद एवायमन्यो युगपद्भाविरूपादिगुणसमुदयवादतुल्यो युगपदवस्थचतुरवस्था-समुदयवादः ।**

**यद्यवस्थास्वात्मेत्यादि** यावत् समुदयमात्रवाद एवायमन्यः, यदि पुरुषादि न किञ्चिदस्ति, अवस्थास्वात्मैव तल्लक्षणं ता एव सत्याः न पुरुषाद्यात्मावस्थाः—पुरुषादिस्वरूपास्ता अवस्था न भव-
10 न्तीत्यभ्युपगतं भवति, ततः पुरुषो नाम न कश्चिच्चतुरवस्थाव्यतिरिक्त इत्येतदापन्नम्, पुरुषादीति सामान्येनोपक्रम्य पुरुषो नामेति पुरुषस्यैवाभाववचनं विधिविधिनयविकल्पानां पुरुषस्य प्रथमत्वात्तद्रू-पणेनातिदेक्ष्यमाणत्वात् । पुरुषवादे प्रस्तुते कथं पुरुष एवासन्निन्यापाद्यते? इति चेदुच्यते यस्मात्स-मुदयिमात्रसमुदयाभ्युपगमात्, रूपादिसमुदयमात्रवाद एवायमन्यः, स एवायं बौद्धपरिकल्पितरूप-वेदनाविज्ञानसंस्कारसंज्ञास्कन्धसमुदायः पुरुषः, अङ्गुलीमुष्टिवत्, बलाकापंक्तिवत्, अक्षद्विचक्र-
15 पञ्जराणीयोऽक्षपंटयुगसमिलादिरथवदिति समुदयवादः, ईषन्मपीम्रक्षितकुक्कुटवत् पुरुषप्रत्याख्यान-

किं पुरुषादीनामवस्थात्मकत्वं—पुरुषस्यावस्था एवात्मानः, रूपादिसमुदयात्मकघटवत्, नावस्थाव्यतिरेकेण पुरुषः कश्चिदस्ति, अथवा घटात्मकरूपादिवत् पुरुषात्मिका एवावस्थाः अवस्थानां पुरुष एवात्मा न पुरुषव्यतिरेकेणावस्थाः काश्चन विद्यन्त इति विकल्पद्वयाभिप्रायः । अथावस्थास्वरूपत्वं पुरुषादेरिति प्रथमपक्षे परिगृहीते दोषमभिधातुमाह—**यद्यवस्थेति** । पुरुषादेरवस्था-स्वरूपत्वेऽवस्थास्वेव पुरुषो निलीनः, न पुरुषस्य किञ्चित् स्वस्वरूपमस्ति, किन्त्ववस्थास्वरूपेण सस्वरूपस्तथा चावस्थानामेव सत्यत्वेन
20 पुरुषादेरसत्यत्वमापद्यते पुरुषाद्यनात्मकत्वादवस्थानामतो न पुरुषः कश्चिदवस्थाव्यतिरिक्तोऽस्तीत्याशयमाविष्करोति—**यदीत्या-दिना** । ननु प्रथमं पुरुषादिपञ्चवादसाधारण्येन विकल्पमारचय्यान्यपक्षावधारणा कृता, अधुना तु केवलं पुरुषवादाश्रयेणैव न पुरुषो नाम कश्चिदिति विशेषपक्ष एव कथं दोष उच्यत इत्याशङ्क्य समाधिमाह—**पुरुषादीति** । विधिविधिनयेषु पञ्चसु पुरुषवा-दस्यैव प्रथमत्वात्तत्रोक्तदोषस्यैवेतरवादेष्वतिदेक्ष्यमाणत्वाच्च तथोक्तमिति भावः । ननु पुरुषवादे प्रक्रान्ते तदाश्रयेण दोषो वाच्यः, न
25 पुनस्तस्यैवाभावः प्रतिपादनीयः प्रक्रमभङ्गापत्तेरतः कथमेवमुच्यत इत्याशङ्कते—**पुरुषवाद इति** । किं कुर्मो वयं तस्याभ्युपगम एव तादृशः प्रत्येकाभिन्नसमुदायाश्रयणात्, अयमभ्युपगमः पुरुषं निराकरोत्येवेत्युत्तरयति—**यस्मादिति** । तथा चायं पुरुषवादो रूपादिपञ्चस्कन्धात्मकात्मवादिबौद्धवादसदृश इत्याह—**रूपादीति** । बौद्धवादो हि त्रिधा वादिवैचित्र्यात्, केचित् सर्वास्तित्व-वादिनः वैभाषिकसौत्रान्तिकाः, केचिद्विज्ञानास्तित्वमात्रवादिनो योगाचाराः, केचिच्च सर्वशून्यवादिनो माध्यमिकाः, तत्र सर्वा-स्तित्ववादे बाह्यमान्तरञ्चेति द्विविधं वस्तु, आद्यमणुहेतुकं भूतं भौतिकञ्च, अपरं स्कन्धहेतुकं चित्तं चैत्तञ्च, एतानि सर्वव्यवहा-
30 रास्पदभावेन संहन्यन्ते, तत्र प्रकृतप्रस्तावात् स्कन्धहेतुकसमुदयवादं दर्शयति—**रूपेति** । सविषयाणीन्द्रियाणि रूपस्कन्धः, प्रियाप्रियानुभवविषयस्पर्शे या सुखदुःखतद्रहितविशेषावस्था चित्तस्य जायते स वेदनास्कन्धः, अहमित्याकारो रूपादिविषय इन्द्रियादिजन्यो वा दण्डायमानो विज्ञानस्कन्धः, संस्कारस्कन्धो रागादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ च, सवि-कल्पप्रत्ययः संज्ञासंसर्गयोग्यप्रतिभासः संज्ञास्कन्धः, यथा डित्थः कुण्डली गौरो ब्राह्मणो गच्छतीत्येवंजातीयकः, तदेतेषां समुदायः पुरुषो न कश्चिदतिरिक्त इति भावः । भिन्नसमुदायाभावे निदर्शनान्याह—**अङ्गुलीति** । **ईषदिति** स्तोकमषीलेपनेन

१ सि. क. °पर° ।

फलोऽन्यवदाभाति, सुप्तसुप्तजागरत्प्रबुद्धावस्थासंज्ञाभेदात्, युगपद्भाविरूपादिगुणसमुदयवादतुल्यो युगपदवस्थचतुरवस्थासमुदयवाद इति, एष देशभिन्नरूपादिसमुदयवादतुल्यः।

नायं देशभिन्नरूपादिसमुदयवादतुल्य एव, किं तर्हि? कालभेदभिन्नायुगपद्भाविसततसंवृत्तजननिधननामरूपवादतुल्यक्षणिकवादोऽपि यस्मात्—

**सुप्तादीयत्वप्रतिपादनार्थाभ्युपगतमुक्तिक्रमवदयुगपदवस्थावृत्तेः क्षणिकवादः, वासोवत्।** 5

(सुप्तादीति) सुप्तादीयत्वप्रतिपादनार्थाभ्युपगतमुक्तिक्रमवदयुगपदवस्थावृत्तेः क्षणिकवाद इति, सुप्तसुप्तजाग्रत्परमविनिद्रावस्थाविशुद्धिक्रमान्यथावृत्त्यभ्युपगमादवस्थाक्षयोऽन्यथात्वम्, अन्ते क्षयदर्शनादादौ क्षयोऽनुमेयोऽवस्थानामिति क्षणिकवादः, को दृष्टान्तः? वासोवत्, यथा वस्त्रं क्षणे क्षणे जीर्यज्जीर्यदन्ते विशीर्यते तथाऽवस्था अपि।

न केवलं समुदयक्षणिकवादावेव किं तर्हि— 10

**शून्यवादोऽपि, तद्यथा चतसृणां न ज्ञानव्यतिरिक्तत्वं, तथातथा त्वयैव ज्ञानात्मना रूपरसादिघटादिसृष्टेः प्रतिपादनात्, सा च कल्पनाज्ञानं तन्मात्रमेव सत्यं, न रूपादि किञ्चित्, स्वप्नवदिति विज्ञानव्यतिरिक्तार्थशून्यवादः, न वा विज्ञानमात्रं निर्विकल्पत्वाश्रयस्य शून्यत्वापत्तेः।**

(**शून्येति**) शून्यवादोऽपि, तद्यथा चतसृणां नेत्यादि, यथा पुरुषवादिना चतस्रोऽवस्थाः पृथक् परिगृह्य तास्वपि ज्ञानमेव सुप्तत्वात् सुप्तपुरुषवत्, सुषुप्तत्वान्मदिरामत्तवदित्यादिना प्रतिपादितम्, 15 तथा तथा रूपाद्यमूर्त्तमूर्त्तापत्त्या त्वयैव रूपणाद्रूपमिति च ज्ञानात्मना चैतन्यस्वरूपादनपेता रूपरसादिघटादिसृष्टिश्चानेकविधोपपादिता, सा च कल्पनाज्ञानं तन्मात्रमेव सत्यं, न रूपादि किञ्चित्तदाभासज्ञानबहिर्भूतं स्वप्नवत्, यथा स्वप्ने सिंहाद्याभासज्ञानमात्रं न सिंहादिः कश्चिद्बहिर्भूतस्तथा जाग्रद्विज्ञानमपि ज्ञानमात्रमेव, ग्रामारामस्त्रीपुरुषादिरूपानाकारज्ञानमात्रम्, तद्व्यतिरिक्तार्थशून्यस्वप्न-

---

यथा कुक्कुटोऽन्यो न भवति तथा संज्ञान्तरकरणेन पुरुषवादो न समुदयवादादन्यो भवति, केवलमन्यवदेवाभातीति भावः। 20 चतसृणामवस्थानां देशभेदेन सह वृत्तित्वाभ्युपगमेऽयं वादो देशभिन्नरूपादिसमुदयवादतुल्य इत्याह-**युगपदिति**। क्षणमात्रस्थायिवस्तुस्वीकर्तृक्षणिकवादतुल्यतामस्य दर्शयति-**कालभेदेति**। अथ क्षणिकवादतुल्यतासमर्थनाय प्रथममवस्थाविनाशमादर्शयति-**सुप्तेति** सुप्तादीनामवस्थानां विशुद्धिविशेषेण विभिन्नप्रकारेण वृत्तेरभ्युपगतत्वाद्विशुद्धिभेदेनावस्थाभेदस्यावश्यकतया नैकावस्था नित्या संभवति, विशिष्टावस्थाकाले पूर्वावस्थाविनाशात्, तस्मादन्ते क्षयदर्शनेन ततः पूर्वपूर्वमपि वासोवत् क्षणे क्षणे विनाशोऽवश्यं वाच्य इत्ययमपि वादः क्षणिकवाद एवेति भावः, **शून्यवादोऽपीति**, विज्ञानव्यतिरिक्तशून्यवादः 25 सर्वशून्यवादश्चेत्यर्थः। पुरुषस्य चतस्रोऽप्यवस्था ज्ञानात्मरूपा एवेति दर्शयति-**यथेति** पुरुषस्य रूपादिलक्षणमूर्तस्वरूपताऽमूर्तस्वरूपता च रूपणादिरूपतया चैतन्यलक्षणादनपेतैव, प्रागुपवर्णितत्वाद्रूपादिज्ञानस्य चाविद्याविजृम्भितत्वेन कल्पनाज्ञानरूपतयाऽसत्यत्वाज्ज्ञानस्यैव च सत्यत्वात् तन्मात्रमेव, रूपादयश्च स्वप्ने सिंहाद्याभासवदाभासमात्रमतो विज्ञानव्यतिरिक्तवस्तुशून्योऽयं वाद इति भावः। दृष्टान्तमाह-**स्वप्नवदिति** यो यः प्रत्ययः स सर्वो बाह्यानालम्बनो यथा स्वप्नप्रत्ययः, यथाहि स्वप्नमायादिप्रत्यया विनैव बाह्येनार्थेन ग्राह्यग्राहकाकारा भवन्ति, एवं जागरितप्रत्यया अपि प्रत्ययत्वाद्बाह्यानालम्बना इति 30 भावः। अस्य वादस्य विज्ञानवादत्वमपि न सम्भवति निर्विकल्पकात्मकस्य तथाविधज्ञानस्यागोचरस्य सद्भावे प्रमाणविरहाच्छू-

---

१ सि. क. °भिन्न°। २ सि. क. °क्रमवस्त्व°। ३ सि. क. चतुर्णां।

विज्ञानमपहेत्येतदापन्नं, अतः कल्पनाज्ञानमात्रं सत्यमिति विज्ञानव्यतिरिक्तार्थशून्यवादः, [न] विज्ञानमात्रं वा, अस्यापि ग्राह्यग्राहकविकल्पातीतनिर्विकल्पत्वाश्रयस्य शून्यत्वापत्तेः ।

पुरुषवाद्याह—

**अचिन्त्यमेवेदं चिन्त्यते मया हि पुरुष एवेदमित्यवधार्योक्तं नोक्तमिदमेव पुरुष इति,**
5 **ऊर्ध्वमधस्तिर्यक् क्वचित्त्वैकः पुरुषः, अनतिरिक्तपरापराणीयोज्यायोरूपात्मकत्वात्, वृक्षवदिति ।**

**अचिन्त्यमेवेदं चिन्त्यत इत्यादि,** मद्वचनापरिज्ञानादसम्बद्धं दूषणम्, मया हि पुरुष एवेदमित्यवधार्योक्तम्, नोक्तमिदमेव पुरुष इति, प्रत्यक्षाः सुप्ताद्यवस्था उद्दिश्येति । अत्र प्रयोगः ऊर्ध्वमधस्तिर्यक् क्वचित्त्वैकः—एक एव व्यवस्थितः पुरुष इति प्रतिज्ञा, अनतिरिक्तपरापराणीयो-
10 ज्यायोरूपात्मकत्वात् वृक्षवत्, यथोक्तम् 'यस्मात् परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति किञ्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥' (श्वेता० उ० अ० ३ श्लो० ९) इति, यस्मादन्यत् परं नास्त्यनन्यत्, अद्वैतमेवेत्यर्थः, अथवा यस्मात् परं प्रधानं प्रकृष्टमपरं प्रकृष्टमन्यद्वा नास्ति, ऊर्द्ध्वाधस्तिर्यक्परापरविभागाभावादविभागात्मना तस्यैव व्यवस्थानात्, नाणीयो न ज्यायोऽस्ति किञ्चिदिति सूक्ष्मस्थूलविभागाभावात् तादृूप्येणाविभक्तस्यापि तस्यैवावस्थाना-
15 दिति शेषं गतार्थम् ।

अत्रोच्यते—

**नन्वयमनेकावस्थामात्रस्वतत्त्व एव व्यवस्थापितः, चैतन्यानतिवृत्तिवर्तनात्, तच्च विनिद्रावस्थातोऽनन्यदिति विनिद्रावस्थालक्षण एव पुरुषः, आत्यन्तिकनिद्राविगमरूपनिरूप्यत्वात्, विनिद्रावस्थास्वात्मवत् ।**

20 **नन्वयमित्यादि,** ननु त्वयाऽयं पुरुषोऽवस्थात्मकत्वमनतिक्रामन्ननेकावस्थामात्रस्वतत्त्व एव व्यवस्थापितः—चतुरवस्थास्वरूपोपवर्णनद्वारेणैव तन्निरूपणादवस्थास्वात्मक एवासाविति, तत्रापि च

---

न्यतया शून्यवाद एवायमित्याह—**न विज्ञानमात्रं वेति** । ननु त्वया मन्मते ये दोषा प्रदर्शितास्ते सर्वे मद्वचनापरिज्ञानविजृम्भिता एव, न हि मयाऽवस्था एव पुरुष इत्युच्यते येनेमे दोषाः प्रसजेरन्, किन्तु पुरुष एवेदं सर्वमित्यवधार्यत इत्याह—**अचिन्त्यमेवेदमिति** । पुरुषोद्देशेन हि मया सर्वत्वमतिदिष्टं न तु प्रत्यक्षप्रसिद्धसुप्ताद्यवस्थोद्देशेन पुरुषातिदेशः
25 क्रियत इत्याह—**मया हीति** । पुरुषस्य सर्वात्मकतासाधकमनुमानप्रयोगं वक्ति—**अत्र प्रयोग इति** । पुरुषं पक्षीकृत्य परिदृश्यमानविभागाभिन्नतत्त्वात्मकता साध्यते, तत्त्वैकः तत्त्वञ्चासावेकश्च तत्त्वैकः, अभिन्नतत्त्वात्मक इत्यर्थः, ऊर्ध्वमधस्तिर्यग्वा सर्वत्राभिन्नतया व्यवस्थितः पुरुष इति भावः । साधनमाह—**अनतिरिक्तेति** यथाऽनेकात्मको वृक्षः शाखा स्कन्धो मूलञ्च तथैवानतिरिक्तानि परापराणीयोज्यायोरूपाणि तदात्मकः पुरुष एवेत्यर्थः, यदात्मको यः स स एवेति व्याप्तेः । अत्रार्थे उपनिषदं प्रमाणयत्यप्रयोजकतानिवारणाय—**यथोक्तमिति** । अथ पुरुष एव सर्वमित्यवधारणं नोपपद्यते, अवस्थाद्वारेणैव तत्स्वरूपा-
30 परित्यागेन पुरुषस्य निरूपणादवस्थैव तस्य स्वात्मेत्युत्तरयति—**नन्वयमिति** । सुप्ताद्यवस्थास्वात्मतयापि निरूपणसम्भवे बहुकृत्वः पुरुषे निरवच्छिन्नज्ञानद्वारेणैव पुरुषनिरूपणदर्शनाद्विनिद्रावस्थालक्षण एवासावित्याह—**तत्रापि चेति** । सर्वास्ववस्थासु ज्ञानव्यापि-

वि ...षेणैकावस्थामात्रस्वतत्त्वः—तु... इत्यर्थः । तत्कुत इति चेत् चैतन्यानति... सिवर्तनात्, सर्वत्र ज्ञानमयोऽसौ पुरुष इति प्रतिज्ञाय तद्व्याप्तिप्रदर्शनार्थं चैतन्यमेव वृक्ष[ तृणश...न्तकुड्य ]पुरुषादि सुप्तत्वात् सुषुप्तत्वाज्जागरितत्वात् सुप्तादिपुरुषवदिति वर्णितं चैतन्यमेव, तच्च विनिद्रावस्थातोऽनन्यत्—तच्च चैतन्यं विनिद्रावस्थातोऽनन्यत्-तच्चैतन्यं विनिद्रावस्थैव । यथोक्तम् 'पुरुषस्य न केवलोदयः पशवश्चाप्यनिवृत्तकेवलाः । न च सत्यपि केवले प्रभुस्तव चिन्त्येयमचिन्त्यवद्गतिः ॥' ( **सिद्धसे० द्वा० ४ श्लो० २२** ) इति, इतिशब्दो हेत्वर्थे, अस्माद्धेतोर्विनिद्रावस्थालक्षण एव पुरुषः, एतदेवास्य लक्षणं 'उपयोगो लक्षणम्' ( **तत्त्वार्थ० २-८** ) इति वचनात्, एतत् प्रतिज्ञामात्रम् । अत्र हेतुरुच्यते—आत्यन्तिकानिद्राविगमरूपनिरूप्यत्वात्—सर्वत्र सर्वदा वाऽन्तमतीतोऽत्यन्तः, तत्र भव आत्यन्तिकः निद्राविगमः स एव रूपं—तत्त्वं तेन तत्त्वेन निरूप्यत्वात्, यथा निरूपितं पुरुषवादिनैव सर्वं सर्वत्र सदा सर्वथा चेतनात्मकमेवेति सिद्धो हेतुः, को दृष्टान्तः ? विनिद्रावस्थास्वात्मवत्, यथा विनिद्रावस्था चतुर्थी शुद्धचैतन्यात्मानं नातिवर्तते प्रोक्तरूपेण निरूप्यत्वात् पुरुषः, तथा शेषावस्थास्वपि तद्धर्मतामनतिवृत्त्यैवेति, एवमेषा विनिद्रावस्थैव सर्वत्रापादिता ।

**न ह्यसावितरात्मिका, स्ववृत्तित्यागापत्तेः सा तन्मात्रैव, तन्मात्रत्वे तु पुरुषस्यापि तदवस्थामात्रत्वम्, तस्माज्जाग्रदाद्यवस्थानात्मकत्वादसर्वगतत्वमिति ।**

( **न हीति** ) न ह्यसावितरात्मिका यथा सुप्ताद्यवस्था तुरीयावस्थैव न तथा सा तदात्मिका, कस्मात् ? स्ववृत्तित्यागापत्तेः—यदि सा विनिद्रावस्था सुप्ताद्यवस्थापि स्यात्ततस्तया विशुद्धा स्ववृत्तिस्त्यक्ता

---

तादर्शनाद्विनिद्रावस्थालक्षणं चैतन्यमेव प्रधानं लक्षणमित्याशयेनाह—**चैतन्येति** । वृक्षतृणशकुन्तानि ज्ञानमेव सुप्तत्वात्, सुप्तपुरुषवत्, कुड्यादिज्ञानमेव सुषुप्तत्वात् सुषुप्तपुरुषवत् पुरुषश्चैतन्यमेव जागरितत्वादित्याद्यनुमानान्यादर्शयति—**वृक्षतृणेति** । तदपि चैतन्यं विनिद्रावस्थास्वरूपमेव किञ्चिद्विशिष्टमित्याह—**तच्चेति** । सर्वत्र विनिद्रावस्थापरपर्यायकेवलज्ञानसत्त्वे प्रमाणमाह **यथोक्तमिति** । हे प्रभो ! केवलज्ञानस्य सत्तया जीवमात्रसाधारण्येन तव तत्प्राप्तिरचिन्त्यवच्च चिन्त्येति निश्चयनयतः स्तुतिरियम् । **उपयोग इति,** उपयोगो लक्षणं जीवस्य, उपयोगो ज्ञानदर्शनयोः स्वविषयसीमानुल्लंघनेन धारणम्, अथवा ज्ञानदर्शनयोः विषयावधानाभिमुखता योगः, समीपवर्ती योग उपयोगः, तेन हि लक्ष्यते जीवः, सामान्यविशेषाववबोधदर्शनाद्धि निश्चीयतेऽत्रात्माऽस्तीति, न चास्ति कश्चित् तादृशो जीवो यस्य साकारानाकारोपयोगौ न भवतोऽतोऽनपायीदं लक्षणं जन्तोरिति वचनाभिप्रायः । **एतदिति,** विनिद्रावस्थालक्षण एव पुरुषः, एतदेवास्य लक्षणमित्येतदित्यर्थः, लक्षणं हि द्विविधं स्वरूपलक्षणं तटस्थलक्षणञ्चेति स्वरूपमेव लक्षणं स्वरूपलक्षणम्, स्वस्य स्ववृत्तित्वाभावेऽपि स्वस्यैव स्वापेक्षया धर्मधर्मिभावकल्पनया लक्षणत्वसम्भवात्, तथाविधं लक्षणं पुरुषस्य विनिद्रावस्थात्मकं चैतन्यम्, तटस्थलक्षणं तु यावल्लक्ष्यकालमनवस्थितत्वे सति व्यावर्तकम्, यथा गन्धवत्त्वं पृथिवीलक्षणमुत्पत्तिकाले घटादिषु गन्धाभावात् पुरुषस्य तथाविधं लक्षणन्त्वग्रे वक्ष्यते इति बोध्यम् । तस्य स्वरूपलक्षणत्वे हेतुमाह—**आत्यन्तिकेति,** सर्वदेशकालावच्छेदेन नाशरहितेन निद्राविगमेन निरूप्यत्वादित्यर्थः । निर्विशेषचिद्रूपतायाः सर्वास्ववस्थासु सदाऽभ्युपगमान्नासिद्धत्वं हेतोरित्याह—**यथेति** । दृष्टान्तं संघटयति—**यथा विनिद्रावस्थेति,** यथा विनिद्रावस्था नातिवर्तते स्वात्मानं प्रोक्तहेतोस्तथैव पुरुषोऽपि विनिद्रावस्थास्वात्मानं नातिवर्तते शेषास्वप्यवस्थास्वित्यर्थः । सा यदि स्वात्मानमतिवर्तेत तर्हि तस्याः सुप्ताद्यवस्थास्वात्मकतया विशुद्धता न भवेदित्याह—**न ह्यसाविति** । स्ववृत्तेः परित्यागे दोषमाह—

१ सि. क. वृक्षतृण...न्त० ।

स्यात्, न त्वस्ति स्ववृत्तित्यागोऽवस्थासङ्करस्वरूपनिर्णयाभावादिदोषात्, अतः सा तन्मात्रैव, तस्याश्च तन्मात्रत्वे तु पुरुषस्यापि तदवस्थामात्रत्वम्, अतो विनिद्रावस्थामात्रत्वाज्जाग्रदाद्यवस्थानात्मकत्वम्, तस्माज्जाग्रदाद्यवस्थानात्मकत्वाद्विनिद्रावस्थामात्रत्वात् सुप्तादि[ ष्टष्टा ]वस्थास्ववृत्तेरसर्वगतत्वमिति चाव्यापित्वदोषः पुरुषकार[ ण ]वादस्य ।

5 अथ विनिद्रावस्थालक्षणोऽपि पुरुषः सर्वत्वात् न विनिद्रावस्थामात्र एव ततो विनिद्रावस्थापि न विनिद्रावस्थामात्रैव स्यात्, विनिद्रावस्थालक्षणत्वात् पुरुषस्वात्मवत् ।

**अथ विनिद्रेत्यादि,** मा भून् पुरुषासर्वगतत्वदोष इति विनिद्रावस्थालक्षणोऽपि सन् पुरुषश्च सर्वत्वान्न विनिद्रावस्थामात्र एव, किं तर्हि ? सुप्तादिवृत्तिरपीतीष्यते ततो विनिद्रावस्थापि विनिद्रावस्थात्मिका सती सर्वत्वादेव न विनिद्रावस्थामात्रैव स्यात्—सुप्ताद्यवस्थापि स्यादित्यर्थः, हेतुर्विनिद्रावस्थालक्षण-
10 त्वात्, पुरुषस्वात्मवत्, यथा पुरुषोऽपि विनिद्रावस्थालक्षणत्वात् सर्वगत इतीष्यते तथा विनिद्रावस्थाऽऽत्मस्थैव सर्वगता स्यात् विनिद्रावस्थालक्षणा हि सापीति ।

ततश्च प्रत्यवस्थं विनिद्रावस्थावृत्तिः तस्या एवाविशेषेण सर्वगतत्वात् सुषुप्तावस्थापि तृणादि सर्वगतमिति किं पुरुषैकत्वप्रकल्पनया ?

**ततश्चेत्यादि,** एवञ्च सत्यन्योऽपि दोषः अवस्थामवस्थां प्रति प्रत्यवस्थं विनिद्रावस्थावृत्तिः सुप्त-
15 सुषुप्तजाग्रदवस्थास्वपि, तस्या एव—विनिद्रावस्थाया एवाविशेषेण सर्वगतत्वात् सुषुप्तावस्थापि तृणादि सर्वगतं स्यात्, सर्वात्मकत्वाद्विनिद्रावस्थावत् सर्वात्मकत्वं विनिद्रावस्थालक्षणत्वात् पुरुषवदित्युक्तम्, तस्मात्तृणाद्यपि सर्वगतमिति किं पुरुषैकत्वप्रकल्पनया ? कः पुरुषवादविशेषाभिमानः ? तृणमेवेदं सर्वम् यद्भूतं यच्च भाव्यम्, यस्मात् परं नापरमस्ति किञ्चिदित्यादि, तेनेदं पूर्णं तृणेन सर्वमिति च कस्मान्न पठ्यते ? इति ।

20 किञ्चान्यत्—

अलक्षणत्वाच्च विनिद्रावस्थाया अभावः स्यात्, स्वात्मन्यस्थितत्वात् खपुष्पवत्, ततश्च तत्तत्त्वचतुरवस्थसर्वात्मकपुरुषाभावः, तदभावे किमवशिष्यते, ?

**अवस्थेति,** यदि विनिद्रावस्था शेषावस्थात्मिकापि भवेत्तर्हि सैव शेषावस्था इति कृत्वा सङ्कीर्णा स्यात्, अत एव च विनिद्रावस्थायाः स्वरूपनिर्णयोऽपि न भवेत् विशुद्धताया अभावादिति भावः । एवञ्च विनिद्रावस्थायाः स्वस्वरूपमात्र एवावस्थाने
25 पुरुषोऽपि विनिद्रावस्थामात्र एव, तस्य तत्स्वरूपलक्षणत्वादित्याशयेनाह—**अतः सेति** । एतेन किं स्यादित्यत्राह—**अत इति** पुरुषः सर्वगतो न स्यात् विनिद्रावस्थामात्रस्वरूपत्वात् विनिद्रायाश्चेतरात्मकत्वाभावात्ततो न पुरुषो जाग्रदाद्यवस्थात्मक इत्यव्यापीति भावः । यदि पुरुषस्य विनिद्रावस्थात्मकत्वे सत्यपीतरावस्थात्मकत्वमपीष्यते तर्हि तत्स्वरूपभूतविनिद्रावस्थापि विनिद्रावस्थामात्र एव न भवेत् किन्तु सर्वगता भवेदित्याह—**अथेति** । **हेतुरिति** । विनिद्रावस्था न विनिद्रावस्थामात्रैव, विनिद्रावस्थालक्षणत्वात् पुरुषस्वात्मवदिति मानमिति भावः । दोषान्तराभिधानायाह—**ततश्चेति** विनिद्रावस्था स्वात्मस्था सती सुप्तावस्थात्मिकापि
30 सुषुप्तावस्थात्मिकाऽपि जाग्रदवस्थात्मिकाऽपि, एवञ्च सुषुप्तावस्थापि तृणादिरूपा विनिद्रावस्थात्मकत्वात् सर्वात्मकतया सर्वगता भवेत्, ततश्च तृणाद्येवेदं सर्वमित्यतिदेश्यं स्यात्, तथा च पुरुषस्यैवैकस्य सर्वगततया प्रकल्पनमनर्थकं निष्प्रयोजनत्वादिति भावः । **सुषुप्तावस्थापीति** । दृढतरदोषप्रदर्शनाय पुरुषमात्रविशेषावस्थारूपयोर्जाग्रत्सुप्तावस्थयोः परित्यागः कृतः ।

१ सि. क. °दृष्टमेवा० ।

**अलक्षणत्वाच्चेत्यादि**, लक्षणं विशेष्यस्यार्थान्तरादवच्छिद्य स्वरूपेऽवस्थापकं नीलोत्पलवत्, तत्पुनः स्वात्मन्यस्थितत्वान्नास्ति लक्षणम्, प्रत्यवस्थं सर्वात्मसु वृत्तत्वात्, ततोऽलक्षणत्वाच्च विनिद्रावस्थाया अभावः स्यात् स्वात्मन्यस्थितत्वात् खपुष्पवत्, ततश्च तत्तत्त्वं तासां तत्त्वं चतसृणामवस्थानामेव तत्तत्त्वं चतुरवस्थाभावः, ता एव च सर्वं तदभावात् सर्वाभावः, सर्वाभावात्तदात्मकस्य—सर्वात्मकस्य पुरुषस्याप्यभाव इत्यत आह—ततश्च तत्तत्त्वचतुरवस्थसर्वात्मकपुरुषाभावः, चैतन्यमेव हि पुरुषस्यावस्थानाञ्च लक्षणं तदभावे—पुरुषस्यावस्थानाञ्चाभावे किमवशिष्यते ?

**अथ विनिद्रावस्थालक्षणविपरीतोऽपि पुरुषस्तु पुरुष एव, अवधारणभेदात्, विनिद्रावस्थायाः स्वात्मन्यवधार्यमाणविनिद्रावस्थैव लक्षणम्, पुरुषस्य तु लक्षणमेवेति, पुरुषो लक्ष्यत्वेनानियतोऽन्यासामप्यत्यागात्, स ह्यनेकरूपो मेचकवदिति ।**

**अथ विनिद्रालक्षणेत्यादि**, अथ मतं भवतो विनिद्रावस्थापुरुषाभावदोषयोः परिहारे सर्वदोषपरिहारः स चावधारणवैपरीत्येनेति तद्यथा—पुरुषस्तु पुरुष एव ([1]विनिद्रावस्थालक्षणविपरीतोऽपि, किं कारणं ? अवधारणभेदात्, कथमवधारणभेदः ? उच्यते, विनिद्रावस्था[याः]—स्वात्मन्यवधार्यमाण) विनिद्रावस्थैव लक्षणम्, नान्या काचिदवस्थेति, स्वात्मनो लक्षणत्वमवस्थाया नियतम्, सा त्वन्यथावस्थात्मनोऽपि लक्षणत्वान्नानियतेति न विनिद्रावस्थायास्तावदभावोऽस्ति, पुरुषस्याप्यभावो नास्ति, पुरुषस्य तु लक्षणमेवेत्यवधारणात्—विनिद्रावस्था लक्षणमेव पुरुषस्य, नालक्षणमिति, पुरुषो लक्ष्यत्वेनानियतोऽन्याभिरप्यवस्थाभिर्लक्ष्यत्वादन्यासामप्यत्यागाल्लक्षणत्वेन, पुरुषस्येति भेदेनावधारणं यस्मात्, स ह्यनेकरूपो मेचकवत् पुरुषः, वर्णसङ्करो हि मेचकः, स नीलोऽपि पीतोऽपि शेषवर्णोऽपि तथा पुरुषो विनिद्रावस्थालक्षणोऽपि सुप्ताद्यन्यतमावस्थालक्षणोऽपीति ।

---

**लक्षणमिति** लक्षणं हि सकलेतरव्यावृत्तलक्ष्यबोधनसमर्थं भवति, तस्य च व्याप्तिसिद्ध्यर्थद्वारानुमानयोर्हेतुभवतः पक्षनिष्ठत्वं भवेद्, विनिद्रावस्था तु विनिद्रावस्थास्वात्मनो न लक्षणं स्वात्मन्येवास्थितत्वात् सर्वावस्थासु वृत्तेः, अतो लक्षणाभावाच्च तावद्विनिद्रावस्था वर्तते खपुष्पवदिति भावः, **ततश्चेति,** विनिद्रावस्था हि चैतन्यं तस्यालक्षणत्वादभावः, तथा च चतसृणामप्यवस्थानामभावः प्राप्तः, चतुरवस्थाभावाच्चतुरवस्थात्मकसर्वाभावः, तदभावात् सर्वात्मकपुरुषाभावप्रसङ्ग इति भावः । अथ विनिद्रावस्थायास्तटस्थलक्षणत्वमभिप्रेत्याशङ्कते—**अथेति** तदा हि तदतद्भवति यदा तत्र स्वरूपलक्षणत्वेनाभिमतं न स्यात्, विनिद्रावस्था च तटस्थं लक्षणम्, यथा शाखाग्रे चन्द्र इति लक्षणं दिगन्तरावस्थिततारकादिभ्य एव व्यावर्तकं न तु शाखोर्ध्वदेशगतचन्द्रसमीपवर्तितारकादिभ्यः, एवं पुरुषो विनिद्रावस्थाविपरीतोऽपि स पुरुष एव नापुरुष इति भावः । एतादृशार्थोऽवधारणभेदाल्लभ्यत इत्याह—**अवधारणभेदादिति,** अवस्थानां चतुर्विधत्वाद्विनिद्रावस्थास्वात्मैव विनिद्रावस्था न सुप्ताद्यवस्थास्वात्मा, एवञ्च विनिद्रावस्थात्वं न विनिद्रावस्थास्वात्मनिरूपितलक्षणत्वसमानाधिकरणाभावप्रतियोगि, यदि विनिद्रावस्थास्वात्मनिरूपितलक्षणत्वमन्यावस्थासु भवेत्तर्हि विनिद्रावस्थाया विनिद्रावस्थास्वात्मनिष्ठाभावप्रतियोगित्वेनाऽव्याप्ततया स्वरूपलक्षणाभावेन विनिद्रावस्थाया अभावः स्यान्न चैवम्, पुरुषस्तु चतुरवस्थात्मकः, अत एव विनिद्रावस्था न तस्य स्वरूपलक्षणं येन तदभावे पुरुषाभावः स्यात् किन्तु तटस्थं लक्षणम्, पुरुषत्वव्यापकाभावाप्रतियोगित्वरूपम्, अव्याप्तेस्तु तत्समानाधिकरणधर्मवत्त्वविवक्षयापि वारणसम्भवात्, अत एव पुरुषो न विनिद्रावस्थानिरूपितलक्ष्यत्वव्याप्यः, इतरावस्थानिरूपितलक्ष्यत्वाश्रयत्वादिति भावः । पुरुषस्य विनिद्रावस्था कथं तटस्थं लक्षणमित्यत्राह—**पुरुषस्येतीति** । तदेव दृष्टान्तेन समर्थयति—**स हीति** । ननु विनिद्रावस्थास्वात्मनो विनिद्रावस्थैव लक्षणं नान्या काचिदवस्था लक्षणं भवति, पुरुषस्य तु सा लक्षणमेव, नालक्षणमिति विनिद्रावस्थापुरुषाभावदोषपरिहारार्थमवधारणभेदा-

---

१ सि-क-अलक्षणत्वा[illegible] । २ सि. नास्तीदं पदम् । ३ सि. क. ( ) एतदन्तर्गतः पाठो न दृश्यते ।

अत्रोच्यते—

**न, उक्तव-वधारणभेदस्यान्याय्यत्वात्, प्रतिज्ञातव्याघातात्, घटरूपादित्ववत्, विनिद्रकावस्थालक्षणपुरुषव्यतिरिक्तार्थाभावात् कोऽवधारणार्थः? पुरुषत्वं प्रा-क्तमवस्थानाम्, अधुना तु पृथक्स्वात्मनस्ता उच्यन्तेऽवस्था इति तत्त्वं पुरुषस्य, न पुरुषत्वं तासां रूपादिघ-5 टत्ववत्, यथा रूपादय एव घट इत्येतस्मिन् पक्षे न घटो नाम कश्चित् तथा यद्यवस्था एव पुरुषो -ज्येतावधारणम्, तत्तु न युज्यते चैतन्यात्मकैकपुरुषमयत्वप्रतिज्ञाव्याघातात्।**

**न, उक्तवदित्यादि,** नैतदुपपन्नम्, उक्तवदवधारणभेदस्यान्याय्यत्वात्, उक्तेन तुल्यमुक्तवत्—तेनैव प्रागुक्तप्रकारेण तेनैव न्यायेनावधारणभेदस्यावसर एव नास्ति, न्यायादनपेतं न्याय्यं न न्याय्यमन्याय्यम्, कुतः? प्रतिज्ञातव्याघातात्, यद्यवधारणं भिन्नार्थविषयमाश्रीयते चैतन्यात्मकैकपुरुष-10 मयमिदं सर्वमिति प्रतिज्ञा हीयते, अथैकपुरुषमयत्वप्रतिज्ञा परिपाल्यते भिन्नार्थविषयाधारावधारणोपपत्तिर्विशीर्यते, कथं? घटरूपादित्ववत्—यथा घट एव रूपादय इत्येतस्मिन् पक्षे न रूपादयो नाम केचित् सन्ति घटादर्थान्तरभूताः, तत्र रूपस्वात्मनो रूपावस्थैव लक्षणं न रसाद्यवस्थाऽपि घटात्मनस्तु रूपावस्थालक्षणमेव, इतरासामत्यागादिति कोऽर्थः स्यात? रूपा[व्यतिरिक्तरसा]द्यभावात, तथेहापि विनिद्रकावस्थालक्षणपुरुषव्यतिरिक्तार्थाभावादितरासां सुप्ताद्यवस्थानामभावादेव कोऽवधारणार्था-15 वकाशः? इत्यवधारणाभावः प्रतिज्ञातव्याघातो वेत्येतदुभयं प्रदर्शयति—पुरुषत्वं प्रागुक्तमवस्थानाम्, अधुना तु पृथक् स्वात्मनस्ता उच्यन्तेऽवस्था इति प्रागुक्तवदवधारणभेदस्यान्याय्यत्वं प्रतिज्ञाव्याघातश्चेति। इति तत्त्वमिति,—अस्माद्धेतोः प्रतिज्ञाव्याघातादवधारणभेदान्याय्यत्वाच्चोभयथाऽपीष्टविपरीतं तत्त्वं—अवस्थात्वं पुरुषस्य, अवस्था एव पुरुषः, न पुरुष एवावस्था इत्येतत् प्राप्तम्, रूपादिघटत्ववत्—यथा रूपादय एव घट इत्येतस्मिन् पक्षे न घटो नाम कश्चिदिति—अयमर्थः—तत्र रूपमेव न 20 रस इत्याद्यवधारणमुपपद्यते भिन्नार्थविषयत्वात् तथा यद्यवस्था एव पुरुष इत्युच्येत युज्येतावधार-

---

-ीकरणं नोचितम्, प्रतिज्ञातस्यैकपुरुषमयत्वस्य व्याघातप्रसङ्गादित्युत्तरयति—**उक्तवदिति,** उक्तरीत्याऽवधारणभेदो योऽङ्गीकृतः स न्यायादपेत इत्यर्थः। विनिद्रावस्था चैतन्यमेव, पुरुषश्च चैतन्यं नातिवृत्य वर्तते पुरुषश्च सर्वमिति पूर्वमुक्तं स्वरूपलक्षणाभिप्रायेण, सम्प्रति तटस्थलक्षणमुच्यते पुरुषविनिद्रावस्थयोर्भेदाभ्युपगमेनेति व्याघात इति भावः। **भिन्नार्थविषयेति,** पुरुषावस्थयोर्भेदमभ्युपगम्य तटस्थलक्षणाश्रयेणावधारणप्रकल्पनादुपपत्तिसमारचनमित्यर्थः। **घटरूपादित्ववदिति** यथा घटस्यैव 25 रूपादित्वं तद्वदित्यर्थः, घट एव रूपादय इति श्रुतौ रूपादौ घटत्वं प्राप्यते, रूपादित्वं निराक्रियते तथाच रूपाद्यभाव एव, रूपादिस्वरूपाभावात् तथा च सति रूपावस्थैव रूपस्वात्मनो लक्षणं घटस्य तु रूपावस्था लक्षणमेवेति भिन्नार्थत्वप्रयुक्तावधारणवैचित्र्यं निरर्थकं रूपादीनामेवाभावात् तथा पुरुषस्यैवावस्थात्वे भिन्नार्थविषयावधारणं निरर्थकम्, विनिद्रावस्थापुरुषयोरैक्येन तद्व्यतिरिक्तार्थाभावात् रूपाभिन्नघटव्यतिरिक्तरसाद्यभाववदित्यभिप्रायः। पुरुषव्यतिरिक्तार्थाभावादेव सर्वपदग्राह्याभावात् पुरुष एव सर्वमिति प्रतिज्ञाहानिश्चेत्याह—**प्रतिज्ञातेति। पुरुषत्व-िति,** अचिन्त्यमेवेदं चिन्त्यत इत्यादिग्रन्थेनावस्थानां पुरुषत्वमुक्तं तत्र च विनि-30 द्रावस्थापुरुषाभावदोषे प्रसक्ते तत्परिहारार्थमधुनाऽवधारणभेदाश्रयेण ताः पृथगित्युच्यन्त इति भावः। उक्तपक्षस्योक्तदोषत्वात् पुरुषत्वं नावस्थानां युक्तं किन्तु पु[illegible]त्वं प्राप्यते तत्र चावस्थानां चतुर्विधत्वादेकस्यात्मनोऽपरावस्थापत्तिव्यावृत्तयेऽवधारणभेदो युज्यत इत्याह—**तत्त्वमिति।** अवधारणोपपत्तौ दृष्टान्तमाह—**रूपादिघटत्ववदिति** यथा रूपादेरेव घटत्वं तद्वदित्यर्थः, रूपादय एव घट इति श्रुतौ घटे रूपादित्वं प्राप्यते, घटस्य घटत्वस्वरूपत्वविरहादेवाभावः। तथाच रूपरसादीनामेव वस्तुत्वाद्रस-

णम्, पुरुषाभावेऽवस्थानामेव भिन्नानामितरावस्थानिवृत्त्यर्थमेकावस्थावधारणम्, तत्तु न युज्यते चैतन्यात्मकैकपुरुषमयत्वप्रतिज्ञाव्याघातादिति।

किञ्चान्यत्—

**यदा च तासामेव तत्त्वं पुरुषे तु सा लक्षणमेव, तथा तथा तासामितरेतरात्मस्वभावादवधारणभेदादत्यन्तभिन्नार्थत्वात् सामान्याभावः, ततो विविक्तानेकभेदावस्थामात्रत्वात् सर्वमसर्वगतमिति ननु तदेव दर्शनमेतदप्यापन्नं लोकवदेव तत्त्वापत्तिरिति।** 5

**यदा च तासामेव तत्त्वमित्यादि,** यावल्लोकवदेव तत्त्वापत्तिरिति, यदा च तासां भाव एव तत्त्वं—भाव एव ताः, ताभिरेव भूयते[ऽ]भेदेनावधार्यमाणत्वात्, विनिद्रावस्थैव विनिद्रावस्था-स्वात्मेति लक्षणं पुरुषे तु सा लक्षणमेव, न तु सैव लक्षणं पुरुषस्य, अन्यासामप्यवस्थानां तल्लक्षणत्वा-त्यागात्, तथा तथा तासामितरेतरात्मस्वभावः, अवधारणभेदात्, तथा तथेति वचनादुत्तरोत्तरभेदाना- 10 मपीतरेतरात्मसु नास्ति भावः तद्यथा—रूपावस्थास्वात्मनि रूपावस्थैव लक्षणम्, घटस्वात्मनि तु रूपा-वस्था लक्षणमेव, रसाद्यवस्थानामपि तल्लक्षणत्वात्यागात्, तथा पृथिवीलोष्टादीनामितरेतरात्म-स्वभावाल्लोष्टावस्थास्वात्मावधारणे लोष्टावस्थैव लोष्टावस्थास्वात्मा, पृथिवीस्वात्मावधारणे तु सा लक्षण-मेव, न तु सैव च ज्ञानादीनामप्यत्यागादिति सर्वत्रास्त्ववधारणभेदः, ततोऽवधारणभेदास्त्वदुक्तादेव तथातथेतरेतरात्मस्वभावादवधारणभेदादित्यन्तभिन्नार्थत्वम्, अतो भिन्नभिन्नार्थत्वात् सामान्याभावः, 15 सामान्याभावाद्विविक्तानेकभेदावस्थामात्रत्वात् सर्वमसर्वगतं घटो घट एव, रूपं रूपमेव, रसो रस

स्वात्मनो रूपतान्यावृत्त्यर्थं रूपमेव न रस इत्यवधार्यते, तथाऽवस्था एव पुरुष इत्युक्तावस्थानामेव वस्तुत्वात् पुरुषस्य चावस्तुत्वा-देकावस्थास्वात्मनोऽपरावस्थापत्तिवारणायावधारणाश्रयणं युज्येतेति भावः। युज्येतेति सम्भावनयोक्तस्य फलितमाह—**तत्तु नेति** तदेवावधारणं न युज्यते, अवस्थानां चतसृणां परस्परं भिन्नतया तास्वनुवर्त्तनशीलस्यैकस्य कस्याप्यभावात् पुरुष एवेदं सर्वमिति-सर्वस्यैकपुरुषमयत्वप्रतिज्ञाभङ्गप्रसङ्ग इति भावः। अवधारणभेदाङ्गीकारे दोषान्तरमादर्शयति-**यदा चेति** विनिद्रावस्थास्वात्मनो विनि 20 द्रावस्थैवाभिन्नं स्वरूपलक्षणं तत्त्वं तथा विनिद्रावस्थारूपेणैव भवनात्, पुरुषस्य तु सा लक्षणमेव न तु तत्त्वं पुरुषस्येति भेदपक्षाऽव-धारणात्तद्रूपेण तस्याभवनात् न तु तस्य विनिद्रावस्थास्वरूपलक्षणमन्यावस्थानामपि तल्लक्षणत्वात्, एवञ्च विनिद्रावस्थास्वात्मनि न सुप्ताद्यवस्थाया भावः, तस्या विनिद्रावस्थास्वरूपपुरुषस्वरूपत्वाभावात्, न वा सुप्ताद्यवस्थास्वात्मनि विनिद्रावस्थाया भावोऽत एवेति विनिद्राद्यवस्थानां पृथक् पृथग्रता, न तास्वनुवर्त्तमानः पुरुषादिः कश्चन वर्त्तते, अतत्स्वरूपत्वात् पुरुषादेः, तथा चानुवर्तमानस्य सामान्यस्याभावेन परस्परात्यन्तभिन्नभेदात्मकावस्थानामेव सद्भावान्न सर्वगतः कश्चिदस्ति, किन्तु यथा लोके दृश्यते घटो घट एव, 25 रूपं रूपमेव, रसो रस एवेति यथा लोकग्राह्यं वस्तु न तु ततो विलक्षणं किञ्चित्, यद्विवेचनार्थं शास्त्रारम्भो भवेत् तस्मादनर्थको विवेकयत्नः शास्त्रेष्विति पूर्वोपदर्शितदर्शनवदेवेदमपि दर्शनमापन्नमिति भावः। यच्च यस्यासाधारणं स्वरूपं तदेव तस्य तत्त्वं तच्च तयोरभेद एव भवति विनिद्रावस्थास्वात्मनो विनिद्रावस्थैवासाधारणं तत्त्वं सर्वदा तस्य तद्रूपेणैव भावात् पुरुषस्य तु विनिद्रावस्था न तादृशी भिन्नत्वादित्याह—**भाव एवेति। तथा तथेति** यथा चतसृणामवस्थानामेकावस्थाया अपरावस्थास्वात्मन्यभावस्तथा रूपरसाद्यवस्थानामपीतरात्मसु नास्ति भावोऽवधारणभेदादेवेति भावः। **ज्ञानादीनामपीति** पृथिव्याद्यचेतनानां सुषुप्ताद्यव- 30 स्थात्मकतया पुरुषत्वात् ज्ञानादीनामपि पृथिवीलक्षणत्वसम्भव इति प्रतिभाति। अन्ययोगात्यन्तायोगव्यावृत्तिलक्षणावधारण भेदादेवावस्थावस्थावतोऽत्यन्तभेदेनावस्थावतोऽवस्थाभिः सह सम्बन्धाभावादनुवृत्त्यनात्मकत्वात् सामान्यात्मकत्वं न पुरुषादेरिति सामान्याभाव इत्याशयेनाह—**अत्यन्तभिन्नार्थत्वमिति** परस्परसम्बद्धार्थाभावादत्यन्तभिन्नार्थत्वमित्यर्थः। **सर्वमसर्वगत-मिति** एकैकस्यानेकात्मकतायां हि निखिलं वस्तु प्रत्येकं सर्वात्मकं भवेत् यदा तु वस्तूनामत्यन्तभिन्नत्वं तदा कथमेकं सर्वात्मकम्,

एव, पटः पट एवेत्यादि प्राप्तम्, ततो ननु तदेव दर्शनमेतदप्यापन्नं—यदुक्तं यथा लोकग्राहमेव वस्तु शास्त्रेष्वनर्थको विवेकयत्न इत्यादि, स्वपरविषयसामान्यविशेषनिराकरणेन लौकिकमेव, यथा द्रव्यक्षेत्रकालभावभवनमेव च वस्त्विति तदेव तत्त्वमिति लोकवदेव तत्त्वापत्तिरिति ।

अथ विकल्पश[illegible]ार्थत्वादलक्षण एव, तस्याज्ञाततत्त्वत्वात् कुतो वा लक्षणम्? कुतोऽ-
5 वस्था? इति, तद[illegible]क्तम्, तर्हि च[illegible]रवस्थावर्णनं कथ[illegible]पपद्यते? अनेकात्मकसर्वगतत्वभावनञ्च?

(अथेति) अथ विकल्पशब्दार्थत्वादलक्षण एव, तस्याज्ञाततत्त्वत्वात्—तस्य निर्विकल्प[illegible]ा-विभागस्य संसर्गभेदपरिणामशून्यस्य मेघस्तनितादिकल्पशब्दगोचरातीतस्य मयूरविरुतवत् सङ्केताद्व्यवहारानुपातिमिर्वा शब्दैरनुपलक्ष्यस्य गोर्विषाणादिवत् स्वांशकल्पनामात्रभिन्नशब्दार्थाभिमानविकलस्य[2] ननु लौकिकवद[illegible]सामान्यविशेषव्यवस्थाविचाररूपस्य तत्त्वस्य कुतो वा लक्षणम्? कुतोऽवस्थाः?
10 इत्येतच्चायुक्तम्, चतुरवस्थावर्णनात्, यदि ताश्चतस्रोऽप्यवस्था असत्या एव तद्वर्णनं खपुष्पसौरभवर्णनवत् कथमुपपद्यते? इति । किञ्चान्यत्—सर्वगतत्वभावनाभावप्रसङ्गात् तद्दर्शयन्नाह—अनेकात्मकसर्वगतत्वभावनञ्च, कथमिति वर्तते, सर्वं गतं सर्वगतं 'सृ गतौ' सर्वगतं, अयमेव सर्वशब्दो गम-

तस्माद्रूपं रूपमेव घटो घट एवेत्यवं स्यादिति भावः । सामान्यविशेषयोः परस्परापेक्षसत्ताकत्वेन सामान्याभावे विशेषस्याप्यभावात् पुरुषादिवस्तु सामान्यविशेषानात्मकंविध्यरोदितलौकिकभावमात्रतत्त्वतुल्यमेवापन्नमित्याह—**स्वपरविषयेति**, **अथ**
15 **विकल्पेति**, त्वया हि निर्धर्मकः पुरुषोऽभ्युपेयते, तत्र त्वर्थभेदतत्संसर्गविशेषबोधनकृतपदवाक्यस्वरूपतालब्धप्रमाणभावस्य शब्दस्य सामर्थ्याभाव एव, प्रकृतिप्रत्ययार्थभेदबोधनकृतं हि पदत्वमनेकपदार्थसंसर्गविशेषबोधनकृतं च वाक्यत्वं, प्रकृत्यादयश्च शब्दाः शक्त्या लक्षणया वा किञ्चिद्धर्मावच्छिन्नस्यैव बोधकाः, नातः पुरुषः शब्दार्थः, किन्तु कल्पितघटपटाद्यवस्थाविषयविकल्प एव शब्दजन्यः, यतो वाचो निवर्तन्त इति श्रुतेः, यस्मान्निर्विकल्पादद्वयादानन्दात् पुरुषाद्वाचोऽभिधानानि द्रव्यादिसविकल्पवस्तुविषयाणि वस्तुसामान्यान्निर्विकल्पेऽद्वयेऽपि पुरुषेऽनभिज्ञैः प्रयोक्तृभिः प्रकाशनाय प्रयुज्यमानानि तमप्रकाश्यैव निवर्तन्त
20 इति तदर्थत्वात् । अवाच्यत्वादेवालक्ष्यः सः, शक्यसम्बद्धस्यैव लक्ष्यत्वात्, एतदभिप्रायेणैवात्रालक्ष्यत्वादलक्षणत्वमुक्तम् । **अज्ञाततत्त्वत्वादिति**, सामान्यधर्मेण विशेषधर्मेण वाऽपरिज्ञातं पुरुषतत्त्वमिति भावः । **संसर्गेति**, परमाणूनां संसर्गेण स्कन्धादिपरिणामाः स्कन्धाद्भेदेन च परमाण्वादिलक्षणपरिणामाः भवन्ति, आभ्यामेव वस्तुनो विभागो भवति पुरुषे तयोर्न सम्भव इति भावः । मयूरविरुतादेः सङ्केताद्व्यवहारानुपातित्ववत् पुरुषोऽपि तथा स्यादित्याशंकायामाह—**मयूरेति**, मेघस्तनितादिशब्दा अव्यक्तशब्दा एव न कस्यचिदर्थस्य वाचका मयूरविरुतन्तु अव्यक्तमपि पुरुषकृतसंकेतादर्थबोधकं, एतदुभयविधशब्देभ्योऽप्यसौ न
25 बोध्य इति भावः । विधिविधिनयारप्रान्तभागे प्रथमं विकल्प एव शब्दार्थः न तु शब्दो वाचक इत्युक्तमनन्तरञ्च सर्वे शब्दाः पुरुषनियत्याद्यन्यतमस्यैकस्यैव लक्षणार्थाः, यथा विषाण्यादिशब्दा गोरेकदेशवाचित्वात्तदुपलक्षणार्थाः प्रसिद्धसंकेतवशाद्गोरेव वाचकाः तदवयवानां तस्मादभिन्नत्वादेवं सर्वशब्दा एकदेशप्रतिपादनद्वारेण पुरुषादेरेव वाचका इति शब्दानां वाचकत्वमप्युक्तं तथात्र पुरुषो ज्ञायतामित्याशंकायामाह—**गोर्विषाणादिवदिति** यथा गोर्विषाणादयोऽवयवाः सन्ति न तथात्र कश्चिदेकदेशः पुरुषस्यास्ति येन शब्दास्तदभेदेन पुरुषं गमयेयुः, पुरुषस्येति निर्देशेनावस्थानामपि ततो भिन्नत्वादिति भावः । **कुतो वेति** कुतो वा
30 लक्षणमिति सामान्यरूपतायाः कुतो वाऽवस्था इत्यनेन विशेषरूपतायाश्चाभावः प्रतिपाद्यत इति बोध्यम् । सामान्यविशेषविनिर्मुक्तनिर्धर्मकपुरुषादिवस्त्वभ्युपगमे जाग्रदादिचतुरवस्थावर्णनं निर्मूलमेवेत्युत्तरयति—**चतुरिति** । पुरुष एवेदं सर्वमिति पुरुषस्य सर्वत्ववर्णनमप्य[illegible]क्तं सविकल्पताप्रसङ्गात् अज्ञाततत्त्वत्वाच्चेत्याशयेनाह—**किञ्चान्यदिति** । **सर्वगतमिति**, सृ गताविति धातोर्हि सर्वशब्दनिष्पत्तिः, गतिश्च देशान्तरप्राप्तिलक्षणा क्रिया, देशान्तरत्वञ्च विभिन्नानेकार्थघटितम्,

---

१ सि० क० अविकल्प° । २ सि. विकलस्य ।

नार्थदेशान्तरप्राप्तिलक्षणां क्रियां भिन्नविकल्पार्थविषयामाह—यदन्यच्चान्यच्च तदशेषं सर्वमिति, ततश्च तत्तदशेषं गतं सर्वगतं तद्भावः सर्वगतत्वं, अर्थानेकात्मकत्वाविनाभावि, अनेकात्मकं हि सर्वं भिन्नानेकविकल्पकृतत्वार्थगतं सर्वगतमित्येषा भावना निर्विकल्पैकात्मकत्वे न युज्यत इति ।

किञ्चान्यत् निर्विकल्पकत्वाभावप्रसङ्गात्—

यद्यस्यैकैका प्रत्येकं सुप्ताद्यवस्था न भवति ततश्च तासामसत्त्वात् कुतोऽस्य भिन्नानैकत्वापत्त्यात्मिकाऽविकल्पता ? पृथक् पृथगवृत्तसितासितादिवर्णैक्यापत्त्यात्मकमेचकवर्णाभाववत्, न हि पृथगवृत्ते रूपे द्वे अपि मेचकात्मके भवतः, असन्नेव त्वसावेवं, अनवस्थात्वात्, वन्ध्यापुत्रवत् ।

यद्यस्यैकैकेत्यादि यावन्मेचकात्मके भवतः, यद्यस्य—पुरुषस्य एकैका—पृथक् पृथक्, एकामेकां प्रति प्रत्येकं समाप्ता सुप्ताद्यवस्था न भवति, ततश्चैकैकस्या अभावात्ता न सन्त्येवेति कृत्वा तासामसत्त्वात् कुतोऽस्य पुरुषतत्त्वस्य तासामेव भिन्नानामेकत्वापत्त्यात्मिका—तत् पुरुषतत्त्वमेकमविकल्पमित्येवमविकल्पता स्यात् ? भिन्नविकल्पैक्यात्मकत्वादविकल्परूपतायाः, सा चाविकल्परूपता कुतः ? नास्त्येवेत्यर्थः, को दृष्टान्तः ? पृथक् पृथगवृत्तसितासितादिवर्णैक्यापत्त्य[illegible]वर्णाभाववत् पृथक् सिद्धवर्णाभावे मेचकवर्णाभावात्,—तद्दर्शयति न हि पृथगवृत्ते रूपे द्वे अपि सितासिते स्वेन रूपेण मेचके भवतः, भेदात्मलाभाविनाभाव्यैक्यापत्त्यभावात्, एवमवस्था अपि पृथक् स्वरूपेणासिद्धा निर्विकल्पैकरूपा न भवितुमर्हन्तीति । एवं तावदवस्थानामभावे चतुरवस्थावर्णनानेकात्मकसर्वगतत्वभावननिर्विकल्परूपत्वाभावदोषाः । किंवा पार्श्वशरप्रक्षेपेण भयजननानुवृत्त्या, तमेव पुरुषं निराकुर्महे तद्यथाऽसन्नेव त्वसावेवं-अवस्थानामसत्त्वे, कुतः ? अनवस्थात्वात्-अवस्थातोऽन्यत्वादनवस्थात्मकत्वादवस्थात्वाभावात् पुरुषो वन्ध्यापुत्रवत् ।

---

अनेकेषामशेषता सर्वता, इदमेतदपरमन्यदित्येतान्यशेषाणि सर्वमुच्यते, एवञ्च विविधविकल्पाभावे सर्वतैव कथमिति सर्वत्वभावना पुरुषस्य न स्यादिति भावः । भिन्नानेकेति, भिन्ना येऽनेके विकल्पा भेदास्तेषां कृतार्थोऽशेषार्थस्तं गतः सर्वपदवाच्य इत्यर्थः । पुरुषस्य त्वदभ्युपगता निर्विकल्पताऽपि न सम्भवतीत्याह—किञ्चान्यदिति । ननु यदि सुप्ताद्यवस्थाः प्रत्येकं स्वतः पृथक् सिद्धाः स्युर्नीलपीतादिरूपवत्तदा चित्ररूपवत्तासामैक्यापत्त्यात्मिका निर्विकल्पकता भवेत्, न त्वेवमस्ति पृथक् सिद्धत्वमवस्थानामिति निर्विकल्पकत्वाभाव इत्याह—यद्यस्येति । पृथक् पृथगिति यदि सितासितादिवर्णाः प्रत्येकं परस्परपरिहारेण सिद्धस्वरूपा न स्युर्न स्यादेव तेषामेकत्वापत्त्यात्मकमेचकरूपता, मेचको हि वर्णो न सितो वक्तुं शक्यतेऽसितस्यापि दर्शनात्, न वाऽसित इति, सितस्यापि दर्शनात्, तस्माद्विकल्पविनिर्मुक्तत्वादसौ निर्विकल्पक उच्यते सितादीनां पृथक् स्वरूपासिद्धौ कथं मेचको वर्णो मेचकतां प्राप्नुयात्, मेचकतायाः सितादीनां पृथगात्मलाभाविनाभाव्येकरूपत्वात्, तथैव चतसृणामवस्थानां पृथगात्मलाभे सति चतुरवस्थात्मकपुरुषस्य तदैक्यापत्त्यात्मिका निर्विकल्परूपता भवेत्, न चैवमस्ति, अवस्थानामेव स्वरूपस्यासिद्धेरिति भावः । ननु पुरुषलक्षणमृगस्यावस्था लक्षणे पार्श्वे [illegible]प्रक्षेपेण पुनः पुनरस्थिरत्वापादनलक्षणभयजननानुवृत्त्या किं प्रयोजनम् पुरुषमृग एव दोषशरप्रक्षेपं कुर्म इत्याशयेनाह—किंवेति पुरुषोऽसन्, अनवस्थात्वाद्वन्ध्यापुत्रवत्, अत्रानवस्थात्वपदेनावस्थाभिन्नत्वमवस्थात्मकत्वाभावो वा विवक्षितोऽग्रे तथैव व्याख्येयत्वात्, अनवस्थात्मकत्वादित्यस्यैव व्याकर्षनमवस्थात्वाभावादिति, योऽवस्थाभिन्नोऽ[illegible]

स्यान्मतं रूपाद्यवस्थानात्मकस्य घटस्यावस्थावतोऽस्तित्ववत् सुप्ताद्यवस्थानात्मकस्य सुप्तादिचतुरवस्थावतः पुरुषस्यास्तित्वमित्येतच्चायुक्तम्—

अनवस्थात्वेऽचतुरात्मकत्वात् खपुष्पवत्, अथवा किमनेन प्रयासेन, ननु त्वदुक्तेरेव च न स लक्ष्यः, अलक्षणत्वात्, अलक्ष्यत्वमिष्टत्वादसाध्यमिति चेत्? लक्ष्यत्वनिराकृतेरर्थ-
5 निराकरणार्थत्वान्नार्थः, निर्विकल्पत्वादेवार्थोऽपि नैवेति चेन्निर्विकल्पज्ञानवदवस्त्वेव त्वदिष्टं तत्त्वम्।

(अनवस्थात्व इति) अनवस्थात्वे सत्यचतुरात्मकत्वात्-अवस्थाचतुष्टयाभावादेवानवस्थात्मनस्तच्चातुरात्म्याभावः सिद्धः, तस्मादनैकान्तिकाशङ्कानिवृत्त्यर्थमाह-अनवस्थात्वेऽचतुरात्मकत्वादिति खपुष्पवदिति दृष्टान्तो गतार्थः। अथवा किमनेन प्रयासेन उपपत्त्यन्तरैस्तदसत्त्वप्रतिपादनेन?
10 ननु त्वदुक्तेरेव च न स लक्ष्यः,—त्वत्परिकल्पितः पुरुषो नासौ लक्ष्यः, अलक्षणत्वात्, अलक्ष्यत्वमिष्टत्वादसाध्यमिति चेत्? लक्ष्यत्वनिराकृतेरर्थनिराकरणार्थत्वान्नार्थ इति ब्रूमः। अर्थोऽप्यर्थ्यत इत्यलक्षणत्वाच्छब्दाभिधेयो ज्ञानज्ञेयो वा [नेति] विनिद्रावस्थाऽविनिद्रावस्था वा स्यात्, न स पुरुषस्तल्लक्षणस्तदुभयाभावात्। निर्विकल्पत्वादेवार्थोऽपि नैवेति चेत् निर्विकल्पज्ञानवद्वस्तुत्वमपि न भवतीत्येतत्प्रतिपादनार्थत्वादिदमेव गृहाण-अवस्त्वेव त्वदिष्टं तत्त्वमलक्षणत्वात्, खपुष्पवत्।
15 अथात इत...पादानपरित्यागायुक्तत्वादस्य तल्लक्षणतत्त्वाभ्यामवाच्यतैवेत्यतद-

वान् वा सोऽसन्नेव यथा वन्ध्यापुत्र इति। अत्र हेतोरनैकान्तिकत्वमाशङ्कते—**स्यान्मतमिति** धर्मधर्मिणोर्भेदाद्घटो रूपाद्यवस्थाभिन्नोऽत एवावस्थात्वाभाववानपि सन्नेवेति व्यभिचार इति भावः। अथावस्थानां पृथक्सिद्ध्यभावेनासत्त्वात् पुरुषस्य चतुरवस्थात्मता न सम्भवत्येव, रूपादीनामपि घटाद्यनात्मकत्वेऽसत्त्वमेवेति नास्ति व्यभिचार इत्यभिप्रायेणाह—**अनवस्थात्व इति** अवस्थाव्यतिरेकेण पुरुषादेरभाव एव, गुणसमुदायस्य द्रव्यत्वात्, यदा चावस्थानामेवाभावस्तदा कथं तत्समुदायात्मक-
20 पुरुषस्य सद्भाव इति भावः। इत्थमनेकाभिर्युक्तिभिः पुरुषस्यासत्त्वप्रतिपादनं तावत्तिष्ठतु, वचनादपि त्वदीयात्तदसत्त्वं सिद्ध्यतीत्याह—**अथवेति**। विवादाध्यासितः पुरुषो न लक्ष्यः, अलक्षणत्वात्, खपुष्पवदिति प्रयोगः, अलक्षणत्वं पुरुषस्य सिद्धमवस्थानां लक्षणत्वासम्भवात् तस्य निर्धर्मकत्वाच्चेति भावः। ननु तस्याज्ञाततत्त्वत्वादलक्ष्यत्वमिष्टमेव त्वया साध्यत इति सिद्धसाधनतेत्याशङ्कते—**अलक्ष्यत्वमिति**। यदि पुरुषो न लक्ष्यस्तर्ह्यर्थो न भवेत्, शब्देन ज्ञानेन वाऽर्थ्यमानो गम्यमानो ह्यर्थो भवति, पुरुषस्तु निर्विकल्पत्वान्न शब्देन ज्ञानेन वा गम्यत इत्यसन्नेवेत्याह—**लक्ष्यत्वेति**। अवस्थायाः पुरुषस्य चाभावादेव न तयोर्लक्ष्य-
25 लक्षणभाव इत्याह—**विनिद्रेति**। अर्थत्वमपि तस्य नेष्यते शब्दावाच्यत्वात्, विकल्पगोचरातिक्रान्तत्वात् स हि ज्ञानस्वरूपो ज्ञातृज्ञेयस्वरूपरहित इत्याशयेनाह—**निर्विकल्पत्वादेवेति** ननु किं निर्विकल्पकं सर्वविशेषशून्यविषयं किंवा जातिगुणद्रव्यादीनामन्योन्यसम्बन्धं विना पृथक् पृथगुपलम्भरूपं वा? नाद्यः, योग्यानुपलम्भनिरस्तत्वात्, यत्किञ्चिदपि हि वस्तु कतिपयव्यावृत्तं प्रतीयते न तु सर्वस्मात्, येन च प्रतीयते तेनाकारेण सविशेषत्वात्। न द्वितीयः, एतस्यापि योग्यानुपलम्भनिरस्तत्वात् दण्डदेवदत्तादिषु विशेषणविशेष्ययोः पृथगुपलम्भपूर्वकसहोपलम्भदर्शनात् तत्कल्प्यत इति चेन्न जातिव्यक्त्यादीनामसम्बन्धप्रयुक्तपृथग्ग्रहणस्यै-
30 वासिद्धेः, धर्मसामान्याविषयव्यक्तिमात्रविषयकज्ञानस्यापीदं किञ्चिदित्येवंरूपस्य निर्विकल्पस्य भवदभिमतस्यापीदमिति देशकालसम्बद्धतद्वस्त्वाकारोल्लेखेन धर्मिग्राहकसामग्रीव्यतिरिक्तस्य तद्गतसंस्थानादिग्राहकतया सम्पादनीयस्य कस्यचिदभावेन च यथा तत्र निर्विकल्पकं तथा भवदभिमतो निर्विकल्पः पुरुषोऽपि न निर्विकल्पः, तस्मादवस्त्वेवालक्षणत्वादित्याशयेनाह—**निर्विकल्पज्ञानव...ति**। नन्ववस्थैव पुरुषः पुरुष एवावस्थेति पक्षद्वयेऽपि प्रोक्तदोषानुगतेरन्यतररूपतया वक्तुमशक्यतया ......भेदस्यापि वक्तुमशक्यतया चावस्थालक्षणत्वेनावस्थात्वेन च पुरुषोऽनिर्वचनीय एवेत्याशङ्कते—**अथात इति**।

युक्तम्, स त्वसन्नेव हि स्यात्, विनिद्रावस्थया सहैकत्वान्यत्वे ऽप्रत्यवचनीयत्वात् खपुष्पवत्, न तदेकं नान्यद्वा वाच्यम्, निरुपाख्यत्वात्। यत्तु सत्तद्विनिद्रावस्थया सहैकत्वान्यत्वे प्रतिवचनीयम् यथा विनिद्रावस्थायाः स्वात्मनो जाग्रदाद्यवस्थास्वात्मनश्चान्यानन्यत्वे प्रत्यवचनीयत्वात्।

**अथात इत्यादि,** यावदस्यावाच्यतैवेति, अथाचक्षीथाः अत इति पुरुषतः, इतश्चेत्यवस्थातः, 5 अन्यतरस्य-पुरुषस्यावस्थानां वा परित्यागैकान्तो न युक्तः, अवस्थात्यागे लक्षणाभावात् पुरुषाभावप्रसङ्गात्, अवस्थावतः पुरुषस्य वा त्यागेऽवस्थानामभावप्रसङ्गात्। न चैकतरस्योपादानं युक्तम्, उपादीयमानस्येतराभावेऽभावप्रसङ्गादेवावस्थावद्वर्णननिर्विकल्पत्वसर्वगतत्वाभावप्रसङ्गात् प्रतिज्ञाव्याघाताच्च तस्मादन्यतरोपादानपरित्यागायुक्तत्वादस्य पुरुषस्यावस्थालक्षणत्वमवस्थात्वं वा न शक्यं वक्तुम्, किं तर्हि ? तल्लक्षणतत्त्वाभ्यामवाच्यः स पुरुष इत्येतदयुक्तम्, यस्मात् स त्वसन्नेव स्यात्-एतस्यामपि कल्पनायां स पुरुषोऽस- 10 न्नेव, कस्मात् ? विनिद्रावस्थया सहैकत्वान्यत्वे प्रत्यवचनीयत्वात् खपुष्पवत्-विनिद्रालक्षणः पुरुषो न विनिद्रालक्षणो वेत्येते द्वे अन्यत्वानन्यत्वे प्रत्यवचनीयत्वादसन् पुरुषः। न तदेकं नान्यद्वा वाच्यं खपुष्पं विनिद्रावस्थया सह, किं कारणमेकमिति तावदवाच्यम् ? असत्त्वात्, अन्यदित्यप्यवाच्यम् ? अविनिद्रावस्थात्वे सत्यप्यसत्त्वे निरुपाख्यत्वात्-वाग्बुद्धिगोचरातिक्रान्तत्वादिति खपुष्पे दृष्टान्ते हेतोः साध्येनाविनाभावित्वप्रदर्शनम्। यत्तु सत् तद्विनिद्रावस्थयेत्यादिवैधर्म्यदृष्टान्तः साध्याभावे हेत्व- 15 भावप्रदर्शनम्। मा मंस्था अस्मदिष्टसमुदय्यवस्थास्वात्मनि सत्यवचनीयताया दर्शनादनैकान्तिकत्वमिति विनिद्रावस्थास्वात्मनो जाग्रदाद्यवस्थास्वात्मनश्च निदर्शयति-अन्यानन्यत्वे प्रतिवचनीयत्वात्, यथा विनिद्रावस्थास्वात्मनो विनिद्रावस्थाऽनन्या जाग्रदवस्थादिस्वात्मभ्योऽन्या, तथा ता अपि तस्या अन्याः, स्वात्मभ्योऽनन्याः सत्याश्च, न तथा पुरुषः, तस्मादसन्निति।

---

पुरुषमात्रोपादाने प्रोक्तदोषमेव दर्शयति-**अवस्थात्याग इति**। अवस्थामात्रोपादाने दोषं स्मारयति-**अवस्थावत इति**। 20 **तल्लक्षणतत्त्वाभ्यामिति,** अवस्थालक्षणत्वेनावस्थात्वेन वा विचारासहत्वमेवावाच्यत्वमित्यर्थः। ननु वस्तुसद्भावज्ञापकं हि लक्षणं स्वरूपञ्च, आभ्यामनिर्वचनीयत्वे च वस्तुनोऽसिद्धिरेव तथा च पुरुषोऽसन् विनिद्रावस्थया सहैकत्वान्यत्वे प्रत्यवचनीयत्वात् खपुष्पवदित्याह-**यस्मादिति**। हेत्वर्थं व्याचष्टे-**विनिद्रालक्षण इति** विनिद्रावस्थाप्रतियोगिकभेदाभेदविषयकवाग्बुद्धिगोचरत्वाभाववत्त्वादित्यर्थः। दृष्टान्ते खपुष्पे व्याप्तिं ग्राहयति-**न तदेकमिति** खपुष्पं हि विनिद्रावस्थया सहैकमिति न वक्तुं शक्यमसत्त्वात् न वाऽन्यदिति, निरुपाख्यत्वादिति भावः। व्यतिरेकदृष्टान्ते विनिद्रावस्थास्वात्मनि विनिद्रावस्थया 25 सहैकमिति वाच्ये व्यतिरेकव्याप्तिं प्रदर्शयति-**यत्तु सदिति** यत्तु सत् तद्विनिद्रावस्थया सहैकत्वान्यत्वे प्रतिवचनीयम्, यथा विनिद्रावस्थास्वात्मा विनिद्रावस्थया सहैकमिति, ननु विनिद्रावस्थास्वात्मनो विनिद्रावस्थया सहैकत्वेऽपि तया सहान्यत्वाभावेन तया सहैकत्वान्यत्वे प्रत्यवचनीयत्वहेतोस्तत्र सत्त्वेन साध्यस्याचाभावेन व्यभिचार इत्याशङ्कते-**मा मंस्था इति**। विनिद्रावस्थास्वात्मनो विनिद्रावस्थया सहैकत्वेन जाग्रदाद्यवस्थास्वात्मनोऽन्यत्वेन च वचनीयत्वमेवेति तत्र हेतोरभावान्न व्यभिचार इति भावः। पुरुषस्तु निखिलावस्थास्वात्मभ्योऽन्यत्वानन्यत्वे प्रत्यवचनीय एवेत्यसन्नित्युपनयनिगमने दर्शयति-**न तथेति**। अथावस्थान्यत्वावस्थान- 30

---

१ सि० क० पुरुष इ०। २ सि० क० अवस्थासत्त्वं। ३ सि० क० स्वात्मानं।

किञ्चान्यत्—

**अत एव च तदुभययुक्तत्ववाच्यत्वाभ्युपगम एव, पितृपुत्रवत्, तदन्यतरत्यागोपादानायुक्तत्वस्य तदविनाभावात्, अवस्थानामभावेऽनेकदोषप्रसङ्गात् ।**

**अत एव चेति** अत एव—त्वदभिहितात् कारणा[ दन्यतर ]त्यागोपादानायुक्तत्वादपि च तदुभययुक्तत्ववाच्यत्वाभ्युपगम एव, पितृपुत्रवत्, यथैकः पिता पुत्रश्चावश्यमसौ स्वपितुः पुत्रत्वमन्तरेण [ न ] स्वपुत्रं प्रति पितृत्वमनुभवतीति न पुत्रत्वं त्यजति, नापि पुत्रत्वमेवोपादत्ते नापि पितृत्वमेव, ततोऽसौ पिता पुत्रश्चेति वक्तव्यः, तद्द्वयधर्मयुक्तश्च दृष्टः, तथा स पुरुषो विनिद्रालक्षणालक्षणान्यतरत्यागोपादानायुक्तत्वादेव तल्लक्षणातल्लक्षणधर्मद्वययुक्तस्तद्धर्मद्वयवाच्यश्चावश्यं भवितुमर्हति, तदन्यतरत्यागोपादानायुक्तत्वस्य तदविनाभावात्, एवं तावत् पुरुष एवावस्था इत्येतदयुक्तम्, अवस्थानामभावेऽनेकदोषप्रसङ्गात् ।

अभ्युपेत्यापि पुरुषस्वात्मत्वमवस्थानां चतसृणां पुरुषासत्त्वदोषं ब्रूमः—

**यद्यपि च पुरुषस्वात्मैव चतस्रोऽप्यवस्थास्तथापि न तर्हि नामेदानीं पुरुषोऽस्ति, अनवस्थत्वात् खपुष्पवत्, अनवस्थस्य तस्याभ्युपगमेऽपि तु पुरुषस्यावस्थानां [illegible] स्यात्, पुरुषस्वात्मत्वात्, पुरुषवत्, ततश्च सर्वत्वेन सर्वत्र सम्भाव्याभावात् सर्वाव्यापिता पुरुषस्य ।**

**यद्यपि चेत्यादि**, यद्यपि च पुरुषस्वात्मैव चतस्रोऽप्यवस्थास्तथापि न तर्हि नामेदानीं पुरुषोऽस्ति, अनवस्थत्वात्—नास्यावस्थाः सन्तीत्यनवस्थस्तद्भावोऽनवस्थत्वं तस्मादनवस्थत्वादवस्थास्वरूपव्यतिरिक्तत्वात्तच्छून्यत्वात्, खपुष्पवत्, अथवा नावस्थाऽनवस्था, पुरुषोऽवस्था न भवति, योऽवस्था न भवति स नास्ति यथा खपुष्पम्, अवस्थाश्च त्वयाऽभ्युपगताश्चतुरवस्थावर्णनानेका-

---

न्यत्वयोरन्यतरपरित्यागोपादानायुक्तत्वाद्भिन्नत्वेनाभिन्नत्वेन चावचनीयत्वमस्तु पुरुषस्य, सर्वथाऽवचनीयत्वं तस्य कथं भवेत्, तद्भिन्नत्वाभिन्नत्वोभययुक्ततया वाच्यत्वसम्भवात्, तदन्यतरत्यागोपादानायुक्तत्वस्य तदुभययुक्तत्ववाच्यत्वाभ्युपगमाविनाभावित्वादित्याह—**अत एव चेति**, यत्र यदन्यतरत्यागोपादानायुक्तत्वं तत्र विनिगमनाविरहात्तदुभययुक्तत्ववाच्यत्वाभ्युपगम इति व्याप्तिः दृष्टान्तमाह—**पितृपुत्रवदिति** तथा च पुरुषः अवस्थान्यत्वानन्यत्वोभययुक्तत्वविशिष्टवाच्यतावान्, अवस्थान्यत्वानन्यत्वान्यतरत्यागोपादानायुक्तत्वात्, पितृत्वपुत्रत्वान्यतरत्यागोपादानायुक्तत्वात्तदुभययुक्तपुरुषवदिति भावः । एवञ्च पुरुषस्यैवावस्थात्वाभ्युपगमो न युक्तोऽवस्थानामभावप्रसङ्गात्तत्र चानेकदोषापत्तेरित्याह—**एवं तावदिति**, प्रोक्तरीत्या पुरुषस्यावस्थान्यत्वानन्यत्वोभयवत्त्ववाच्यत्वसिद्धो तावदित्यर्थः । ननु भवद्भिः पुरुषस्य सर्वव्यापित्वमभ्युपगम्यते, यदाच चतसृणामवस्थानां पुरुषस्वात्मत्वेऽनवस्थत्वात् खपुष्पस्येव पुरुषस्यैवाभावः तदा कथं स सर्वव्यापी, अनवस्थस्यापि तस्याभ्युपगमे पुरुषवदवस्थानां पुरुषस्वात्मतयैकत्वेन सर्वाभावाच्च कथं स सर्वव्यापी स्यादित्याह—**यद्यपि चेति । अनवस्थत्वादिति**, न अवस्था अस्येति बहुव्रीहिः, तथा चावस्थापुरुषयोर्भेदाद्भेदे च तस्यैवेयमिति नियामकाभावात् सम्बन्धाभावेनावस्थास्वरूपत्वाभावेनावस्थाशून्यत्वादनवस्थः पुरुष इति खपुष्पवत्तस्याभाव इति भावः । नावस्था-अनवस्थेति तत्पुरुषे पुरुषस्यावस्थाऽभेदानङ्गीकारात् योऽवस्था न भवति स खपुष्पवन्नास्तीति तत्रापि पुरुषाभाव एवेत्याह—**अथवेति** । अत्र तत्पुरुषेऽनवस्थाया भावोऽनवस्थत्वं 'त्वे च' (पा० अ० ६ पा० ३ सू० ६४) इत्यनेन ह्रस्वो बोध्यः, अवस्था न सन्तीति तु त्वया न वाच्यम्, त्वयैव चतसृणामवस्थानां वर्णनादित्याह—**अवस्थाश्चेति** चतस्रोऽवस्था अनेकाशेषगतत्वभावनं भिन्नानामेकैकावस्थानामेकत्वापत्त्यात्मकनिर्विकल्परूपता च त्वया-

---

१ सि० क० कारणादन्यत्र त्या० । २ सि० क० न० ।

त्मकसर्वगतत्वभावनैकैकावस्थाभेदाभदापरस्थविकल्प न्याभ्युपगमात् ततोऽन्यस्य खपुष्पस्थानीयत्वात्, प्रागवस्थानामेव सत्त्वमभ्युपगम्यानवस्थात्वेऽचतुरात्मकत्वादित्युक्तम्, अधुना तु पुरुषमेवाभ्युपगम्यानवस्थात्मकं प परिकल्पितमष दोष उक्त इति व्याख्ययोर्भेद इति । असन् पुरुषोऽनवस्थत्वात् खपुष्पवत् अनवस्थस्य तस्याभ्युपगमेऽपि तु पुरुषस्यावस्थानां चतसृणामप्यैक्यं स्यात् कुतः ? पुरुषस्वात्मत्वात् पुरुषवत्, यथा हि पुरुषस्वात्मत्वात् पुरुष एक एव तथा ता अप्यवस्थास्तत्स्वात्मत्वादेकमिति 5 चतुष्काभावाच्चतस्रोऽवस्था इति बहुवचनानुपपत्तिस्तत्श्चैकत्वात् सर्वत्वेन सर्वत्र सम्भाव्यो न भवति पुरुषः, सृ गताविति सर्वत्वस्यानेकाश्रयत्वात् पुरुष एव सर्वमिति यदाश्रयादुच्यते तत्सर्वं किमाश्रयं ? यदुक्त्वा सर्वं पुरुषस्य सर्वव्यापिता वर्ण्यते, तत आह—सर्वत्र सम्भाव्याभावात् सर्वाव्यापिता पुरुषस्य प्राप्ता व्याचिख्यासितसर्वव्यापित्वविरोधिनी ।

**ततः पुनरेकत्वं विनिद्रावस्थास्वात्मत्वात्तासाम्, पुरुषस्वात्मत्वात् परस्परात्मकत्वञ्च** 10 **सिद्धम्, विनिद्रावस्थैव हि जाग्रदवस्था विनिद्रावस्थास्वात्मत्वाद्विनिद्रावस्थावत्, [1]एवमितरे अपि तथा जाग्रदवस्थैव विनिद्रावस्था जाग्रदवस्थास्वात्मत्वात् जाग्रदवस्थावत् तथा सुप्तावस्थैव विनिद्रावस्था सुप्तावस्थास्वात्मत्वात्सुप्तावस्थावत् तथा सुषुप्तावस्थैव विनिद्रावस्था सुषुप्तावस्थास्वात्मत्वात् सुषुप्तावस्थावत् यैवान्यावस्था सैवान्यापि, एकस्वात्मत्वात्, सेवेति पुरुष एवेदं सर्वमित्यतिदेशाभावो भेदाभावात् ।** 15

(**तत इति**) ततः पुनरेकत्वं विनिद्रावस्थास्वात्मत्वात्तासाम्, पुरुषस्वात्मत्वात् परस्परात्मकत्वञ्च सिद्धम्, तदिदानीं भाव्यते विनिद्रावस्थैव हि जाग्रदवस्था, विनिद्रावस्थास्वात्मत्वात्, विनिद्रावस्थावत्, यथा विनिद्रावस्था विनिद्रावस्थास्वात्मत्वाद्विनिद्रावस्थैव तथा जाग्रदवस्थापि विनिद्रावस्थास्वात्मत्वाद्विनिद्रावस्थैवेतीत्थं विनिद्रावस्थया सहैक्यं जाग्रदवस्थायाः, विनिद्रावस्थास्वात्मत्वञ्च सर्वावस्थानां पुरुषस्वात्मत्वात्त्वयैवाभ्युपगतम्, एवमितरे अपीति, विनिद्रावस्थैव सुप्तावस्था विनिद्रावस्थास्वात्मत्वाद्वि- 20

ऽभ्युपगतैवेति भावः । अनवस्थत्वादित्यसकृदुक्तहेतोः पुनरुक्तताशङ्काव्यवच्छेदायाह—**प्रागवस्थानामेवेति,** अस्माभिरवस्था नाभ्युपगम्यन्ते तास्त्वयाऽभ्युपगम्यापि पुरुषात्मत्वेन चेदभ्युपगम्यन्ते तर्हि पुरुषोऽनवस्थत्वादसन्नित्याशयेनाह—**असन्निति ।** तादृशस्यापि तस्याङ्गीकारे पुरुषस्वात्मत्वात् पुरुषस्यैकत्ववदवस्थानामपि तत एवैकत्वप्रसङ्गेन तासां चतस्र इति विशेषणमवस्थाशब्दाद्बहुवचनोपादानञ्च निष्फलमित्याह—**अनवस्थस्येति ।** अवस्थैकत्वाभ्युपगमेऽपि न ते सौख्यमित्याह—**ततश्चैकत्वादिति,** पुरुषव्यतिरिक्तस्य कस्याप्यभावेन किं वस्तु सर्वपदेनोद्दिश्य पुरुषाभेदः पुरुष एवेदं सर्वमित्यनेन विधीयते, आश्रयाभावेनैव नासौ 25 सर्वत्राभेदेन सम्भाव्यः अत एवासौ न सर्वव्यापीति भावः । अवस्थानां पुरुषस्वात्मत्वे एकत्वमेव स्फुटं भाव्यते—**ततः पुनरिति ।** एकत्वञ्चात्राभेदः, विनिद्रावस्था विनिद्रावस्थास्वात्मत्वाद्यथा विनिद्रावस्थेत्युच्यते तथा सुप्तावस्था सुषुप्तावस्था जाग्रदवस्थाऽपि विनिद्रावस्थास्वात्मत्वाद्विनिद्रावस्थैव भवेत्, न तु ततो विलक्षणा स्यात्. ननु सुप्ताद्यवस्थाया विनिद्रावस्थास्वात्मत्वं कथमिति चेदुच्यते, अवस्थात्मकत्वं पुरुषस्य त्वयोच्यते, तथा सति पुरुषविनिद्रावस्थयोरेकस्वरूपत्वात् सुप्ताद्यवस्थानामपि पुरुषात्मकत्वात् विनिद्रावस्थास्वात्मत्वं सिद्धं तथैव विनिद्राद्यवस्थानामपि सुप्तावस्थास्वात्मत्वं सुषुप्तावस्थास्वात्मत्वं जाग्रदवस्थास्वात्मत्वञ्च सिद्धं 30 विनिद्रावस्थास्वात्मभूतपुरुषस्वात्मकत्वात्सुप्ताद्यवस्थानांं विनिद्रावस्थात्मकत्वम्, तदभिन्नाभिन्नस्य तदभिन्नत्वनियमादिति भावः । एवं सुप्तसुषुप्तावस्थयोर्विनिद्रावस्थात्वमतिदिशति एवमि तरे अपीति, सुप्तावस्थासुषुप्तावस्थे अपि विनिद्रावस्थात्मिके भाव्ये इत्यर्थः

[1] सि० क० एवमितरेपि ।

निद्रावस्थावत्, विनिद्रावस्थैव सुषुप्तावस्था विनिद्रावस्थास्वात्मत्वाद्विनिद्रावस्थावत्, तथा जाग्रदवस्थैव विनिद्रावस्था जाग्रदवस्थास्वात्मत्वा जाग्रदवस्थावत्, अस्यापि पूर्ववद्व्याख्या, एवं जाग्रदवस्थया सहैक्यं[1] विनिद्रावस्थाया व्याख्येयम्, एवमितरे अपीत्यतिदेशः, जाग्रदवस्थैव सुप्तावस्था जाग्रदवस्थास्वात्मत्वा-ज्जाग्रदवस्थावत्, जाग्रदवस्थैव सुषुप्तावस्था जाग्रदवस्थास्वात्मत्वाज्जाग्रदवस्थावत् । तथा सुप्तावस्थैव
5 विनिद्रावस्था सुप्तावस्थास्वात्मत्वात्सुप्तावस्थावत्, एवमितरे[2] अपीत्यतिदेशः, सुषुप्तावस्थैव जाग्रत्सुप्ता-वस्थे सुषुप्तावस्थास्वात्मत्वात्, सुषुप्तावस्थावत् । एवमेवावस्थानां प्रत्येकं विशेष्य परस्परत ऐक्यं भावितम्, सामान्येनापि सर्वोपसंहारेणोच्यते—यैवान्यावस्था सैवान्यापि, एकस्वात्मत्वात् सेवेति । अथवाऽवस्थानामपि प्रत्येकभेदेषु परस्परात्मत्वापादनेन मनुष्यतिर्यगमरादिषु घटपटतृणादिषु चैक्य-मुन्नेयम्—इतरात्मकमितरत् इतरात्मत्वात्, तत्स्वात्मवदिति, इति पुरुष एवेत्यादि यावद्भेदाभावादिति,
10 इति—अस्मात् का[illegible]यत् प्रोक्तं सर्वत्र सम्भाव्याभावात् सर्वाव्यापिता पुरुषस्येति तदुपनयति पुरुष एवेदं सर्वमित्यतिदेशाभावो भेदाभावादिति, अतिदेशोऽतिसर्जनम्—पुरुषात्मकत्वव्याख्या तदभाव इत्यर्थः, पुरुषेण वाऽस्याप्रत्यक्षेणेदंशब्दवाच्यस्य प्रत्यक्षस्यातिदेशः, अनेन वा तस्याप्रत्यक्षस्यातिदेशः सर्वमेव तन्मयमिति ।

किञ्चान्यत्—

15 **उपवर्णनभिन्नरूपाणामासां व्यतिकरः सङ्करश्च प्राप्तः, व्यतिकरो विनिद्रावस्थास्वात्मत्वं जाग्रदवस्थास्वात्मनः, जाग्रदवस्थास्वात्मत्वं विनिद्रावस्थास्वात्मनः, एवमितरयोरवस्थयोरपीत-रेतरस्वात्मत्वप्राप्तिः । सङ्करस्तु क्षीरोदकसंयोगवदविवेचनीयविनिद्रावस्थास्वात्मत्वमिति, ताभ्याञ्चातथात्वं तत्तत्स्वात्मत्वात् तत्स्वात्मवत्, अस्य चातथात्वमेव तत्स्वात्मत्वात् तत्स्वा-त्मवदिति पुरुषावस्थाव्यवस्थाऽभाव एव ।**

20 **उपवर्णनेत्यादे**, यावद्व्यवस्थाभाव एवेति, उप सामीप्ये, सामीप्येन वर्णनमुपवर्णनं विशेष-धर्मेण न सामान्यधर्मेण, सामान्यधर्मस्य दूरत्वात्, यथा पुरुषोऽयं समुत्थायोपविष्टत्वात् पाण्यादिस-

विनिद्राद्यवस्थानां जाग्रदवस्थात्वमाह—**तथा जाग्रदिति**। विनिद्राद्यवस्थानां सुप्तावस्थात्वमाह—**तथा सुप्तेति**। तासां सुषुप्तावस्था-त्वमाह—**सुषुप्तेति**। एवं नारकतिर्यङ्नरामराणां घटपटादीनामप्येवमेव परस्परं स्वस्वावान्तरभेदानाञ्च तत्तदवस्थास्वात्मत्वं हेतूकृत्यै-क्यं भाव्यमित्याह—**अथवेति**। तत्प्रकारमेव दिशोपदर्शयति—**इतरेति** । अतिसर्जनस्य दानार्थत्वात्प्रकृतोपयोग्यर्थमाह-**पुरुषा-**
25 **त्मकत्वेति, उपवर्णनेति** उपवर्णनं हि वस्तूनां परिच्छिन्नतया बोधनम्, तच्च विशेषधर्मेणैव भवेत्, घटत्वादिरूपेण हि परिज्ञान-स्यैव द्रव्यस्य जलाहरणाद्यर्थक्रियाकरणसमर्थत्वात् तेन रूपेण तस्य वर्णने पदार्थान्तरव्यावृत्त्या परिच्छिन्नबोधो भवति, न तु सामा-न्यधर्मेण वर्णने, तस्याव्यावर्तकधर्मत्वेन परिच्छिन्नबोधाजननस्वभावत्वात्, द्रव्यत्वादिना ज्ञाते किमयं घटो वा पटो वाऽन्यो वेत्यपरिच्छिन्नबोधस्यैव जननात् अर्थक्रियाद्यनुदयेन सामान्यधर्मो विनिश्चितबोधं प्रति दूरभूतो विशेषधर्मस्तु झटिति व्यवहार-सम्पादकत्वेन तथाविधबोधं प्रति सन्निकृष्टः, एवञ्चावस्था आत्यन्तिकनिद्राविगमत्वादिविशेषधर्मेणोपवर्णिताश्चातुर्विध्येन, ततश्च-
30 तुर्विधानां तासां तत्तत्स्वात्मत्वात् परस्परमेकत्वात् वैपरीत्यं सङ्करश्च प्राप्त इति भावः । सामान्यविशेषधर्मयोर्दूरत्वसन्निहितत्वे दृष्टान्तमाह—**यथेति** समुत्थायो[illegible] विशेषधर्मा पुरुषत्वपरिच्छेदाय सन्निहिताः, नोर्ध्वत्वादयस्तेषां पुरुषो वा स्थाणुर्वेत्ये-

1 सि० क० [illegible] सहैक्यमित्यधिकः पाठः । २–३ सि० क० एवमितरेऽपी० ।

स्खलनात्, शिरःकण्डूयनाच्चेति, नोर्द्धत्वादिति, उपवर्णनेन भिन्नानि रूपाण्यासां विनिद्राजाग्रत्सुप्तसुषुप्तत्वादिविशेषवर्णनेन तैश्चतूरूपैर्भिन्नैर्व्यतिकरः सङ्करश्च तासां प्राप्तः, इत्थमुक्तैकत्वात्। व्यतिकरो विनिद्रावस्थास्वात्मत्वं जाग्रदवस्थास्वात्मनः, जाग्रदवस्थास्वात्मत्वं विनिद्रावस्थास्वात्मनः, एवमितरयोरवस्थयोरपीतरेतरस्वात्मत्वप्राप्तिः, एतयोश्च तत्स्वात्म[त्व]प्राप्तिरन्ययोरेतत्स्वात्म[त्व]प्राप्तिः। ततश्च दानशीलतपोविशेषैर्नरकावाप्तिर्हिंसादिभिः स्वर्गावाप्तिः, स्वर्गे दुःखानुभवनं नरके सुखानुभवनं पुरुषतत्त्वाज्ञानान्मुक्तिरिति. सङ्करस्तु क्षीरोदकसंयोगवदविवेचनीयविनिद्रावस्थास्वात्मत्वमित्येतौ व्यतिकरसङ्करौ प्राप्तौ, ताभ्याञ्च—व्यतिकरसङ्कराभ्यां हेतुभ्यामतथात्वं—विनिद्रावस्थाया अविनिद्रावस्थात्वम्, एवं शेषाणामप्ययथास्वस्वरूपत्वमासामवस्थानां तत्स्वात्मत्वात्, पुरुषस्वात्मत्वात्. पुरुषस्वात्माभिन्नविनिद्राद्यवस्थास्वात्मत्वादिति यावत्, तदेवैकत्वम्, कारणमाह—तत्स्वात्मत्वा[त् तत्स्वात्मव]दिति, तासामतथात्वमित्थमुक्तम्, अस्य चेति, पुरुषस्याप्यतथात्वमेव—अपुरुषत्वमेव, तत्स्वात्मत्वात्तत्स्वात्मवदिति, एतमर्थमुपसंहरति—इति पुरुषावस्थाव्यवस्था[ऽभावः]—इत्थं पुरुषस्यावस्थानाञ्च व्यवस्था—विशेष्यासाधारण्येन लक्षणेन च वृत्त्याख्या व्यवस्था तस्या अभावः स्वरूपसिद्धेरभावात्।

मा भूदेष दोषः पुरुषस्यावस्थानाञ्च व्यवस्थाया अभाव इति यदि पूर्वोक्तवद्व्यवस्थां पृथक् पृथक् मन्यसे पुरुषस्यापि सर्वावस्थाव्यापिनोऽवस्थानाञ्च चैतन्यसमवस्थानाविर्भावतिरोभावोत्कर्षापकर्षभेदभिन्नानां प्राग्व्याख्यातमृत्पिण्डवत् ततश्च—

**उक्तवद्वा व्यवस्थानुमतौ मत्यां पुरुषातिदेशस्त्यागः, तदत्यागे यदर्थमयमतिदेशोऽद्वैतैकान्तार्थस्तस्या सिद्धिः, एकपुरुषाभ्युपगमो ह्ययमेकपुरुषासिद्धिमेव ते करोति, योऽसावेक एव सम्भाव्यते पुरुषस्तस्याप्यनेकत्वप्राप्तेः।**

(उक्तवद्वेति) **उक्तवद्वा** व्यवस्थानुमतौ मत्यां पुरुषातिदेशस्त्यागः पुरुष एवेदं सर्वमिति, एकपुरुषमयत्वातिसर्गस्त्यक्तव्यो जायते पृथक् पृथक् पुरुषस्यावस्थानाञ्च स्वरूपव्यवस्थाभ्युपगमे पुरुषैककारणमयत्वविरोधादिति। एष दोषो मा भूदिति तदत्यागे यदर्थमयमतिदेशः—अतिसर्गः प्राग्व्या-

वमपरिच्छिन्नबोधं प्रत्येव [illegible]दिति भावः। एकस्यापरस्वात्मत्वप्राप्तिलक्षणं व्यतिकरमादर्शयति—**व्यतिकर इति**। तत्र दोषमाह—**ततश्चेति**। अविवेचनीयस्वभावत्वलक्षणं सङ्करं निदर्शयति—**सङ्करस्त्विति**। यद्वस्तु यथा विद्यते तत्तथा न स्यात् संकरव्यतिकराच्चेत्याह—**ताभ्याञ्चेति**। जाग्रदाद्यवस्थायाः विनिद्राद्यवस्थास्वात्मत्वं साक्षान्नास्तीत्यतस्तदर्थमाह—**पुरुषस्वात्मत्वादिति**। जाग्रदाद्यवस्थायाः पुरुषस्वात्मत्वे पुरुषत्वमेव स्यात्, न तु विनिद्राद्यवस्थात्वमिति कथं व्यतिकरसङ्करावित्यत्राह—**पुरुषस्वात्मेति**। इत्यमेव पुरुषस्याप्यपुरुषत्वं विनिद्राद्यवस्थास्वात्मत्वेन विनिद्राद्यवस्थारूपत्वादित्याह—**पुरुषस्यापीति**। तथा च पुरुषावस्थयोः सङ्करव्यतिकराभ्यां स्वरूपस्यैवासिद्ध्या कथं तयोर्व्यवस्था भवेदित्याह—**इत्थमिति**। **पृथक् पृथगिति** चतस्रोऽवस्थाः परस्परं भिन्नाः सर्वत्रानुवर्तनशीलः पुरुषोऽवस्थाभ्योऽन्य इति व्यवस्थां मन्यसे इत्यर्थः। तथाविधव्यवस्थाभ्युपगमे सर्वं पुरुषमयमिति कथमतिदिश्यतेऽभेदे हि स सम्भवति नान्यथेत्याह—**उक्तवद्वेति**। तथापि तदतिदेशाग्रहे तेन पुरुषमयत्वातिदेशेनैकान्तेनाद्वैतसिद्धिस्तेऽभिमता न सेत्स्यति प्रत्युतानेके पुरुषाः सम्पद्यन्तेऽवस्थाभिन्नत्वात् पुरुषस्येत्याह—**यदर्थमयमिति**। विनिद्राद्यवस्थानां देवमनुजादीनां घटपटादीनाञ्च परस्परं भिन्नतया निखिलानामेषां पुरुषमयत्वे

ख्यातः पुरुष एवेदं सर्वमिति, किमर्थममावतिदेशः ? अद्वैतैकान्तार्थः-अद्वैतमेकपुरुषमयमित्येतत्प्रति-
पादनार्थस्तस्यैवासिद्धिः-अद्वैतैकान्तस्य, किं कारणं ? यस्मादेकपुरुषाभ्युपगमोऽयमेकपुरुषासि[द्धि]मेव ते
करोति, तत्कथमिति चेत् ? योऽसावेक एव त्वया पुरुषः सम्भाव्यते तस्याप्यनेकत्वमापद्यते, एवमिति
त्वदभिहितेनैव पुरुषस्वात्मातिदेशाद्वैतेन ।

5 का पुनर्भावना ? उच्यते—

**य[त्स्वरूपा]व्यतिरिक्तलक्षणा अवस्थास्त्वया विना भेदेनोच्यन्ते पुरुष एवावस्था इति,
नावस्था एव पुरुष इति तत एव तस्य ताभ्यो नानात्वं तासाञ्च त्वद्वचनादेव सिद्ध्यति,
यथोर्द्ध्वग्रीवादिलक्षणो घटो घट एवोर्द्ध्वग्रीवादय इति, न त्वभेदेऽवधारणभेदोऽस्ति, यथा घट
स्वात्मैव घटो घट एव घटस्वात्मेति, स पुरुषोऽप्येवञ्च सति पुरुषान्तरेणाभिव्याप्तः, ततश्चान-
10 वस्थितैकत्वतत्त्वप्रतिष्ठः पुरुषान्तरातिदेश्यश्च, [पु]रुषस्वात्मत्वादवस्थावत् ।**

**यत्स्व[रूपेत्या]दे** यावदवस्थावदिति, यस्य स्वरूपं यत्स्वरूपं यस्य स्वरूपं पुरुषस्य, किं
स्वरूपं ? नित्यसर्वगतसर्वात्मकत्वकारणत्वादीनि, तदव्यतिरिक्तं लक्षणमासां ता अवस्थास्तदव्यतिरि-
क्तलक्षणाः तत्स्वरूपपुरुषाव्यतिरिक्तलक्षणास्त्वया विना भेदेनोच्यन्ते-तस्मात् पुरुषादभिन्ना एवोच्यन्त
इत्यर्थः, तद्यथा पुरुष एवावस्था [ इति ], नावस्था एव पुरुष इत्यवधारणभेदादेव भेदोपदर्शनेन च भेदोऽ-
15 [भ्यु]पगम्यते तत एव तस्य ताभ्यो नानात्वं तासाञ्च त्वद्वचनादेव सिद्ध्यति यथोर्द्ध्वग्रीवादिलक्षणो घटो
घट एवोर्द्ध्वग्रीवादयः, न पटो न पटचातुररूयादय इति तस्य तासु तासाञ्च तस्मिन्नवधारणानवधार-
णाभ्यां भेद एव सिद्ध्यति, न त्वभेदेऽवधारणभेदोऽस्ति यथा घटस्वात्मैव घटो न [ घट एव ]
घटस्वात्मेति, तस्मादवस्थानां विनिद्रादीनामवस्थावतश्च पुरुषस्य भेदस्त्वद्वचनादेवेति । किञ्च स
पुरुषोऽपीत्यादि, एवञ्च सति-एकपुरुषमयत्वातिदेशात्यागे सोऽपि पुरुषः पुरुषान्तरेणाभिव्याप्तः

20 तावन्तः पुरुषाः स्युर्न तु त्वदिष्टैकान्ताद्वैतसिद्धिरिति भावः । एतदेव स्फुटीकर्तुमाह—**यत्स्वरूपेति** पुरुष एवावस्था इति सामाना-
धिकरण्यनिर्देशात् पुरुषस्वरूपाव्यतिरिक्तस्वरूपताऽवस्थानां प्रदर्शिता । तथा नावस्था एव पुरुष इति सामानाधिकरण्यनिर्देशेन
प्रतीयमानाभेदस्य नञा निषेधादवस्थाभ्यः पुरुषस्य भेदो गम्यते तथाऽवस्थानामपि परस्परं भेदस्त्वया स्वीकृत एवेति भावः ।
तत्र दृष्टान्तं दर्शयति—**यथेति,** ऊर्द्ध्वग्रीवादिलक्षणो घटो न पटः, घट एवोर्द्ध्वग्रीवादयो न पटचातुररूयादय इति वचनेन
घटाभेद ऊर्ध्वग्रीवादेः प्रतीयत इति भावः । **ततश्चानवस्थितेति,** एकत्वेन तत्त्वेन च यद्वैकत्वे तत्त्वे चानवस्थिता प्रतिष्ठा
25 यस्य पुरुषस्येति विग्रहः, पुरुषस्यानेकत्वापादनात्तस्यानवस्थितैकत्वप्रतिष्ठत्वम्, पुरुषपरम्परानवस्थापादनाच्चात्मरूपासिद्ध्याऽ-
नवस्थिततत्त्वप्रतिष्ठत्वं बोध्यम् । पुरुष एवावस्था इति निर्देशेनाभेदप्रतिपादनेऽपि अवस्था एव पुरुष इत्यनुक्त्वा नावस्था
एव पुरुष इत्यवधारणभेदाङ्गीकारेण पुरुषावस्थयोर्भेद एव स्यात्. न हि सर्वथाऽभिन्नेऽवधारणभेदः क्वापि दृष्ट इत्याह—**अवधा-
रणानवधारणाभ्यामिति** । तस्य-पुरुषस्य तासु-अवस्थासु अभेदावधारणेन, तासां-अवस्थानां तस्मिन्-पुरुषेऽभेदानवधा-
रणेन । अभेदेऽवधारणभेदासम्भवे निदर्शनमाह—**यथेति** । अयं पुरुषः पुरुषान्तरेणाभिव्याप्तः पुरुषस्वात्मत्वात्, यो यत्स्वात्मा
30 स तेनाभिव्याप्तो यथा विनिद्राद्यवस्थाः, ता हि पुरुषस्वात्मिका एव, नान्यः कश्चित्तासामात्मा. तस्मादेव तास्तेनाभिव्याप्ताः,
स तु व्यापकः, एवमेव पुरुषोऽपि पुरुषस्वात्मेति येन केनाप्यन्येन पुरुषेणाभिव्याप्तः स्यात्, न तु तेनैव पुरुषेण, व्याप्त्या पुरुषा-
न्तराभिव्याप्तत्वासिद्धावपि स्वस्य स्वेनाभिव्याप्तत्वासम्भवात् पुरुषान्तराभिव्याप्तत्वं फलति, तदपि पुरुषान्तरं पुरुषस्वात्मत्वा-
देवापरपुरुषान्तराभिव्याप्तं भवेदित्येवमुत्तरोत्तरपुरुषान्तराभिव्याप्तत्वं पूर्वपूर्वपुरुषादेर्भाव्यम्, तथाचानेके पुरुषा भवेयुरनवस्था
चेत्याह—**एकपुरुषमयत्वेति** एकश्च पुरुष एकत्वे एकत्वेन वा न व्यवस्थितः, तथा स्वात्मस्वरूपे [आ]त्मस्वरूपेण वेत्याह—

पुरुषस्वात्मत्वादवस्थावदिति प्राप्तः. यथा विनिद्राद्यवस्थाः पुरुषस्वात्मान एव नावस्थान्तरात्मिका इति कृत्वा पुरुषेणाभिव्याप्तास्तथा पुरुषोऽपि पुरुषस्वात्मत्वात्तदविनाभावात् पुरुषान्तरेणाभिव्याप्तः स्यात्तथा तदपि पुरुषान्तरं पुरुषस्वात्मत्वात्तद्वदेवेति पुरुषानेकत्वं स्यात्तस्यापि तथैवेत्यनवस्था च, ततश्च पुरुषेणाभिव्याप्तत्वादनवस्थितैकत्वप्रतिष्ठः पुरुष इति प्राप्तम्–अनवस्थिता एकत्वेन एकत्वे वा प्रतिष्ठाऽस्य सोऽयमनवस्थितैकत्वप्रतिष्ठः पुरुषः स्यात् पुरुषस्वात्मत्वात्, अवस्थावत्, यथाऽवस्थाः पुरुषस्वात्मत्वादनवस्थितैकत्वप्रतिष्ठास्तथा पुरुषोऽपि स्यादिति। तथाऽनवस्थिततत्त्वप्रतिष्ठः– तस्य भावस्तत्त्वमात्मस्वरूपम्, अनवस्थिता तत्त्वेन तत्त्वे वा प्रतिष्ठाऽस्य सोऽयमनवस्थिततत्त्वप्रतिष्ठः न स्वरूपे प्रतिष्ठितः स्यात् पुरुषः पुरुषस्वात्मत्वादवस्थावत्, यथाऽवस्थाः पुरुषस्वात्मानोऽनवस्थितात्मस्वरूपव्यवस्थाप्रतिष्ठाः पुरुषस्वरूपव्यवस्था एवेष्यन्ते तत्रैव तासां प्रतिष्ठा, न स्वात्मसु, तथा पुरुषोऽपि स्यात्। पुरुषान्तरातिदेश्यश्च पुरुषः स्यात् पुरुषस्वात्मत्वादवस्थावत्, यथेमाः सुप्ताद्यवस्थाः पुरुषस्वात्मत्वात् पुरुष एवेदं सर्वमित्यतिदिश्यन्ते तथा पुरुषः पुरुषस्वात्मत्वात् पुरुषान्तरमेवायमित्यतिदेश्यः स्यात्। 5 10

स्यान्मतमेतद्दोषभयादिदंशब्दवाच्यप्रत्यक्षादर्थान्तरं पुरुषमभ्युपगम्यैता एवावस्थाः पुरुष इति प्रत्यक्षार्थेदंविषयतया पुरुष एवेदं सर्वमिति दृश्येऽदृश्यस्यातिदेशः स्यात्, यथाऽयं देवदत्त एवेत्ययंशब्दवाच्यो हि देवदत्तः प्रत्यक्षत्वाप्रत्यक्षत्वयोः स एव तथा पुरुष एवेदमिति, एतच्चायुक्तम् यस्मात्—

**अस्यां प्रत्यक्षार्थेदंविषयतायां वाऽचेतनव्यक्तमूर्त्तानित्यादिरूपार्थपुरुषपरमार्थता प्राप्नोति।** 15

(**अस्यामिति**) अस्यां प्रत्यक्षार्थेदंविषयतायां सत्यामचेतनव्यक्तमूर्त्तानित्यादिरूपार्थपुरुषपरमार्थता प्राप्नोति। आदिग्रहणादसर्वात्मक[मसर्वगत]कार्यानेकत्वादिरूपार्थपुरुषपरमार्थतापि, न चेतनाव्यक्तामूर्त्तनित्यसर्वात्मकसर्वगतकारणैकरूपार्थपुरुषपरमार्थता स्यादिति प्रसक्तोऽयं दोष आपादितः, एवं तावदन्य[त्वा]नेकत्वः पुरुष इति पुरुषस्वात्मापरित्यागेनावस्थाभेदद्वारेणोक्त्वोक्तः।

**ततश्चेति** स्वस्य स्वाव्याप्तत्वलक्षणबाधसहकारेण यो यत्स्वात्मा स तेनाभिव्याप्त इति सामान्यव्याप्त्यापि पुरुषान्तराभिव्याप्तत्वलक्षणविशेषासिद्धेः पुरुषोऽनवस्थितैकत्वतत्त्वप्रतिष्ठः पुरुषस्वात्मत्वादवस्थावदिति भावः। अनवस्थितैकत्वतत्त्वप्रतिष्ठ इति पदं खण्डशो व्याकरोति–**अनवस्थितेति**। **यथेति** अवस्थानां चतुर्विधत्वेनैकत्वे एकत्वेन वाऽनवस्थितत्वं बोध्यम्। अवस्थानां पुरुषात्मकतया पुरुषस्वरूप एव व्यवस्थितत्वं नात्मस्वरूपेऽतोऽनवस्थिततत्त्वप्रतिष्ठास्तथा पुरुषोऽपीत्याह–**तथेति**। एवमवस्थाः यथा पुरुषमयत्वेनातिदिश्यन्ते तथा पुरुषोऽपि पुरुषान्तरमयत्वेन पुरुषान्तरमेवायमित्यतिदेश्यः स्यादित्याह–**पुरुषान्तरेति**, नन्विदं सर्वं पुरुष एवेति पुरुषप्राधान्येन न पुरुषमयत्वातिदेशः क्रियते येनोक्तदोषाः स्युः, यतोऽत्रोपादेयस्य पुरुषमयत्वस्योद्देश्येन एतत्सर्वेणाग्नेरिव धूमेनाव्याप्तेरेतत्सर्वातिरिक्ते पुरुषेऽपि पुरुषमयत्वप्राप्तेः किन्तु एता अवस्था एव पुरुष इति प्रत्यक्षार्थेदंविषयावस्था एवोद्दिश्य पुरुषमयत्वं विधीयते, तथाच पुरुषमयत्वस्यावस्थात्वव्याप्यतया न पुरुषः पुरुषान्तरातिदेश्य इति शङ्कते–**स्यान्मत[illegible]ति**। एवं सति पुरुषमयत्वावस्थात्वयोः समव्याप्ततयाऽवस्थापुरुषयोः प्रत्यक्षत्वाप्रत्यक्षत्वयोरभेदेन पुरुषस्यापि प्रत्यक्षार्थेदं विषयतायां सत्यां प्रत्यक्षार्थस्याचेतनत्वव्यक्तत्वमूर्त्तत्वानित्यत्वासर्वात्मकत्वकार्यत्वादिधर्मवत्तया पुरुषोऽपि तथैव भवेन्न तु चेतनत्वाव्यक्तत्वामूर्त्तत्वनित्यत्वादिधर्मवान् स्यादित्युत्तरयति–**अस्यामिति**। अयं दोषः पुरुषस्यावस्थास्वात्मत्व एव सम्भवति न तु पुरुषस्वात्मत्व इति पुरुषस्वात्मत्वप्र[युक्त]दोषोपवर्णनावसरे तत्प्रदर्शनमनुचितमिति शङ्कां मनसिकृत्योभयोरभेदप्रसक्तोऽयमपि दोषः प्रसज्यत इति प्रदर्शित इत्याह–**प्रसक्तोऽयमिति**। एवं पुरुषं प्रधानतया परिगृह्य अवस्थाभेदद्वारेण पुरुष- 20 25 30

१ सि. क. द्यवस्थास्याघतिदिश्यात्। २ सि. क. °तापि। ३ सि. क. °भेदं तद्वा°।

इदानीमवस्थान्य[त्व]द्वारेणैव पुरुषानेकत्वं त्वदुक्तवद्ब्रूमः—

**अवस्थास्त्वन्यत्वानेकत्व एव पुरुषः, अवस्थास्वात्मत्वात् पुरुषस्य, ततस्तासामन्यत्वेनानेकः, त्वदुक्तेरेवावश्यमन्यास्ताः पुरुषात्ताभ्यश्च सोऽन्यस्तद्रूपापत्त्यनिष्टत्वात् अवस्थान्तरवत् ।**

(**अवस्थास्त्विति**) अवस्थास्त्वन्यत्वानेकत्व एव पुरुष इत्येतत्प्रत्यभेदोपन्याससवाक्यम् 5 तद्वचनस्मारणेन विचारार्थोपन्यासा[य] इत्यर्थः अवस्थास्तु पुरुषोऽन्यत्वानेकत्वे सत्येव, यतोऽवस्थास्वात्मत्वं पुरुषस्येष्यते ततस्तासामन्यत्वेनानेकः अन्योऽनेकश्चेति वा. तत्कथमिति चेन् त्वदुक्तेरेवावश्यमन्यास्ताः पुरुषादस्माद्विनिद्रा[द्य]वस्थाः ताभ्यश्च सोऽन्य इति परस्परावधिकमन्यत्वं साध्यते तद्रूपापत्त्यनिष्टत्वादिति हेतुः, तयोश्चावस्थावस्थावतोस्तद्रूपापत्त्यनिष्टत्वं सिद्धम्, अन्यथाऽवस्थानां विशेषितानामन्यत्वे साध्ये पुरुषपृथक्त्वेन तदसिद्धेराश्रयासिद्धिः, तद्रूपापत्त्यनिष्टत्वं वाऽसिद्धमाशङ्केत । अथवा 10 पुरुषोऽवस्था इति चाविशेष्य पराभिमतवस्तूभयमपि परस्परतोऽन्यदिति सामान्येन साध्यते, इतरस्येतररूपापत्त्याऽनिष्टत्वादित्यर्थः । अवधारणभेदाच्चेतररूपापत्त्यनिष्टत्वमापादितम्, किमिव ? अवस्थान्तरवत्, यथा विनिद्रावस्था सुप्तावस्थारूपापत्त्या नेष्टा तथा स्वतोऽन्यतश्चेति ।

तद्रूपापत्त्यनिष्टत्वासिद्धिरिति मा मंस्था इत्यत आह—

**यतोऽवस्थास्वात्मत्वमस्य नेष्यते, पुरुषातिदेशात्तु पुनरन्यत्वं न सम्भवत्येव, स्वपरविष-** 15 **यकृतभेदद्वारान्यत्वासम्भवात्, कस्यचित्कथञ्चित्ततोऽन्यस्यानुपपत्तावपि चतस्रोऽवस्थाः त्वदुक्तिवदेव येन केनचिदुपपत्तिप्रकारेण सम्भावनापादितान्यत्वाः पृथक् पृथक् स्युः पुरुषश्च ।**

(**यत इति**) यतोऽवस्थास्वात्मत्वमस्य नेष्यते पुरुषस्य, एतदवस्थारूपापत्त्या पुरुषानिष्टत्वादवस्थाद्वारेण पुरुषस्यावस्थानाञ्चान्यत्वानेकत्वं त्वदुक्तौ चैवमुपपादितम्[1] । पुरुषातिदेशात्तु पुनरित्यादि,

स्वात्मत्वात् पुरुषस्यान्यत्वानेकत्वमुक्तमित्याह—**एवं तावदिति** । अथावस्थां प्रधानीकृत्य तद्भेदद्वारेणैव पुरुषस्यान्यत्वाने 20 कत्वमाह—**अवस्था इति** । पुरुषोऽवस्थाऽभिन्नस्तदा भवेद्यदा सोऽन्यत्वादनेकोऽन्यत्वे सत्यनेको वा स्यादिति तद्वाक्यस्यार्थः, इदं वाक्यं यत्स्वरूपाव्यतिरिक्तलक्षणास्ता इति पूर्ववचनं स्मारयति तथा चावस्थास्वरूपाव्यतिरिक्तलक्षणत्वात् पुरुषस्याभेदे चावधारणभेदासम्भवाद्भिन्नत्वं तेन चानेकत्वं भवतीत्याशयेनाह—**प्रत्यभेदोपन्यासवाक्यमिति** । पुरुषाभेदप्रतिपादकवाक्यविपरीतार्थबोधकवाक्यमित्यर्थः, कथमन्यत्वमित्यत्राह—**त्वदुक्तेरेवेति** नावस्था एव पुरुष इत्युक्तेरेव, एवञ्च पुरुषेऽवस्थाभेदोऽवस्थासु पुरुषभेदो वा तद्रूपापत्त्यनिष्टत्वादिति हेतुना साध्य इत्याह—**परस्परेति** अवस्थावस्थावन्तौ परस्परं भिन्नाविति 25 प्रतिज्ञातव्यं पुरुषस्यावस्थापत्तेरनिष्टत्वस्य त्वदिष्टत्वान्नासिद्धत्वं हेतोः, पुरुषोऽवस्थाभिन्नस्तद्रूपापत्त्यनिष्टत्वादित्युक्तौ तु सिद्धसाधनं दोषः, अवस्थाः पुरुषभिन्नाः तद्रूपापत्त्यनिष्टत्वादित्युक्तौ चाश्रयासिद्धिः पुरुषभिन्नावस्थाऽसिद्धेरित्याह—**अन्यथेति** । पुरुषोऽवस्था इति नामग्राहमकृत्वा सामान्यतः पराभिमतं वस्तूभयं परस्परतोऽभिन्नं, इतरेतररूपापत्त्यनिष्टत्वादिति साध्यमित्याह—**अथवेति** । यथा चतसृषु विनिद्राद्यवस्थासु एकस्या अपररूपताया अनिष्टता तथाऽवस्थावस्थावतोः परस्पररूपत्वेऽनिष्टत्वम्, न चासिद्धता हेतोः, अवधारणभेदाङ्गीकारेणेतरस्येतररूपतापत्त्याऽनिष्टतायाः सिद्धत्वादिति भावः । उक्तानुमाने निदर्शनमाह— 30 **अवस्थान्तरवदिति** । इदमेवाह—**यत इति** नावस्था एव पुरुष इत्यवधारणाङ्गीकारेण पुरुषस्यावस्थास्वात्मत्वाभावात्तयोस्त्वदीयाभिप्रायेणावस्थापेक्षयाऽन्यत्वमनेकत्वञ्च सिद्धमित्यभिप्रायः । पुरुष एवेदमिति वचनादवस्थाः पुरुष एवेत्यवधारणाङ्गीकारे

१ सि. त्वदुक्तौ चैवमिति नास्ति ।

पुरुष एवेदं सर्वमिति पुरुषत्वेनावस्थानामतिदेशेऽन्यत्वं न सम्भवत्येव कथं ? स्वपरविषयकृतभेदद्वारा-न्यत्वासम्भवात्—स्वविषयकृतो घटस्य रूपादीनां प्रधानस्य सत्त्वादीनाञ्चैकवस्तुगतानामेव धर्माणां भेदः परविषयकृतस्तु तयोरेव वस्त्वन्तरात् पटादेः पुरुषाच्च भेदः, तदुभयभेदद्वाराऽन्यत्वं सम्भाव्येत, तत्त्वनभ्युपगतान्यत्वद्वारद्वयं भेदद्वयासम्भवात्, ततोऽन्यत्वानुपपत्तिः कस्यचिदिति वस्तुनः, कथञ्चिदिति रूपादिसत्त्वादिप्रकारेण तद्वारानभ्युपगमादेव. ततः— पुरुषादन्यस्यानुपपत्तौ सत्यां ता अपि चतस्रोऽ- 5 वस्थाः [अन्यत्वोपपत्तिवत्] पृथक् पृथक् पुरुष [श्च]—चत्वारः प्रभेदाः स्युः पुरुषाः, इदमपि त्वदु-क्तिवदेव, तत्कथमिति तदुच्यते यथा केनचिदुपपत्तिप्रकारेणासम्भाव्यमप्यन्यत्वमुच्यते तथा ता अप्य-वस्थाः सम्भावनापादितान्यत्वाः पृथक् पृथक् स्युः ततश्च ताः पुरुषस्वात्मत्वात् परस्परतोऽन्यत्वाच्च पुरुषाः पृथक् पृथक्, विनिद्रावस्था प्रत्येकं पुरुषः, एवं शेषा अपि प्रत्येकं पुरुषाः, केन पुनरुपपत्तिप्र-कारेणान्यत्वं ? अवधारणभेदादेव, एवं पुरुषातिदेशात् पुरुषबहुत्वं विनिद्राद्यवस्थानां पुरुषस्वात्मत्वा- 10 दिति ।

अथ पुरुषलक्षणापि विनिद्रावस्था न पुरुषः पुरुषोऽपि न तर्हि पुरुषोऽस्तु, पुरुषलक्षण-त्वाद्विनिद्रावस्थावदेवं शेषा अपीति पुरुषाभाव एव, कुतोऽस्य सर्वगतता ?

अथेत्यादि, अथ पुरुषलक्षणापि विनिद्रावस्था न पुरुषः—यदि प्रत्येकं पुरुषत्वं तद्बहुत्वञ्च दोषौ दृष्ट्वा पुरुषलक्षणापि विनिद्रावस्था पुरुषो नेष्यते ततः पुरुषोऽपि न तर्हि पुरुषोऽस्तु पुरुषलक्षण- 15 त्वाद्विनिद्रावस्थावत्, एवं शेषा अपीति—यथा विनिद्रावस्था पृथक् पुरुष इत्यापाद्य तत्परिहारार्थं पुरुषलक्ष-णत्वे सत्यप्यपुरुषत्वमाशङ्क्य पुरुषस्यापुरुषत्वं तद्वदित्यापादितं तथा प्रत्येकं सुप्ताद्यवस्था अपि [पृथक्] पुरुष इत्यापाद्य तत्परिहारार्थं पुरुषलक्षणत्वे सत्यप्यपुरुषत्वमाशङ्क्य सुप्ताद्यवस्थानां तद्वत् पुरुषस्यापि

---

च तयोर्नान्यत्वं सम्भवतीत्याह—पुरुषेति । अन्यत्वप्रयोजकमादर्शयति स्वपरेति । वस्तुनोऽन्यत्वे हि स्वविषयकृतभेदः परविषयकृतभेदश्च प्रयोजकः, यथा घटनिष्ठानां रूपरसादीनां प्रधानगतानां सत्त्वरजःप्रभृतीनां परस्परं भेदात्, यथा वा तस्य 20 घटस्य परविषयात् पटादेः प्रधानस्य च पुरुषाद्भेदादन्यत्वम्, एवंविधान्यत्वप्रयोजकः प्रकृते नास्ति सर्वस्य पुरुषात्मकत्वेन स्वपरभेदाभावात् कस्यचित् कथञ्चिदिति भावः । त्वदुक्त्या तु तस्यानेकत्वं सम्भवतीत्याह—तत इति विनिद्राद्याश्चतस्रोऽवस्थाः परस्परमन्याः पुरुषातिदेशाच्च पुरुषस्वात्मान इति पुरुषस्यापि चतुर्विधत्वं प्रत्यवस्थं पुरुषत्वपर्याप्तेरिति भावः । अवस्थानां पुरुषात्मकत्वे पुरुषवदनन्यत्वमेव न्याय्यं तदभिन्नाभिन्नत्वस्य तदभिन्नत्वव्याप्तत्वात्, अन्यत्वन्तु तासामन्याय्यमेव परन्तु त्वयाऽवधारणभेदलक्षणोपपत्तिबलाच्चातुर्विध्यमुच्यतेऽतः पुरुषबहुत्वमित्याह—यथेति । तत्र हेतुमाह—ततश्चेति । प्रत्यवस्थं 25 पुरुषत्वपर्याप्तिं दर्शयति—विनिद्रावस्थेति । विनिद्रावस्था पुरुषः पुरुषस्वात्मत्वात् पुरुषवदित्यनुमानं फलितम् । अथ पुरुष-स्वात्मत्वेऽपि विनिद्राद्यवस्थाया न पुरुषत्वमितीष्यते तर्हि पुरुषस्वात्मत्वाविशेषात् पुरुषस्यापि पुरुषत्वाभावप्रसङ्गेन कस्य सर्वगतता भवेत् पुरुषाभावात्, विद्यमानस्यैव हि सर्वगतत्वं नाविद्यमानस्येत्याह—अथेति । शेषास्ववस्थास्वपि विनिद्रावस्था-श्रितग्रन्थसङ्गमनं विदधाति—यथेति । पुरुषातिदेशात्सर्वस्य पुरुषस्वात्मत्वाद्विनिद्रावस्थायाः पुरुषत्वेऽपादिते वादिना च तत्परि-हारार्थं पुरुषस्वात्मत्वेऽपि नासौ पुरुष इत्युक्ते प्रतिवादिना पुरुषस्वात्मत्वाद्विनिद्रावस्थावत् पुरुष इति यथोपवर्णितं तथैव 30 सुप्ताद्यवस्था अपि पुरुषस्वात्मत्वात् प्रत्येकं पुरुष इति प्रतिवादिनोक्ते वादिना च पुरुषस्वात्मत्वेऽपि पुरुषत्वानभ्युपगमे

---

१ सि. क. ऽवस्थान्यत्वापत्तिवत् ।

पुरुषात्मनोऽपुरुषत्वमित्यापादनीयमिति पुरुषाभाव एव—इत्थं पुरुषस्याभाव एव प्रसक्तः कुतोऽस्य सर्वगतता ? विद्यमानस्य हि सर्वत्वमसर्वत्वं सर्वगतत्वमसर्वगतत्वञ्चेति विचार्यं स्यात्।

**अथवा त्वदभिप्रेतमेवैतदेवम्, तदात्मत्वाभिमतनिरसनात्, यथोष्णो न भवत्यग्निरिति ब्रुवन्नौष्ण्यात्मानमग्निमेव निरस्येत् तथेहापि।**

5 **( अथवेति )** अथवा त्वदभिप्रेतमेवैतत्—अभावप्रतिपादनं नास्मदभिप्रायः, एवमिति, एतेन विधिना, कुतः ? तदात्मत्वाभिमतनिरसनात्, यो यदात्मत्वेनाभिमतोऽर्थस्तं निरस्यन् तदात्मानमेवार्थं निरस्यन् दृष्टः, यथोष्णो न भवत्यग्निरिति ब्रुवन्नौष्ण्येनाविनाभाविनमौष्ण्यात्मानमग्निमेवार्थं निरस्येत्, तथेहापि विनिद्राद्यवस्थालक्षणं पुरुषमुक्त्वा पुरुष [स्वात्मान एव ताः] पुरुषान्न भिन्नाः सन्तीति ता निराकुर्वंस्तदात्मानं पुरुषमेव त्वं निराकरोषीति त्वदभिप्राय एवायं पुरुषाभावः। एवं तावत् प्रवृत्त्योपल-
10 क्षितस्त्वदीयोऽभिप्रायो व्याख्यातः।

नाभिप्रायमात्रादेवाभावः किं तर्हि ? स्फुटमेव त्वयोक्तं नास्ति पुरुष इति तद्यथा—

**यत्तु यत्नेन[अवस्थालक्षणः पुरुषः पुरुषलक्षणा अवस्था इत्यतिदिश्यते तेनैकत्वान्यत्वादिविकल्पप्रसङ्गेनाविकल्पपरमार्थतयेष्टस्य तस्यासत्त्वमेवोक्तमतो न तूक्तवत्]**

**यत्तु यत्नेनेत्यादि**, सामान्येनायं न्यायोऽवतार्यते भावना त्वस्य विशेष्य वक्तव्या, यथाऽवस्था-
15 लक्षणः पुरुषः पुरुषलक्षणा अवस्था इति यातिदिश्यमानानां परस्परमेकत्वमन्यत्वमवक्तव्यत्वमसत्त्वञ्चेति विकल्पाः स्युः, सविकल्पत्वेन पुनरेते सन्ति कल्पनाविषयत्वात्, विकल्पातीतनिर्विकल्पपरमार्थ-

शङ्किते प्रतिवादिना तद्वदेव पुरुषोऽपि न पुरुष इत्यापादनीय इति भावः। एवञ्च सति को दोष इत्यत्राह—**इत्थमिति**। योऽयं पुरुषस्याभावो मया प्रतिपादितः स नास्मदभिप्रायेण, किन्तु त्वदभिप्रायानुसारेणैव, अग्निर्नास्तीत्यनुक्तावपि नाग्निरुष्णो भवतीति तदात्मत्वेनाभिमतौष्ण्यनिरसनेऽग्नेर्निरसनमपि गम्यते तथा पुरुषो विनिद्राद्यवस्थालक्षण इत्युक्त्वा ताः पुरुषभिन्नाः
20 न सन्तीति विनिद्रादीनां निरसनात्तदात्मा पुरुषोऽपि निराकृत एव स्यादित्याह—**अथ वेति**। **तदात्मत्वेति** स आत्मा यस्य, तदात्मनो भावः, तदात्मत्वेनाभिमतं तस्य निरसनात्, औष्ण्यस्य ह्यग्निरेवात्मा अतस्तदात्मत्वमौष्ण्यस्य तन्निरसनादग्निरपि निरस्त एव, तथैवावस्थानामात्मा पुरुषः तदात्मत्वमवस्थानां, पुरुषाच्च भिन्ना अवस्थाः सन्तीति तासां निरसनात् पुरुषोऽपि निरस्त एवेति भावः। **एवं तावदिति** इत्थमवधारणभेदाद्युपवर्णनलक्षणप्रवृत्त्याऽनुमितः पुरुषाभावाभिप्राय इत्यर्थः। कण्ठतोऽपि पुरुषाभाव उक्त एवेत्याह—**नाभिप्रायेति**। **यत्त्विति** अत्र मूलं टीकानो नोपलब्धं केवलं भावनानुसारेणानुमितमेव।
25 विनिद्रालक्षणः पुरुषः अवस्थास्वात्मा पुरुष इत्येवं यत्नेन पुरुषस्यावस्थात्मत्वमतिदिष्टम्, पुरुष एवेदं सर्वं पुरुषस्यात्मैव ता इत्येवमवस्थानां पुरुषमयत्वातिदेशः कृतः, एतेन परस्परं तयोरेकत्वं वाऽन्यत्वं वा ताभ्यामनिर्वाच्यत्वं वा अवाच्यत्वेनासत्त्वं वा प्रसज्यते, तस्मात् पुरुषाभाव उक्त एव, अत एवोक्तवक्ष्यमाणानुमताविद्याद्यभिधानमचार्वित्यनुमितस्य मूलस्य सामान्येनाभिप्रायः, एतमेवाभिप्रायं विशिष्य दर्शयति—**भावना त्वस्येति**। एकत्वान्यत्वादीनां विकल्पानां कल्पनाविषयत्वेन सविकल्पत्वात् परमार्थतो विकल्पविनिर्मुक्तस्यैव पुरुषस्य त्वयाऽलक्षणत्वाभ्युपगमात् पृथक् पृथक् पुरुषस्यावस्थानाञ्चाभ्युपगमो न सम्भवति,
30 एवञ्चालक्षणत्वादभिमततत्त्वस्यावस्तुत्वमेव त्वया स्फुटीकृतमिति भावः। पुरुषाभावादेव सर्वस्याप्यभावः, अवस्थावतोऽभावेऽव-

१ सि. क. पुरुषस्यात्मैताः।

त्वाबालक्षणत्वं त्वयोक्तं प्राक्, अतो न तूक्तवत् त्वयैव स्फुटीकृतमसत्त्वं प्रतिपादयितुमिष्टं त्वद्वचनेनैव सर्वस्यापि, न केवलं पुरुषस्यैव, अवस्थानामवस्थावतः पुरुषस्य चेति ।

**वयमपि ब्रूमोऽसदेव सर्वं त्वदिष्टमिति, त्वन्मते सर्वस्याभावात्, भवनं हि द्विविधं सन्निधिभवनमापत्तिभवनञ्च, सन्निधिभवनमापत्तिभवनाभावे न भवितुमर्हति, इदमपि कुतोऽस्य ? भेदत्वेन परिणामित्वेन वाऽभूतत्वात्, वन्ध्यापुत्रवत् ।** 5

(**वयमपीति**) वयमपि ब्रूमः—न केवलं त्वद्वचनादेवासत्त्वं पुरुषस्य, त्वद्वचनसमर्थनाय वयमप्यसदेव सर्वं त्वदिष्टमिति ब्रूमः कुतः ? त्वन्मते सर्वस्याभावात्, भवनं हि द्विविधं मया वक्ष्यमाणमितरेतरापेक्षद्वैतवृत्ति सन्निधिभवनमापत्तिभवनञ्च सन्निधिभवनमापत्तिभवनाभावे न भवितुमर्हति, तिष्ठतु सन्निधिभवनम्, इदमपि कुतोऽस्य ? आपत्तिभवनं पुरुषस्य, कथं नास्ति ? भेदत्वेनाभूतत्वात् परिणामित्वेनाभूतत्वात्, वन्ध्यापुत्रवत्, यथा वन्ध्यापुत्रो भेदत्वेन परिणामित्वेन वाऽभूतत्वान्नास्ति 10 तथा त्वदिष्टं सर्वमापत्तिं नानुभवतीत्यसत्, किमर्थं विशेष्यते भेदत्वेन परिणामित्वेन वाऽभूतत्वादिति ? न पुनरभेदत्वादपरिणामित्वादित्युच्यते ? उच्यते भेदो न भवति [अभेदो] भेदादन्यो वा स्यात् एवमपरिणामीति, अभेदत्वादपरिणामित्वादिति, नास्य भेदोऽस्तीत्यभेदो नास्य परिणामित्वमित्यपरिणामि- [त्वमपरिणामि] त्वादभेदत्वादिति बहुव्रीहिसमासो वा स्यात्, बहुव्रीहिस्तावन्न घटत एव, अन्यपदार्थत्वादन्यस्यार्थस्याभावात्, अतः समन्वयाभावः समन्वयाभावात्तदभावः, तत्पुरुषोऽपि प्रसज्य- 15

स्याभ्युपगमासम्भवादित्याशयेनाह—**सर्वस्यापीति** । केवलं मद्वचनादेवासत्त्वं पुरुषस्य नास्मद्वचनादिति मा शङ्किष्ठाः वयमप्यसत्त्वं समर्थयाम इत्याह—**वयमपीति**, त्वदिष्टं सर्वमसत् त्वन्मते सर्वस्याभावात्, सर्वस्यैवासम्भवात्, असम्भवमेव तावद्वक्तुमुपक्रमते—**भवनं हीति** पुरुषस्य सन्निधिभवनापत्तिभवनान्यतरात्मकत्वात्तदुभयव्यतिरिक्तभवनाप्रसिद्धेश्च न भवनधर्मत्वमतो वन्ध्यापुत्रवन्नास्ति स इति भावः । सन्निधिभवनापत्तिभवनयोः परस्परापेक्षत्वाद्वस्तुद्वयसद्भाव एव तयोः सम्भवेनैकान्तेन पुरुषैकत्वे तयोरसम्भव एवेत्याशयेनाह—**इतरेतरापेक्षेति** । तत्रादावापत्तिभवनमधिकृत्याह—**तिष्ठत्विति** । 20 भोक्ता पुरुषः सन्निधिभवनरूपः, अथवा भोक्तुः पुरुषस्य व्यापकत्वेन देशातीतत्वादेकप्रत्ययगतत्वं सन्निधिभवनम्, यथा ज्ञाताऽहमिति प्रत्यये ज्ञातृज्ञेययोरेकत्वेन या सङ्कीर्णोपलब्धिस्तदेव सन्निधिभवनम्, आपत्तिभवनन्तु प्रकृतेः पुरुषोपभोगार्थं महदादिरूपापत्तिः तदुभयविधं भवनं परस्परापेक्षद्वैतवृत्ति भोक्तृभोग्यद्वैताभावे न सम्भवति, तत्रापत्तिभवनं यद्भेदमापद्यते परिणामं वा तस्यैव भवेत्, अविद्यादिभिः कारणैः सत्त्वादयो गुणाः कार्योन्मुखा भवन्ति परिणामेऽवतिष्ठन्ते, अव्यक्तमहदहङ्कारपरम्परया भेद उज्जृम्भते, न च निर्मलस्य पुरुषस्य मलोपाधिकाः परिणामादयो भवन्तीति नापत्तिभवनं पुरुषस्येत्याशयेनाह—**भेदत्वे-** 25 **नेति** । अभिन्नत्वादपरिणामित्वादित्यनुक्त्वा भेदत्वेनेत्याद्युक्तेः कारणमाह—**उच्यत इति** अभेदत्वादपरिणामित्वादित्यस्य तत्पुरुषो वा बहुव्रीहिर्वा समासः स्यात्, तत्पुरुषपक्षे च नञः प्रसज्यप्रतिषेधः पर्युदासो वाऽर्थो भवेत्, विधाय निवृत्तिकरणं प्रसज्यप्रतिषेधः, प्रसज्य क्रियागुणौ ततः पश्चात् निवृत्तिं नञ् करोति, एष पूर्वपदार्थप्रधानः, उक्तञ्च 'प्रतिषेधः स विज्ञेयो यत्र पूर्वपदेन नञ्' इति । यथाऽनुपलब्धिरविवाद इत्यादि । परे तु 'प्रतिषेधः स विज्ञेयः क्रियया सह यत्र नञ्' इति वचनात् यत्र नञ् क्रियया धात्वर्थेनान्वेति तत्र स प्रतिषेधं बोधयति तत्र सामर्थ्याभावान्न समास इति वदन्ति । अयमेव 30 पक्षोऽत्रादृतः भेदो न भवतीति, न भेदोऽभेद इत्यत्र 'नञ्' इति सूत्रेण समासोऽयमुत्तरपदार्थप्रधानः, यथाऽब्राह्मणशब्दादारोपितो ब्राह्मण इति बोधेऽर्थाद्ब्राह्मणभिन्न इत्यर्थः पर्यवस्यति तथाऽभेद इत्यत्राऽऽरोपितो भेद इति बोधेऽर्थाद्भेदभिन्न इत्यर्थः पर्यवस्यति, एतत्पक्षाश्रयेण भेदादन्यो वेत्युक्तम् । अयं पर्युदासः, उक्तञ्च 'प्राधान्यन्तु विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥' इति । अन्यपदार्थप्रधानो यथा—नास्य भेदोऽस्तीत्यभेद इति, 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोप'

प्रतिषेधपक्षे न घटते नञः क्रियापदसम्बन्धिनोऽसमर्थत्वात्, तस्माद्भेदादन्य इति पर्युदासः स्यात्, स च बहुव्रीहितुल्य एवार्थत इति भेदत्वेनाभूतत्वात् परिणामित्वेनाभूतत्वादिति सुखग्रहणार्थं शङ्कापोहार्थञ्चेत्युक्तम् ।

भिन्नानां हि भावानामव्यभिचरितैकत्वापत्तीनां सर्वत्वं भवति न त्वदिष्टस्यैकस्याभिन्नस्येति
5 तद्व्याचष्टे—

अव्यभिचरितानेकत्वापत्तिर्ह्यनेकेन विना न भवति यथा शुक्रशोणितादेरनेकस्यैकत्वापन्नस्याध्यात्मिकस्य, स हि भेदभावः सर्वत्वं तस्मान्नाभिन्नस्यैकस्य सर्वत्वमिति सर्वत्वाभावात् पुरुष एवेदं सर्वमित्ययुक्तमुच्यते ।

**अव्यभिचरितेत्यादि,** यावद्भेदभावः सर्वत्वम्, अव्यभिचरितमनेकत्वं यस्य तदिदमव्य-
10 भिचरितानेकत्वमेकं तस्य गतिपरिणामस्तदापत्तिः, सैकत्वापत्तिरनेकेन विना न भवतीति, यथा शुक्रशोणितादेरनेकस्यैकत्वापन्नस्याध्यात्मिकस्य । यथोक्तम् 'माउ ओयं पिउ सुक्कं तं तदुभयसंसिट्ठं कलुसं किव्बिसं तप्पढमयाए आहारमाहरेत्ता जीवो गब्भत्ताए वक्कमति ( १ सू० ) । ( २ सू० ) सत्ताहं कललं होति सत्ताहं होइ अव्बुदं । अव्बुदा जायए पेसी पेसीतो जायते घणं' ( तं०वै०गा०१७ ) इत्यादि, भिन्नानां वैषम्येण परिणतानां शुक्रशोणितसंसृष्टाहारादीनामैक्यापत्त्या हि सर्वत्वं शरीरेन्द्रियादेः, तथा
15 चात्रापि सर्वत्वं भूम्यम्ब्वादिव्रीहितोयदेशकालादिभिन्नार्थानां वैषम्येण विपरिणाममापन्नानामैक्यापत्त्या सर्वत्वं दृश्यते नान्यथेति । हिशब्दो यस्मादर्थे, यस्मादित्थं भिन्नार्थाव्यभिचरितैकगतिः सर्वत्वम्, स हि भेदभावः सर्वत्वम्, तस्मान्नाभिन्नस्यैकस्य सर्वत्वं कस्यचित्, तस्मात् सर्वत्वाभावादयुक्तमुच्यते पुरुष एवेदं सर्वमिति ।

किञ्चान्यत्—

20 त्वदुक्तैकसर्वतायामन्, प्रत्यक्षत एव भिन्नानेकैकसर्वताया दर्शनात् प्रत्यक्षविरोधो ग्रहण-

इति वार्तिकेन समासः, अयं समासः पुरुषवादे न सम्भवति, अन्यस्याभावात्तथा तत्समानार्थकपर्युदासबोधकतत्पुरुषोऽपि न भवति, अन्यस्याभावात्, अतोऽभेदत्वादपरिणामित्वादित्यनुक्त्वा भेदत्वेनाभूतत्वात् परिणामित्वेनाभूतत्वादित्युक्तम् । अनेकत्वाव्यभिचार्येकत्वापत्तिलक्षणसर्वत्वस्य त्वन्मतेऽसम्भवादेकस्य सर्वत्वासम्भवाच्च सर्वस्य पुरुषमयत्वाभि[illegible]-दयुक्तमित्याह—**अव्यभिचरितेति** विभिन्नानां शुक्रादिरूपाणां यावतां समुदायलक्षणैकत्वापत्तिश्चित्ररूपात्मिका सर्वमुच्यते
25 न तु सर्वथैकः सर्वपदवाच्य इति सर्वत्वमनेकापेक्षमतोऽनेकेषां वस्तूनामभावे कुतः सर्वत्वमिति भावः । सर्वत्वे दृष्टान्तमाह—**यथेति,** पुराणे रजसि गते नवे चावस्थिते शुद्धस्नातया स्त्रियाऽव्यापन्नयोनिशोणितगर्भाशयया ऋतुमत्या यदा पुमानव्यापन्नबीजो मिथीभावं गच्छति तदा तस्य हर्षोदीरितः परः शरीरधात्वात्मा शुक्रभूतः सम्भवति, स चोचितेन पथा गर्भाशयमनुप्रविश्यार्तवेनाभिसंसर्गमेति, तत्र शुक्रशोणितजीवसंयोगे तु खलु कुक्षिगते गर्भसंज्ञा भवति, गर्भस्तु खल्वन्तरिक्षवायुवह्नितोयभूविकारश्चेतनाधिष्ठानभूतः, एवमनया युक्त्या पञ्चमहाभूतविकारसमुदायात्मको गर्भश्चेतनाधिष्ठानभूतः, तथा च यावन्तो
30 लोके मूर्तिमन्तो भावविशेषास्तावन्तः पुरुषे यावन्तः पुरुषे तावन्तो लोक इति, तत्र भिन्नानां भावानामव्यभिचरितैकत्वापत्तीनां सर्वत्वं भवति न त्वेकान्तेनैकस्य सर्वत्वमेति भावः । **सत्ताहमिति** ऋतुकाले सम्प्रयोगाच्छुक्रशोणिते सप्तरात्रोषिते सदसद्भूताङ्गावयवं कललं भवति, ततः सप्तरात्रोषितं अर्बुदं भवति, अर्बुदं वर्तुलोन्नतम्, अर्बुदात् पेशी जायते, दीर्घा मांसपेद्याकारा पेशी, पेशीतो घनं जायते घनः कठिनः । **त्वदुक्तेति** त्वदुक्ता या एकस्य सर्वता तस्यामित्यर्थः, इदम

भेदादनुमानविरोधः, त्वदुक्तास्मदुक्तैकार्थ्याभावे भेदाभ्युपगमात् स्ववचनाभ्युपगमविरोधो लोके घटपटादिभेदप्रतीतेर्लोकविरोधः, अविकल्पशब्दार्थविकल्पव्यवहाराङ्गीकरणादभ्युपगमविरोधः, असिद्धादिहेतुता च, न घटाद्यवयवाऽभेदाद्वृक्षादिदृष्टान्तः ।

**त्वदुक्तैकसर्वतायां** मित्यादि, एकमेव सर्वमित्येतस्यामेकसर्वतायाम्, सर्वैकतायामिति वा पाठात् सर्वैकपुरुषमयतायां प्रत्यक्षत एव भिन्नानेकैकसर्वताया दर्शनात् प्रत्यक्षविरोधः, ग्रहणभेदाद् मानविरोधः, ग्रहणभेदे हि न्याय्यो ग्राह्यभेद इति, भेदत्वपरिणामित्वादिभावाभावे सर्वत्वापत्तिभवनाभावाद्वाऽनुमानविरोधः त्वदुक्तास्मदुक्तैकार्थ्याभावे भेदाभ्युपगमात् स्ववचनाभ्युपगमविरोधः, लोके घटपटादिभेदप्रतीतेर्लोकविरोधः । अविकल्पशब्दार्थत्वादित्यादि, अविकल्पः शब्दार्थ इत्यभ्युपगम्य विकल्पव्यवहाराङ्गीकरणादभ्युपगमविरोधः, सर्वमेकमिति विकल्पधर्मत्वेन धर्मित्वेन च तदुभयविशेषत्वाभ्यामिष्टस्य तेनैवाभ्युपगमेन निराकरणादविकल्पशब्दार्थस्य, अभ्युपगतधर्मधर्मिस्वरूपविशेषोभयविरोधाः असिद्धादिहेतुता च, हेतोरनतिरिक्तपरापराणीयोज्यायोरूपात्मकत्वादित्यादेः प्रतिज्ञातैकपुरुषाभेदात्, त्वयाऽस्माभिश्चोक्तेन न्यायेन पुरुषाभावाद्धर्म्यसिद्धेराश्रयासिद्धिः, त्वन्मतेनार्थान्तराभावेऽसाधारणता, अस्मन्मतेन विपक्ष एव भावाद्विरुद्धता साधारणानैकान्तिकता वा, सपक्षमभ्युपगच्छतो वा । न घटा-

पुरुष एवेदं सर्वमिति वाक्यस्य पुरुषे एतन्मयत्वातिदेशपरत्वं बोध्यम् । अत्र भिन्नानामनेकेषामेकत्वापत्तिलक्षणसर्वत्वस्य प्रत्यक्षतो दर्शनात् प्रत्यक्षविरोधः । यदा त्वेतत्सर्वमुद्दिश्य पुरुषत्वबोधनं तस्यार्थस्तदाऽप्याह-**सर्वैकतायामितीति** । सर्वत्र पुरुषोऽयमिति ज्ञानाभावात् पुरुष एव पुरुषत्वग्रहात्, पृथिव्यादौ च पृथिव्यादीन्येव ग्रहात् ग्रहणभेदः, यद्वा पुरुषस्याहंत्वेनैव जगत इदंत्वेनैव च ग्रहणाद्ग्रहणभेदः, न हि सर्वस्यैकत्वे ग्रहणभेदः सम्भवति, अन्यथा घटपटादिग्रहणभेदेऽपि घटो वा पटो वा एक एव ग्राह्यः सर्वस्य स्यादित्यनुमानेन ग्राह्यभेदस्यैव सिद्धेः पुरुषमयत्वातिदेशोऽनुमानविरुद्ध इत्याह-**ग्रहणभेदादिति** । सर्वस्य पुरुषमयत्वातिदेष्टृणां सर्वत्र पुरुषत्वग्रहात् ग्राह्याभेदेऽपि आविद्यकग्रहणभेदत्वान्न ग्रहणभेदे वस्तुतो ग्राह्यभेद इति व्याप्त्यसिद्धेर्नानुमानविरोध इत्याशङ्क्याह-**भेदत्वेति**, एकान्तत एकतत्त्वात्मकत्वे जगतः कस्य सर्वत्वापत्तिः यदुद्दिश्य पुरुषमयत्वं विधीयेत, विधीयते च त्वया, तस्मात् सन्ति भेदत्वपरिणामित्वादिभावाः, एवञ्चैकपुरुषमयत्वमेतदनुमानविरुद्धमिति भावः । **त्वदुक्तेति** सर्वमेकमिति त्वदुक्तस्य सर्वं नैकमिति मदुक्तस्य चैक एवार्थो भवन्मतेनाभ्युपगन्तव्यः, अन्यथा विभिन्नार्थत्वे कथमेकपुरुषमयत्वाभ्युपगमो भिन्नार्थाभ्युपगमात्, एकार्थत्वं तु न युक्तं परस्परविरुद्धत्वादिति भावः । लोकविरोधमाह-**लोक इति** । सर्व एव शब्दास्तत्तदवयवबोधनद्वारेण तत्तदवयवाभिन्नस्य गोरिव विषाण्यादिशब्दाः पुरुषस्यैव वाचका इति विकल्पविनिर्मुक्तस्यैव वाचकत्वमभ्युपेत्य प्रधानतया घटपटादीनां विकल्पानां व्यवहारविषयताङ्गीकारादभ्युपगमविरोधं दर्शयति-**अविकल्पेति** व्यवहारः शब्दप्रयोगः । अथ सर्वमेकम्, अनतिरिक्तपरापराणीयोज्यायोरूपात्मकत्वात् वृक्षवदिति पुरुषवाद्युक्तानुमाननिराकरणार्थं प्रथमं प्रतिज्ञादोषमाह-**सर्वमिति** धर्मधर्मिणोः स्वरूपबाधो विशेषबाधः उभयस्वरूपबाध उभयविशेषबाधश्चेति प्रतिज्ञादोषाः पूर्वोक्ताः प्रत्यक्षादिविरोधा अपि । अथ हेतुदोषमादर्शयति-**असिद्धादीति** । हेत्वसिद्धिं दर्शयति-**हेतोरिति**, साध्याभेदेन हेतुरपि साध्यसमत्वादसिद्ध इति भावः । आश्रयासिद्धिमा-**त्वयेति**, आवयोरुभयाभिप्रायेण पुरुषाभावस्य पूर्वमुक्तत्वादिति भावः । पुरुषभिन्नस्याभावात्सर्वसपक्षविपक्षव्यावृत्तत्वादुक्तहेतोस्त्वन्मतेनासाधारणानैकान्तिकत्वमित्याह-**त्वन्मतेनेति** । अस्मन्मतेन पुरुषाभावाद्विपक्ष एव हेतोः सत्त्वेन साध्याभावव्याप्तत्वाद्विरुद्धत्वमित्याह-**अस्मन्मतेनेति** । सपक्षाभ्युपगमे चास्मन्मतेन साधारणानैकान्तिकत्वमित्याह-**साधारणेति** । घटपटाद्यवयवानां पुरुषाद्भेदाभावान्न वृक्षादेर्दृष्टान्ततेत्याह-**नेति**, दृष्टान्तपदेनाभ्रेतनेनास्यान्वयः । अत एव न साध्यसाधनादेः पुरुष इव तदभिन्ने तस्मिन्नसिद्धेर्दृष्टान्तदोषः, साध्यसाधनादेरभावाप्रसिद्धा वैधर्म्यदृष्टान्ततापि भाव्या

द्यवस्थाऽभेदान् वृक्षादि दृष्टान्तः, वृक्ष इति पुरुषव्यतिरिक्तवृक्षाद्यवस्थाभेदाभावे साध्यसाधनोभयधर्मधर्म्यसिद्ध्या दृष्टान्तदोषाः, आदिग्रहणाद्यथासम्भवं कल्पनां कृत्वा वैधर्म्यदृष्टान्तदोषा योज्याः, एवं तावत् पुरुषमयत्वं सर्वस्यायुक्तमित्युक्तम् ।

अधुनाऽतिदेशेन नियत्यादिष्वपि दोषांस्तानेवाह—

5 **यथा च पुरुषे तथेतरद्रव्यार्थेष्वपि प्रतिस्वं योज्यम्, तद्यथा-विनिद्रावस्थास्थाने पुरुषस्य सामान्यलक्षणं विशेषलक्षणञ्च यथा व्याख्यातं तथा नियत्यादावभेदैकत्वं सामान्यलक्षणमतीतानागतवर्त्तमानबाल्यकौमारयौवनक्रमयौगपद्यादयो निद्रादिवद्विशेषलक्षणमिति व्याख्याय विकल्पद्वयप्रतिषेधस्तथैव कर्त्तव्यः ।**

**यथा च पुरुषे तथेतरद्रव्यार्थेष्वपीति,** नियतिकालस्वभावभावेष्वपि, स्वं स्वं प्रति प्रति-
10 स्वं प्रत्येकं योज्यम्, तमतिदेशोपायमाचष्टे—तद्यथा विनिद्रावस्थास्थानेऽभेदैकत्वं विनिद्रावस्थासामान्यलक्षणं पुरुषस्य पुरुषवादे सुप्ताद्यवस्थाव्यापित्वात् सुप्ताद्यवस्था अपि विशेषाः, तस्य तदात्मत्वादिति यथा व्याख्यातं तथा नियत्यादावभेदैकत्वं नियत्यादेः सामान्यलक्षणम्, अतीतानागतवर्त्तमानबाल्यकौमारयौवनक्रमयौगपद्यादयो निद्रादिवद्विशेषलक्षणमिति व्याख्याय विकल्पद्वयप्रतिषेधस्तथैव कर्त्तव्यः—अथ किं या एता अवस्थास्ता एव नियत्यादिः, उत नियत्यादिरेवावस्थाः? यदि ता एव नियत्यादिः
15 समुदयवादः क्षणिकवादो विज्ञानमात्रवादः शून्यवाद इत्यादि, अथ नियत्यादय एवावस्थास्तदाऽभेदैकत्वावस्थालक्षणत्वादिः स एव प्रपञ्चो योज्य इति ।

**अतस्तत्त्वे तावत्संवदति यदयं भवति सोऽस्य भाव इति सर्वगतत्वानित्यत्वदेशकालाभेदात् । इदं पुनर्न तावदिच्छामो यस्तु भवति स कर्त्तैवेति, सम्प्रधार्यत्वात्, अकर्त्तुराकाशादेरपि भवनात्, अभवनव्यावृत्तिमात्रसत्तार्थत्वाद्भवनस्य, कारणपर्यायत्वात् कर्त्तुरितरकारण-**
20 **मपि भवत्येव, भवतेः सन्निध्यापत्तिभवनद्वयार्थत्वात्, अस्तिभवतिविद्यतिपद्यतिवर्त्ततीनां सन्निपातषष्ठानां सत्तार्थत्वात् ।**

---

इत्याह-**वृक्ष इतीति** । एवं पुरुषवादे दोषानुदीर्य नियत्यादिवादेष्वपि तानेव दोषानतिदिशति-**यथा चेति** । अतिदेशोपायमादर्शयति-**तद्यथेति** । नियत्यादेः सामान्यलक्षणं विशेषलक्षणञ्च दर्शयति-**तथा नियत्यादाविति** । अत्रापि विकल्पं प्रदर्शयति-**अथ किमिति** । संक्षेपतो विकल्पद्वये दोषं दर्शयति-**यदि ता इति** । अथ पुरुषादिवादिभिः खण्डनकर्त्तुः
25 सांख्यस्य यावदंशेऽविसंवादस्तं प्रदर्श्य विसंवादस्थानं प्रदर्शयति-**अत इति** । मुख्यतत्त्वविषये सर्वगतत्वं नित्यत्वं देशकालाभ्यां भेदाभावश्च सर्वैरिष्टः, अतो भवतीति भावः येन भूयते यो भवति स एव भाव इत्यंशो नास्माकं विरुद्ध इति भावः । स्वतंत्रः कर्त्ता ज्ञ एवेति यदुच्यते पुरुषवादिवादिभिस्तत्तु विचार्यमित्याह-**इदं पुनरिति** उक्तं हि पुरुषवादारम्भे स भवतीति भावः को भवति यः कर्त्ता, कः कर्त्ता यः स्वतंत्रः कः स्वतंत्रः यो ज्ञ इति, तदेतद्विचार्यमिति भावः । जायतेऽस्ति विपरिणमतेऽपक्षीयते वर्धते विनश्यतीत्येवं षट्सु भावविकारेषु द्वितीयो विकारोऽस्तीति योऽस्ति भवति विद्यते सन्निपततीत्यादिशब्दा-
30 भिधेयो भावः सः सत्तामात्ररूपः नासौ विपरिणाममाचष्टे, अपूर्णत्वात्, न तं प्रतिषेधति, उपस्थितत्वात्, किन्तु अभवनव्यावृत्तिमात्ररूपसत्तार्थत्वमाहायं भवनशब्दः, ईदृशञ्च भवनमाकाशेऽप्यस्ति, यदि यो भवति स कर्त्तैवेत्युच्यते तर्हि कारणकार्यव्यतिरिक्ते नित्ये भवनं न स्यादित्याशयेनाह-**अकर्त्तुरिति** । भावो द्विविधः कारणात्मा कार्यात्मा चेति यत्संनिधिभवनमापत्तिभवनमुच्यत इति तद्दर्शयति-**भवतेरिति** । भवनं हि क्वचिदेव देशे न सर्वत्रेति देशपरिच्छेदाभावात् सर्वगतत्वादभिन्नम्, सर्वत्रेदानीमेव

**( अत इति )** अतोऽस्मात्तत्त्वे तावत् संवदति शेषं न संवदति सर्वं त्वदुक्तम्, कतमत् संवदतीति चेत् ? यदयं भवति सोऽस्य भाव इत्येतत् संवदति तस्य भावस्तत्त्वम्, येन भूयते यो भवति स एव भावः, कर्तृलक्षणां षष्ठीं कृत्वा तस्य भावः स भाव इतीदमस्य दर्शनेन सह संवदति, किं कारणं ? सर्वगतत्वनित्यत्वदेशकालाभेदात्—सर्वगतत्वेन नित्यत्वेन यथासंख्यं देशकालाभ्यामभेदात्, तद्धि भवनं देशतः क्वचिन्न भवतीति सर्वगतत्वादभिन्नम्, कालतः सततं भवति न कदाचिद्भवतीति नित्यत्वादभिन्नं 5 तस्मादभेदादिष्यत एतत्, इदं पुनर्न तावदिच्छामः सम्प्रधार्यत्वात्, यस्तु भवति स कर्त्तैवेति सम्प्रधार्यम्, न हि कर्त्तरि विहिततिप्प्रत्ययान्तभवतिशब्दश्रवणादेव कर्तृत्वम्, अकर्तुराकाशादेरपि भवनात्, अभवनव्यावृत्तिमात्रसत्तार्थत्वाद्भवनस्य, कारणपर्यायत्वात् करोतेरकारणकार्यमपि भवत्येव, भवतेः सन्निध्यापत्तिभवनद्वयार्थत्वात्, अस्तिभवतिविद्यतिपद्यतिवर्त्ततीनां सन्निपातषष्ठानां सत्तार्थत्वादित्येतदस्वतंत्रस्याव्यावृत्तस्यापि भवने कारणमाह, भवतेः सन्निध्यापत्तिभवनार्थत्वं अस्तिविद्यतिसन्निपातानां 10 सन्निधिमात्रभवनार्थत्वम्, पद्यतिवर्त्तत्योरापत्तिभवनार्थत्वमिति भागः सव्यापारत्वान्निर्व्यापारत्वाच्च त्रयाणां [द्वयोश्च], भवतेः सामान्यभवनवाचित्वादिति, अपरिणामित्वादकर्तृत्वात् [परिणामित्वात्] कर्तृत्वाच्च[2] विशेषः ।

**असतो भवनाभावादस्त्यादिभवनं सन्निधिमात्रवृत्त्येव तदापत्तिभवनपृथग्भूतम् ।**

**( असत इति )** असतो भवनाभावादस्त्यादिभवनं सन्निधिमात्रवृत्त्येव सन्निधिमात्रा वृत्तिरस्येति सन्निधिमात्रवृत्ति, तदस्तिभवनमापत्तिभवनपृथग्भूतं ततोऽन्यदीपद्भिन्नमव्यावृत्तमित्यर्थः । 15

स्यान्मतम्—

**सर्वतंत्रसिद्धान्तेन विरुद्धमस्वतंत्रभवनम्, भवतेः कर्तृविहिततिप्प्रत्ययान्तत्वादित्येतदयुक्तम्, तत्रवाधानात्, यदुपादायतदभिधीयते—यत्राप्यन्यत् क्रियापदं न श्रूयते तत्रापि 'अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्तीति गम्यतेऽर्थसद्भावात्, यथा वृक्ष इति, अस्तीति गम्यते,' ( महाभाष्य० अ. २ पा. ३ सू. १ ) अस्ति भवति सन्निहितमित्यर्थः ।** 20

नान्यदेति कालपरिच्छेदाभावान्नित्यत्वाच्चाभिन्नमित्याह—**सर्वगतत्वेनेति** । ननु 'लः कर्मणि च भावे चाकर्मकेभ्य' इति सूत्रेण तिपः कर्तरि विधानाद्भवतीत्यस्य भवनकर्त्तैवार्थः, तत्कथं सम्प्रधार्यमित्यत्राह—**न हीति** । भवनस्य द्वैविध्ये प्रमाणमादर्शयति—**अस्तिभवतीति** । सन्निधिभवनमपरस्य सद्भाव एव भवेदित्यस्वतंत्रमापत्तिभवनादीपद्भिन्नत्वेनाव्यावृत्तमित्याह—**अस्वतंत्रस्येति** । सन्निधिभवनमव्यापारमपरिणाम्यकर्तृ च, आपत्तिभवनं सव्यापारं परिणामि कर्तृ चेत्याह—**सव्यापारत्वादिति** । आपत्तिभवनमपि सन्निधिभवनाभावे वस्तुनोऽसत्त्वात् काऽऽपत्तिभवनमतस्तदावश्यकमित्याशयेनाह—**असत इति** । सन्निधिभवनं तर्ह्यस्वतंत्रभवनमेव जातं तच्च व्याकरणविरुद्धमित्याशङ्कते—**सर्वतंत्रेति**, सर्वशास्त्राविरुद्धः स्वशास्त्रेऽधिकृतोऽर्थः सर्वतंत्रसिद्धान्तः, सोऽत्र व्याकरणं, तेनास्वतंत्रभवनं विरुद्धं भवनमात्रे प्रधानतया वक्तुरपेक्षाया उक्तत्वादिति भावः । व्याकरणे स्वतंत्रः कर्तेत्युक्तम्, भवतीत्यत्र तिबर्थः कर्ता, कर्तरि तद्विधानात् तेन स्वतंत्रभवनमेव तत्सिद्धान्तेन भवेन्नास्वतंत्रभवनमित्याशयेनाह—**भवतेरिति** । सन्निधिभवनमपि तत्रानुज्ञातमेव, क्रियापदान्तराश्रवणे सन्निधिभवनवाचिनः प्रथमपुरुषान्तासधातोरप्रयुज्य- 30

१ क. देशे । २ सि. कर्तृत्वाच्चेति नास्ति ।

**( सर्वतन्त्रेति )** सर्वतंत्रसिद्धान्तेन व्याकरणेन विरुद्धमस्वतंत्रभवनम्, भवतेः कर्तृविहिततिप्प्रत्ययान्तत्वादित्येतथायुक्तम्, तत्रैवानुज्ञातत्वान्, यदुपादायैतदभिधीयते इत्यादि, इदन्तु सन्निधिमात्रवृत्तिभवनमेवोपादायाभिहितम्। यत्रान्यत् क्रियापदं न श्रूयते तत्रापि अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्तीति गम्यते भवन्ती वर्त्तमाना विभक्तिः पूर्वाचार्यसंज्ञयोक्ता लडित्यर्थः तत्परोऽस्तिः—

5 अस्तिः—अस भुवीति धातुः, 'इक्श्तिपौ धातुनिर्देशे' (वार्तिकं पा. ३।३।१०८ सूत्रे) प्रथमपुरुषे न मध्यमोत्तमयोः, अप्रयुज्यमानोऽपि गम्यते, अर्थसद्भावान्-अविनाभावादर्थेन, तदुदाहरति—वृक्ष इति, अस्तीति गम्यते, किमुक्तं भवति अस्ति भवति सन्निहितमित्यर्थः, निर्दिष्टं सन्निधिभवनमुभयोः समानलक्षणत्वादादौ।

आपत्तिभवनन्तु—

10 **अस्तिभवनमेवेदं सन्निहिततथावृत्ति आपत्तिभवनम्, कारणे कार्यस्य सत्त्वात्, यथा घटो भवतीति, पूर्वमघटत्वेन दृष्टं सन्निहितमेव मृदि घटभवनं व्यक्तं निर्वर्तते आपद्यत इति।**

**अस्तिभवनमित्यादि**, यावदापद्यत इति, इदमपि चेपद्भिन्नं सन्निधिभवनमेव, यथा वृत्ति सन्निहितस्य तथावृत्तेरापत्तिभवनम्, अथवा तथावृत्तिरस्य तथावृत्ति सन्निहितं च तथावृत्ति च तदिति सन्निहिततथावृत्ति, किं तत्? आपत्तिभवनम्, कुतः सन्निहितमेव तथावर्त्तत इत्युच्यते? उच्यते कारणे 15 कार्यस्य सत्त्वात्, कार्यं ह्यङ्कुरादि वीजादौ सन्निहितमेव तथा तथा देशकालाकारनिमित्तवशाद्व्यक्त्यव्यक्तिरूपेण वर्त्तत इति, तन्निदर्शयति—यथा घटो भवतीति, पूर्वमघटत्वेन मृत्त्वेन दृष्टं सन्निहितमेव

मानस्याप्यर्थसद्भावादाक्षेपस्योक्तत्वादित्याह—**तत्रैवेति**। उक्तं हि महाभाष्ये 'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति इति गम्यते, वृक्षः प्लक्षः, अस्तीति गम्यते' इति, अस्य भाष्यस्यायं प्रसङ्गः 'अनभिहिते' इति सूत्रानुक्तौ क्रियते कटः कृतः कट इत्यादौ द्वितीयादिप्राप्तिः स्यात्, न चात्र द्वितीयादिभावे प्रथमा निरवकाशा स्यादिति वाच्यम्, यत्र क्रियापदं न श्रूयते वृक्षः 20 प्लक्ष इत्यादौ प्रथमाया अवकाशात्, तत्र क्रियापदाश्रवणेऽपि अस्तीति पदस्य गम्यमानतया कर्त्तरि तृतीयाप्राप्तौ प्रथमाया अनवकाशापत्त्या तत्सूत्रमावश्यकम्, तथा च न तृतीया, कर्त्तुस्तिबोक्तत्वात् किन्तु प्रथमैवेति। भवन्तीति वर्त्तमाना लड्विभक्तिः पूर्वाचार्यसंज्ञया, तथा च भवन्तीपर इत्यस्य लट्पर इत्यर्थ इत्याह **भवन्तीति। इक्श्तिपाविति,** धातोर्निर्देशे कर्त्तव्ये तत इक्श्तिपौ प्रत्ययौ भवतः शकारः इत्, तेन सार्वधातुकत्वात् शबादयो भवन्ति, अत्र श्तिबा इका च अस्तिः, असिरिति निर्दिष्टम्, प्रथमपुरुषान्ताया एवास्तेर्गम्यमानस्वोक्तेर्न मध्यमोत्तमयोरप्रयुज्यमानो गम्यत इत्याह—**नेति**। प्रथमादयो विभक्तयः क्रियायोगे 25 एव भवन्तीति वृक्षः प्लक्ष इति प्रथमाऽपि क्रियाऽविनाभाविनीति भवनक्रिया गम्यत इत्याशयेनाह—**अर्थसद्भावादिति**। स्वेन निर्ज्ञातं परं बुबोधयिषितुं शब्दप्रयोगो भवति, ज्ञानञ्च सत एव भवति, भवनस्य च देशपरिच्छेदाभावेन सर्वगतत्वात् कालपरिच्छेदाभावेन नित्यत्वाच्च तद् वक्तुः सदा सन्निहितमिति सन्निधिभवनमुच्यत इत्याशयेन तदर्थं व्याख्याति—**सन्निहितमित्यर्थ इति**। सन्निधिभवनापत्तिभवनयोर्द्रव्यपर्यायात्मकयोर्भवनत्वेन सन्निधिभवनस्य प्रकृतिपुरुषयोर्वा समानत्वादादौ सन्निधिभवनमुपदर्शितमित्याह—**निर्दिष्टमिति**। मृदादौ सन्निधिभवने विद्यमाना एवापद्यन्ते ये घटत्वादिभावान् ते 30 आपत्तिभवनमित्युच्यन्त इत्याह—**अस्तिभवनमिति**। सन्निहितस्य मृदादेर्यथा वर्त्तनं तथैव तस्य **वर्त्तनम्, यथा येन** रूपेण यत्र यत्सन्निहितं तस्य तेन रूपेण भवनमेवापत्तिभवनमुच्यते कारणे कार्यस्य सद्भावादि मृदादौ [illegible] सन्निहितः सन् तथाविधदेशकालाकारादिनिमित्तविशेषमुपलभ्य व्यक्तीभवतीत्याह—**यथा वृत्तीति**। कारणस्यैव सन्निधिभवनस्य कार्यात्म-

१ सि. क. भवतीतिपरः। २ सि. क. भवती। ३ सि. क. तदित्यर्थः।

मृदि घटभवनं व्याख्यातार्थः, तत्पर्यायकथनं निर्वर्त्तते आपद्यते इत्यर्थः, सन्निधिभवनमध्यापत्तौभवति, उक्तमापत्तिभवनमपि ।

अनयोरेव न्यूनाधिककल्पनया सिद्धिरुच्यते—

**सा च सन्निधिसिद्धिः भोग्यद्वैतभूततायां, नाद्वैतत्रैतादितायां व्यतिरेकाभावात् ।**

**सा चे**त्यादि, सामान्यत्वात् सन्निधिभवनसिद्धिस्तावत्—सा च भोग्यद्वैतभूततायां सन्निधि- 5
सिद्धिः— सन्निधिभवनसिद्धिः तद्धि सन्निधिभवनं द्वैतभूततायां सिद्ध्यति नाद्वैततायाम्, दर्शितैकभोक्तृ-
भोग्यत्वाद्येकत्वादिदोषात्, न ततो न्यूनतायां सिद्धिरधिकतायां वा द्वैतात्तृतीयस्याभावात् न्यूनाधिकभा-
वानुपपत्तौ कारणमाह—व्यतिरेकाभावादिति, व्यतिरेकः—पृथक्त्वेनैकस्यैव वृत्तिं विनापि भावः, तदभावा-
न्यूनतायामसिद्धिः, यथा स्वामिना विना भृत्यस्य, भृत्येन विना वा स्वामिनः । अधिकेऽपि व्यतिरेको
यथा भावव्यतिरिक्तं नास्तीति, तथेह भोक्तृभोग्यव्यतिरेकाभावात्, अतो न्यूनाधिकाभावात् द्वैते 10
सन्निधिभवनं सिद्ध्यति नाद्वैतत्रैतादितायामिति ।

तत्प्रतिपादनार्थमुपपत्तिरुच्यते—

**न ज्ञेयमन्तरेण ज्ञातृत्वं ज्ञेयासत्त्वात्, अथवाऽनुपपन्नं ज्ञातृत्वमसंज्ञेयत्वात् खपुष्प-
ज्ञत्ववत्, वैधर्म्येणेतरकुसुमज्ञत्ववत्, अथवा ज्ञातृत्वमुपपद्यते संज्ञेयत्वादितरकुसुमज्ञत्ववत्,
वैधर्म्येण खपुष्पज्ञत्ववत्, एवं हि ज्ञानुर्ज्ञातृत्वम्, यो हि संज्ञेयं जानीते स तु मुख्यो ज्ञाता,** 15
**यथा सलिलं सलिलमिति विद्वान्, यः पुनरसंज्ञेयं विजानीते स तु न ज्ञाता, यथा मृगतृष्णिकां
सलिलमिति विद्वानिति ।**

**( नेति )** न ज्ञेयमन्तरेण ज्ञातृत्वम्, भोग्यस्य ज्ञेयत्वात्, शब्दादिगुणपुरुषोपलब्धिद्वयपुरुषोप-

तयाऽऽपत्तिभवनात् सन्निधिभवनमेवेदमुक्तं सदापत्तिभवनं भवतीत्याह—**सन्निधिभवनमिति** । अथ प्रकृतिमहदादयो
भोग्यरूपाः पुरुषस्तु भोक्ता भोक्तृभोग्यावेव सन्निधिभवनापत्तिभवने उच्येते तयोरेकैकाभावेऽपरस्याप्यभाव एव, परस्परा- 20
पेक्षत्वादिति प्रथमं सन्निधिभवनात्मानं भोक्तारं साधयितुमाह—**सा चेति** द्वे इते यं स द्वीतः स एव द्वैतो भूतः, भोगश्चासौ
द्वैतभूतश्च भोग्यद्वैतभूतः तस्य भावस्तत्ता तस्यां भोग्यद्वितीयतायामित्यर्थः, भोग्येन हि भोक्ताऽनुमीयते न ह्यचेतनस्य
भोग्यस्य भोक्तारमन्तरेण भोग्यतोपपद्यते, न च बुद्ध्यादीनामेव भोक्तृत्वमसम्भवः, तथा सति तेषां भोग्यत्वानुपपत्तिः स्वात्मनि
वृत्तिविरोधेन स्वस्य स्वेन भोग्यत्वासम्भवात्, न ह्यसिरात्मानं छिनत्ति तथा च सुखाद्यात्मकं बुद्ध्यादिकं स्वातिरिक्तेन केन-
चिद्भोक्त्राऽनुभवनीयम्, भोग्यत्वादोदनादिवदिति मानम् । न्यूनतायां दोषमाह—**नाद्वैततायामिति**—एकान्तपुरुषादिवादस्य 25
दूषितत्वादिति भावः । अधिकं दूषयति—**द्वैतादिति** सर्वेषां भोक्तृभोग्यद्वैराशिकत्वेन तदन्तःपातिनो वस्तुनः कस्याप्यभा-
वादिति भावः । **पृथक्त्वेनेति** भोक्तृभोग्ययोरन्यतरस्यैकस्यैव पुरुषादेः परस्परसम्बन्धमन्तरेण सद्भावासम्भवादिति भावः ।
अधिकस्याभावमाह—**अधिकेऽपीति**, यथा भावव्यतिरिक्तं किञ्चिदपि नास्ति सर्वस्य भावान्तःपातित्वात् तथा भोक्तृ-
भोग्यव्यतिरिक्तं किञ्चिदपि नास्ति निष्प्रयोजनत्वात्, सप्रयोजनत्वे तयोरेवान्तर्भावादिति भावः । भोक्तृभोग्ययोः परस्परा-
पेक्षसत्ताकत्वमेव तावद्विवृणोति—**न ज्ञेयमिति**, पुरुषस्य भोगापवर्गार्थं हि प्रकृतेर्महदादिरूपेण भवनम्, तत्र भोग्यस्य महदा- 30
देरभावे पुरुषार्थाभावात् कथं पुरुषस्य ज्ञातृत्वं ? सुखदुःखभोगरूपबुद्धिप्रयुक्तं हि तस्य ज्ञातृत्वं भोक्तृत्वं वेति भावः । भोग्यस्य
ज्ञेयत्वं कथमित्यत्राह—**शब्दादीति**, भोगापवर्गार्थं हि पुरुषस्य तज्ज्ञेयं, न तु विना प्रयोजनम्, अत्र भोगः शब्दाद्युपलब्धिः

---

१ सि. क. तद्ज्ञेय० ।

भोगार्थत्वा[illegible] तज्ज्ञेय[illegible]नं तदन्तरेण न ज्ञातुर्ज्ञातृत्वम्, कुतः ? ज्ञेयासत्त्वात् ज्ञेयस्यासत्त्वादिति । वैयधिकरण्याज्ज्ञस्याधर्मत्वादसिद्धो हेतुरिति चेन्न ज्ञातृज्ञेययोः सम्भिन्नत्वेन साध्ययोस्तदसत्त्वस्य धर्मत्वात् अथवाऽनुपपन्नं ज्ञातृत्वमसंज्ञेयत्वादिति प्रयोगकालेऽर्थव्याख्या, तच्च ज्ञेयस्यासत्त्वात् अगृही[illegible]दिति दृष्टान्तः खपुष्पज्ञत्ववत्, यथा खपुष्पविषयं ज्ञातृत्वमसंज्ञेयत्वादनुपपन्नमेवमसंज्ञेयं ज्ञातृत्वम्, वैधर्म्येण इतरकुसुमज्ञत्ववत्, यथा चूतादिखपुष्पेतरकुसुमज्ञत्वं संज्ञेयत्वादुपपद्यते तथा त्वदभिमताद्वैतज्ञत्वं द्वैते सत्युपपद्येत तत्रैतस्य ज्ञातृज्ञेयव्यतिरेकाभावात्तदन्तःपातित्वादसत्त्वमिति । अथवा पृथक् साधनं ज्ञातृत्वमुपपद्यते, संज्ञेयत्वादितरकुसुमज्ञत्ववत्, वैधर्म्येणानुपपन्नमसंज्ञेयत्वात् खपुष्पज्ञत्ववदिति, एवं हि ज्ञातुर्ज्ञातृत्वं यो हि संज्ञेयं जानीते स तु मुख्यो ज्ञाता यथा सलिलं सलिलमिति विद्वान्, यः पुनरसंज्ञेयं विजानीते स तु न ज्ञाता यथा मृगतृष्णिकां सलिलमिति विद्वान्, एवं तावत् ज्ञातैव न ज्ञेयमित्येतद्दर्शनं निरस्तम् ।

अद्वैतमधुना ज्ञेयमेव न ज्ञातेत्येतन्निरस्यते—

**न ज्ञातारमुपद्रष्टारमन्तरेण ज्ञेयत्वं ज्ञा[illegible]रसत्त्वात्, एवमेव हि ज्ञेयस्य ज्ञेयता भवितुमर्हति यदि केनचिदनुपहतेन्द्रियज्ञानेन ज्ञायते, अनुपहतेन्द्रियबुद्धिपुरुषज्ञेयघटवत्, यथा न भोग्यमन्तरेण भोक्तृत्वमसद्भोग्यत्वात्, खपुष्पमकरन्दभ्रमवत्, वैधर्म्येणेतरकुसुममकरन्दभ्रमवत्, [illegible] तत्साधर्म्येण वैधर्म्येण वा खपुष्पभ्रमवत्, एवमेव हि भोक्तुर्भोक्तृत्वं भवितुमर्हति, यदि सद्भोग्यं भुनक्ति तथा न भोक्तारमन्तरेण भोग्यमसद्भोक्तृत्वात् वन्ध्यासुतयौवनवार्धक्यवत्, सद्भोक्तृकं भोग्यत्वादितरसुतयौवनवार्धक्यवत्, एवमेव हि भोग्यस्य भोग्यत्वं भवितुमर्हति यदि सद्भोक्त्रा भुज्यत इति ।**

**न ज्ञाता[illegible]मित्यादि,** ज्ञातारमन्तरेण तत्पर्यायं दर्शयति उपद्रष्टारमिति, ज्ञात्रा विना न ज्ञेयत्वं

---

उपभोगो गुणपुरुषयोः पार्थक्यावधारणम्, यद्यप्येतौ भोगापवर्गौ बुद्धिकृतौ बुद्धावेव वर्तमानौ न पुरुषार्थस्तथापि पुरुषे सांसारिके व्यपदिश्यन्ते, व्यपदेशबीजञ्च स्वामित्वमिति बोध्यम् । ज्ञेयासत्त्वं ज्ञेयधर्मो न ज्ञातृधर्म इत्यसिद्धत्वमाशङ्कते—**वैयधिकरण्यादिति** । संसारी पुरुषो धर्मी स च ज्ञेयापृथग्भूत इति न वैयधिकरण्यमित्याशयेनोत्तरयति **ज्ञातृज्ञेययोरिति** । अथ वाऽनुमानप्रयोगो नास्माभिः प्रदर्शितः किन्तु तात्पर्यमात्रमुक्तं प्रयोगस्त्वेवमित्याह—**अथ वेति** । ज्ञेयस्यासत्त्वादित्यस्यागृहीतज्ञेयत्वादित्यर्थत्वेनासंज्ञेयत्वं विवक्षितमित्याह—**तच्चेति** तथार्थव्याख्यानञ्चेत्यर्थः । अनुपपन्नतां स्फुटयति—**तत्रैतस्येति** अद्वैतज्ञत्वस्य ज्ञातृत्वान्तःपातित्वेन ज्ञातृत्वभिन्नत्वाभावादसत्त्वमिति भावः । कथं ज्ञातृत्वं संभवतीत्यादर्शकत्वपरत्वमा[illegible]—**अथ वेति** अथ दृशिरूपस्य **पुरुषस्य** यद्दर्शनं तद्विषयतां गतमेव वस्तु दृश्यं ज्ञेयं भोग्यं भवति, सर्ववस्तूनां दर्शनमेव हि प्रयोजनम्, एवञ्च सुखदुःखात्मकं सर्वं दृश्यं ज्ञेयं भोग्यमनुकूलप्रतिकूलवेदनीयम्, तस्मादनयोरनुकूलनीयेन प्रतिकूलनीयेन च केनचिदन्येन भवितव्यम्, न च सुखादयोऽनुकूलनीयाः प्रतिकूलनीयाश्च भवितुमर्हन्ति, स्वात्मनि वृत्तिविरोधात्, तस्माद्योऽसुखाद्यात्मा सोऽनुकूलनीयः प्रतिकूलनीयश्च स एव च द्रष्टा ज्ञाता भोक्तेत्युच्यते, न ज्ञप्तिकर्मता ज्ञप्त्याश्रयं विना सम्भवतीत्याशयेनाह—**न ज्ञातारमिति,** बुद्धिः सुखदुःखमोहात्मकार्थान् तदाकारपरिणता सत्यध्यवस्यति, तत एव सा गुणत्रयमयी, पुरुषस्तु तत्प्रतिबिम्बितः पश्यति न तु तदाकारपरिणत इत्याशयेनाह—**उपद्र[illegible]मिति** । अनुपपन्नं ज्ञेयत्वमसंज्ञातृत्वादित्य-

---

१ सि. क. °त्वं सज्ज्ञेय० ।

ज्ञातुरसत्त्वात्, अत्रापि पूर्ववदसंज्ञातृत्वादिति वा हेतुः, साधर्म्यदृष्टान्तो वन्ध्यासुतज्ञेयघटत्वम्, वैधर्म्येणेतरसुतज्ञेयघटत्वम्, विपर्ययेण वा पूर्ववत् साधनद्वयम्, परस्परापेक्षज्ञातृज्ञेयत्वसाध्यतया वा वैयधिकरण्यपरिहारेण हेतुर्वाच्यः, एवमेव हि ज्ञेयस्य ज्ञेयता भवितुमर्हति यदि केनचिदनुपहतेन्द्रियज्ञानेन ज्ञायते, यथाऽनुपहतेन्द्रियबुद्धिपुरुषज्ञेयघटवत् मध्यस्थेन तर्कागमकुशलेन विपश्चिता प्रमात्रा वा ज्ञेयसाधनम्, यथेति. यथा न भोग्यमन्तरेण, भोक्तृत्वम्, असद्भोग्यत्वात् खपुष्पमकरन्द- 5 भ्रमवत् वैधर्म्येणेतरकुसुममकरन्दभ्रमवत्, सद्भोग्यत्वाद्भोक्तृत्वमिति तत्साधर्म्येण वैधर्म्येण वा खपुष्पभ्रमवत्, परस्परावधिकं वा पूर्ववद्भोक्तृभोग्यत्वसाधनम्, अत्रापि चैवमेव हि भोक्तृभोग्यत्वमिति ग्रन्थो द्रष्टव्यः, तथा न भोक्तारमन्तरेण भोग्यमसद्भोक्तृत्वाद्वन्ध्यासुतयौवनवार्धक्यवत् सद्भोक्तृकं भोग्यत्वादितरसुतयौवनवार्धक्यवत्, पूर्ववदेवात्रापि व्याख्या यावदेवमेव हि भोग्यस्य भोग्यत्वमिति ।

**युगपद्वा परस्परसम्बन्धिसत्ताकौ भोक्तृभोग्यौ, तत्सम्बन्धित्वात्, यथा सम्बन्धी भ्राता** 10 **सम्बन्धिनेतरेण भ्रात्रा विना न भवति तथा भोक्तृभोग्याविति ।**

(**युगपद्वेति**) युगपद्वा परस्परसम्बन्धिसत्ताकौ भोक्तृभोग्यौ तत्सम्बन्धित्वात् तयोः सम्बन्धित्वादित्ययमर्थप्रदर्शनहेतुः, प्रयोगहेतुस्तु सम्बन्धित्वादित्येव, यथा सम्बन्धी भ्राता सम्बन्धिनेतरेण भ्रात्रा विना न भवति कनीयान् ज्यायसा ज्यायान् वा कनीयसा तथा भोक्तृभोग्यौ, यथा [स] दलङ्कारौ दम्पतीत्येवमादिदृष्टान्तैर्भोक्तृभोग्यसम्बन्धित्वसिद्धिरन्योन्याविनाभाविनीति प्रागुक्तं सन्निधिभवनं द्वैते 15 सति सिद्ध्यतीति ।

नुमानाभिप्रायेणाह–**अत्रापीति** । असंज्ञातृत्वम् योग्यज्ञातृगतत्वम्, योग्यस्य ज्ञातुरभावे हि वस्तु न ज्ञातमिति कथं ज्ञेयं स्यात्, यथा वन्ध्यासुतादिना घटो ज्ञेयो न भवति, अवन्ध्यासुतेन च ज्ञेयो भवतीति भावः । **युगपद्वेति** प्रकृतिपुरुषसंयोगो हि दर्शनार्थं कैवल्यार्थञ्च, प्रधानेन सुखाद्यात्मकस्वस्वरूपानुभवरूपभोगार्थं पुरुषोऽपेक्ष्यते, न च प्रकृतिः स्वमनुभवितुमलम्, स्वात्मनि क्रियाविरोधात्, पुरुषेण च मोक्षकारणविवेकज्ञानरूपप्रकृतिपरिणामार्थं प्रधानमपेक्ष्यते, पुरुषो हि अनादितः प्रधा- 20 नादात्मनो विविक्ततामबुध्यमानः भोगाय संयुक्तोऽपि कैवल्याय संयुज्यतेऽतोऽत्र भोक्तृभोग्यौ परस्परापेक्षसत्ताकौ विज्ञेयौ, सामान्येन भोगाश्रयो भोक्ता, भोगविषयो भोग्यः, भोक्तुरभावे भोगाभावाद्भोगविषयताया असम्भवेन न भोग्यता सम्भवतीति भोग्यं स्वस्वरूपनिर्वाहाय भोक्त्रपेक्षसत्ताकम्, विषयाभावे विषयिणो भोगस्याप्यसम्भवान्न भोक्तृता पुरुषस्य निर्वहतीति स्वस्वरूपसम्पत्तये भोक्तापि भोग्यापेक्षसत्ताकः, भोग्यत्वभोक्तृत्वयोः परस्परांशे नित्यसाकांक्षत्वादिति भावः । तत्सम्बन्धित्वञ्च तन्निरूपितं सम्बन्धित्वम्, तत्र यदि भोक्तृनिरूपितसम्बन्धित्वमुच्यते तर्हि तस्य भोग्य एव सत्त्वादेकदेशासिद्धिः, यदि च भोग्य- 25 निरूपितसम्बन्धित्वमुच्यते तर्हि तस्य भोग्येऽभावात् स एव दोष इत्याशङ्कायामाह–**तयोरिति** तदुभयनिरूपितसम्बन्धित्वन्तु न क्वापि भोक्तृभोग्यव्यतिरिक्ताभावादतः सम्बन्धित्वमात्रं प्रयोगहेतुस्तस्य प्रतियोगिनानुयोगिनान्यतरसम्बन्धेनोभयनिष्ठत्वाददोष इति भावः । भोक्तुः भोगापवर्गप्रयोजनकमेव दृश्यस्य स्वरूपमतो भोक्तृस्वरूपेण प्रतिलब्धसत्ताकम्, नहि परप्रयोजनकं वस्तु परप्रयोजनं विना क्षणमपि स्थातुं क्षमते, अनर्थतन्त्राधीना सत्ता दृश्यस्य न स्वतः, शुद्धोऽपि द्रष्टा बुद्धिस्थं भोग्यमर्थं शब्दादिकमनुपश्यतीति प्रतिबिम्बयाऽऽरोपितक्रियया दर्शनकर्तृत्वमस्य द्रष्टृत्वमिति तयोः स्त्रीपुंसयोरिव परस्परं सम्बन्धित्वं विज्ञेयमिति 30 भावार्थमाह–**यथा सदलङ्काराविति**, प्रकृतिस्थानापन्ना स्त्री महदादिस्थानापन्नशोभनालङ्कारद्वारेण पुरुषभोग्या, भोक्ता च पुरुष इति तयोः परस्परसम्बन्धिसत्ताकत्वं बोध्यम्, तदेवं भोग्यद्वैतभूततायामेव सन्निधिभवनसिद्धिरादर्शितेत्याह–**प्रागुक्त-**

१–२ सि. क. °वार्द्धक० ।

अधुनेतरत्—

**यदि च तथा तथा वर्त्तनं भवनं रूपादौ पृथिव्यादौ गवादौ घटादौ च सकलजगद्वर्त्ति-विवर्त्तरूपं तदपि नैकैकस्माद्भवति, अपरिणामिनो वा, किन्त्वनेकैकस्मात् परिणामिन एव, आपत्तित्वात्, व्रीहिवत्।**

5 **( यदि चेति )** यदि च तथा तथा वर्त्तनं भवनं रूपादौ तेन तेन प्रकारेणान्यथाऽन्यथा वाऽऽपत्तिभवनं रूपे रसे गन्धे स्पर्शे पृथिव्यादौ गवादौ घटादौ च सकलजगद्वर्त्तिविवर्त्तरूपं तदपि नैकैकस्मात्—एकमेवैकमेकैकं पुरुषादि तस्मादेकैकस्मान्न भवति, किन्तर्हि ? यदनेकमेकं तस्मादनेकैकस्माद्भवति, अपरिणामिनो वा—सन्निधिमात्रभवनात् नेति वर्त्तते, किं तर्हि ? परिणामिन एवापत्तिभवनयोग्याद्भवति कुतः ? आपत्तित्वात् आपत्तिभवनत्वात् व्रीहिवत्, यथा व्रीहेरनेकैकस्माद्रूपरसादिपरमाणु-

10 द्व्यणुकादिसंघातादङ्कुराद्यापत्तिः, अङ्कुरादेर्वा भूम्यम्ब्वादिदेशकालादिसंघाताद्व्रीह्यापत्तिः तथैतदनेकात्मकैकमापत्तिभवनं नाप्यद्वैते। इत्थं तावत् स्वविषयद्वैते सत्यापत्तिभवनम्।

परविषयद्वैते सत्येवापत्तिभवनमिदमुच्यते—

**नाप्यद्वैते भवत्यापत्तिभवनमेकैकस्य कस्मैचिदर्थमकुर्वतः, किन्तु संघातात्मकत्वात् संहत्यकारिणां हि पारार्थ्यं नानर्थक्यं न स्वार्थत्वं नान्योऽन्यार्थत्वञ्च केवलम्, गृहघटपृथिव्या-**

15 **दिवत्, स्त्रीशोभनार्थालङ्कारवत्, तथा आ चक्षुरादयोऽप्याध्यात्मिकाः।**

**( नाप्यद्वैत इति )** नाप्यद्वैते परविषयद्वैताभावे भवत्यापत्तिभवनमानर्थक्यापत्त्यभावादेकै-

**मिति।** अथाऽऽपत्तिभवनमाख्याति—**अधुनेतरदिति,** इतरत्—आपत्तिभवनम्, सन्निधिभवनमेव हि तेन तेन रूपादिपृथिव्यादिगवादिघटादिवृत्त्यन्तरव्यक्तिरूपेणापद्यते, तदप्यापत्तिभवनं नैकैकस्मात् अपरिणामिनो वा, किन्त्वनेकैकस्मात् परिणामिनः, यद्यपि प्रकृतेः सांख्यमते एकत्वमेवेष्टम् 'अनेकमाश्रितं लिङ्गम्, सावयवं परतंत्रं व्यक्तं विपरीतमव्यक्त'मित्युक्तेः, ( सां.का.१० )

20 तथापि सत्त्वरजस्तमसां प्रकृतिधर्मत्वाद्धर्मधर्मिणोरभेदाच्च त्र्यात्मकमेकं प्रधानमिति वक्तव्यम्, 'सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वात्' (कापिलसूत्र अ. ६ सू. १८) इति सूत्रात् गुणसंद्रावो द्रव्यमिति लक्षणाच्च सत्त्वादिसमूहस्य प्रकृतित्वेन प्रकृतेः सत्त्वाद्यपेक्षयाऽनेकात्मकत्वं समूहस्यैकत्वेन तदपेक्षया चैकत्वं तथा चानेकात्मकैकस्मादेवापत्तिभवनं बोध्यम्, इदञ्चापत्तिभवनं महदाद्यारभ्य रूपादौ पृथिव्यादौ गवादौ घटादौ च सर्वत्र जगति वर्त्तते, अत एवोक्तं—**सकलजगदिति। अपरिणामिनो वेति,** धर्मलक्षणावस्थापरिणामशून्यादित्यर्थः, तत्र सति धर्मिणि धर्माणां परस्परमन्यथाभाव धर्मपरिणामः, यथा सुवर्णे विद्यमाने कटककुण्डला-

25 नामाविर्भावतिरोभावौ। परिणतस्य घटादेरतीतवर्तमानानागतकालसम्बन्धो लक्षणपरिणामः, यथाऽतीतो घट इत्यादि। अवस्थापरिणामो नाम नूतननूतनतमत्वादि स्थावरे, जङ्गमे बाल्ययौवनवृद्धत्वादि, व्यवहारत एष त्रिविधः परिणामः, वस्तुतस्तु धर्माणां धर्म्यभिन्नतया धर्मिविक्रियैव सर्वा परिणतिः धर्मद्वारा व्यज्यत इति बोध्यम्, आपत्तिभवनयोग्यानां व्यक्तानां महदादीनां त्रिगुणत्वेनैकत्वेन परिणामित्वेन च रूपादिपृथिव्यादित्वं संभवतीत्याह—**परिणामिन इति।** स्वगतानेकात्मकैकत्वे दृष्टान्तमाह—**व्रीहिवदिति।** व्रीहिर्हि रूपरसाद्यात्मानेकपरमाणुसंघातरूपः, अङ्कुरादिरपि अनेकात्मकैकरूप एवेति स्वगतधर्मधर्म्यपेक्षत्वं बोध्यम्,

30 अधुनाऽनेकैकमपि वस्तु स्वकार्यनिर्वर्तने परापेक्षाव्यतिरेकेण नापत्तिभवनमनुभवतीत्याह—**नाप्यद्वैत इति** स्वव्यतिरिक्तद्वितीयवस्त्वभाव इत्यर्थः, पूर्वपरिणामपरित्यागपूर्वकोत्तरपरिणामापत्तिरननुभूतपूर्वावयवानुप्रवेशादेव भवति नान्यथा, यथा व्रीह्यादेः भूम्यम्ब्वाद्यवयवानुप्रवेशादेवाङ्कुराद्यापत्तिरतः परस्य भूम्यादेरभावे न भवत्यङ्कुराद्यापत्तिरिति बोध्यम्। अत्रापत्तिभवनप्रस्तावात् परशब्देन सन्निधिभवनमेव ग्राह्यमिति तथैव द्वैतं साधयति—**परविषयेति,** महदादयोऽद्वितीयाः प्रयोजनव्यतिरेकेणाहङ्काराद्युजनने न ह्यपरानुप्रवेशमपेक्षन्ते किन्तु परप्रयोजनायैव संहता भवन्ति, अतस्ते परार्थं संहत्यैवाभिनिर्वर्तयन्ति

कस्याद्वितीयस्य कस्मैचिदर्थमकुर्वतः, किन्तु संघातात्मकत्वात्, पारार्थ्यमिति सम्बन्धः संघातात्मकभवनात् पारार्थ्यम्, संहत्यकारिणां हि पारार्थ्यं नानर्थक्यं न स्वार्थत्वं नान्योऽन्यार्थत्वञ्च केवलम्, दृष्टान्तो गृहघटपृथिव्यादिवत्, यथा गृहघटपृथिव्यादयः संघातात्मकाः स्वतः पृथग्भूतपुरुषार्था नानर्थका न स्वार्था नान्योऽन्यार्थाः पुरुषार्थमेव चान्योन्यार्थाः, स्त्रीशोभनार्थालङ्कारवत् तथा आ चक्षुरादयोऽप्याध्यात्मिका इति दृष्टान्तबाहुल्यात् परार्थव्यापितां दर्शयति । आ चक्षुरादयोऽपीति, चक्षुरादयोऽपि सूक्ष्मा 5
आध्यात्मिका ऐक्या यावत् परार्था यावञ्च रूपादित्र्यणुकादयः किमङ्ग ? पुनर्गृहघटपृथिव्यादयः स्थूला ग्रामारामादयश्चेति ।

**यत्पुनरिष्यते एकं कारणं पुरुषादीति तन्न वयमभ्युपेमः, त्वन्मतेनाप्येकञ्चेत् किञ्चित् पारार्थ्यं कारणमिष्यते तदभ्युपगम्य भेदात्मकेन चानेन भवितव्यमिति प्रतिजानीमहे परार्थार्थेन च, कारणत्वात् तन्त्वादिवत्, शब्दाद्युपलब्ध्यर्थत्वात् किं हि कारणं रूपादि दृष्टमेकं 10
स्वार्थञ्चेति ?**

(**यदिति**) यत्पुनरिष्यते एकं कारणं पुरुषादीति तन्न वयमभ्युपेमः, त्वन्मतेनाप्येकञ्चेत् किञ्चित् पारार्थ्यं कारणमिष्यते तदभ्युपगम्य भेदात्मकेन चानेन भवितव्यमिति प्रतिजानीमहे, परार्थार्थेन च, कारणत्वात् तन्त्वादिवत्, तन्तुकपालादयो हि कारणत्वात् पटघटादीनां कार्याणां रूपादित्रुट्यश्वादिसंघातरूपा अनेकात्मका एव कारणभावं विभ्रतो दृष्टाः, नान्यथा, तथा तेनापि त्वदिष्टेन 15

नैकैका इति भावः । **संघातात्मकत्वादिति** संहन्यन्ते मिश्रीभवन्त्यनेके विशेषा यत्रासौ संघातस्तदात्मकत्वादिति व्युत्पत्तौ प्रत्येकमपि प्रकृत्यादयः संघाता भवन्ति सुखदुःखमोहात्मकत्वात्, पारार्थ्यं–स्वभिन्नस्य भोगसाधनत्वम् । परविषयद्वैतपक्षानुगुण्येनाह–**संघातात्मकभवनादिति** संहतिरूपेण भवनादित्यर्थः, तथा च आ चक्षुरादयोऽप्याध्यात्मिकाः परार्थाः संघातात्मकत्वात्, संहत्यकारित्वाद्वा गृहघटपृथिव्यादिवत् स्त्रीशोभनार्थालङ्कारवदिति प्रयोगः, यदा बहून्यचेतनानि साधनानि एकप्रयत्नेन मिलित्वा सचेतनवत् कार्यं कुर्वन्ति तदा तद्व्यतिरिक्तस्तत्प्रयोजकस्तत्फलोपभोक्ता कश्चिच्चेतनः स्यात् यदर्थमेतानि साधनानि 20
प्रयतन्त इति भावः । चक्षुरादयः संहत्यापि करिष्यन्ति स्वार्थमपि, को विपक्षबाधकस्तर्क इत्यत्राह–**संहत्यकारिणामिति** इतरसहायेनार्थक्रियाकारिणामित्यर्थः, नानर्थक्यं व्यर्थप्रवृत्त्यदर्शनात्, न स्वार्थत्वं संहननवैयर्थ्यात्, नान्योऽन्यार्थञ्च जडत्वादिति भावः । दृष्टान्तमाह–**गृहघटेति**, ननु गृहघटादयः संहताः संहतशरीरार्था दृष्टा इति संहतपरार्थत्वव्याप्यत्वं संघातात्मकत्वे गृहीतमिति तेन हेतुना संघातान्तरार्थत्वमेव सिद्ध्येत्, न पुरुषार्थता, येन सन्निधिभवनाभावे आपत्तिभवनं न भवेदिति चेन्न, अनवस्थाप्रसङ्गात् संघातान्तरस्यापि संघातात्मकत्वेनापरसंघातार्थत्वात्तस्यापि तदन्यार्थत्वात्तदेवेति, तस्माद्गौरवेण संहतत्वस्य 25
पारार्थ्यमात्रेणान्वय इति बोध्यम् । **स्त्रीशोभनार्थेति**, यथाऽलङ्कारः स्त्रियः शोभनार्थ एव न स्वार्थो नान्योन्यार्थो न व्यर्थस्तद्वदिति भावः । अव्यक्तमहदहङ्कारादीनां स्थूलसूक्ष्माणां सर्वेषामेव परार्थत्वं व्यनक्ति–**आ चक्षुरादय इति** । अथ पुरुषनियत्यादिवादिन एकस्यैव पुरुषादेर्निखिलजगद्धेतुत्वं यदब्रुवन् तन्निराकर्त्तुमाह–**यत्पुनरिष्यत इति** । तेषां मते पुरुषादिव्यतिरिक्तस्य वस्तुतः कस्यचिदभावेन यदि पारार्थ्यमेकं कारणं किञ्चिदभ्युपगम्यते तर्हि तदपि नैकं भवितुमर्हतीति निराक्रियते–**त्वन्मतेनापीति**, पुरुषस्तु न कारणं संनिधिभवनमात्रत्वात्, अनेकात्मकैकरूपत्वाभावात्, एवं नियत्यादिरपि, 30
तद्व्यतिरेकेण कस्यचिदेकस्य परार्थस्याभ्युपगमे तेनापि सम्भूयकारिणा भवितव्यम्, नहि किञ्चिदेकं पर्याप्तं स्वकार्ये, अपि तु सम्भूय, एवञ्च केनचित् प्रकारेण न कस्यचिदप्येकस्मात् सम्भवोऽस्ति किन्त्वनेकस्मादेवेति भावः । तत्र हेतुमाह–**कारणत्वादिति**, भवदभ्युपगतं परार्थमेकं वस्तु अनेकात्मकमेव कारणत्वात् स्यात्, तन्त्वादिवदिति प्रयोगः । दृष्टान्ते व्याप्तिं ग्राहयति–**तन्तुक-**

---

१ सि. क. परार्थत्व. ।

कारणेन भवितव्यमनेकात्मकेन, परार्थार्थेन च, भवितव्यमिति वर्त्तते, परस्मै अर्थः परार्थः परार्थोऽर्थः कार्यं यस्य कारणस्य तेन कारणेन परार्थार्थेन कार्येण भवितव्यं कारणत्वात् तन्त्वादिवदेव, यथा देवदत्तशीतत्राणाद्यर्थे पटकार्यास्तन्तवस्तथा तेन कारणेन त्वदिष्टेन भवितव्यम्। स कतमोऽर्थ इति चेदुच्यते–शब्दाद्युपलब्ध्यर्थत्वात्, आदिग्रहणाच्छब्दाद्युपलब्धिरादिः गुणपुरुषान्तरोपलब्धिरन्तः, इत्याद्य-
5 न्तोपभोगद्वयं पुरुषस्यार्थः, सोऽस्यापत्तिभवनस्य परार्थार्थः, तस्माच्छब्दाद्युपलब्ध्यर्थत्वात् परार्थार्थेन तेन कारणेन भवितव्यम्, किं हि कारणं रूपादि दृष्टमेकं स्वार्थञ्चेति कारणस्यानेकैकत्वाविनाभावं पारार्थ्याविनाभावं स्वार्थैक्याभावञ्च दर्शयति, विपक्ष एव नास्तीत्यभिप्रायः, रूपादिग्रहणन्तु पक्षत्वात्।

रूपादीनां संघातपारार्थ्यपरिणामित्वैः सन्निधिभवनवैलक्षण्यं दर्शयति—

**तदित्थं द्वैते तु प्रकृतेरनेकात्मिकाया आत्मभिः सुखदुःखमोहैः स्वपरेषां प्रतिपत्तिचल-**
10 **नधरणकरणैः प्रागभिहिताऽऽचार्यपवनपाषाणवत् महदादिना परिणामानुक्रमेणारब्धाः शब्दादयोऽपि तदात्मका एव, तदात्मत्वाभिव्यक्तकार्यत्वात्, मृत्कार्यपिण्डशिवकादिमृत्त्ववत्, सुखाद्युपलब्धेः।**

**तदित्थं द्वैते त्वित्यादि**, द्विविधपुरुषोपभोगार्थमनेकात्मिकायाः प्रकृतेरित्यादिना ग्रन्थेन तदापत्तिभवनस्वरूपवर्णनम्, प्रक्रियन्ते विकारास्तत इति प्रकृतिः, प्रधीयन्तेऽस्मिन् महदादय इति
15 प्रधानम्, बहूनां धानं बहुधानकममरणादविनाशादमृतमित्याद्यन्वर्थनामिकायाः प्रकृतेरनेकात्मिकाया

पालादय इति, तेनैव हेतुना परार्थार्थत्वमपि साधयति–**परार्थार्थेन चेति**। अत्र पुरुषार्थत्वं प्रदर्शयति–**शब्दादीति** इन्द्रियद्वारा चित्ताधिष्ठानगताः शब्दादयो विषयाश्चित्तमाकृष्योपरञ्जयन्ति स्वाकारतया परिणमयन्ति उपरागापेक्षञ्च बुद्धितत्त्वं विषयाकारं भवति चित्तदर्पणे पुरुषप्रतिबिम्बसंक्रान्तिर्भवति तदा शब्दादिकमहमनुभवामीति शब्दाद्युपलब्धिर्भवति, शब्दश्च पूर्वमज्ञातोऽपि सम्प्रति ज्ञातः ज्ञाताज्ञातविषयत्वादेव बुद्धिः परिणामिनीत्युच्यते, बुद्ध्यादयो हि दृशिरूपस्य पुरुषस्य कर्मरूपता-
20 पन्नत्वाद् दृश्याः, तदर्थमेव हि दृश्यं तस्मात् पुरुषः स्वामी दृश्यं बुद्ध्यादिकं स्वम्, स्वामी च दर्शनार्थं स्वेन संयुक्तः, तत्संयोगात् शब्दादिदृश्यस्योपलब्धिः स भोगः, या द्रष्टुः स्वरूपोपलब्धिः सोऽपवर्गः, एवञ्च जडस्योपलब्धिर्भोगः प्रथमः, स्वरूपोपलब्धिरन्तः मोक्ष इति फलितम्, इदमेव च भोगापवर्गलक्षणं दर्शनमापत्तिभवनस्य बुद्ध्यादेः फलं तस्मात्तेन कारणेन भेदात्मकेन परार्थार्थेन च भवितव्यमिति भावः। एवं च सर्वेषां विकाराणामनेकपूर्वकत्वादनेकात्मकत्वात् परार्थत्वाच्च न किञ्चिदेकं स्वार्थञ्च कारणमस्तीत्याह–**किं हीति**। तथा च कारणत्वमनेकैकत्वव्याप्यं परार्थत्वव्याप्यञ्च, न तु स्वार्थत्वेनैकत्वेन वा
25 समानाधिकरणं येन व्यभिचारः स्यादित्याह–**कारणस्येति**। अथ सर्वेषां विकाराणामपि सुखदुःखमोहात्मकतां वक्तुमुपक्रमते–**तदित्थमिति** प्रकृतिशब्दं व्युत्पादयति–**प्रक्रियन्त इति**, अनया व्युत्पत्त्या प्रकृतिशब्दः कारणवाचको बोध्यो मृत्प्रकृतिको घटः कनकप्रकृतिकं कनकमित्यादि व्यवहारात्, इयञ्च व्युत्पत्तिः प्रधानेऽन्वर्थताप्रदर्शनाय, अथ वा प्रशब्दः प्रकृष्टवाचकः प्रा पूरण इति धातोरच्प्रत्ययान्तः कृतिशब्देन सृष्टिव्यापारो ग्राह्यः प्रा–प्रकृष्टा मुख्या कृतौ–सृष्टौ या सेति व्यधिकरणबहुव्रीहिसमासेन मुख्यत्वेन सृष्टिकर्त्री या सा प्रकृतिरित्यर्थः अथवा प्रशब्दः सत्त्वे कृशब्दो रजसि तिशब्दस्तमसि पुराणे
30 प्रोक्तः, तेन गुणत्रयात्मिकेत्यर्थः, तथा सृष्टिमुख्यकारणत्वादकार्यात्मकत्वमपि लभ्यते, एवञ्च साम्यावस्थालाभात् साम्यावस्थोपलक्षितगुणत्रयात्मकत्वं प्रकृतित्वम्, तस्यैव पर्यायशब्दानाह–**प्रधीयन्त इति** प्रधीयन्ते जन्यन्ते महदादिविकारा अनेनेति प्रधानमिति व्युत्पत्त्या विकारकारणत्वलाभेन कार्योन्मुखत्वलक्षणगतौ वर्तमानं प्रधानमुक्तं भवति प्रधीयन्तेऽस्मिन्निति व्युत्पत्त्या गुणसाम्यावस्थानस्वरूपस्थितौ वर्तमानं प्रधानमुक्तं भवति, तत्र यदि प्रधानं गत्यैव वर्तमानं विकारावस्थायां वर्तमानस्वभाव-

---

१ सि. क. नेदं पदमस्ति। २ सि. क. स्वार्थश्चेति।

आत्मभिः सुखदुःखमोहैः प्रकाशप्रवृत्तिनियमात्मकैः प्रागभिहिताचार्यपवनपाषाणवत् स्वपरेषां—नर्तिकापणनावामात्मनः [illegible]धरणकरणैरिवेति, ते हि वैकारिकतैजसभूतादिविकाररूपाः, सुखदुःखमोहाः प्रकाशप्रवृत्तिनियमात्मकाः सत्त्वरजस्तमोलक्षणा गुणाः साम्यावस्थायां प्रकृतिरित्युच्यन्त वैषम्येण तु परिणामानुक्रममापन्नाः परस्पराविनिर्भागवृत्तयोऽङ्गाङ्गिभावेन परिणामाद्विकारीभवन्तः शब्दादीनारभन्ते, तैर्महदादिना परिणामानुक्रमेणारब्धाः शब्दादयोऽपि तदात्मका एव(शब्दादिपरिणामानुक्रमः 5 सोऽनुषङ्गेण स्वयमेव वक्ष्यति, अधुना तदात्मकत्वं तावत्साध्यते तदात्मका एव ) सुखाद्यात्मका एव शब्दादयः तदात्मत्वाभिव्यक्तकार्यत्वात्—तं सुखादय आत्मा तदात्मा तद्भावस्तदात्मत्वं सुखाद्यात्मत्वं तदात्मत्वेनाभिव्यक्तं कार्यं येषां ते तदात्मत्वाभिव्यक्तकार्याः शब्दादयस्तद्भावात्तदात्मत्वाभिव्यक्तकार्यत्वात्, मृत्कार्यपिण्डशिवकादिमृत्त्ववत्, यद्यदात्मनाऽभिव्यक्तकार्यं वस्तु तत्तदात्मकमेव दृष्टम्, यथा मृदः कार्यं पिण्डः तस्य कार्यं शिवकः एवं क्रमेण स्तूपकुशूलकादि यावद्घटः कपालानि वा मृदात्म- 10 कान्येव कार्याणि मौलस्य कारणस्यात्मना विनोत्तरोत्तरेषां कार्याणामभावात्, आदौ मध्येऽवसाने च मृदात्मकत्वं दृष्टमेवं शब्दादयः सुखा[दी]नां कार्यं शब्दादिकार्यन्त्वाकाशादि तत्कार्यं च गवादि घटादि सर्वं सुखाद्यात्मकत्वेनाभिव्यक्तं तदात्मकमिति ग्राह्यम्, कथं सुखाद्यात्मकत्वेन शब्दादिकार्यमभिव्यक्तमिति चेत्, सुखाद्युपलब्धेः ।

---

त्वात् विकारनित्यत्वेन तदप्रधानमेव स्यात्, यदि च स्थित्यैव वर्तमानं तदाऽव्यक्तरूपेणावस्थानस्वभावत्वाद्विकाराकरणेन तद- 15 प्रधानमेव स्यात्, तथा च गुणत्रयाणां स्थित्या गत्या च प्रवृत्तिमत्त्वमेव प्रधानलक्षणम्, न तु गुणसाम्यावस्थानमात्रम्, सृष्टिकाले प्रधानाभावप्रसङ्गादिति बोध्यम् । प्रकृतेः स्वरूपमाह—**आत्मभिरिति**, सत्त्वरजस्तमोरूपायाः प्रकृतेः सुखदुःखमोहा आत्मान इति भावः। प्रयोजनमाह—**प्रकाशेति** प्रकाशः सुखात्मनः सत्त्वस्य, प्रवृत्तिर्दुःखात्मनो रजसः, नियमो मोहात्मनस्तमसः प्रयोजनमिति भावः । **प्रागभिहितेति** नाटकाचार्यः स्वहस्तोत्क्षेपणादिना प्रकाशात्मनाऽऽत्मनो नर्तिकायाश्च व्यवतिष्ठते, पवनः पर्णचालनादिना स्वपरप्रवर्तनेन व्यवतिष्ठते, नौस्तम्भनपाषाणकः स्वपरनियमने व्यवतिष्ठत इति विधिनयाभिहिते- 20 त्यर्थः । **ते हीति** अनुभूयमानाः सुखदुःखमोहा वैकारिकतैजसभूतादिविकाररूपाः तत्र वैकारिक एकादशेन्द्रियगणः, तस्य सात्त्विकाहङ्कारात् प्रवृत्तेः, तन्मात्रो गणः भूतादिश्च तमसाहङ्कारात्, प्रोक्तं गणद्वयं तैजसमपि—राजसाहंकारसमुद्भूतमपि, एतद्गणद्वयस्य विकाररूपाः सुखादयः गतौ वर्तमानं प्रधानमुच्यते, त एव सुखादयो यदा स्थितौ वर्तमानास्तदा साम्यावस्थानरूपं प्रधानमुच्यत इति भावः। **वैषम्येण त्विति** त एव सत्त्वादयो गुणा यदा कार्योन्मुखाः भवन्ति तदा परस्पराङ्गाङ्गिभावमापद्यन्ते, यथा कदाचित् सत्त्वस्याधिको भागः स्वल्पाभ्यां रजस्तमोभ्यामुपरञ्जितो भवति कदाचिदधिकं रजः स्वल्पाभ्यां सत्त्व- 25 तमोभ्यां कदाचिदधिकं तमः स्वल्पाभ्यां सत्त्वरजोभ्यामिति, एवम्भूताः सन्तः सूक्ष्मस्थूलेन भूतभावेनेन्द्रियभावेन च परिणमन्ते, न त्वितरानपेक्षाः सत्त्वादयः परिणमन्ते परस्पराविनिर्भागवृत्तित्वादिति भावः। सत्त्वरजस्तमोगुणैः साक्षादेव न शब्दाद्याविर्भावः किन्तु महदादिक्रमेणेत्याशयेनाह—**तैर्महदादिनेति** । प्रधानमहदादीनां सर्वेषां त्रिगुणत्वोक्तेः सुखदुःखमोहात्मकत्वमित्याशयेनाह **तदात्मका एवेति, तदात्मत्वाभिव्यक्तकार्यत्वादिति** प्रधानादारभ्य महदहङ्कारतन्मात्रपञ्चकैकादशेन्द्रियपञ्चभूतगवादिघटादिसर्वे विकाराः सुखाद्यात्मप्रधानोपादेयत्वात् सर्वत्रादिमध्यान्तविकारेषु सुखाद्युपलब्धेश्च सुखाद्यात्मका 30 एव, यथा मृदारब्धाः सर्वे विकारा मृदात्मका एव यद्यदात्मनाऽभिव्यक्तकार्यं तत्तदात्मकमिति भावः। शब्दादौ हेतुसद्भावमाशङ्क्य समाधत्ते—**कथमिति** यथैक एव मेघसमूहो वृष्ट्या कृषीवलान् सुखाकरोति तान् प्रति तस्य सुखरूपसमुद्भवात्, पान्थान् दुःखा-

---

१ ( ) [illegible]न्तर्गतपाठः सि. क. प्रत्योर्न दृश्यते ।

सुखाद्यात्मकानाञ्च महदादिना क्रमेणारब्धानां सुखादेरात्मत्वेनाभिव्यक्तं कार्यमेषां शब्दादीनाम्, यानि तैरारब्धानि शरीराद्याध्यात्मिकानि भूतादीनि बाह्यानि घटादीनि पृथिव्यादीनि ते सर्वे सुखादिमया एव, तन्मयकारणारब्धत्वात् यद्यन्मयैरारब्धं तन्मयं तत् कार्पासिकपटवत् ।

5 ( सुखाद्यात्मकानाञ्चेति ) सुखा[द्या]त्मकानाञ्चेत्यादिना तद्दर्शयति यावदात्मत्वेनाभिव्यक्तं कार्यमेषां शब्दादीनामिति, गतार्थम, एवं तावन्महदादिनाऽहङ्कारेणारब्धाः शब्दादयः, यानि तैरारब्धानीत्यादि यावत् सुखादिमया एव परिणामानुक्रमेण भूतानामाकाशादीनां शब्दादिभिः सुखादिमयैरारम्भं दर्शयति—तत्र शरीरादीन्याध्यात्मिकानीति शरीरादीनि भूता[दी]नि शब्दाद्यारब्धानि भूतादीनि भूतादिमयानि त्रिगुणानि वैकारिकारब्धानि श्रोत्रादीन्येकादशेन्द्रियाणि सर्वाण्येव त्रयाणां सुखदुःख-

10 मोहानां सन्निवेशविशेषाः ततस्तन्मयता. बाह्यानि घटादीनि रूपादिसमूहत्वात्तेषां च सुखाद्यात्मकत्वात्तन्मयानि तदात्मकान्येव, तथा पृथिव्यादयः तन्मयकारणारब्धत्वात्, महदादेः सकलस्य विकारस्य प्रधा[वि]स्तत्त्वात्तस्य जगतः सुखादिमयकारणारब्धत्वात् ,यद्यन्मयैरित्युपनयः, तन्मयं तदिति निगमनम्, दृष्टान्तः कार्पासिकपटवदिति कार्पासिकविकारैस्तन्तुभिरारब्धः पटोऽपि कार्पासिक इति यथोच्यते तथा भूतानि सुखाद्यारब्धशब्दाद्यारब्धानि सुखाद्यात्मकानि, भूतैरारब्धानि पुनः शरीरादीनि घटादीनि,

15 आदिग्रहणात् पटकुटिवत् परम्परारब्धत्वात् यथा कार्पासिकतन्त्वारब्धपटमयी कुटिरपि कार्पासिकीत्युच्यते तथा सुखाद्यारब्धशब्दाद्यारब्धभूताद्यारब्धपृथिव्यादिगवादिघटादिसरित्समुद्रमन्दरादीन्यपि तदात्मकानि ।

अनेकात्मकैकपूर्वकं शरीरमन्वितविकारत्वाच्चन्दनशकलवत्, नैकैकपूर्वकं नापूर्वकं नासत्पूर्वकं वैनाशिकाद्यभिमतवत्, अन्वितत्वात् ।

---

20 करोति तान् प्रति तस्य दुःखरूपसमुद्भवात्, विरहिणो मोहयति, तान् प्रति तस्य मोहरूपसमुद्भवात्, तथा न्यायपरायणो राजा शिष्टानां सुखमुत्पादयति दुष्टानां दुःखं कामिनीनां मोहमेवमेवं सर्वत्र सुखाद्युपलब्धेः सुखाद्यात्मत्वाभिव्यक्तकार्यत्वात् सुखाद्यात्मकाः सर्वे शब्दादय इति भावः । स्वयं हेत्वर्थं समासव्याजेनाह—सुखाद्यात्मकानामिति महदादिक्रमेणारब्धानामेषां सुखाद्यात्मकानां शब्दादीनां कार्यं सुखादेरात्मत्वेनाभिव्यक्तमतः सुखाद्यात्मत्वमित्यर्थः । हेत्वन्तरमाह—यानि तैरिति, सुखदुःखमोहात्मकैः त्रयोविंशतितत्त्वैः स्थूलसूक्ष्मशरीरस्यारम्भः, शब्दादिपञ्चतन्मात्रारब्धानि पञ्चभूतानि, भूतविकाराणि घटपटादीनि

25 भूतमयानि त्रिगुणानि च वैकारिकारब्धानि सात्त्विकाहङ्कारोपादानकानि श्रोत्रादीन्येकादशेन्द्रियाणि सर्वाणीमानि धर्माधर्मलक्षणगुणपरिणामविशेषरूपाण्येव, सुखदुःखमोहात्मकान्येव वा, अत एव सुखदुःखमोहमयानि, यथा बाह्यानि घटपटादीनि रूपादीनां सन्निवेशमात्रत्वाद्रूपादिमयान्येव, यद्यत्सन्निवेशमात्रं तत्तन्मयं यथा बाह्यानि घटादीनि रूपादिमयानि, अत एव च तदात्मकानि तथा च महदादिसकलविकृतयः सुखाद्यात्मकाः सुखादिमयकारणारब्धत्वात्, पृथिव्यादिवदिति प्रयोगः, अत्रादौ सुखाद्यारब्धत्वात्, सुखादिसंनिवेशविशेषत्वाच्च सुखादिमयत्वं शब्दादीनां प्रसाध्य ततः शब्दाद्यारब्धानां भूतानां तन्मय-

30 कारणारब्धत्वात् तन्मयत्वं प्रसाधितं भूतारब्धानाञ्च शरीरादीनां तन्मयारब्धकारणारब्धत्वात् तन्मयत्वं प्रसाधितं विज्ञेयम् । परम्परेति सुखाद्यारब्धारब्धारब्धत्वादित्यर्थः । एवमग्रेऽपि भाव्यम् । अथ प्रकृतोपयोग्यनेकैकपूर्वकत्वं साधयति—अने-

---

१ क. सि. शरीरीभूतानि ।

(अनेकेति) अनेकात्मकैकपूर्वकं शरीरमिति प्रतिज्ञा, किं पुनः कारणमेवं प्रतिज्ञायते? प्राक्पुरुषाद्येककारणपूर्वकत्वनिराकरणार्थं वक्ष्यमाणेश्वरादिकारणपूर्वकत्वनिराकरणार्थञ्च, को हेतुः? अन्वितविकारत्वात् अन्विता विकारा यस्य तदन्वितविकारम् हस्ताकुञ्चनप्रसारणाङ्गुल्युत्क्षेपणापक्षेपण-पादप्रक्षेपाङ्गनिमीलनादिविकाराः शरीरावयवाश्च सुखादिभिः शब्दादिभिश्चान्वितास्तस्मादन्वितविकार-त्वात्, चन्दनशकलवत्, यथा मृदुसुरभिशीतहरितरक्तश्वेतादिभेदस्पर्शरसरूपगन्धादिविकाराणि चन्द- 5 नशकलानि सुखाद्यन्वितानि परमाणुद्व्यणुकाद्यनेकात्मकैकचन्दनतरुपूर्वकाणि तथेदं शरीरमपि सुखाद्य-नेकात्मकैककारणपूर्वकमिति नैकैकपूर्वकं यथा पुरुष एवेत्यादि, नापूर्वकं न निर्हेतुकम्, नासत्पूर्वकं वैनाशिकाद्यभिमतवदिति, एतस्य साधनस्य व्यावर्त्यार्थोद्देशार्थमन्वितत्वादिति सामान्येनास्यैवोक्तस्य निगमनार्थम्, अथवैकैकपूर्वकत्वादिनिराकरणसाधनं वा पृथगेव ।

अन्वाह च–'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो 10 ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥ (श्वेता० अ० ४ श्लो० ५) सुखञ्च दुःखञ्चानुशयञ्च वारेणायं सेवते तत्र तत्र । विशन्ति योनिं व्यतिरेकिणस्त्रयः अजस्तु जायामतिसत्यशुद्धः ॥' इति, 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' इति, (मुण्डको० ३–१–१)

अन्वाह चेति, पूर्ववत् अजामिति न जायत इत्यजा नित्या, अथवा पुनः अज गतिक्षेपण- 15 योरिति क्षिप्रगमनादजा, ईर्यप्रकृतिः, क्षिप्रपरिणतिगतिसाधर्म्यात् बहुप्रसवसाधर्म्याद्वा अजेवाजा [तां]

कात्मकेति । प्रतिज्ञा व्यावर्त्यं तावदाह–प्रोक्तेति । हेतुमाह–अन्वितेति अन्वितत्वञ्च येन केनचित् सामान्येन, विकारा-श्चात्र शरीरस्यावस्थाविशेषाः शरीरावयवाश्च तदेव दर्शयति हस्ताकुञ्चनेति, एते हि विकाराः सुखदुःखमोहसमन्विताः शब्दस्पर्शादिसमन्विताश्च तथाविधविकाराः सन्ति शरीरस्य, यथेनान्वितविकारत्वं तत्तद्वदुपादानकम्, नहि कोऽपि विकारः एकेन सुखादिना शब्दादिना वाऽन्विताः प्रधानमहदादेस्त्रैगुण्याव्यभिचारादनेकत्वाच्च तत्र च सर्वं कार्यजातं अनेकात्मकैकोपा- 20 दानमेव, सत्त्वस्य प्रकाशजननेऽपि रजस्तमसोरपेक्षणात् लघुत्वादिधर्मैरनेकात्मकत्वाच्च शब्दतन्मात्रमपि सुखदुःखमोहात्मक-तयाऽनेकैकात्मकमेवेति न कस्याप्येकैकपूर्वकत्वमिति भावः । दृष्टान्तमाह–चन्दनशकलवदिति, चन्दनशकलानां मृदु-सुरभ्यादिस्पर्शगन्धाद्यन्वितत्वं सुखदुःखाद्यन्वितत्वमनेकैकात्मकचन्दनतरुपूर्वकत्वञ्च दृष्टमिति भावः । नैकैकपूर्वकमिति एकान्तैकरूपस्यानपेक्षस्य सदा प्रवृत्तिस्वभावत्वेऽनुपरमप्रसङ्गः कदाचित् प्रवृत्त्यभ्युपगमे परविषयद्वैतापत्त्या [illegible]भावात् इति भावः । नापूर्वकमिति, पूर्वशब्दस्य कारणपर्यायत्वादाह–न [illegible]तुकमिति, कार्यस्य कादाचित्कत्वानुपपत्तेरिति 25 भावः । नासत्पूर्वकमिति, अभावाद्भावोत्पत्तेरसम्भवादिति भावः पूर्ववदिति, जिनवचनस्यैव सर्ववादमूलत्वादिदमपि ज्ञापकं जैनवचना[illegible]र्येति भावः । अध्यात्मविद्याप्रस्तावादजापदं योगेन प्रकृतावेव नेयं न समुदायप्रसिद्ध्या छागयामित्यतो योगं दर्शयति–नेति । समुदायप्रसिद्धिपरित्यागेनावयवप्रसिद्ध्याश्रयणस्यानौचित्यादाह–क्षिप्रेति । नन्वजेवाजेति गुणवृत्त्यङ्गी-काराद्रूढिस्त्यक्तेवेति चेद्रूढेरपहतेऽपि रूढ्यर्थगुणानां क्षिप्रपरिणतिगतिबहुप्रसवादिरूपाणां योगाद्रूपककल्पनया रूढिः स्वीकृतैव, यथा हि लोके यदृच्छया काचिदजा रोहितशुक्लकृष्णवर्णा स्यात् बहुबर्करा सरूपबर्करा च तां च कश्चिदजो जुषमाणोऽनुशयीत, 30 कश्चिच्चैनां भुक्तभोगां जह्यात्, एवमियमपि प्रकृतिः त्रिवर्णा बहुसरूपं विकारजातं जनयति, अविदुषा च क्षेत्रज्ञेनोपभुज्यते विदुषा

१ सि. क. °विकारैः । २ सि. क. °यवैश्च ।

एकामद्वितीयां सर्वगताम्, मा भूदेकैवेति-अनेकात्मकैकाम्, लोहितशुक्लकृष्णां दुःखसुखमोहात्मकरजःसत्त्वतमोमयीम्, बह्वीः प्रजाः अनन्ताः प्रजायन्त इति प्रजाः,[ताः]महदहङ्कारतन्मात्रादिक्रमेण ब्रह्मादिस्तम्बान्ताः सृजमानां उत्पादयन्तीं सरूपाः सुखाद्यात्मिका आत्मरूपा आत्मसरूपाः, प्रत्यात्मजा बहुवर्णिकाऽऽत्मस्वरूपप्रजामर्जिनी प्रधानेति गम्यते नाम, अजो ह्येको जुषमाणः सेवमानः प्रीयमाणः,
5 स हि न जायत इत्यजो नित्यत्वात्, एकः सन्निधिभवनस्याभिन्नस्यैकरूपत्वात् सर्वगतत्वाच्च तामेव जुषमाणोऽनुशेते अनुशयमनुबन्धञ्च तस्या न मुञ्चति अनुधावतीत्यर्थः, यथा वत्सोऽजामनुधावति तथा तां प्रकृतिं पुरुषः, जहात्येनां भुक्तभोगामजोऽन्यः, असावपि पुरुषोऽन्य एव तस्या उपरतः संवृत्तो भुक्तभोगां दृष्टदृश्यां विदितात्मानात्मविशेषः प्रकृतिपुरुषज्ञो नर्तक्या इव विकारान् बाह्यान् भ्रूक्षेपक्रमकरचलनादीननुशयहेतूनन्तःकरणशरीरादिसमुद्भूताननात्मभूतानुपलभ्य भिक्षुरिव स्वभावाव-
10 चिन्तनाद्विरक्तोऽहमनया वृथा क्लेशितो बहिरन्तरशुद्धयेति विरमति, सापि दर्शितविकारा दृष्टाहमनेनेति व्रीडितेव विनिवर्तत इति । तथैतदर्थसम्बन्धिनी व्याख्यातैव द्वितीया गाथा–'सुखञ्च दुःखञ्चानुशयञ्च वारेणायं सेवते तत्र तत्र । विशन्ति योनिं व्यतिरेकिणस्त्रयः अजस्तु जायामतिसत्यशुद्धः ॥' इति । द्वा–उभौ सुपि डादेशाद्[1] सखाया–अन्योऽन्यमद्विनावेव विभुत्वनित्यत्वाभ्याम्, सयुजा–पूर्ववत् डादेशात् समानयुजौ समानस्य सकारादेशात्, सह पर्णाभ्यां सपर्णौ–सपक्षौ शुद्ध्यशुद्धिपक्षौ, सुयुजौ सुपर्णौ-
15 विति वा पाठः–सुष्ठु अतीव युक्तौ सर्वगतत्वादविभागेन सदा युक्तौ शोभनपर्णौ च परस्परबन्धैक्या-

च परित्यज्यत इति भावः । अद्वितीयामिति, सजातीयद्वितीयरहितामित्यर्थः, साजात्यञ्च विकृतित्वानाधिकरणत्वे सति तत्त्वान्तरोपादानत्वम्, तेन पुरुषस्याविकृतित्वेन महदादेः त्रिगुणत्वेन सजातीयत्वेऽपि न क्षतिः । विभिन्नरूपमहदादिप्रपञ्चोपादानत्वस्य सर्वथैकरूपादसम्भवः, एकरूपात्कारणाद्धि कार्यमेकरूपमेव स्यादित्याशंक्याह–मा भूदिति । अनेकात्मकतामेव दर्शयति–लोहितेति लोहिता चासौ शुक्ला च लोहितशुक्ला, सा चासौ कृष्णा च लोहितशुक्लकृष्णेति कर्मधारयात् पूर्वयोः पुंवद्भावः,
20 लोहितं रक्तं रजो रञ्जनात्मकत्वात्, शुक्लं श्वेतं सत्त्वं प्रकाशात्मकत्वात्, कृष्णं नीलं तमः आवरणात्मकत्वात् तदात्मिकां रजःसत्त्वतमोगुणात्मिकामित्यर्थः, रज आदयोऽवयवाः प्रधानस्येति तद्धर्मा लोहितत्वादयोऽवयविनि तेषां साम्यावस्थारूपे प्रधाने व्यपदिश्यन्ते । प्रधाने कार्यानुमानं सूचयितुमाह–बह्वीः प्रजा इति, प्रकर्षेण व्यक्तरूपेण जायन्ते आविर्भवन्ति नासन्त उत्पद्यन्त इति प्रजा महदादयः, ताश्च सरूपाः सुखदुःखमोहात्मिकाः बह्वीश्चानेकविधाः सृजमानामाविर्भावयन्तीं अनेकविधविकारात्मना परिणममानामित्यर्थः, तेन प्रधानं जगदुपादानं सिद्धं तथा हि महदहङ्कारादयः सर्वे भावाः सुखाद्यन्विता दृष्टाः, ये च
25 यदन्वितास्ते तदात्मकोपादानोपादेयाः, यथा घटकटकादयो मृत्कनकान्वितास्तदुपादानकाः, तथा चेमे तस्मात्तथेति सूचयति–प्रत्यात्मजेति । प्रकृतेरियं परिणतिः कस्य हेतोरित्याशङ्क्य पुरुषोपभोगार्थं स्वभावत एवास्याः प्रवृत्तिरिति मन्वान आह–अजो ह्येक इति शब्दादयो विषया हि त्रिगुणा इन्द्रियमनोऽहङ्कारप्रणालिकया बुद्धिसत्त्वमुपसंक्रामंति तेन तद्बुद्धिसत्त्वं त्रिगुणं शब्दादिरूपेण परिणमति पुरुषस्तु कथित्, स्वयमपरिणाम्यपि बुद्धौ वस्तुतोऽप्रविष्टोऽपि बुद्धिवृत्त्यैव बुद्धिसत्त्वादात्मनो विवेकमविन्दानस्तन्निष्ठसुखादीन् विपर्यासेनात्मन्यभिमन्यमानः सुखी दुःखी मूढोऽहमित्यविवेकितया संसरति, सत्त्वपुरुषान्यताख्यातिसमुन्मूलितनिखिलवा-
30 सनाऽविद्यानुबन्धो जहात्येनां प्रकृतिम्, प्रकृतिरपि विदितवेद्यं दृष्ट्वा ततो निवर्तत इति भावः । सुखञ्च दुःखञ्चेति, गाथेयमिदानीमुपनिषत्सु न क्वापि दरीदृश्यते सुखस्य दुःखस्य हि संशयस्य वारेणायं सेवते तत्र तत्रेत्यातावन्मात्रं युक्तिदीपिकाग्रन्थे दृश्यते, ततो नास्माभिर्व्याख्यायते । द्वा सुपर्णेति गाथां व्याख्यातुमाह–द्वेति 'सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजाल' इति सूत्रेण औविभक्तेर्डादेशे द्वेति रूपम्, एवमेव औविभक्तौ सुपर्णादिशब्दा अपि प्रकृतिपुरुषयोरुभयोः सुखासुखपक्षत्वप्रदर्शनायोक्तं परस्परेति ।

1 सि. क. उभा । 2 सि. क. द्वुभा ।

·त्तिजनितविचित्रवर्णसुखासुखपक्षौ [समानं]एकं वृक्षं लोकाख्याश्वत्थं तत्त्वत्वादचलत्वाद्वृक्षोऽश्वत्थ-साधर्म्यात्, परिषस्वजाते—परिष्वक्तवन्तौ, तयोरेकः तयोः—शकुन्योरेकवृक्षपरिष्वङ्गिणोरेक एव शकुनि-र्भोगसमर्थस्तस्य पिप्पलस्य पिप्पलं—फलं स्वादु—भोग्यविकारविशेषविचित्ररसं अत्ति—स्वादति भुङ्क्ते पुरुष-एव, भोक्तृत्वात् ज्ञत्वात्, अनश्नन्नन्यः प्रकृतिसंज्ञः शकुनिरभुञ्जानः, अभिचाकशीति—आभिमुख्येन तस्यात्यर्थं काशते, शकुनिप्रस्तुतेः पुल्लिङ्गत्वम्। 5

एतदधुना परीक्ष्यते—

**अथ कथं शब्दैकगुणप्रवृत्तिविपदभ्युपगम्यते? त्वन्मतविरोधात्, प्रयोगश्चात्र न प्रवर्त्तेतैव शब्दैकगुणाकाशम्, असन्द्रूतेः, पुरुषवद्वन्ध्यापुत्रवद्वेति।**

**अथ कथमित्यादि,** यावद्विपदभ्युपगम्यत इति, यत्र नेकैकात्मककारणत्वमिष्यते एवमेकका-रणत्वप्रतिषेधानन्तरं पुरुषाद्येककारणत्वप्रतिषेधाहितसंस्कारतिरोधानकालमप्यप्रतीक्ष्य त्वया कथं 10 शब्दैकगुणप्रवृत्तिविपदभ्युपगम्यते? अभ्युपगम्यतां तावत्पार्थिवादीनां व्यवहारानुपातिनामेषां लोके दृष्टानां द्वित्र्याद्यनेकस्पर्शरसगन्धगुणानामनेकैकत्वात्तदात्मकवाय्वादिसृष्टिरस्तु नाम त्वन्मतेन सह घट-माना, इदन्तु न युज्यते शब्देनैकगुणा प्रवृत्तिः, इत्थंभूतेनास्य तच्छब्दैकगुणप्रवृत्तिर्विपत् 'गण गुण संख्याने' शब्दैकसंख्यानप्रवृत्तिरेकस्मात् कारणात्[न]भवेत्, त्वन्मतविरोधात्, [किन्तु]अनेकात्म-कैकस्माच्छब्दस्पर्शादिद्वित्रिचतुःपञ्चगुणा भवेत् वाय्वादिवत्, त्वन्मताविरोधात्, प्रयोगश्चात्र न 15 प्रवर्त्तेत एव शब्दैकगुणमाकाशम्—तत्र भवेदित्यर्थः, असन्द्रूतेः 'गुणसन्द्रावो द्रव्यमि'ति [ **महाभा० ५-१-१-११९ सूत्रे** ]लक्षणाभावात्, बहूनां हि गुणानामेकीभवनमेकयगमनं सन्द्रुतिः तदभावोऽस-न्द्रुतिस्ततोऽसन्द्रुतेर्न प्रवर्त्तेत पुरुषवद्वन्ध्यापुत्रवद्वेति, अत्र तदनिष्टापादनमिति।

समानं—अविशेषमुपलब्ध्यधिष्ठानतया एकमिति यावदित्याशयेनाह—**एकं वृक्षमिति**। अयं वृक्षोऽश्वत्थ एव विवक्षितः अश्वत्थफलवाचकपिप्पलपदश्रवणात्, 'ऊर्ध्वमूलमधःशाख एषोऽश्वत्थः सनातन' इत्युक्तः तत्त्वत्वादचलत्वादित्युक्तम्। पिप्पल- 20 फलभोक्तृत्वस्य शकुन्यादौ प्रसिद्धेः सुपर्णाविति पक्षोपस्थितेश्च पक्षिबोधादाह—**तयोः शकुन्योरिति। भोगसमर्थ इति,** पुरुषस्यैव भोक्तृत्वात्, प्रकृतेस्तु भोग्यत्वादिति भावः। प्रकृतेर्विवक्षितत्वादनश्नन्नन्य इति कथं पुल्लिङ्गत्वेन निर्देश इत्याशङ्काया-माह—**शकुनिप्रस्तुतेरिति**। सत्त्वरजस्तमोमयादेकस्मात् कारणादेव कार्योत्पत्त्यभ्युपगमे शब्दतन्मात्रादेकस्मादाकाशं शब्द-गुणं शब्दतन्मात्रसहितात्स्पर्शतन्मात्राद्वायुः शब्दस्पर्शगुणः शब्दस्पर्शतन्मात्रसहिताद्रूपतन्मात्रात्तेजः शब्दस्पर्शरूपगुणं शब्द-स्पर्शरूपतन्मात्रसहिताद्रसतन्मात्रादापः शब्दस्पर्शरूपरसगुणाः शब्दस्पर्शरूपरसतन्मात्रसहिताद्गन्धतन्मात्रात् पृथिवी शब्द- 25 स्पर्शरूपरसगन्धगुणा जायत इति क्रमेणे शब्दतन्मात्रादेकात्मकैकरूपात् कारणादाकाशस्योत्पत्तिः कथमिति विध्युभयनयः सांख्यमनुयुंक्ते—**अथ कथमिति** शब्द एवैको गुणो यस्य तच्छब्दैकगुणं शब्दतन्मात्रं सूक्ष्माकाशात्मकं तस्य स्थूलाकाशजनने या प्रवृत्तिः सैव विपत्, अनेकात्मकैकरूपत्वाभावात्, तत्कथमभ्युपगम्यते, अनेकात्मकैककारणत्वाभ्युपगमविरोधादिति भावः। अधुनैव हि त्वया पुरुषाद्येककारणत्वप्रतिषेधः कृतः सा च सर्वविधसिद्धिरित्यादिना ग्रन्थेन, तत्प्रतिषेधजनितसंस्कारोऽधुनापि न नष्टस्तदन्तर एव त्वया कथमेककारणकार्यत्वमभ्युपगतमित्याह—**एवमेककारणत्वेति**। वाय्वादिसृष्टिः स्यान्नाम अनेकात्म- 30 कैककारणप्रभवत्वात्, आकाशसृष्टिस्तु न स्यादित्याह—**अभ्युपगम्यतामिति**। शब्दतन्मात्राच्छब्दैकगुणस्याकाशस्याभ्युपगमे गुणानां समूहलक्षणगुणसन्द्रावस्याभावेन द्रव्यत्वानुपपत्तिरित्याशयेनाह—**प्रयोगश्चात्रेति**। द्रव्यं हि भवनं द्रव्यञ्च भव्य-

१ सि. क. घटमानम्। २ सि. क. नानेक°।

अत्राह—

**शब्दे त्रैगुण्यमस्त्येवेति चेत् माधूक्तमेतदेवाऽऽवाचयितुमवोचम्, शब्दैकगुणविषयप्रवृत्तिप्रसङ्ग इति, ततश्चात्रिगुणं मुखादि, एकमुखस्वात्मत्वादव्यतिरिक्ततत्त्वं प्रकाशात्मना मा प्रवर्त्तिष्ट निर्गुणत्वादेकत्वाद्वैपम्यानुपपत्तेरपरिणामित्वादनापत्त्यात्मकत्वात्, पुरुषवत्, तथा तद्धर्मवत्त्वात्, पुरुषोऽपि प्रवर्त्ततामेभ्य एव, मुखादिवत्, शब्दादि वाप्येकात्मकाद्येव प्रधानावस्थायामप्रवर्त्तमानत्वात्, मुखादिवत्, अनेकात्मकं वा मुखादि, तत एव शब्दवत् ।**

(**शब्द इति**) शब्दे त्रैगुण्यमस्त्येवेति चेत्—सर्वस्योक्तसुखदुःखमोहमयत्वाच्छब्दोऽपि तदात्मा त्रिगुण एवेति, चेदित्याशङ्कायामेवञ्चेन्मन्यसे माधूक्तमेतदेव त्वावाचयितुमवोचं शब्दैकगुणविषयप्रवृत्तिप्रसङ्ग इति, ततश्च यत्पुनर[त्रि]गुणं मुखादि—मुखमेव पृथक् प्रधानावस्थायां सत्त्वं तदत्रिगुणमेकसुखस्वात्मत्वात्, अव्यतिरिक्तं तस्य भावस्तत्त्वं यथा तत्सुखमेक[सुख]स्वात्मत्वादव्यतिरिक्ततत्त्वं प्रकाशादिश्च तस्य तत्त्वस्यात्मा सर्वत्राभेदभावात् तेन प्रकाशाद्यात्मना मा प्रवर्त्तिष्ट—मा आपत्तिभवनमनुभूत, निर्गुणत्वात्—गुणसंद्रावानात्मकत्वात्, एकत्वात्—अननेकात्मकैकत्वात् वैपम्यानुपपत्तेरपरिणामित्वात्, वैपम्यापत्तितो हि परिणामित्वं स्यात् साम्यावस्थायान्तु गुणानां तदभावाद्वैपम्यानुपपत्तिरतोऽपरिणामित्वमनापत्त्यात्मकत्वात्—रूपान्तरप्राप्त्यनात्मकत्वात्, तस्यां ह्यवस्थायामेवं स्वरूपं सत्त्वम्, दृष्टान्तः पुरुषवत् यथा पुरुषो निर्गुणत्वा[दिधर्मवत्त्वा]न्न प्रवर्त्तते तथा सुखाद्यपि मा प्रवर्त्तिष्ट, निर्गुणत्वादिधर्मवत्त्वे सत्यपि सुखादि प्रवर्त्तत एव चेत् तथा तद्धर्मवत्त्वात्,

---

इत्युक्तेः, तच्चानेकेषां गुणानामैक्यपरिणतिलक्षणमापत्तिभवनं तच्चाकाशे पुरुषवन्न सम्भवतीति भावः । अथ शब्दस्य सुखदुःखमोहसमन्वितत्वात्, यदन्वितं तत्तदुपादानकमिति व्याप्त्या त्रिगुणसमुद्भूतं त्रिगुणात्मकश्चेति शब्दैकगुणप्रवृत्तिर्नायुक्तेत्याशङ्कते—**शब्द इति ।** शब्दस्यात्रिगुणत्वे विषयदर्थं तस्य प्रवृत्तिर्न भवतीत्येतदेव त्वयाऽऽवाचयितुं मयाऽऽशङ्कितमेवं च त्रिगुणात्मकादेव कार्यं भवतीति यदि मन्यसे तर्हि तत्र दोषाभावेऽपि सत्त्वमत्रिगुणं कथं प्रकाशनाय प्रवर्त्तेतेत्युत्तरयति—**साधूक्तमिति । शब्दे त्रैगुण्यमिति,** त्रयो गुणाः सुखदुःखमोहा अस्येति त्रिगुणं तस्य भावस्त्रैगुण्यम्, परार्थत्वं गुणस्य लक्षणम्, शब्दपदेन शब्दतन्मात्रं ग्राह्यम्, यद्यपि सत्त्वादय एव पुरुषोपकरणत्वात् पुरुषबन्धकत्रिगुणात्मकमहदादिनिर्मातृत्वाच्च गुणपदाभिधेयास्तथापि सुखादीनां सत्त्वादिधर्मतया धर्मधर्मिणोरभेदादत्र गुणपदेन सुखादयोऽभिहिताः सुखदुःखमोहमयत्वादित्यनेन, शब्दादितन्मात्राणां स्पष्टसुखादिधर्मकत्वाभावेऽपि उपभोगायोग्यास्पष्टसुखादिधर्मकत्वमस्त्येवेति पूर्वपक्षाभिप्रायः । समाधत्ते—**यत्पुनरत्रिगुणमिति,** अत्र सुखादिपदेन सत्त्वादि ग्राह्यम्, तत्र प्रकाशार्थं सत्त्वं प्रवृत्त्यर्थं रजः नियमार्थं तमोऽभ्युपेतम्, सत्त्वञ्च केवलसुखस्वरूपमत्रिगुणं कथं प्रकाशनाय प्रवर्त्तेतेति भावः । तत्र हेतुमाह—**निर्गुणत्वादिति ।** ननु सत्त्वादेरपि सुखादिगुणवत्त्वात् कथं निर्गुणत्वमित्यत्र तदर्थमाह—**गुणसन्द्रावानात्मकत्वादिति ।** सत्त्वस्य कारणत्वमपि न सम्भवतीत्याह—**एकत्वादिति,** नन्वेकस्या अपि प्रकृतेः कारणत्वादेकत्वं न कारणताविघटकमित्याशयेन तदर्थमाह—**अननेकात्मके ति** कार्यलिङ्गेन सत्त्वरजस्तमःस्वभावस्यैकात्मकस्यैव कारणत्वात् सत्त्वस्य चानेकात्मकैकरूपत्वाभावादिति भावः । महदादीनामुत्पत्तौ गुणवैषम्यस्य तंत्रत्वेन सत्त्वस्यैकत्वेन कार्यप्रयोजकवैषम्यासम्भवेन न कारणत्वमित्याशयेनाह—**वैषम्यानुपपत्तेरिति** सर्गारम्भकालीनविलक्षणपरिणामप्रयोजकस्य गुणानां गुणप्रधानभावस्य हि वैषम्यं नियामकं तदनुपपत्तेः सत्त्वादि न प्रकाशादिपरिणामित्वमापद्यत इति भावः । तदेव स्फुटीकरोति—**वैषम्यापत्तित इति ।** व्याप्तिग्राहकं दृष्टान्तमाह—**पुरुषवदिति ।** सत्त्वे निर्गुणत्वादिकमस्तु आपत्तिभवनञ्चानुभूयतामिति चेदाह—**तद्धर्मवत्त्वादिति ।** वैषम्यसम्पादकक्रियाविशेषोऽपि कुतो न

पुरुषोऽपि प्रवर्त्ततामेभ्य एव, सुखादिवत्, गुणस्यान्यतमस्यैव वा श्वयथुरकस्मात् कुत उत्पन्नः ? किञ्चान्यत् शब्दादि वाप्येकाद्येव, निर्गुणमेकमपरिणामि चैवमाद्यापाद्यमानत्वात् प्रधानावस्थाया-मप्रवर्त्तमानत्वात् सुखादिवत्, अनेकात्मकमित्यादि विपर्ययधर्मोपादनं गतार्थं तत एवेति ।

आह—

**नैव प्रवर्त्तते सुखादि, अप्रवृत्तिलक्षणत्वात्, रज एव प्रवृत्तिलक्षणम्, प्रत्येकं न हि सत्त्वादयः प्रकाशप्रवृत्तिनियमलक्षणास्ततोऽप्रवृत्तिलक्षणत्वान्न प्रवर्त्तन्ते पुरुषवत्, वैषम्यावस्थायान्तु रजः प्रवर्त्तते प्रवर्त्तयति च सुखं मोहञ्चेति ।** 5

**नैवेत्यादि**, सिद्धसाधनमिदं मा प्रवर्त्तिष्टेति, न प्रवर्त्तत एव सुखादि, अप्रवृत्तिलक्षणत्वात्, न हि सुखं मोहो वा प्रवृत्तिलक्षणम्, किं तर्हि ? रज एव प्रवृत्तिलक्षणम्, प्रत्येकं [न]हि सत्त्वादयः प्रकाशप्रवृत्तिनियमलक्षणास्त्रयोऽपि, ततोऽप्रवृत्तिलक्षणत्वान्न प्रवर्त्तते सुखम्, पुरुषवत्, वैषम्यावस्था-यान्तु रजः प्रवर्त्तते प्रवर्त्तयति च सुखं मोहञ्चाप्रवृत्तिलक्षणत्वात्तयोरिति । 10

अत्रोच्यते—

**त्रयमपि न न प्रवर्त्तते, अविभक्तस्वतत्त्वस्य तथा प्रविभक्तत्वेन व्यवस्थानात्, यथा मयूराण्डकरसगतग्रीवादिभावाः, यन्न प्रवर्त्तते तदविभक्तस्वतत्त्वं सत् कदाचित् प्रविभक्तत्वेन न व्यवतिष्ठते यथा पुरुषः, यथा वा मयूराण्डकरसे हंसग्रीवादयः, द्रव्यार्थनयविकल्पानां सत्कार[illegible]असदापत्तिप्रवृत्तेः, यत इह भात्र एव यतः ।** 15

( **त्रयमपीति** ) त्रयमपि न न प्रवर्त्तते–प्रवर्त्तत एव, अविभक्तस्वतत्त्वस्य तथा प्रविभक्तत्वेन व्यवस्थानात्, यदप्रविभक्तस्वतत्त्वं तेन तेन प्रकारेण प्रविभक्तत्वेन व्यवतिष्ठते तत् प्रवर्त्तत एव, यथा

पुरुषस्य कुतो वा त्रयाणां गुणानामुत्पत्तः, अन्यतमस्यैव कुत उत्पन्न इत्याह–**गुणस्येति** । शब्दाद्यपि निर्गुणत्वादिधर्मवत् कुतो न, प्रधानावस्थायामप्रवर्त्तमानत्वादित्याह **किञ्चान्यदिति** । विपक्षे दण्डमाह–**अनेकेति** । सुखात्मा सत्त्वगुणः प्रकाशक 20 एव न प्रवर्त्तकः प्रवृत्तेः रजःकार्यत्वात् तस्मान्मा प्रवर्त्तिष्टेत्यापत्ताविष्टापत्तिरेवेत्याशङ्कते–**नैवेति** । अप्रवृत्तिलक्षणत्वात् प्रवृत्तिप्रयो-जनकत्वाभावादित्यर्थः, सत्त्वादीनां हि प्रकाशादयः प्रयोजनम्, 'प्रकाशप्रवृत्तिनियमार्था' इत्युक्तेरिति भावः । प्रवृत्तिः रजःकार्यमेव प्रकाशप्रवृत्तिनियमानामेककार्यत्वाभावात्, प्रकाशेनैव हि सत्त्वं प्रवृत्त्या रजो नियमेन तमो लक्ष्यत इत्याशयेनाह–**प्रत्येक-मिति,** प्रकाशो बुद्धिवृत्त्यादिरूप आलोकः, प्रवृत्तिर्यत्नश्चालनं वा, नियमः प्रकाशक्रियाभ्यां शून्यत्वं तयोः प्रतिबन्ध इति यावत्, नैर्लक्ष्यन्ते सत्त्वादयो नानः प्रत्येकं त्रिलक्षणाः सत्त्वादय इति भावः । रजः सत्त्वतमसोः कार्यभूतौ प्रकाशनियमावा- 25 श्रित्य स्वकार्येण प्रवृत्त्या सत्त्वतमसी उपकरोतीत्याह–**वैषम्यावस्थायान्त्विति** । त्रयोऽपि गुणाः प्रवृत्तिमन्त **एव**, रजसा सहकृतयोः सत्त्वतमसोः प्रकाशनियमौ प्रति प्रवृत्तेः, तथा च साम्यावस्थायामपि सत्त्वरजस्तमांसि प्रवृत्तिमन्त्येव सत्कार्यवादा-भ्युपगमात्, न हि तत्र तदानीं प्रवृत्त्यभावे सहकारिशतेनापि तत्र प्रवृत्त्युद्भवः सम्भवतीत्याशयेनाह–**त्रयमपीति** नञोर्द्वयोः प्रकृतार्थदृढीकारादाह–**प्रवर्त्तत एवेति** । **अविभक्तेति** स्वस्य तत्त्वं स्वतत्त्वं, अविभक्तं स्वतत्त्वं यस्य तस्येति समासः कारणदशायां कार्यमविभक्तस्वतत्त्वं सत् तत्तद्रूपेण प्रविभक्तत्वेन व्यवतिष्ठमानं सत् प्रवर्त्तत एव, व्यवहारायोग्यसूक्ष्मरूपेण 30 कारणे सिद्धस्यैव कार्यस्य व्यवहारयोग्यस्थूलरूपेण भवनात् सत्त्वरजस्तमसां कार्याणां प्रकाशादीनां सूक्ष्मरूपेण तदानीमपि

१ सि. क. °मेकं समनपरि० । २ सि. क. तएवेति ।

म[यू]राण्डकरसगतग्रीवादिभावाः, म[यू]राण्डकरसावस्थायां ग्रीवाबर्हादयोऽविविक्तस्वतत्त्वा ग्रीवादित्वेन प्रविभक्तरूपा व्यवतिष्ठमानाः प्रवर्त्तमाना एव, नाप्रवर्त्तमानाः । यन्न प्रवर्त्तते तदविभक्तस्वतत्त्वं सत् कदाचिन्न प्रविभक्तत्वेन न व्यवतिष्ठते यथा पुरुषो यथा वा म[यू]राण्डकरसे हंसादिग्रीवादय इति, किं कारणं ? द्रव्यार्थनयविकल्पानां सत्कारणवादिनामसदापत्तिप्रवृत्तेः, यतः—यस्मात् इह—एतेषु वादेषु

5 भाव एव यतः—नियतो निशब्दलोपात् तस्मादप्रवृत्तिलक्षणं चेत् न स्यात् सुखादिरिति ।

आह—

ननु विभक्तरसग्रीवाद्यापत्तिवत् प्रधानस्यैव च सापत्तिः सि[द्ध्य]तीत्यत्रोच्यते कस्य वा न मनोरथः ? कथं भवान् अनेकात्मकमेकमेव कारणमनेककार्यतया विपरिवर्त्तमानमित्येतद्दर्शनं [प्र]तिपद्येतेति, तस्य च कारणस्य प्रधानं पुरुषो नियतिः शब्दब्रह्मेत्यादिसंज्ञा त्वयेष्टा

10 याऽस्तु माऽस्तु, किं नो विवादेन, तदर्थ एव मे प्रयासः, अनेकात्मकैककारणमयत्वं त्वं प्रतिपादयितव्य इति, एष प्रतिपादितोऽसि एवन्तु न वेत्थ अविभक्तप्रविभागापत्तिः [क]ल्पनेति ।

( नन्विति ) ननु विभक्तरसग्रीवाद्यापत्तिवत् प्रधानस्यैव च सापत्तिः, त्वदुक्तमयूराण्डकरसगताविभक्तग्रीवादिप्रविभागापत्तिभावदृष्टान्तसामर्थ्यादेव त्रिगुणसाम्यावस्थैकप्रधानापत्तिरेव सिद्ध्यति,

15 न तु सुखाद्यापत्तिरित्यत्रोच्यते, कस्य वा न मनोरथः ? कथं भवान् [अनेकात्मकं]एकमेव कारणमनेककार्यतया विपरिवर्त्तमानमित्येतद्दर्शनं प्रतिपद्येतेति, तस्य च कारणस्य प्रधानं पुरुषो नियतिः शब्दब्रह्मेत्यादिसंज्ञा त्वयेष्टा याऽस्तु साऽस्तु, किं नो विवादेन ? तदर्थ एव मे प्रयासः, [अनेकात्मक]एककारणमयत्वं त्वं प्रतिपादयितव्य इति, एष प्रतिपादितोऽसि त्वम्, एवन्तु न वेत्थेति गतार्थं यावत् कल्पनेति ।

तदुपपाद्यते[1]—

20 अविभक्तानेकार्थकारणमेवेदं विभक्तवृत्ति पृथिव्यादि न विभक्तसुखाद्यनेकार्थैककारणपूर्वकम्, उक्तवत्, यथा मयूरग्रीवादिवृत्तिः दध्यादिवृत्तिः तदात्माविभक्तपूर्वा, वक्ष्यमाणव[त्] ।

सद्भावेन प्रवृत्तिर्भवेदेवेति भावः । यदि प्रवृत्तिमन्ति तानि न भवेयुस्तर्हि ततः प्रवृत्तिर्न कदापि भवेत् मयूराण्डकरसाद्यथा हंसग्रीवादयो न प्रवर्त्तन्त इत्याह—यन्नेति । कारणव्यापारात् प्रागपि कारणे कार्यस्य विद्यमानत्वे हेतुमाह—द्र[व्यार्थेति]

द्रव्यं हि भवनलक्षणं मयूराण्डकरसवत् समुपारूढसर्वभेदबीजं निर्भेदं देशकालक्रमव्यत्ययभेदं समरसावस्थमेकरूपं भेदप्रत्यब-

25 मर्शेनाभिन्नमपि भिन्नवदाभासते गुणाः पर्यायाश्च भवनसमवस्थानमात्रका एवोत्थितासीनोत्कुटकशयितपुरुषवत्, इत्थमभिमन्तुर्द्रव्यार्थनयस्य भेदमात्रस्यान्तर्वासात् सदेवाविर्भवतीत्यभ्युपगन्तुरसतो भवनं प्रसज्यत इति भावः, अन्तर्वासमेवादर्शयति—यत इति । ननु अविभक्तग्रीवाद्यात्मकमयूराण्डकरसस्यैव यथा विभक्तरसग्रीवादित्वेन भवनं तथैव त्रिगुणसाम्यावस्थैकप्रधानमेव तथा तथाऽपद्यते न तु गुण इत्याशङ्कते—नन्विति यद्येवं मन्यसेऽने[कात्मक]का[रण]ात् प्रवृत्तिरिति तर्हि नास्माकं विवादः, तथाविधकारणताया निर्दुष्टत्वात्, अत एव हि तथाविधस्याभ्युपगमे कस्य वा वाञ्छा न भवेन तस्य तु कारणस्य प्रधानादि-

30 नाममात्रत्वे नास्माकं विवादोऽपि तु तत्स्वरूप एव, तथा च त्वं तथाविधकारणमयत्वं प्रतिपादितोऽस्यतो मम प्रयासः सफल इत्यभिप्रायेणाह—कस्य वेति । अनेकात्मकैककारणमयत्वं काल्पनिकमेव न वास्तविकमिति शङ्कां मा कार्षीरित्याह—एवन्त्विति । प्रतिज्ञातं विशदयति—अविभक्तेति । सर्वं हि कार्यजातं प्राक् कारणेऽविभक्तं सद्वर्तत इति का[र]णमविभक्तानेकार्थं

[1] सि. क. तदुपपाद्यसे.

**( अविभक्तेति )** अविभक्तानेकार्थकारणमेवेदं पृथिव्यादि—अविभक्तोऽनेकार्थो यस्मिंस्तदविभक्तानेकार्थम्, किन्तत् ? कारणं अस्य पृथिव्यादेस्तदविभक्तानेकार्थकारणं पृथिव्यादि, **न विभक्तसुखा**द्यनेकार्थैकैककारणपूर्वकम्, विभक्ता वृत्तिरस्य पृथिव्यादेस्तद् विभक्तवृत्ति पृथिव्यादि सा वृत्तिः—पृथिव्युदकघटादित्वापत्तिः, [यथा]मयूरग्रीवादीति, ग्रीवाबर्हशिखण्डादिवृत्तिर्विभक्ता तदात्माऽनेकार्थाविभक्ताण्डकरसगतकारणैव, दध्यादिवृत्तिः क्षीरपूर्वा आदिग्रहणात् पुरा शुक्ररसरुधिराङ्गोपाङ्गादि, 5
ग्रीह्यादिपूर्वा उक्तादिग्रहणादाम्रपनसमातुलिङ्गादिपत्रपुष्पफलादिवृत्तिः, तदात्माऽविभक्तपूर्वा, दृष्टान्तबाहुल्यं व्यापित्वप्रदर्शनार्थम्, उक्त[वत्]वक्ष्यमाणवत्, तत्कारणं प्रत्येकमभिसम्बध्यते, **उक्तवत्** **वक्ष्यमाणवत्**, पुरुषनियत्याद्यभिन्नैककारणवदित्युक्तवत्, घट एव सर्वमिति विधिनियम एव वक्ष्यमाणवत्, **एवं तावत्**, कारणवादो यथाऽस्माभिरिष्टस्तथा घटते न यथा त्वयेष्ट इत्युक्तम् ।

इदानीं त्वत्पक्षे दोषा उच्यन्ते— 10

**प्रकाशप्रवृत्तिनियमानान्तु भिन्नात्मकतायां सत्त्वं न प्रकाशेत, अप्रवृत्तत्वात् पुरुषवत्, त्वयैव हि प्रधानावस्थायामप्रवृत्तसमा गुणा इतीष्यन्ते, पूर्ववद्वोत्तरकालमपि, अनग्निप्रकाशवद्वा ।**

**( प्रका[शे]ति )** प्रकाशप्रवृत्तिनियमानान्तु भिन्नात्मकतायां सत्त्वं न प्रकाशेतेति प्रतिज्ञा, दिङ्मात्रत्वेन अप्रवृत्तत्वात् पुरुषवत्, त्वयैव हि प्रधानावस्थायामप्रवृत्तसमा इतीष्यन्ते गुणाः—सत्त्वादयः, 15
तस्मात् सिद्धमप्रवृत्तत्वम्, पूर्ववद्वेति प्रधानावस्थायामिवेत्यर्थः, यथा प्रधानावस्थायामप्रवृत्तत्वान्न प्रकाशते सत्त्वमेवमुत्तरकालमपि । तथा रजस्तमसोः प्रवृत्तिनियमनिषेधः कार्यः । अनग्निप्रकाशवद्वा,

यथा मयूराण्डकरसः, तत्र ग्रीवाबर्हशिखण्डादीनामविभक्ततयाऽवस्थानात, क्षीरं तत्र दध्यादीनां तथावस्थानात, ग्रीह्यादिः अंकुरपत्रपुष्पादीनां तथाऽवस्थानात्, तथाविधाच्च कारणात कार्यं पृथिव्यादि ग्रीवादि दध्याद्यङ्कुरादि विभक्ततया प्रवर्तते, तस्मात् पृथिव्यादीनामविभक्तानेकार्थपूर्वकत्वं स्वभावः । एवकारव्यवच्छेद्यमाह—**न विभक्तेति**, सुखदुःखमोहात्मकप्रकृतेरेव 20
पृथिव्यादीनां प्रवृत्तिरिति न युक्तमिति भावः । तत्र दृष्टान्तमाह—**उक्तवदिति** । अविभक्तानेकार्थकारणत्वे दृष्टान्तमाह—**वक्ष्यमाणवदिति** । उपसंहरति **एवं तावदिति** । कारणं यदि विभक्तसुखाद्यात्म भवेत्तर्हि को दोष इत्याशंकायां तत्र दोषं वक्तुमाह—**प्रकाशेति** । सुखादीनामविभक्तत्वे विभक्तसुखाद्यनेकार्थैककारणत्वे प्रकाशादीनां भिन्नात्मकतया सुखस्य प्रवृत्त्यनात्मकत्वादितः पूर्वमप्रवृत्तं सुखमिदम्प्रथमतया कथं प्रकाशार्थं प्रयतेतेत्याशङ्कते **सत्त्वं न प्रकाशेतेति** । बहूनां हेतूनां सम्भवेऽपि दिङ्मात्रेण **हेतुमाह—अप्र[वृत्त]त्वादिति** । नन्वप्रवृत्तत्वमसिद्धं महदादिभावेन तस्य प्रवृत्तत्वादित्यत्राह—**त्वयैव** 25
**हीति**, प्रधानावस्थायां अव्यक्तावस्थायामित्यर्थः, तेन महदादेः प्रधानाभिन्नत्वेऽपि न क्षतिः, साम्यावस्थाविशिष्टतादशायामिति यावत्, तदानीं सत्त्वादिद्रव्याणां कार्यावस्थानुकूलन्यूनाधिकभावेन संहननाभावादप्रवृत्तत्वं सिद्धमिति भावः । ननु सत्त्वस्य प्रकाशात्मकत्वानात्मकत्वयोरिष्टत्वेन सिद्धसाधनत्वमेवेत्यत्राह—**पूर्ववद्वेति** साम्यावस्थाकाले हि सत्त्वस्याप्रकाशात्मकत्वमिष्टं न तु वैषम्यावस्थायाम्, तथा च विषमतादशायामपि न प्रकाशेतेत्युच्यत इति भावः । अत्र प्रकाशो बुद्धिवृत्त्यादिरूप आलोकः भौतिकालोकश्च, प्रवृत्तिर्यत्नश्चलनं वा, प्रकाशप्रवृत्तिभ्यां शून्यत्वं नियमः तयोः प्रतिबन्ध इति यावदिति सांख्याः । अप्रकाशित- 30
त्वादिहेतुना रजस्तमसोरपि प्रवृत्तिनियमनिषेधः कार्य इत्याह—**तथेति** । ये हि स्वकार्ये न प्रवर्तते स नास्त्येव यथाऽग्निः प्रकाशनेऽप्रवृत्तोऽनग्निरेव भवत्यत एव नासौ प्रकाशते एवं सत्त्वमपीत्याह—**अनग्नीति** । ननु सत्त्वस्य प्रकाशकत्वसामान्याभाववत्त्वं

१ सि. क. माणत्वात् । २–३ सि. क. माणत्वात् । ४ क. कारणनयवादो । ५ सि. क. वक्ष्यन्ते ६ सि. क. °कतया ।

यथाऽग्निरप्रवृत्तोऽप्रवृत्तिलब्धात्माऽनग्निः, अनग्निश्च [न]प्रकाशते तथा सत्त्वमलब्धप्रवृत्त्यप्रवृत्तत्वान्न प्रकाशेत ।

आह—

**ननु प्रकाशात्मकत्वादेवाप्रवृत्तत्वमसिद्धं सत्त्वस्य, रजसा प्रवर्त्यत्वात्, अग्नेरिव सन्धुक्षणेन, अत्रोच्यते यद्यप्रवृत्तोऽग्निस्तदाऽसन्नेवाप्रकाशत्वमेव गमयति, प्रकाशात्मप्र[वृत्त्य]भावात्, एवं हि कारणे कार्यस्य सत्त्वं स्यात् यदि तत् प्रकाशात्मना वर्त्तते प्रवर्त्तते, अनारम्भात् ।**

**ननु** प्रकाशात्मकत्वादेवेत्यादि, अप्रवृत्तत्वमसिद्धं सत्त्वस्य रजसा प्रवर्त्यत्वात्, अग्नेरिव सन्धुक्षणेन, यथाऽग्निर्भस्मच्छन्नः सन्नपि न प्रकाशते, तुषचीवरेन्धनादिभिस्तु संधुक्षितः प्रकाशते, न वाऽप्रकाशमानोऽग्निः [न] भवतीति, अत्रोच्यते—यद्यप्रवृत्तोऽग्निस्तस्यामवस्थायामसन्नेवासावतोऽस्मदिष्टमप्रकाशत्वमेव गमयति, अग्नेर्ह्येषा काचित् प्रकाशनस्य मात्रा सैवाऽऽत्मा प्रकाशनात्मप्रवृत्त्यभावात्तदासौ तदसन्, वन्ध्यापुत्रवत्, तथा सत्त्वमप्यप्रवृत्तत्वादिति । एवं हीत्यादि, कारणे कार्यस्य सत्त्वमेवं हि स्याद्यदि तत्—सत्त्वं प्रकाशात्मना वर्त्तते प्रवर्त्ततेऽनारम्भात्, इतरथा[ऽर्था]न्तरसम्बन्धारभ्यत्वादसत्कार्यवाद एवायमपि स्यात् । यथाहुरसत्कार्यवादिनः 'क्रियागुणव्यपदेशाभावादसत्कार्यम्' (वै० अ० १ आ० १ सू० १) समवाय्यसमवायिकारणसम्बन्धे सति 'द्रव्याणि द्रव्यान्तरमारभन्ते' (वै० अ० १ आ० १ सू० १०) येषाञ्चाधिकृतमारम्भसामर्थ्यं तैरारब्धे कार्यद्रव्ये तत्समवेतानियमत एव 'गुणाश्च गुणान्तरमारभन्ते' (वै० अ० १ आ० १ सू० १०) इत्यार-

साध्यते, स चाभावः सत्त्वेऽसिद्धः, सत्त्वं हि रजस्तमःकार्यभूतौ प्रवृत्तिनियमौ सहकारित्वेनोपादाय प्रकाशत एवेत्याशङ्कते—**नन्विति**, सत्त्वस्य प्रकाशात्मकत्वं कार्यकारणयोस्तादात्म्याद्विज्ञेयम् । तथा च साम्यावस्थायां सत्त्वस्य प्रकाशाजनकत्वेऽपि प्रकाशयोग्यताया अक्षतत्वेन नाप्रकाशकत्वमिति भावः । यत्र हि सर्वात्मना कार्यं न विद्यते तस्य तदात्मत्वासम्भवेनासत्त्वमेव स्यादित्याशयेन समाधत्ते—**अत्रोच्यत इति । नवेति**, अप्रकाशमानत्वमात्रत्वादनग्नित्वं न भवतीत्यर्थः । **अग्नेर्ह्येषेति**, प्रकाशनस्वभावोऽग्निर्यदि कोशकादिस्वाश्रयमात्रं स्वपरिमाणमात्रमपि वाऽप्रकाशयन् कथमसावग्निर्भवेत्, प्रकाशनात्मकस्याग्नेः प्रत्यक्षानुमानविषयस्य ताभ्यां तस्य तथाऽग्रहणेऽस्तित्वे प्रमाणमेव नास्तीत्यसन्नग्निः, प्रकाशनात्मप्रवृत्त्यभावात्, वन्ध्यापुत्रवदितिवत् सत्त्वमपि प्रकाशनात्मप्रवृत्त्यभावेऽसदेव स्यादिति भावः । भवतां सत्कार्यवादः सम्मतः, तत्र सत्त्वं यदि प्रकाशात्म न भवेत्तर्हि कदापि ततः प्रकाशो न भवेदिति तस्य प्रकाशकत्वहानिः स्यात्, अपूर्वोत्पत्त्यनभ्युपगमात्तस्मात् स्तोकमपि सत्त्वं प्रकाशात्म भवेदेवेत्याह—**कारणे कार्यस्येति** । तदानीं सत्त्वस्य प्रकाशात्मतानभ्युपगमेऽसत्कार्यवादः प्रसजतीत्याह—**इतरथेति** । तत्र वैशेषिकसम्मतिं प्रकटयति **यथाहुरिति । क्रियागुणेति**, क्रियागुणव्यपदेशाभावात् प्रागसदिति सूत्रमिदानीमुपलभ्यते, कारणव्यापारानन्तरं कारणे कार्यस्य सत्त्वाङ्गीकारात्तद्व्यावर्त्तनाय प्रागिति पदम्, कार्योत्पत्तेः प्राक् कार्यमसत् क्रियागुणव्यपदेशाभावात्, यदि तदानीमपि कार्यं सदेव तर्हि घटादावुत्पन्ने घटस्तिष्ठति घटश्चलति रूपादिमानयं दृश्यते च घट इत्यादिव्यपदेशवत्तदानीमपि स तथा व्यपदिश्येत, न च व्यपदिश्यते तेनानुमीयते तदानीं सोऽसन्निति सूत्रार्थः । **द्रव्याणीति**, अन्त्यावयविद्रव्याणि विभूनि च विहाय स्वेतरनिखिलकारणसमवधाने द्रव्याणि स्वसजातीयद्रव्यान्तराण्यारभन्ते—अपूर्वतया निष्पादयन्तीत्यर्थः । अन्त्यावयविनां विभूनाञ्चारम्भसामर्थ्यं नास्तीत्याशयेनाह—**येषाञ्चेति** । अन्त्यावयविगुणान् द्वित्वद्विपृथक्त्वपरत्वापरत्वादिगुणांश्च विहाय गुणाः सजातीयगुणारम्भका इति गुणाश्च गुणान्तरमारभन्त इत्यस्यार्थः । एतादृशा-

म्भवादः प्रसज्यते, स चानिष्टस्तस्मादनारम्भाद्वर्त्तते सत्त्वं प्रकाशनात्मना। यस्मादेवं हि कार्यं कारणे सद्यदि सत्त्वं वर्त्तते प्रवर्त्तते, किं कारणं? अनारम्भात्—आरम्भवादपरित्यागात्। कुतो वर्त्तते प्रवर्त्तेत इति पर्यायकथनम्? उच्यते वर्त्तेतेरस्त्यर्थत्वाद्वर्त्ततेऽस्ति भवति प्रवर्त्तेत इति पर्यायाः।

इतर आह—

**न, प्रकर्षेणाप्रवृत्तत्वात् प्रकृष्टवृत्तेर्विवक्षितत्वात्, सा च रजोऽनुग्रहात्तद्रूपव्यक्तिः** 5 **बीजस्येवाबाद्यनुग्रहीतस्योच्छूनाङ्कुरत्वादिवृत्तिरिति न, रजसोऽपि सत्त्ववदपरिसमाप्तरूपत्वात्, रजःप्रवृत्तिलभ्यप्रकाशात्मरूपव्यक्तिसत्त्ववत्, रजसोऽपि स्वरूपव्यक्तिरसमाप्तरूपैव सत्त्वात् प्रतिलभ्यत्वात्, तथाकाशनं हि प्रवर्त्तकत्वेनाभिव्यक्तिरिति प्रकाशात्मकसत्त्वानुग्रहाद्भवति, अप्रकाशात्मकञ्च कथमन्यप्रकाशने प्रवर्त्तेत?।**

**(नेति)** न प्रकर्षेणाप्रवृत्तत्वात्, नहि वर्त्ततेः प्रवर्ततिः पर्यायः, प्रकर्षार्थेन प्रशब्देन विशि- 10 ष्टाया वृत्तेरन्यार्थत्वात्, वर्त्तमानमात्रस्याविवक्षितत्वात्, प्रकृष्टवृत्तेर्विवक्षितत्वात्, सा च रजोऽनुग्रहात् तद्रूपव्यक्तिः, प्रकर्षेण वृत्तिः रजसाऽनुगृहीतस्य सत्त्वस्य, बीजस्येवा[बा]द्यनुगृहीतस्योच्छूनाङ्कुरत्वादि- वृत्तिः सृष्ट्यभिमुखी सृष्टिरेव वा साऽत्र विवक्षितेति, अत्रोच्यते, न, रजसोऽपि सत्त्ववदपरिसमाप्त- रूपत्वात्, तस्यां ह्यवस्थायां रजःप्रवृत्तिलभ्यप्रकाशात्मरूपव्यक्तिसत्त्ववत्, रजसोऽपि हि स्वरूपव्यक्ति- रसमाप्तरूपैव, सत्त्वात् प्रतिलभ्यत्वात्, लब्धात्मवृत्ति हि स्वयं सद्रजः सत्त्वे प्रकाशनप्रवर्त्तनाय 15 समर्थं स्यात्, अप्रकाशितस्य सत्त्वेन तस्य स्वरूपव्यक्तिरेव नास्ति कुतः सत्त्वप्रकाशात्मप्रवर्त्तना रजसः? तथाकाशनं प्रवर्त्तकत्वेनाभिव्यक्तिः, काशनमेव हि स्वरूपव्यक्तिरिति प्रकाशात्मकेत्यादि यावत् प्रवर्त्तेतेति गतार्थम्, अप्रतिलब्धात्मनाऽननुग्रहात्।

**एवन्तु नानयोरितरेतरानुग्राहिता, उत्थाप्यसाहायकशक्तित्वात्, वाताहतनाद्यवत्,**

रम्भवादस्यानिष्टत्वात् सत्त्वं प्रकाशात्मनैव वर्तत इत्यभ्युपेयमित्याह—**तस्मादिति**। वृत्तिप्रवृत्त्योस्समानार्थकतामादर्शयति— 20 **वर्त्ततेरिति**, ननु सत्त्वरजस्तमसां प्रकाशप्रवृत्तिनियमा वृत्त्यविशिष्टा एव तथापि उत्तेजनरूपप्रकर्षार्थसहिता वृत्तिः प्रवर्तति- शब्देन विवक्षितः, स च प्रकर्षो रजोऽनुग्रहाद्भवति, रजो हि उपष्टम्भकम्, तद्धि स्वरूपेणाप्रवृत्तिशीलतया प्रकाशादिरूपस्वस्व- कार्ये प्रवर्त्तनाय शिथिलीभूते सत्त्वतमसी वृद्धं यष्टिरिव प्रोत्साहयतीति विशिष्टवृत्तेरेव प्रवर्त्ततिना विवक्षितत्वान्न पर्यायतेत्याशङ्कते— **प्रकर्षेणेति**। **वर्त्तमानेति**, 'वृत्तिर्वर्त्तनजीवन' इत्यनुशासनादवस्थानहेतुर्व्यापारविशेषो वृत्तिः, जीव बलप्राणधारणयोरित्य- नुशासनात् स्वस्थितिहेतुर्व्यापारो हि जीवनम्, यथा वैश्यवृत्तिः शूद्रवृत्तिरित्यादिव्यवहारः। **प्रकर्षेण वृत्तिरिति**, स्वस्वकार्यो- 25 न्मुखपरिणामविशेष इत्यर्थः। यथा हि सत्त्वं स्वकार्यप्रकाशनाय स्वयमसमर्थं सत् रजस्तमःकार्ये प्रवृत्तिनियमावपेक्षते तथैव रजोऽपि सत्त्वतमःकार्यप्रकाशनियमाभ्यामन्तरेण स्वकार्यप्रवृत्तयेऽसमर्थमेवेति प्रकाशव्यतिरेकेणानुद्भूतं रजः कथं सत्त्वं प्रकाश- नाय प्रवर्त्तयेदिति समाधत्ते—**रजसोऽपीति**। **तस्यां ह्यवस्थायामिति** प्रधानावस्थायामित्यर्थः, तदानीं हि पुरुषार्थक्रिया- ऽक्षमः परस्पराङ्गाङ्गिभावानपेक्षो गुणानां साम्यनालक्षणसदृशपरिणाम एव विद्यते तत एव सत्त्वादिप्रकाशादिविधानेऽपरिसमाप्त- रूपम्, तस्मान्न सत्त्वं वा रजो वा तमो वा साम्यावस्थानात् प्रच्युतिरूपं गुणानां गुणप्रधानभावापेक्षं प्रकाशप्रवृत्त्यादिरूपं विस- 30 दृशपरिणामं जनयितुं क्षममित्यभिप्रायः। **लब्धात्मवृत्तीति**, रजो हि सत्त्वेन प्रतिलब्धप्रकाशं यदा भवेत् तदैव रजःप्रका- शनाय सत्त्वं प्रवर्त्तयेत्, नान्यथेति भावः। **अप्रतिलब्धेति**, नहि स्वयमलब्धसामर्थ्योऽन्यानुग्रहसमर्थो भवतीति भावः। ५९९५ [illegible] सत्त्वादीनां स्वतोऽसमर्थानां न सम्भवतीत्याह—**एवन्त्विति** रजसोऽनुग्राहकत्वशक्तिः सत्त्वेनोत्थाप्या

**ग्लानशिबिकावाहकवत्, असम्पूर्णशक्तिता वाऽप्रकर्ष इति कारणतैव न स्यात्तस्य, उपहतबीजवत् ।**

(एवान्त्वित्यादि) नानयोः सत्त्वरजसोरितरेतरानुग्राहिता, उत्थाप्यसाहायकशक्तित्वात्, सहायभावः साहायकं तस्मिंस्तेन तदेव वा शक्तिः सा उत्थाप्या ययोस्तदानीमेव, ते वस्तुनी उत्थाप्य
5 साहायकशक्तिनी तद्भावादुत्थाप्यसाहायकशक्तित्वात्, वाताहतनौद्वयवत्, यथा जलेऽन्योन्यबद्धे नावौ नेतरेतरत्राणाय तथा सत्त्वरजसी, शिबिकावाहकवदितरेतरानुग्राहिता किं न भवेदिति चेन्न, उत्थाप्यविशेषणात् अयमेव हि दृष्टान्तो ग्लानशिबिकावाहकवत्, यथा ग्लानोऽनुत्थापितो न शक्नोति वोढुमुत्थाप्यसाहायकशक्तित्वात् तथाऽनुत्थापिते सत्त्वरजसी न शक्नुतः परस्परं प्रवर्त्तयितुं स्वयमलब्धात्मके इति प्रकर्षवृत्तेरभावः प्रकर्षवृत्त्यभावादसम्पूर्णशक्तितेत्यत आह असम्पूर्णशक्तिता वाऽप्रकर्ष
10 इति—इत्थं कारणतैव न स्यात् तस्य सत्त्वस्यासम्पूर्णशक्तित्वात्, उपहतबीजवत्, यथोपहतं बीजमसम्पूर्णाङ्कुरोत्पादनशक्तित्वान्न कारणमेवं सत्त्वमपि स्यात् ।

अभ्युपेत्यापि कारणत्वं साम्यावस्थायां सत्त्वस्य—

**असदकरणादितश्चान्यतो न तत्स्वरूपव्यक्तिः, किन्तु स्वत एव, यदा च सुदूरमपि गत्वा प्रागसतेरसत्कार्यवादपरिहारेण प्रकर्षो न परिणामवादादृते तदा परिणामादात्मन्येव**
15 **वर्त्तते सत्त्ववत्, अन्यत्र वृत्तस्य परिणामकत्वादन्यत्रापरिणामकत्वात् ।**

(असदिति) असदकरणादितश्चान्यतो न तत्स्वरूपव्यक्तिः—तस्य सत्त्वस्य प्रकाशनस्वरूपप्रकर्षोऽन्यतो—रजस्तमसोः पुरुषतोऽन्यतोऽन्यतो वा कुतश्चिन्न भवति, असदकरणादिभ्यो हेतुभ्यः, तद्यथा असदकरणाद्यथा मृदि सदेव कार्यं घटादि क्रियते न खपुष्पादि, स च मृदः स्वात्मनियतो घटात्मस्वरूपव्यक्तिप्रकर्षो नान्यतः पुरुषादेस्तन्त्वादेर्वाऽऽपत्तिकारणाद्भवति, किं तर्हि ? स्वत एव भवति

20 न तूत्थिता, ततस्तस्या अनुग्राहकं सत्त्वम्, तथा सत्त्वस्याप्यनुग्राहकत्वशक्तिः रजसोत्थाप्या, न तूत्थिता, ततश्च सत्त्वशक्तौ उत्थितायां तदनुग्रहेण रजः समर्थं स्यात्, रजःशक्तावुत्थितायाञ्च सत्त्वं तदनुग्रहेण समर्थं स्यादिति स्वस्वसामर्थ्यप्राप्तौ परस्परमुखप्रेक्षित्वेनेदम्प्रथमतया न कस्यापि प्रवृत्तिरिति कथं तयोः परस्परानुग्राहकत्वमिति भावः । परस्परानुग्राहित्वाभावे दृष्टान्तमाह—**वाताहतेति** एकस्यां नावि परस्या नावो बन्धः प्रतिरोधार्थं क्रियते, तत्रैकस्याः प्रतिरुद्धत्वं हि इतरस्याः प्रतिरोधः सम्भवति, एकस्याः प्रतिरोधकत्वशक्तिरपरया प्रतिरुद्धया प्रतिरोधे सति भवति, अपरस्याः प्रतिरोधकत्वशक्तिश्चैकया प्रतिरुद्धया
25 प्रतिरोधे सतीति परस्परमुखप्रेक्षित्वादिदम्प्रथमतया कापि प्रतिरोधिकेति नेतरेतरानुग्राहित्वं यथा तद्वदिति भावः । उत्थाप्येति विशेषणस्य सार्थकतामादर्शयितुमाह—**शिबिकेति**, तेषां परस्परानुग्राहकत्वशक्तिः नान्योऽन्यापेक्षयोत्थाप्या, किन्तूत्थितैवेति प्राह—**उत्थाप्येति** । दृष्टान्तान्तरमुपदर्शयति—**अयमेवेति** । शिबिकावाहकदृष्टान्त एव ग्लानेति विशेषितः प्रकृतार्थे योग्यो दृष्टान्तो भवितुमर्हतीति तत्र साध्यहेतूपदर्शनं करोति—**यथेति** । प्रत्येकं शिबिकावाहकानामिव सत्त्वादेरपि कारणत्वे न काचित् क्षतिरित्यत्राह—**अभ्युपेत्यापीति** । अन्यस्मात् सत्त्वस्वरूपव्यक्त्यभावः साध्योऽसदकरणादित इति हेतुरिति व्याक-
30 रोति—**असदिति**, सत्त्वस्य स्वरूपभूतः प्रकाशः प्रागसत्त्वे नान्यतो भवितुमर्हति, असदकरणादिहेतुभ्यः, नहि सिकताभ्यस्तैलं केनचिदपि कर्तुं शक्यम्, तस्मात्तत्र विद्यमानः स्वत एव भवतीति भावः । **स चेति**, स च घटादिः स्वात्मनियतः—मृद आत्मभूतः सन् सदैवानुगतः घटात्मस्वरूपव्यक्तिप्रकर्षः—घटादिस्वरूपोऽभिव्यक्तिविशेषः, व्यक्तिप्रकर्ष[illegible] पदं विशेषणं

तथा सत्त्वस्वरूपव्यक्तिप्रकर्षो नान्यतो भवति, किं तर्हि ? स्वत एव, एव'मुपादानग्रहणात् सर्वसम्भवाभावात् । शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यमि'( सां० का० ९ )त्येतेभ्यो हेतुभ्यः सत्त्वगुणोऽन्यनिरपेक्षस्वरूपव्यक्तिप्रकर्ष इति ग्राह्यम्, एवं सत्त्वस्य प्रकाशनं तमसा सह योज्यं रजसश्च प्रवर्त्तनमिति, किञ्चान्यत्—यदा च सुदूरमपीति यावदपरिणामकत्वात् सुदूरमपि विचारात्मना गत्वा न प्रागवृत्तेरसत्कार्यपरिहारेण प्रकर्षः परिणामवादादृते, [ते]न परिणामः प्रकर्षेण वृत्तेः कारणमेषितव्यम्, 5 यदा चैवं तदा परिणामाभ्युपगमेन पुनरप्येतदेवापन्नं परिणामादात्मन्येव वर्त्तते युवत्ववत्, अन्यत्र वृत्तस्य परिणामस्यान्यत्रापरिणामकत्वात्, जिनदत्ते वृत्तः परिणामो न साधुदत्ते कौमारयौवनादि प्रवर्त्तयति कौमारं यौवनं वा, किं तर्हि ? जिनदत्त एव करोति नान्यदन्यथा करोति यथा तथा [न] सत्त्वे प्रवृत्तिं कश्चिदन्यः कुर्यात् स्वत एव प्रवर्त्तेतेति ।

एवं तावदप्रवृत्तप्रवृत्तिप्रतिषेधादनग्निप्रकाशदृष्टान्तप्रसङ्गागतवादमवतार्य पूर्ववदुदाहरणेन प्रस- 10 ङ्गमुत्थापयिष्यन्नाह—

**एवं तर्हि पूर्ववदुदाहरणादेव पाश्चात्यावस्था विशिष्टा, स विशेषो रजःप्रवर्त्तना व क्षीरदधिपरिणामकालत्ववत् पूर्वं न प्रवृत्तं पश्चाच्च प्रवृत्तमिति, एतच्च, परिणामस्य तत्रैवोक्तत्वात्, प्रकाशात्मैव हि प्रवृत्तिः कालः, इतरथा स प्रकाशो न स एव, तथाऽप्र[वृत्त]त्वात्, तथाऽभूतत्वादित्यर्थः, घटपटवत् । यत्र च प्रवृत्तिः स एव प्रकाशः, तथावृत्तत्वात्, घटघट- 15 स्वात्मवत् ।**

[ एवं तर्हि ]**पूर्ववदुदाहरणादे**वेत्यादि, यावन्न प्रवृत्तमिति, नन्वेतत्त्वयाऽभ्युपगतं पूर्वावस्थोदाहरणादेव पाश्चात्यावस्था विशिष्टेति, अन्यथा हि को विशेषः पूर्वापरावस्थयोः रजःप्रवर्त्तना-

घटादितस्तस्याभेदप्रतिपादनार्थम्, तेनासतोऽभिव्यक्तेर्नाभिव्यक्तिः, किन्तु घटात्मत्वात् सत्येवाविर्भवतीति **उपादानेति** । 20 दध्यर्थी नोदकमुपादत्ते किन्तु क्षीरमेव, क्षीरादित एव दध्यादिरेव भवति, न तु सर्वस्मात् तृणपांसुवालुकादेः सर्वं रजतसुवर्णमणिमुक्ताप्रवालादिः, शक्तः कुलालादिः शक्यादेव मृत्पिण्डात् घटशरावादीनारभते न तु तृणवृक्षादिभ्यः, कोद्रवेभ्यः सजातीयाः कोद्रवा एव भवन्ति, न तु शाल्यादय इति हेतुभ्यः कारणे कार्यस्य नियतत्वादापत्तिकारणनिरपेक्षः स्वत एव सत्त्वस्वरूपव्यक्तिप्रकर्षो भवतीति भावः । उक्तार्थमन्यत्राप्यतिदिशति-**एवमिति** । अनेकधा विचार्यमाणे प्रागवृत्तेः प्रकर्षो नासत्कार्यवादे सम्भवति, किन्तु परिणामवाद एव, अवस्थितस्य द्रव्यस्य हि पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणामः, मृद्धर्मी च पिण्डाकाराद्धर्माद्धर्मान्तरमुपसम्पद्यमानो धर्मतः परिणमते घटाकार इति, तथा च सत्त्वस्य प्रकर्षेण वृत्तेः कारणं परिणाम एव, 25 स च परिणामभूतः प्रकर्षः सत्त्वस्यात्मभूत एव न धर्मिस्वरूपमतिक्रामति, तत्स्वरूपातिक्रमे चान्यन्वादविशेषतोऽन्यत्र वृत्तिप्रसङ्गतोऽन्यत्र वृत्तस्यान्यत्र परिणामकत्वप्रसङ्ग इत्याशयेनाह-**सुदू[रमपी]ति** । गमनं न्यायाध्वना, न तु देशत इत्याह-**विचारात्मनेति** । एवञ्च यथा प्रकाशनेऽप्रवृत्तोऽग्निरनग्निर्वा[न] प्रकाशते तथा यदि सत्त्वमल[ब्ध]प्रवृत्ति स्यान्न प्रकाशेतेति पूर्वोक्तं स्मारयति-**एवमिति** । ननु सत्त्वं पूर्ववद्योत्तरकालमपि न प्रकाशेतेति पूर्वावस्थाया दृष्टान्तीकरणेनोत्तरावस्थावत्त्वनुपपत्तिप्रदर्शनेन च तवापि पूर्वावस्थातोऽपरावस्था विशिष्टेति सम्मतमेव, अन्यथाऽनुपपत्त्युद्भावनासम्भवात्, सा चोत्तरावस्था सत्त्वस्य 30 रजःप्रवर्तनादेव स्यात्, न स्वतः, सदा प्रवृत्तिप्रसङ्गेन पूर्वोत्तरावस्थयोर्विशिष्टत्वासम्भवात्, तस्मादसदकरणादितो नान्यतः

---

१ सि. क. यावन्न ।

ऋते ? तस्मात् स विशेषो रजःप्रवर्त्तनादेव, को दृष्टान्तः ? क्षीरदधिपरिणामकालवत्, यथा क्षीराव-
स्थातो दधित्वपरिणामावस्था विशिष्टा पूर्वं क्षीरकाले न दध्यासीत् पश्चाद्भूतमिति दृष्टं प्रकर्षवृत्त्या च
विना न भवत्ययं विशेषः, तथा सोऽपीत्येतन्न, परिणामस्य तत्रैवोक्तत्वात् नायं विशेषः परतः सिद्ध्यति,
कुतः ? परिणामस्य तत्रैव सुखेऽभ्युपगम्यास्माभिरुक्तत्वात्, यस्मात् प्रकाशात्मैव [प्र]वृत्तिः, प्रकाशस्य
5 यः स्वात्मा स एव [प्र]वृत्तिः प्रकाशस्यैव च [प्र]वृत्तिः कालः स च ततोऽनन्यः, क्षीरदधिपरिणा-
मावस्थयोः कालाख्यत्वात् क्षीरदधित्वापत्तिः कालभेदात् स च परिणामः सुखस्वात्मेति नान्यत् कारणं
मृग्यम्, स्वात्मन एव परिणामात्, इतरथा स प्रकाशो न स प्रकाश एव यदि प्रवृत्तिविशेषो न
स्यात्, अन्यात्मा स्यात् स एव प्रकाशात्मा न स्यात् तथाऽप्रवृत्तत्वात् – तेन प्रकाशात्मप्रकारेणाप्रवृत्तत्वात्,
पर्यायेण तमर्थं स्फुटीकुर्वन्नाह–तथाऽभूतत्वादित्यर्थः, दृष्टान्तो घटपटवत्, यथा घटः पटो न भवति
10 तेन प्रकारेणाभूतत्वात्, पटोऽपि घटो न भवति तथा स प्रकाशोऽप्रकाश एव स्यादिति
विपर्ययेण तत्स्वरूपसाधनमुच्यते यैव च प्रवृत्तिः स एव प्रकाशो नान्यः कश्चिदर्थः, इति प्रतिज्ञा,
तथा वृत्तत्वात् तथा प्रवृत्तत्वादित्यर्थः, यथा घटघटस्वात्मवत्[1], यथा घटप्रकारेण घटात्मनैव वृत्तत्वाद्घट
एव घटस्वात्मा नान्यः कश्चित्तथा प्रवृत्तिरेव प्रकाश इति ।

**प्रवर्त्यप्रवर्त्तकत्वात् पल्लवपवनवदिति चेन्न, तदात्मन एव प्रवृत्तत्वात्, रजसा सन्निधि-**
**15 मात्रात् पूर्ववदप्रवर्त्तनात्, य एवासौ सत्त्वस्यात्मा प्रकाशः तथा प्रवर्त्यव्यक्तिस्वरूपः नर्त्तकाचार्य**
**इव नर्त्तक्याः प्रवर्त्तकः, तथा व्यापारणादिति त्वदभिमतप्रवर्त्तकत्वविपर्ययापत्तिरेव । रजः-**
**प्रवृत्त्यात्मरूपापादनात् सत्त्वं प्रवर्त्तकमितरथास्वरूपापादनाद्रजोवत् । रजोऽपि हि त्वन्मतेन**
**प्रवर्त्तमानमितरयोस्तथास्वरूपापादनादृते किमन्यत् करोति ? एवञ्च पल्लववद्रज एवापद्यते**
**सत्त्वमेव च प्रवर्त्तकम् तथाप्रकाशेन प्रवर्त्यत्वात् ।**

20 तत्स्वरूपव्यक्तिरित्युक्तिरयुक्तेत्याशङ्कते–**एवं तर्हीति** । पूर्वमविद्यमानस्यैव क्रियया निष्पत्तिरित्यत्रानुकूलं निदर्शनमाह–**क्षीरेति** ।
प्रकाशप्रवृत्तिनियमानान्तु भिन्नात्मकतायां सत्त्वं न प्रकाशेत, अप्रवृत्तत्वादिति पूर्वमेव शङ्केयं समाहितेति स्मारयति–**परिणाम-**
**स्येति** । प्रकाशप्रवृत्तिनियमाः सत्त्वस्यैव परिणामविशेषाः, न तु सत्त्वस्य प्रकाशो रजसः प्रवृत्तिस्तमसो नियम इति भिन्नात्मता तथात्वे
सत्त्वस्य प्रकाशात्मना प्रवृत्तिः कदापि न स्यात्, सदैव वा प्रकाशात्मैव स्यात् तथा च साम्यावस्था न स्यात्, एवञ्च सत्त्वस्यैव
तेऽतीतानागतवर्त्तमानरूपा अवस्थाविशेषाः, यथा मृदश्चूर्णपिण्डघटकपालकणाकारपरिणतिपरम्परा, सोऽयं क्रमभेदः परिणाम
25 एकदैकस्मिन्ननवकल्पमानः परिणामभेदमापादयति, एकमेव सत्त्वं क्रमवर्ती परिणामपरम्परामुद्वहति, यस्य धर्मिणः स्वात्मभू-
तस्य समनन्तरो धर्मः स एव तस्य धर्मिणः कालाख्यः क्रमः, यथा गोभुक्ततृणपरमाणवः तृणावस्थायाः प्रच्यवन्ते
क्षीरावस्थयोपजायन्ते ततः क्षीरावस्थायाः प्रच्यवन्ते दध्यवस्थया चोपजायन्त इति क्षीरदध्यादयः क्रमरूपत्वात् कालाख्याः,
एवं प्रकाशात्मैव सत्त्वं प्रवृत्त्यात्म भवति, प्रकाशप्रवृत्त्यादीनामित्थं सत्त्वात्मतया स्वत एव ते भवन्ति, न त्वन्यत इत्याशयेनाह–
**यस्मादिति** । प्रवृत्त्यादेः रजआद्यात्मत्वे सत्त्वं प्रकाशात्मैव न स्यात् साम्यावस्थायामिवेत्याह–**इतरथेति** । प्रकाशात्म
30 सत्त्वमेव प्रवृत्त्यात्मेति साधयति–**यैवेति** । प्रवर्त्यप्रवर्त्तकयोर्भेदव्याप्यत्वमित्यभिमन्यमानः परः शङ्कते–**प्रवर्त्येति**, प्रवर्त्यं
सत्त्वं प्रवर्त्तकं रजः न तु स्वयमेव प्रवर्त्यं प्रवर्त्तकञ्च, यथा प्रवर्त्यः पल्लवः, प्रवर्त्तकः पवन इति तयोर्भेदो दृश्यते तथा
प्रकृतेऽपीति न प्रकाशप्रवृत्त्योरेकात्मतेति भावः । दृष्टान्तदार्ष्टान्तिकयोरसमानतामभिमत्योत्तरयति–**तदात्मन इति**

[1] सि. क. घटपट० ।

(प्रवर्त्येति) प्रवर्त्त्यप्रवर्त्तकत्वात् पल्लवपवनवदेति चेत्—स्यान्मतं यैव प्रवृत्तिः स एव प्रकाश इत्ययुक्तं प्रवर्त्त्यप्रवर्त्तकयोर्भेदात्, प्रवर्त्त्यं हि सत्त्वं प्रवर्त्तकं रजस्तस्मात् प्रवर्त्त्यप्रवर्त्तकत्वात्तयोर्भेदः पल्लवपवनवत्, यथा पल्लवपवनौ प्रवर्त्त्यप्रवर्त्तकौ परस्परतो भिन्नौ तथा सत्त्वरजसी इत्येतच्च न तदात्मन एव प्रवृत्तत्वात् तस्यात्मा तदात्मा तदात्मन एव प्रकाशात्मन प्रवृत्तत्वात् सत्त्वरजसोर्भेदासिद्धेः पल्लवपवनवद्भेदसाधर्म्याभावादयुक्तोऽयं दृष्टान्त इति वक्ष्यते, तद्व्याख्यानार्थमाह. सन्निधिमात्रात् 5 पूर्ववदप्रवर्त्तनात्—इह रजः सन्निहितमपि प्राक् सन्निधिमात्रादेवाप्रवर्त्तकं [ यतः ] स्वयमप्रवृत्तं सत्त्वाधीनप्रवृत्तित्वात्, किन्तु प्रवर्त्त्यमप्रवर्त्तनात्, कस्तर्हि प्रवर्त्तकः ? उच्यते य एवासौ सत्त्वस्यात्मा प्रकाशः, कथमिति चेदुच्यते— तथा प्रवर्त्त्यव्यक्तिस्वरूपः—तेन तेन प्रकारेण शब्दादिनिर्वर्त्त्यप्रकारेण प्रवर्त्त्यव्यक्तिस्वरूपः प्रकाशः नर्त्तकाचार्य इव भ्रूक्षेपणादिप्रवर्त्तनाभिव्यञ्जनात्मना नर्त्तक्याः प्रवर्त्तमानः प्रवर्तकः, किं कारणं ? तथा व्यापारणात्—तेन [illegible] प्रवर्त्तमानस्य रजसो व्यापारणात्, सत्त्वेनैव हि 10 प्रकाशनरूपेण प्रवर्त्तमानेन रजः प्रवर्त्त्यते, तस्मात् स तस्यात्मा प्रकाशः, तथा व्यापारणाद्रजसः प्रवर्त्तक इति त्वदभिमतप्रवर्त्तकत्वविपर्ययापत्तिरेव,—रजसः प्रवर्त्त्यत्वात्सत्त्वेन, सत्त्वाधीनप्रवृत्तित्वात् सत्त्वस्यैव प्रवर्त्तकत्वात् पक्षधर्मविपरीतता चेति, तच्च सत्त्वस्य प्रवर्त्तकत्वं रजःप्रवृत्त्यात्मरूपापादनात्, रजसो हि प्रवृत्तिरात्मा तदेव रूपं—रजःप्रवृत्त्यात्मरूपं तदेवापाद्यते सत्त्वेन, सत्त्वाप्रकाशिते प्रवृत्त्यभावात्, सत्त्वापादितप्रवृत्त्यात्मरूपं रजः, तस्माद्रजःप्रवृत्त्यात्मरूपापादनात् सत्त्वं प्रवर्त्तकमि- 15 तरतेथास्वरूपापादनाद्रजोवत्, रजोऽपि हीत्यादि, रजसोऽपि हि प्रवर्त्तक[ त्व ]मित्थमेव युज्यते, रजोऽपि हि यस्मात्त्वन्मतेन प्रवर्त्तमानमितरयोः—सत्त्वतमसोस्तथास्वरूपापादनादृते किमन्यत् करोति ?

---

तस्य प्रकाशस्यात्मा स्वरूपं सत्त्वम्, तथा च प्रकाशात्मन एव प्रवृत्तेर्न प्रकाशात्मप्रवृत्त्यात्मनोर्भेदोऽस्ति येन सत्त्वरजसोर्भेदः स्यात्, यदि तु प्रकाशात्मसत्त्वं प्रवृत्त्यात्म न भवेत्, प्रकाशस्वरूपत्वमेव सत्त्वं न भवेत्, प्रकाशात्मनाऽप्रवर्त्तनात्, पल्लवपवनयोर्भेदस्त्वन्यथा सिद्धः, तस्मात्तदृष्टान्तोऽनुपपन्न इत्याह—सत्त्वरजसोरिति, तयोः प्रकाशप्रवृत्त्यनुमेयत्वादेकस्यैव तदुभया- 20 त्मतायां सत्यां सत्त्वरजसोर्भेदोऽसिद्ध एवेति भावः। सत्त्वरजसोर्भेदे प्रवृत्त्यात्मनो रजसः सन्निधानेऽपि सत्त्वस्य किमायातं येनेदानीं प्रकृत्यवस्थातः सत्त्वस्य विशेषः स्यात्, पूर्ववदिदानीमप्यप्रवृत्तेरित्याह—सन्निधिमात्रादिति, रजसोऽकिञ्चित्करत्वं कथमित्यत्राह—यतः स्वयमिति, एवञ्च रजो न प्रवर्त्तकं किन्तु प्रवर्त्त्यमेवेत्याह—किन्त्विति। सत्त्वमेव रजसः प्रवृत्त्युद्बोधकमित्याह—य एवेति। यथा नर्त्तकाचार्यः भ्रूक्षेपणादिव्यापारेण नर्त्तकीं नृत्ये प्रवर्त्तयति, नर्त्तकी प्रवर्त्त्या प्रवर्त्तकश्च नर्त्तकाचार्यः एवं सत्त्वं स्वव्यापारे रजः प्रवर्त्तयतीति रजः प्रवर्त्त्यं सत्त्वञ्च प्रवर्त्तकमित्याह—नर्त्तकाचार्य इवेति। सत्त्वभिन्नं रजः, 25 प्रवर्त्त्यप्रवर्त्तकत्वात्, पल्लवपवनवदिति मानेन यः सिषाधयिषितो रजसः सत्त्वभेदः स तु रजसः प्रवर्त्तकत्वासिद्ध्याऽसिद्धः, सत्त्वस्यैव प्रवर्त्तकत्वादित्याह—सत्त्वेनैव हीति। सत्त्वस्य रजस्तमसोः प्रवृत्तिरूपापादनादेव प्रवर्त्तकत्वमित्याह—तच्चेति इतरयोः प्र[illegible]दयदेव हि रजोऽपि प्रवर्त्तकं भवति, नान्यथा, तथा सत्त्वमपि रजःप्रवृत्तिस्वरूपमापादयति, न च तत् सदा प्रवृत्तिस्वरूपमेव, साम्यावस्थायामपि सत्त्वतमसोः प्रवर्त्तकत्वापत्तेरित्याह—इतरेति। पूर्वं सत्त्वतमसोः साम्या- [illegible] प्रकाशनियमात्मता वर्तत एव, रजस्तु तयोः प्रकाशनाय नियमनाय च प्रवृत्त्यात्मकत्वमापादयतीति वर्णितम्, 30 सम्प्रति तयोः प्रवृत्त्यात्मकत्वं रजो नापादयति प्रवृत्तेः रजस एव स्वरूपत्वात्, किन्तु प्रकाशनियमात्मभ्यामनभिव्यक्तयोः

---

१ सि. क. सर्वं। २ सि. क. तरथात्मरूपा०।

प्र[illegible]त्तिरूपमवापादयत् प्र[illegible]र्त्तकमितीष्यते नान्यथा । यद्वा यथा रजः पूर्वं प्रका[illegible]नियमात्मन्याम-
प्र[illegible]र्त्तयोस्तयोः प्रवर्त्तनादेव प्रवर्त्तकमेवं सत्त्वम्, इतर[त]था स्वरूपापादनात् प्रवर्त्तकमस्तु को दोषः ?
एवञ्च पल्लववद्रज एवापद्यते—एवञ्च कृत्वोक्तविधिना पल्लवस्थानीयं प्रवर्त्त्यं रज एव न प्रवर्त्तकम्,
सत्त्वमेव च प्रवर्त्तकम्—पवनस्थानीयं न प्रवर्त्त्यमित्यापन्नम्, किं कारणं ? तथा प्रकाशेन प्रवर्त्त्यत्वात्
5 यस्मात्तेन प्रकारेण प्रवर्त्त्यत्वं रजसः प्रकाशेन, तस्माद्रजसः प्रकाशेन प्रवर्त्त्यत्वादित्यर्थः । उक्तं हि
'रजसः प्रवृत्तिरात्मरूपं तदापादयति प्रकाशः प्रकाशाप्रकाशिते रजसोऽप्रवृत्तेरि'ति । तस्मात् प्रकाशेन
तथाप्रवर्त्त्यत्वाद्रजसः साधूक्तं तदात्मन एव प्रवृत्तत्वादिति । एवं तावत् सत्त्वरजसोर्भेदमभ्युपगम्य
हेतोरसिद्धिर्विपर्ययत उक्ता ।

नैव वा सत्त्वव्यतिरिक्तं रजोऽभ्युपेम इत्यत आह—

10 **तथाप्रकाशानतिरिक्ततत्त्वरूपत्वा[illegible] । प्रवृत्तेः कुतोऽप[illegible]वपवनभेदसाधर्म्यम् ? यथेहाप-
ल्लवलक्षणः पवनो लोके भिन्न इति दृष्टोऽपवनल[illegible]णश्च पल्लवः । न त[illegible]पत्वम्, अत[illegible]त्त्वा-
दिति चेन्न रजःस्वप्र[illegible]त्तिवत्तदात्मन एव प्रवृत्तत्वात् ।**

**(तथेति)** तथाप्रकाशानतिरिक्ततत्त्वरूपत्वाद्वा प्रवृत्तेः—व्याख्यातप्रकारस्य प्रकाशस्य तत्त्वमति-
रिच्य नास्ति प्रवृत्तेः स्वरूपं तत एव हेतोः कुतोऽपल्लवपवनभेदसाधर्म्यं ? सत्त्वरजसोरभिन्नत्वात् पल्लवपव-
15 नयोर्भिन्नत्वादिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं दर्शयति - यथेहापल्लवलक्षणः पवनो लोके भिन्न इति दृष्टः,
अपवनलक्षणश्च पल्लवः, युज्यते हि पल्लवव्यतिरिक्ततत्त्वरूपः पवनः पल्लवमाघ्नन् प्रवर्त्तयति पल्लवम्,
पल्लवश्च तेनाहतः प्रवर्त्तते तद्व्यतिरिक्तभेदतत्त्व इति, न तु तथा प्रकाशातिरिक्ततत्त्वरूपा प्रवृत्तिरस्ति,
उभयोः शब्दाद्याविर्भावमात्रफलत्वात्, अतो वैषम्यमिति । न तद्रूपत्वं अतद्वृत्तित्वादिति चेत्—स्यान्मतं

---

सत्त्वतमसोस्तथाभिव्यक्तिरूपतामापादयति रज इत्याशयेनाह—यद्वेति । एवं सत्त्वमपि स्वप्रकाशेन रजःप्रवृत्तिस्वरूपत[illegible]ऽभि
20 व्यनक्तीति भावः । तत्रैव पूर्वोदितमर्थं प्रमाणयति—उक्तं हीति । विपर्ययत इति, प्रवर्त्त्यप्रवर्त्तकत्वयोर्वैपरीत्यापादनेनेत्यर्थः ।
ननु भवता सत्त्वं लघु प्रकाशकञ्चेष्टं तत्र प्रकाशप्रवृत्तिनियमलक्षणभे[illegible]तो यदि सत्त्वरजस्तमसां भेदस्तर्हि लघ्वादिलक्षणभेदादपि
सत्त्वस्य नानात्वं प्राप्नोति, यदि तु लघुत्वप्रकाशकत्वयोरभेदे भेदेऽपि वा सत्त्वस्याभेदस्तर्हि प्र[illegible] अपि तस्यैव स्युः
किं रजस्तमोभ्यां तद्भिन्नाभ्यां प्रयोजनमित्याशयेनाह—तथाप्रका[illegible]ति । यतः प्रकाशात्मैव प्रवृत्त्यात्मा तत एव सत्त्वर-
जसोर्भेदाभावान्न भिन्नस्वरूपतया प्रसिद्धपल्लवपवनभेदसाधर्म्यं सत्त्वरजसोः सम्भवतीत्याह—तत एव हेतोरिति । पल्लव-
25 पवनयोर्भिन्नस्वरूपत्व[illegible]पपादयति—यथेहेति । भोगापवर्गल[illegible]नेत्याशयेनाह—उभयोरिति । ननु
सत्त्वं न प्रवृत्तिरूपं प्रवर्त्तने सत्त्वस्याप्रवृत्तेः, सत्त्वं हि प्रकाशन एव वर्त्तते प्रवर्त्तनन्तु रजस एवेति न सत्त्वं प्रवर्त्तकमित्याशङ्कते—
नेति । अथ साम्यावस्थायामविद्यमाना रजसः प्रवृत्तिः रजःस्वात्मन एव भवति, रजोऽभावे प्रवृत्त्यभावाद्रजोविहायान्य-
त्राप्रवृत्तेः रजोऽधीनत्वाद्रजोरूपैव यथा प्रवृत्तिः, रजसः प्रवृत्त्यात्मन एव प्रवृत्तत्वात् तथैव सत्त्वस्य प्रकाशनाय या प्रवृत्तिः सैव
रजसः प्रवृत्तिः, प्रकाशात्मैव हि प्रवृत्तिः अन्यथा स प्रकाश एव न स्यात्, तथाऽभूतत्वात्, तथा च प्रकाशाधीनत्वात्प्रवृत्ते-
30 स्तेन विना तस्या अभावात्, सत्त्वेन प्रकाशिते रजसः प्रवृत्तेः प्रकाशपरित्यागेनावृत्तेः प्रकाशात्मैव प्रवृ[illegible]—

१ सि. क. यथावत् । २ सि. क. प्रकाशस्य

प्रकाशनमात्रं सत्त्वस्य प्रवृत्तिः प्रवर्त्तनम् रजसः, तस्मात् सत्त्वस्याप्रवर्त्तकत्वात्[illegible]त्वात्प्र[illegible]तिरूपत्वमित्येतच्च न, रजःस्वम[illegible] एव प्रवृत्तत्वात्–यथा रजसः स्वा प्रवृत्तिः प्रागवृत्ता पश्चात्स्वत एव–रजःस्वात्मनः प्रवर्तमाना रजसाऽविना[illegible]तत्वात्तदत्यागेन वृत्तेस्तदधीनत्वात्तद्रूपैव, तदात्मन एव प्रवृत्तत्वात्, तथा सत्त्वप्रकाशप्रवृत्त्यनतिरिक्ततत्त्वरूपा रजःप्रवृत्तिः, नान्या, प्रकाशाधीनत्वात्तदविनाभावात्तदपरित्यागेन वृत्तेस्तदात्मन एव प्रवृत्तत्वादिति । 5

किञ्चान्यत् –

**अन्यथा हि न प्रकाशेतेत्युक्तत्वात्, एवं तथैवान्यथा तु प्रवृत्त्यभावात् प्रकाश एव प्रवृत्तिः, एवञ्चैकैकविनि[द्रा]वस्थापुरुषत्ववत् प्रवृत्तिः प्रधानमिति तन्मात्रमेव तत्, प्रवृत्त्यापत्तिरूपनिरूप्यत्वा[त्], प्रवृत्तिस्वात्मवदित्यादि भंगचक्रावर्त्तनम् ।**

**(अन्यथेति)** अन्यथा हि न प्रकाशेतेत्युक्तत्वात्–उक्तं प्राक् सत्त्वं न प्रकाशेत, अप्रवृत्तत्वात्, पूर्ववत्, पुरुषवद्[न]ग्निप्रकाशवदप्रवृत्तस्वात्मत्वाद्वान्ध्येयवत्, तथैवान्यथा तु प्रवृत्त्यभावात्, प्रकाशाप्रकाशिते रजसोऽप्रवृत्तेः, तस्माद्रजसोऽप्यन्यथा प्रवृत्त्यभावात् प्रकाश एव प्रवृत्तिरिति । स्यान्मतं प्रकर्षेण काशनं प्रकाशनमित्यादि तदेव यावत् प्रवृत्तिवदिति प्रासङ्गिकम्, तत्रापि च सत्त्वस्यापि रजोवद[illegible]मात्र[रूप]त्वादित्याद्यक्षरपरिवर्त्तनेन यथायोगं यावदुत्थाप्यसाहायकशक्तित्वाद्वाताहतनौद्वयवत् ग्लानशिबिकावाहकवत्, यावच्चोपहतबीजवदिति वाक्यम्, तस्मादिदं व्याख्यातार्थम्, प्रवर्त्तकाभावस्य च पर्याप्तत्वेनोक्तत्वादिति, एवञ्चैकैकविनिद्रावस्थापुरुषत्ववत् प्रवृत्ति[ः]प्रधानमिति तन्मात्रमेव तत्–एवञ्च कृत्वा विनिद्रावस्थायाः पुरुषत्ववत् प्रवृत्तेरेव प्रधानत्वमिति तन्मात्रमेव तत्–प्रधानं प्र[वृ]त्तिमात्रमेव, किं कारणं ? प्रवृत्त्यापत्तिरूपनिरूप्यत्वात्, प्रवृत्तिस्वात्मवदित्यादि भङ्गचक्रावर्त्तनमिति विनिद्रा[व]स्थापुरुषत्वापादनग्रन्थमर्थसादृश्यादतिदिशति, तद्यथा–यथा विनिद्रावस्थैकलक्षण एव पुरुषः, आत्म[illegible]विगमनरूपनिरूप्यत्वात्, विनिद्रावस्था[illegible]ति तथा प्रवृत्त्येकलक्षणमेव प्रधानं 20

रज इति । प्रकाशप्रवृत्तिनियमानां भिन्नात्मकत्वे पूर्वोदितमेवानुपपत्तिग्रन्थं स्मारयति अन्यथेति, प्रकाशादीनां भिन्नात्मकतायामित्यर्थः, पूर्ववदिति, साम्यावस्थायामिवेत्यर्थः, तदानीं गुणानामप्रवृत्तेः, पुरुषोऽपि न प्रकाशतेऽप्रवृत्तत्वात्, अग्निरप्यप्रवृत्तत्वादेवानग्निः सन् यथा न प्रकाशते तद्वदिति पूर्वोदितं सर्वमत्र भाव्यम् । [illegible]त्वेनाप्रकाशात्मत्वे तेनाप्रकाशितेन रजसाऽपि प्रवृत्त्यात्मा स्वाप्रवृत्तिर्न लब्धेति निष्प्रवृत्तिकं जगद्भवेदिति प्रकाशात्मैव प्रवृत्तिरभ्युपेयेत्याह–तथैवेति ननु प्रागवृत्तं प्रकाशादि पश्चाद्भवतीति न वयमभ्युपेमोऽसत्कार्यवादप्रसङ्गात्, किन्तु प्रकाशाद्यात्मैव सत्त्वादि रज आदिभिरुद्बुद्धं स्वस्वकार्योन्मुखं भवतीत्येवं पूर्वोक्तप्रपञ्चं स्मारयति–स्यान्मतमिति । पर्याप्तत्वेनेति, प्रवर्त्तकत्वं रजसो न सम्भवतीति सुविस्तरं व्यावर्णितत्वादिति भावः । प्रकाशात्मैव प्रवृत्तिः, प्रवृत्त्यात्मैव प्रकाशः प्रवृत्त्यात्मैव च नियम इत्येवं साधितत्वात् प्रवृत्त्यधीनत्वात् सर्वेषां प्रवृत्तिरेव मूलमिति तदेव प्रधानं न तु त्रिगुणात्मकमित्याह–एवञ्चेति, यथा विनिद्रावस्था शुद्धं चैतन्यस्वरूपं नातिवर्तते, पुरुषोऽपि सर्वत्र विनिद्रावस्थास्वात्मानं नातिवर्तते सर्वदेशकालावच्छेदेन नाशरहितेन निद्राविगमेन निरूप्यत्वात् तथैव प्रवृत्तिरपि सत्त्वादावनुवृत्तेः प्रकाशादीनां प्रवृ[illegible]पेणव निरूप्यत्वाद्विनिद्रावस्थायाः पुरुषत्ववत् प्रवृत्तेरेव प्रधानत्वमापन्नमिति भावः । अत्र पुरुषवादनिराकरणग्रन्थमेव सङ्घटयति–तद्यथेति । एवञ्च प्रवृत्तिः स्वात्मस्था सती प्रकाशात्मिकापि नियमात्मिकापि, एवं म[हदा]द्यात्मिकापीति सवर्गतत्वात्[illegible]योऽपि प्रवृत्त्यात्मकत्वात् प्रधानरूपाः, अतो जगत

१ सि. क. निर्वर्त्तनम् । २ सि. क. वृत्तादि । ३ सि. क. तदूभ्यासेन । ४ सि. क. चा० ।

प्रवृत्त्यापत्ति[रविशिष्ट]त्वात्, प्रवृत्तिस्वात्मवत्, ततश्च प्रतिगुणं तस्याः सर्वात्मकत्वा[त्]गु[णा]द्यपि सर्वगतमिति किं प्रधानैकत्वमिति कल्पनया ? अलक्षणत्वात् प्रवृत्ति[लक्षण]गुणाभावस्ततश्च तत्तत्त्वत्रिगुणसर्वात्मकप्रधानाभावः । अथ प्रवृत्तिल[क्ष]णविपरीतमपि प्रधानं प्रधानमेव, अवधारणभेदात्, गुणस्वात्मनि गुण एव लक्षणमित्यवधारणम्, प्रधाने तु प्रवृत्तिर्लक्षणमेव, [इ]तरयोरप्यत्यागात्, तद्यथानेकरूपं
5 मेचकवत्, न, उक्तवदवधारणभेदस्यान्याय्यत्वात् [प्रति]ज्ञाव्याघाता[च्च], घटरूपादित्ववत्, प्रधानत्वं प्रागुक्तं गुणानाम्, अजामेकां लोहितशु[क्लकृष्णा]मित्यादि, इदानीं पृथक् स्वात्मनस्त उच्यन्ते इति तत्त्वं प्रधानस्य न प्रधानत्वं तेषां रूपादिघटत्वपक्षवत्, यदा च तेषामेव तत्त्वं ततस्तेषां तथेतरेतरात्मस्वभावादवधारणभिन्नभिन्नार्थत्वात्तु तदेव सर्वासर्वगतत्वमिति लोकवदेव तत्त्वापत्तिः, अथ सर्वासर्वात्मकत्वाद्विकल्पशब्दार्थत्वादलक्षणमेव कथं तर्हि त्रिगुणवर्णनम् ? अनेकात्मकसर्वगतत्वभावनञ्च, यद्यस्यै-
10 कैकं प्रत्येकं गुणो न भवति ततोऽस्य कुतोऽसत्त्वात्तदेकत्वापत्त्यात्मिकाऽविकल्परूपता ? नहि पृथगवृत्ते रूपे मेचकात्मके भवतः । असदेव तु तदेवम्, अगुणत्वेऽन्यात्मकत्वात्, खपुष्पवत् त्वदुक्तेरेव च[न]तल्लक्ष्यं नार्थो न वस्त्वलक्षणत्वात् खपुष्पवत्, अथात इतश्चान्यतरोपादानपरित्यागायुक्तत्वात्तल्ल-

---

एव प्रधानमयत्वात् प्रधानमेकमिति कल्पनमल्पमित्याह–**ततश्चेति** । सर्वगतत्वेन स्वात्मन्येवास्थितत्वात् सकलेतरव्यावृत्तलक्ष्यबोधनासमर्थत्वेन लक्षणाभावात् खपुष्पवल्लक्ष्यभूतप्रवृत्तेरप्यभावेन तद्रूपप्रधानस्याप्यभाव इत्याह–**अल[क्ष]णत्वादिति** ।
15 ननु प्रवृत्तिः प्रवृत्तिस्वात्मैव न प्रकाशादिस्वात्मा, प्रधानन्तु प्रकाशादिस्वात्मापि, अत एव न प्रवृत्तिः तस्य स्वरूपलक्षणम्, येन तदभावे प्रधानाभावः स्यात्, किन्तु प्रधानत्वव्यापकाभावाप्रतियोगित्वरूपं तटस्थं लक्षणं तत् तथा च प्रवृत्तिस्वात्मनः प्रवृत्तिरेव लक्षणं प्रधानस्य तु प्रवृत्तिर्लक्षणमेव, अन्यगुणस्यापि लक्षणत्वेनात्यागात्, प्रधानस्य गुणत्रयात्मकत्वादित्याशंकते–**अथेति** । प्रवृत्तिप्रधानयोर्भेदाश्रयेणैवमवधारणा नोचिता, गुणप्रधानयोरभेदप्रतिज्ञानादित्युत्तरयति–**उक्तवदिति** । घट एव रूपादय इत्युक्तौ न यथा घटव्यतिरिक्ता रूपादयः सन्ति तथा प्रवृत्त्येकलक्षणप्रधानव्यतिरिक्तार्थाभावात्, प्रकाशाद्यभावेनेदृशा-
20 वधारणावकाश एव नेति भावः । अवधारणभेदस्यान्याय्यत्वं प्रतिज्ञाव्याघातञ्च दर्शयति–**प्रधानत्वमिति । इति तत्त्वमिति,** उक्तादेव हेतोः प्रधानस्यैव गुणत्वमिष्टविपरीतं प्राप्तं न तु गुणानां प्रधानत्वम्, रूपादेरेव घटत्ववदिति भावः । अवधारणभेदाङ्गीकारे दोषान्तरमादर्शयति **यदा चेति** । प्रवृत्तिस्वात्मनः प्रवृत्तिरेव स्वरूपलक्षणं प्रवृत्तिस्वात्मनैव तस्या भवनात् प्रधानस्य तु सा लक्षणमेव न तु तत्त्वं प्रधानस्य, तद्रूपेण तस्याभवनात् प्रकाशादीनामपि तल्लक्षणत्वात्, तथा च प्रवृत्तिस्वात्मनि, न प्रकाशाद्यात्मनो भावः प्रवृत्तिस्वरूपप्रधानस्वरूपत्वाभावात्, न वा प्रकाशाद्यात्मनि प्रवृत्तिस्वात्मनो भावः, अत एवेति प्रवृत्त्या-
25 दीनां पृथक् पृथग्रूपता न तत्रानुवर्त्तमानः कश्चित् प्रधानादिरस्ति, अतत्स्वरूपत्वात् प्रधानादेः, तथा चानुवर्त्तमानस्य सामान्यस्याभावेन परस्परात्यन्तभिन्नभेदात्मकप्रवृत्त्यादीनामेव सद्भावान्न सर्वगतः कश्चिदस्ति, किन्तु यथा लोके दृश्यते घटो घट एव रूपं रूपमेव रसो रस एवेति यथा लोकग्राह्यं वस्तु न सामान्यं वा विशेषो वा कश्चिदिति तदर्थशास्त्रारम्भणमफलमिति भावः । अथ सर्वासर्वात्मकत्वादेव विकल्पस्यैव शब्दार्थत्वाच्चाज्ञाततत्त्वः सोऽलक्ष्य एवेत्युक्तौ तस्य त्रिगुणत्वादिवर्णनमयुक्तमेवेत्याह–**अथेति । अनेकेति** , प्रधानस्य सर्वगतत्वेन भावनं न युक्तमिति भावः, ननु गुणानामेव स्वरूपासिद्ध्या प्रत्येकं स्वात्मन्य-
30 पर्याप्तत्वेनासत्त्वात् प्रधानस्य भिन्नानां साम्यावस्थात्मिकाऽविकल्परूपतेत्याह–**यद्यस्येति** । प्रधानस्याभावमेव साधयति–**असदेवेति,** एवं प्रवृत्त्यादीनामभावे । **नार्थ इति,** लक्ष्यतानिराकरणाद[र्थरूपता]पि तन्न भवतीति भावः । ननु गुणस्य प्रधानस्य वाऽन्यतरस्य ग्रहणे परित्यागे वाऽलक्षणत्वादभावप्रसङ्गतोऽस्य प्रवृत्त्यादिलक्षणत्वेन प्रवृत्त्यादित्वेन वाऽवाच्यत्वमेवेत्याशंक्य समाधत्ते **अथात इति,** लक्षणस्वरूपाभ्याममवाच्यत्वे प्रधानस्यैवासिद्धिः तथा च प्रधानमसत्, प्रवृत्त्या सहैकत्वान्यत्वे

---

१ सि. क. °द्विकल्प° ।

क्षणाभावादस्य[illegible], तथा[सति]तथैव स्यात्, प्रवृत्त्या सहैकत्वान्यत्वे प्रति अवचनीयत्वात् खपुष्पवत्, अथ न तदेकं नान्यद्वा वाच्यं निरुपाख्यत्वात्, यत्तु सत् तत् प्रवृत्त्या सहैकत्वान्यत्वे प्रति वचनीयं यथा [illegible], प्रकाशनियमात्मनो वाऽन्यतरोपग्राहपरित्यागायुक्तत्वादपि च [1]तदुभययुक्तत्ववाच्यत्वाभ्युपगम एव पितृपुत्रत्ववत्, प्रधानस्वात्मैव वा त्रीणीति पुरुषावस्थावदिति, यथैव हि यदि पुरुषस्वात्मा[नोऽ]वस्था न तर्हि सः, अनवस्थत्वात्, खपुष्पवदिति, तथैव यदि प्रधानस्वात्मा[नो]गुणा न तर्हि प्रधानम् [अ]गुणत्वात्, खपुष्पवत्, अभ्युपगमेऽपि तु प्रधानस्य गुणानां त्रयाणामप्यैक्यं प्रधानस्वात्मत्वात् प्रधानवदिति सर्वत्र सम्भाव्याभावादेव सर्वाव्यापिता, प्रवृत्तिगुण एव हि प्रकाशगुणः प्रवृत्तिस्वात्मत्वात् प्रवृत्तिवदेवमितरोऽपि, प्रकाश एव प्रवृत्तिः प्रकाशस्वात्मत्वात् प्रकाशवदेवमितरोऽपि, नियम एव च प्रवृत्तिर्नियमस्वात्मत्वान्नियमवदेवमितरोऽपि, य एव चान्यो गुणः स एवेतरोऽपि, एकस्वात्मत्वात्, स इव, प्रकृतिरेवेदं सर्वमित्यतिदेशाभावो भेदाभावात्, उपवर्णनभिन्नरूपव्यतिकरसङ्कराभ्यां त्वेवमतथात्वमेषामस्य च तत्स्वात्मत्वादिति प्रधानगुणव्यवस्थाभाव एव, उक्तवद्व्यवस्थानुमतौ प्रधानातिदेशः त्याज्यः, तदत्यागे यदर्थमयमतिदेशोऽद्वैतैकान्तार्थस्तस्यैवासिद्धिः, यत्तदेकमेव सम्भाव्यते प्रधानं तस्याप्यनेकतैवैवमापद्यते, यत्स्वरूपाव्यतिरिक्तलक्षणा गुणा विना भेदेनोच्यन्ते तत्प्रधानमपि प्रधानेनाभिव्याप्तत्वादनवस्थितैकत्वतत्त्वप्रतिष्ठं प्रधानमित्यतिदेश्यं स्यात् प्रधानस्वात्मत्वाद्गुणवत्, प्रत्यक्षार्थेदंविषयतायां वा व्यक्तमूर्त्तानित्यादिरूपार्थप्रधानपरमार्थता, गुण[ा]स्त्वन्यत्वानेकत्व

प्रति अवचनीयत्वात्, खपुष्पवत्, खपुष्पं हि प्रवृत्त्या सहैकमिति अन्यमिति वा न शक्यं वक्तुं निरुपाख्यत्वादिति भावः। व्यतिरेकव्याप्तिं दर्शयति—यत्तु सदिति। ननु प्रवृत्तिलक्षणत्वप्रवृत्तित्वयोरन्यतरपरित्यागोपादानायुक्तत्वाद्भिन्नत्वेनाभिन्नत्वेन वाऽवचनीयत्वमस्तु प्रधानस्य, सर्वथाऽवाच्यत्वन्तु नैव, तदेकत्वान्यत्वोभययुक्ततया वाच्यत्वसम्भवात्, तदन्यतरोपादानायुक्तत्वस्य तदुभययुक्तत्ववाच्यत्वाभ्युपगमव्याप्यत्वादित्याह—प्रकाशेति। ननु प्रधानं सर्वव्यापीष्टम्, यदा तु गुणानां प्रधानस्वात्मत्वेऽगुणत्वात् खपुष्पस्येव प्रधानस्यैवाभावस्तदा तत्कथं सर्वव्यापि? अगुणस्यापि तस्याभ्युपगमे प्रधानवद्गुणानामेकत्वेन सर्वाभावाच्च कथं तत्सर्वव्यापि स्यादित्याह—[illegible]। दृष्टान्तं संघटयति—यथैवेति। सर्वगतत्वाभावमुपपादयति—अभ्युपगमेऽपि त्विति। गुणानां प्रधानात्मत्वमुक्त्वा गुणानामपि परस्परात्मकत्वमाह—प्रवृत्तिगुण इति, तदेवं प्रधानस्यैवैकस्य सिद्धावितराभावात् सर्वस्य प्रधानत्वातिदेशो निर्विषय एवेति भावः उपवर्णनेति, विशेषधर्मत उपवर्णनाद्भिन्नरूपाणां प्रवृत्त्यादीनामुक्तविधयैकत्वात् सङ्करो व्यतिकरश्च प्राप्तः, ततश्च प्रवृत्त्यादीनामप्रवृत्त्यादित्वं प्रधानस्वात्मत्वाभिन्नप्रकाशाद्यात्मत्वात्, तथा प्रधानस्याप्यप्रधानत्वं प्रवृत्त्यादिस्वात्मत्वेन प्रवृत्त्यादित्वादिति न प्रधानस्य गुणानां वा व्यवस्था सम्भवतीति भावः। प्रोक्तरूपेण व्यवस्थाभ्युपगमे च सर्वं प्रधानमयमिति कथमतिदिश्यतेऽभेदे हि स सम्भवति नान्यथेत्याह—उक्तवदिति। यद्यतिदेशे भवतामाग्रहः तर्हि प्रधानमयत्वातिदेशेनैकान्तेन याऽद्वैतसिद्धिस्तेऽभिमता सा न सेत्स्यति किन्त्वनेकानि प्रधानानि प्राप्स्यन्ते प्रवृत्त्याद्यभिन्नत्वात् प्रधानस्येत्याह—तदत्याग इति। एतदेव प्रकटयितुमाह—यत्स्वरूपेति, प्रधानमेव गुणा इत्यभेदेन निर्देशात् प्रधानस्वरूपानतिरिक्तस्वरूपता गुणानामाविष्कृता, गुणानान्तु भवद्भिर्भेदः स्वीकृत एवेति प्रधानस्याप्यनेकत्वात् प्रधानान्तरेणाभिव्याप्तः स्यात्, तथा च प्रधानमिदं प्रधानेनाभिव्याप्तम्, प्रधानस्वात्मत्वात्, यो यत्स्वात्मा स तेनाभिव्याप्तः यथा प्रवृत्त्यादयः ते हि प्रधानस्वात्मत्वात् प्रधानेनाभिव्याप्ताः तद्वत् प्रधानमपि प्रधानस्वात्मेति प्रधानान्तरेणाभिव्याप्तं भवेदित्यनवस्था ततश्चैकत्वेन तत्त्वेन च यदेकत्वे तत्त्वे चानवस्थिता प्रतिष्ठा यस्य

[1] सि. क. ननु रूपयुक्तत्व०।

एव प्रधानम्, अवश्यमन्ये तेऽस्मात् [तेभ्यश्चेदमन्यत्] तद्रूपापत्त्यनिष्टत्वात् अन्तरवत्, यतो न ज्ञात्म-त्वमस्य नेष्यते प्रधानातिदेशात्तु पुनः स्वपरविषयकृतभेदद्वारानभ्युपगमे कस्यचित् कथञ्चिदप्यन्यत्वानु-पपत्तौ तेऽन्यत्वानापत्तेः पृथक् पृथक् प्रधानम्, अथ प्रधानलक्षणापि प्रवृत्तिर्न [प्रधानम्,] प्रधान-मपि तर्हि न प्रधानं प्रधानलक्षणत्वात् प्रवृत्तिवदेवं शेषावपीति प्रधानाभाव एव कुतोऽस्य सर्वगतता ?

5 त्वदभिप्राय एवैवम् तदात्मत्वाभिमतनिरसनात्, उष्णत्वनिरसनेनाग्न्यभावप्रतिपादनवत् [इति] कृतं भङ्गचक्रावर्त्तनम्।

आपादितश्चैकैकपूर्वकमिदं नानेकैकपूर्वकमित्येतदापन्नमित्याह—

**एवञ्चैकैकपूर्वकवादापत्तेरेव किमनेकात्मकैककल्पनया ?**

**एवञ्चैकैकपूर्वकवादापत्तेरेवेति,** अवधारणार्थत्वादेवकारस्य ततश्च त्रिगुणप्रधानकारण-

10 कल्पनानर्थक्यमित्यत आह—किमनेकात्मकैककल्पनया यदि प्रवृत्तिलक्षणप्रधानमेवैकं [illegible] मप्रवृत्ति-रूपेण प्रवर्त्तते प्रवृत्तिरेवैका त्रिगुणरूपा ततश्चोभयथाप्येकैककारणवाद एवेति पृथगात्मकत्रिगुणकारण-कल्पनाव्याख्यानमायासमात्रम्, तस्मादेकात्मकैकमेव व्यक्त्यन्तरसहकारेणानेकाकारं भवति यथा प्रागु-पवर्णितपुरुषादिकारणपूर्वकानन्तप्रभेदजगत्सृष्टिसमर्थं [illegible]काकारं किं त्रिगुणमित्येतावतेति।

किञ्चान्यत्—

15 **तथापि च संघातपारार्थ्यादिभिश्चेतनान्यत्वे स्थिताचैतन्यैकत्वपरिणामित्वमुक्ति कारणं सुखमिति वा दुःखमिति वा मोह इति वा परमाणव इति वा [illegible]मित्येव वा उक्तवत्स्थापि-तात्मस्वतत्त्वप्रवृत्तित्वादतः किमिति न गम्यते त्वया वक्ष्यमाणसाधनवदनन्ये सुखदुःखे इति।**

**(तथापि चेति)** यद्यपि त्वदुक्तैर्हेतुभिः संघातपारार्थ्यादिभिः प्रकृतेरन्यः पुरुषः सिद्ध्यति 'संघातपरार्थत्वात् त्रिगुणादिविपर्ययादधिष्ठानात्। पुरुषोऽस्ति भोक्तृभावात् कैवल्यार्थं प्रवृत्तेश्चे'ति

20 तदिदं प्रधानमनेकत्वापादनादनवस्थापादनाच्चानवस्थितैकत्वतत्त्वप्रतिष्ठमिति वक्तव्यमिति भावः। ननु सृष्टेः पुरुषपूर्वकत्वापादनं न युक्तं जगत्कारणात् प्रधानात् संघातपारार्थ्यादिभिरन्यस्य पुरुषस्य सिद्धेरित्याशंक्याह–यद्यपीति। पुरुषसाधकेश्वरकृष्णका-रिकामाह–संघाते त। इह संघाताः परार्था दृष्टाः पर्यङ्करथशरणादयः, न ह्येते किमपि स्वार्थं साधयन्ति न वा परस्परार्थाः, किन्त्वस्ति परो देवदत्तादिर्योऽस्मिन् पर्यङ्के शेते रथेन गच्छति गृहे निवसतीति, एवममी महदादयश्चक्षुरादयो न स्वार्था न च परस्परार्थाः किन्तु परार्थाः, यश्चासौ परः स पुरुषः, न देवदत्तादिशरीरम्, तस्यापि संघातत्वेनान्यार्थत्वात्।

25 त्रिगुणादिविपर्ययात्–व्यक्तप्रधानसाधर्म्यविपर्ययादित्यर्थः यदि हि पुरुषो न स्यादत्रिगुणविवेकित्वादिधर्मा तर्हि त्रिगुणाविवे-कित्वादिवर्णनम[illegible]कमव्यावर्त्तकत्वात्। अधिष्ठानात्, न ह्यन्तरेणाधिष्ठातारं भवति वस्तुजातम्, तथा सत्यर्थवशः सन्निवेश-विशेषनियमो न स्यात्, दृष्टश्च श्रोत्रादिपृथिव्यादीनां देवमानुषतिर्यक्षु हितयोगार्थोऽहितप्रतिषेधार्थश्च सः, तस्मादस्ति तद्व्यति-रिक्तः यदधिष्ठितानां गुणानां चित्ररूपः परिणामः, षष्टितंत्रेऽप्युक्तं पुरुषेणाधिष्ठितं प्रधानं प्रवर्त्तते इति, अधिष्ठानञ्चायस्कान्तव-त्ततोऽकर्तृत्वभङ्गः। भोक्तृभावात्–षड्रसं भोजनं दृष्ट्वा भोक्ता साध्यते, अस्ति भोक्ता यस्येदं भोजनमिति, एवमिदं व्यक्तमव्य-

30 क्तञ्च दृष्ट्वा साधयामोऽस्त्यसौ पर आत्मा यस्येदं भोक्तुर्भोग्यमिति, कैवल्यार्थं प्रवृत्तेश्च, प्रवृत्तिमतां निमित्तमन्तरेण हि निवृत्तिर्नोप-पद्यते, प्रधानमपि च प्रवृत्तिमत् व्यक्तदर्शनात्, तस्माद्यस्य कैवल्यं प्रधानप्रवृत्तिहेतुः स पुरुष इति पञ्च हेतूनाश्रित्य पुरुषास्तित्वं साधितम्। ननु तत्प्रधानाख्यं कारणं चेतनव्यतिरिक्तञ्चेत्तर्हि परार्थत्वादयस्तत्र सम्भवन्ति तस्यैव चेतनत्वे परार्थत्वादयोऽन-

---

१ सि. क. तदभाव एव त्वया प्राय एवं प्रतिपाद्यते।

( सां० का० १७ ) तथापि च तस्य कारणस्य चेतनादन्यत्वे स एवैतानि स्वरूपाणि स्थितानि, चेतनस्य परस्यार्थे प्रवृत्तेः चेतनस्य भोक्तृत्वात् रूपादिपरिणामिना चेतनत्वाच तेनैवाचेतनत्वेनैकत्वं स्थितम्, न ह्यचेतनस्य भेदोऽस्ति, परिणामित्वञ्चास्य तत एव स्थितम्, आपत्तिभवनस्य रूपादिरूपस्य परिणामाख्यत्वात्तस्य च सन्निधिभवनाद्भिन्नत्वात्, यथोक्तम्–'जेचेव पोग्गला सुब्भिगंधत्ताए परिणमंति ते चेव पोग्गला दुब्भिगंधत्ताए परिणमंति' (तत्समानार्थकपाठः ज्ञाताधर्मे सू. ९२) इति, ततस्तस्य संघातपारार्थ्यादिभिश्चेतनान्यत्वे स्थिता[न्य]चैतन्यैकत्वपरिणामित्वानि वृत्तयोऽस्य तदिदं कारणं स्थिताचैतन्यैकपरिणामित्ववृत्ति तच सुखमिति वा दुःखमिति वा मोह इति वा परमाणव इति वा कारणमित्येव वा उक्तवत्–उक्तेन तुल्यमुक्तवत्, यथोक्तं भिन्नात्मकतायान्तु सत्त्वं न प्रकाशेताप्रवृत्तित्वादित्यतः प्रभृति यावदेषोऽवधिस्तद्वदुक्तवदेव, स्थापितात्मस्वतत्त्वप्रवृत्तित्वात्–आत्मस्वतत्त्वेन स्थापिताऽस्य प्रवृत्तिरित्यतः किमिति न गम्यते त्वया वक्ष्यमाणसाधनवदनन्ये सुखदुःखे इति? किं स्वपक्षरागान्मोहाद्वा मायाया वा, किमिति नोच्यते तत्त्वं कथायां प्रस्तुतायां? किमनुवृत्त्या, मतिलोपायशोभयादितो वेति।

किं पुनस्तत्साधनमिति चेत् सुखादनन्यदेव दुःखम् अनात्मत्वेऽवरणाद्यात्मकत्वात्, सुखस्यात्मवत्, अवधारणेन च वक्ष्यमाणसाधनान्तरापक्षिप्तान्यत्वात् विपक्षाभावः सूच्यते। सुखादनन्यत्वेन दुःखे साध्येऽनात्मत्वविशेषणेनात्मनि निरस्ते साधनान्तरनिरस्ते तमसोऽन्यत्वे न किञ्चित् सुखादन्यदस्ति तस्मादन्यः कश्चिद्विपक्ष एव नास्ति, मोहेऽन्यत्वमिति च साधयिष्यते।

( किं पुनरिति ) किं पुनस्तत्साधनमिति चेत् सुखादनन्यदेव दुःखम्, अनात्मत्वेऽवरणाद्यात्मकत्वात्, वरणसदनापध्वंसनवैभत्स्यदैन्यगौरवाणि वरणादीन्यस्यात्मा कार्यं तद्वरणाद्यात्मकं तमः, न वरणाद्यात्मकमवरणाद्यात्मकं किं तत्? दुःखं तस्यानात्मत्वे सत्यवरणाद्यात्मकत्वात् सुखादनन्यत्वमेव किमर्थं पुनरनन्यदेवेत्यवधार्यते? उच्यते–अवधारणेन च–सुखादनन्यदेवेत्यनेन वक्ष्यमाणसाधनान्तरापक्षिप्तान्यत्वात् विपक्षाभावः सूच्यते, वक्ष्यमाणं साधनं सुखादनन्य एव मोह इति, तेनापक्षिप्तं अन्यत्वं तमसोऽपीति विपक्षाभावः सोऽनेनावधारणेन सूच्यते, पुरुषस्तु स्यात् सुखादन्यत्वाद्विपक्षः ततो व्यावर्तनार्थमनात्मत्वे सतीति विशेषणम्, सुखस्यात्मवदिति दृष्टान्तः, यथाऽवरणाद्यात्मकत्वात् सुखस्यात्मा सुखादनन्य एवं दुःखमवरणाद्यात्मकत्वात् सुखादनन्यदिति, अस्य हेतोरव्यभिचारव्याख्यानम् सुखादनन्यत्वेन दुःखे साध्येऽनात्मत्वविशेषणेनात्मनि निरस्ते साधनान्तरनिरस्ते तमसोऽन्यत्वे

---

वस्थाप्रसङ्गेन न भवेयुः, तस्मात् प्रधानमचेतनमेव, अचेतनञ्च कारणमेकमेव नानारूपेण परिणमते इत्येककारणवाद एव स्यात् न तु त्रिगुणकारणवाद इत्याशयेनाह–तथापि चेति। तच कारणं सुखं वा दुःखं वा मोहो वा परमाणुर्वा कारणमात्रमेव वा भवतु किं तेन परन्तु तत् प्रवृत्तिस्वतत्त्वमेव, यैव च प्रवृत्तिः स एव प्रकाशो नान्यः कश्चिदर्थः, तथा प्रवृत्तत्वादिति कुतः सुखदुःखयोरनन्यत्वं नाङ्गीक्रियत इत्याह तच्चेति, वक्ष्यमाणसाधनवदनन्ये सुखदुःखे इत्युक्तमधुनैव, तदेव साधनं व्यावर्णयति–किं पुनरिति, च सुखादनन्यमोहकार्याणि कार्यकारणयोस्तादात्म्याद्वरणाद्यात्मकं तमो मोहश्च तद्भिन्नं दुःखमित्यर्थः, सुखादन्यत् किञ्चिदनात्मत्वे सत्यवरणाद्यात्मकं नास्तीति दर्शयत्येवकार इत्याह–अवधारणेन चेति, अपक्षिप्तं निरस्तम्। ननु

---

१ सि. क. प्रवृत्तेर० २ सि. क. अन्यथादिति।

न किंचित् [illegible], तस्माद[illegible]ः कश्चिद्विपक्ष एव नास्तीति [illegible]ऽस्य हेतो-
रित्यव्यभिचारी हेतुः मोहेऽन्यत्वमिति चेत्तन्निवर्तयिष्यते, व्याख्यातार्थस्फुटीक्रिया चादौ चोद्योत्तर-
पक्षौ गतार्थौ न विक्रियेते ।

अवरणाद्यात्मकत्वा[illegible] कुतोऽन्यत्वनि[illegible]त्तिरिति चेन्न, अ[illegible]रणाद्यात्मकत्वादिति विधिप्र-
5 धानप[illegible]दासात्मकत्वात्, अन[illegible]सकवचनादप्रतिषेधेऽनपुंसक[illegible]टः स[illegible]त्ववत् ।

( [illegible] ) अवरणाद्यात्मकत्वात् कुतोऽन्यत्वनिवृत्तिरिति चेत्—स्यान्मतं वरणाद्यात्मक-
मोहप्रतिषेधादेवावरणाद्यात्मकाभ्यां सत्त्वरजोभ्यां मोहस्य प्रतिषेध्यस्यान्यत्वं सिद्धम्, तस्मान्न तदन्य-
त्वनि[illegible]त्तिरित्येतच्च न, अवरणाद्यात्मकत्वादिति—अवरणाद्यात्मकशब्दस्य विधिप्रधानपर्युदासात्मकत्वात्
नञो हि द्वयी गतिः प्रसज्यप्रतिषेधः पर्युदासश्च, यथा ब्राह्मणो न भवत्यब्राह्मण इति ब्राह्मणस्य निवृ-
10 त्तिप्रधानः प्रसज्यप्रतिषेधः, ब्रा[illegible]णादन्योऽब्राह्मणः क्षत्रियादिरिति क्षत्रियादिविधिप्रधानः पर्युदासः,
तथेहाप्यवरणाद्यात्मकत्वादिति वरणाद्यात्मकान्मोहादन्यदवरणात्मकशोषादिप्रसादाद्यात्मक[त्वं] विधी-
यते वरणाद्यात्मकत्वस्य तु न विधिर्न प्रतिषेधः पर्युदासात्मकत्वात्, न तु प्रसज्यप्रतिषेध इति,
तदर्थसमर्थनार्थं दृष्टान्तमाह—अनपुंसकवचनादप्रतिषेधेऽनपुंसकसुटः सर्वनामस्थानत्ववत्, यथा नपुंस-
कादन्यत्र सुट् सर्वनामस्थानसंज्ञं भवतीति स्त्रीपुंसयोः सुटः सर्वनामस्थानसंज्ञा विधीयते, नपुंसके तु
15 'शि सर्वनामस्थानम्' ( पा० १ अ. १ पा. ४२ सू. ) इति विध्यन्तरविहिता, सुटः सर्वनाम-
स्थानता न विहिता न निषिद्धा तथेहापि वरणाद्यामकत्वस्य न विधिर्न प्रतिषेधः, शोषप्रसादाद्यात्मकत्व-
विधानादिति ।

---

विपक्ष एव नास्तीत्ययुक्तं मोहस्य [illegible]त्वादन्यत्वादित्याशंक्य तस्याग्रेऽन्यत्वं निवर्तयिष्यत इत्याह—मोह इति। ननु वरणाद्यात्मकं
न भवतीति वरणाद्यात्मकमोहनिषेधादेव मोहस्यान्यत्वसिद्ध्या कुतोऽन्यत्वं निवर्तयिष्यत इत्याशङ्कते—अवरणाद्यात्मकत्वा[illegible]िति।
20 वरणाद्यात्मकं न भवतीति प्रसज्यप्रतिषेधपक्षे समस्यमानप[illegible]दनञ्पदयोः सामर्थ्याभावान्नञो भवतिनैव
सामर्थ्यादसमर्थसमासः, असूर्यपश्यानि मुखानीतिवत् । प्रसज्यप्रतिषेधे यदा नञ्पदोपादानोऽसदर्थः क्रियासम्बन्धितया
प्रक्रान्तः तदोत्तरपदार्थेन ब्राह्मणेनावच्छिन्नः प्रतीयमानो नञर्थः प्रधानं भवतीति ब्राह्मणनिवृत्तिप्रधानः प्रसज्यप्रतिषेधो
भवतीत्याह—यथा ब्राह्मण इति । यदा च नञोत्तरपदार्थसदृशोऽर्थः प्रतीयते पर्यु[illegible]ऽब्राह्मणशब्दो क्षत्रियवृत्तिरव-
धार्यते विधिप्रधानः इत्याह—ब्राह्मणादन्य इति । अत्रार्थे व्याकरणसिद्धं दृष्टान्तमाह—अन[illegible]सकेति, सुडनपुंसकस्य
25 ( पा. १-१-४२ ) इत्यनेन स्त्रीपुंसयोः सुटः सु औ जस् अम् औट् इत्येवंरूपस्य सर्वनामस्थानसंज्ञा विधीयते, अत्रानपुंसक-
शब्दः पर्युदासात्मको नपुंसकान्यभिन्नबोधको न प्रतिषेधपरः, तस्मादिदं वचनं नपुंसकविषये मौनमेव, नपुंसकसुटः सामान्यस्य
सुटो वा सर्वनामसंज्ञाया अविधानादप्रतिषेधाच्च, नपुंसकजस्शस्सम्बन्धिनः शेस्तु 'शि सर्वनामस्थानं' इति पूर्वसूत्रेण सा
विधीयते, एवं सुखदुःखयोरप्यवरणाद्यात्मकत्वमेव विधीयते वरणाद्यात्मकत्वस्य त्वत्र न विधानं न वा प्रतिषेधनं क्रियत इति
भावः । [illegible] भोद्वेगापद्वेगाः रजसः कार्यं रजश्च दुःखम्, प्रसादलाघवाभिष्वङ्गोद्धर्षप्रीतयः सत्त्वस्य
30 कार्यं सत्त्वञ्च सुखम्, एतदात्मकत्वमेव अवरणाद्यात्मकत्वपदेन विधीयत इति भावः । नन्वेकस्यैव सुटः सर्वनामस्थानसंज्ञा-
विषयस्य नपुंसकत्वमनपुंसकत्वमपि सम्भवत्यविरोधात्, सुखदुःखयोस्तु वरणाद्यात्मकत्वऽवरणाद्यात्मकत्वमव [illegible]त्मकत्वे वर-

१ सि. क. दन्यस्य कत्वसिद्धि० । २ सि. क. आवरणा० अग्रेऽप्येवं बोध्यम् । ३ सि. क. विधे० ।

स्यान्मतम्—

वैषम्याददृष्टान्तोऽयम्, सम्बन्धिनः सुटः सर्वनामस्थानसंज्ञाविधाने नपुंसकानपुंसकविषयत्वाविरोधात्, विरोधाद्वरणाद्यात्मकत्वानुपपत्तिरित्येतदपि न, वैषम्यस्यात्रापि तुल्यत्वात्, तटस्तटं तटीति स्त्रीपुंनपुंसकवदेतत्स्यात्, एकस्मिन्नेव लिङ्गत्रयदर्शनात्।

(वैषम्यादिति) वैषम्याददृष्टान्तोऽयम्, सम्बन्धिनः सुटः सर्वनामस्थानसंज्ञाविधाने नपुंसकानपुंसकविषयत्वाविरोधादुच्येत सर्वनामस्थानसंज्ञाविषयस्य नपुंसकानपुंसकत्वम्, विरोध[ात्] वरणाद्यात्मकत्वानुपपत्तिरित्येतदपि च न, वैषम्यस्यात्रापि तुल्यत्वात्, तटस्तटं तटीति स्त्रीपुंनपुंसकत्ववदेतत् स्यात्, एकस्मिन्नेव लिङ्गत्रयदर्शनात्—दृष्टं हि तटे लिङ्गत्रयम्, तटस्तटी तटमित्येकस्मिन्नेव, यदा च नपुंसकलिङ्गं तदा न स्त्रैणं न पौंस्नम्, पुंस्त्वे न स्त्रीता न नपुंसकता, स्त्रीत्वे नेतरद्वयतेत्यपुंनपुंसकत्वं तथा वरणाद्यात्मकत्वमस्तु को दोषः? सरूपैकशेषाकरणमनुकरणत्वाल्लिङ्गत्रयव्यक्त्यर्थमित्यदोषः।

एवं तर्हि सुखदुःखयोरपि वरणाद्यात्मकत्वादवरणाद्यात्मकत्वासिद्धिरेव, वरणाद्यात्मकत्वसिद्धौ वाऽनन्यत्वासिद्धिरिति चेन्न, अवरणाद्यात्मकत्वेऽप्यनन्यत्वाद्वरणाद्यात्मकत्वस्य, वरणसदनमोहात्मकत्ववत्।

(एवं तर्हीति) एवं तर्हि सुखदुःखयोरपि वरणाद्यात्मकत्वादवरणाद्यात्मकत्वासिद्धिरेव, वरणाद्यात्मकत्वसिद्धौ वाऽनन्यत्वासिद्धिरिति चेन्नेत्युच्यते, अवरणाद्यात्मकत्वेऽप्यनन्यत्वाद्वरणाद्यात्मकत्वस्य—अवरणाद्यात्मके अपि सुखदुःखे वरणाद्यात्मकत्वतो न द्वे, तस्मादभिन्ने वरणाद्यात्मके एव प्रसादशोषादिकार्यभेदेऽपि कारणत्वात्तत्त्वपरिणामित्वादिभ्यः, किमिव? वरणसदनमोहात्मकत्ववत् यथा मोहात्मकानि वरणादन्यानि सदनादीनि वरणाद्यात्मकमोहात्मकानि अवरणात्मकानि[च]यथा वा

णाद्यात्मकत्वं न सम्भवति विरोधादिति न दृष्टान्तस्य समतेत्याशङ्कते-वैषम्यादिति, नपुंसकत्वमनपुंसकत्वमेकदैकस्य न सम्भवति त्रिलिङ्गस्यापि तटशब्दस्य [illegible]मपरलिङ्गयोर्विरोधेनासम्भवान्न दृष्टान्ते विषममित्युत्तरयति-[illegible] त्रापीति विरोधलक्षणवैषम्यस्य सर्वनामस्थानसंज्ञाविषयेऽपि तुल्यत्वादित्यर्थः। तटस्तटी तटमित्यत्र 'सरूपाणामेकशेष एकविभक्तौ' (पा. १-२-६४) इति सूत्रेण यद्यप्येकशेषः प्राप्नोति तथापि तस्यानुकरणत्वादेकस्यैव पदस्य लिङ्गत्रयं जातमिति स्फुटतया प्रदर्शयितुं न स कृत इत्याह-सरूपेति। अवरणाद्यात्मकत्वादिति हेतोरसिद्धत्वमाशङ्कते-एवं तर्हीति यदि एकदैकस्य न लिङ्गत्रयं विरोधादिति दृष्टान्तसाम्यमुच्यते तर्हीत्यर्थः, सुखदुःखयोर्वरणाद्यात्मकत्वस्याविधानादप्रतिषेधनाच्च वरणात्मकत्वादवरणात्मकत्वमसिद्धमेवेति भावः। अवरणाद्यात्मकस्य वरणाद्यात्मकस्य चाभेदं प्रदर्शयन्नसिद्धिं निराकरोति-अवरणाद्यात्मकत्व इति, सुखदुःखयोः प्रसादशोषादिकार्यभेदेऽपि अभेद एव, कारणत्वात् तदात्मत्वात् तत्परिणामित्वादित्यादिहेतुभ्यः, अत एव तयोरवरणाद्यात्मकत्वं वरणाद्यात्मकत्वञ्चेति भावः। तत्र दृष्टान्तमाह-वरणसदनेति वरणसदनयोर्मोहात्मकत्ववत् मोहस्य वा वरणात्मकत्वसदनात्मकत्ववदित्यर्थः, सदनं हि वरणादन्यत्वादवरणात्मकं तथा वरणात्मकमोहात्मकत्वाद्वरणात्मकञ्च तदात्मकात्मकस्य तदात्मकत्वनियमात्, एवं मोहो वरणादन्यसदनाद्यात्मकत्वादवरणात्मकः तथा वरणात्मकश्चेति भावः। ननु सदनादीनां मोहात्मकत्वे वरणात्मकत्वमेव स्यान्न त्ववरणात्मकत्वं, अवरणात्मकत्वे वा वरणात्मकत्वं

१ सि. क. त्मकत्वयोः। २ सि. क. दुःखयोः। ३ सि. क. किमिति वा। ४ सि. क. अपवरणात्मक नि।

मोहो वरणविलक्षणसदनापध्वंसनबैभत्स्यदैन्यगौरवधर्मापि वरणात्मक एव [कार्य]कारणयोरभेदादेव, अन्यथा ...नर्थक्यौ ग्रन्थदोषौ व्यपदेश्यव्यपदेशाभावदोषश्च स्युः नेष्यन्ते च तथा, तस्माद्वरणाद्यात्मकत्वं मोहस्य सदनादीनां चैपितव्यम्, यथा चैतत्तथा सुखदुःखप्रसादशोषादयश्च वरणाद्यात्मकाः स्युः, तस्मात् सुखदुःखयोरनन्यत्वहेतुव्यभिचारप्रदर्शनाय नासपक्षोऽस्तीति ।

5 किञ्चान्यत्—

वक्ष्यमाणवच्च वरणाद्यात्म...त्वेऽप्यनन्यत्वादवरणाद्यात्मकत्वस्य प्रापितत्वात् ।

(वक्ष्यमाणवच्चेति) वक्ष्यमाणवच्च वरणाद्यात्मकत्वेऽपि अनन्यत्वादवरणा...त्मकत्वस्य प्रापितत्वात्, वक्ष्यति हि सुखादनन्यत्तमः प्रकाशादनन्यो नियम इति च, तत्र तमसो वरण... प्रसादशोषादिकार्यादेकस्मादेव सुखादनन्यत्वं साधयिष्यते तमसोऽप्यतस्तस्माद्नन्यत्वाद्वरणाद्यात्मक-

10 मप्यवरणात्मकं तमः सत्त्वरजोवत् । (किञ्चान्यत् अवरणाद्यात्मकत्वस्य वरणात्मके सत्येवानन्तरं प्रापितत्वात् तथा वक्ष्यमाणत्वादिति ।)

इतर आह—

असाधनमिदं सर्व...ल्यत्वात् प्रसिद्धिविरुद्धसिद्ध्यतिप्रसङ्गात्, शक्यते हि वक्तुं कटः घटाद...न्यः, तन्त्वनात्मकत्वात्, यथा घटस्वात्मा वैधर्म्येण पटवदिति ।

15 (असाध...मिति) असाधनमिदं सर्वतुल्यत्वात् प्रसिद्धिविरुद्धसिद्ध्यतिप्रसङ्गात्, प्रसिद्धिविरुद्धानामप्यर्थानां सिद्धिरेवमतिप्रसज्यते, अर्थान्तरैर्धर्मनिवृत्त्या तदात्मत्वापादनात्, तद्यथा शक्यते हि वक्तुं कटः घटादनन्यः, तन्त्वनात्मकत्वात्, यस्तन्त्वनात्मकः स घटादनन्यः यथा घटस्वात्मा, यः घटादन्यः स तन्त्वनात्मको न भवति यथा पट इति वैधर्म्येण पटवदित्युक्तम् ।

आचार्य आह—

20 अथ सर्वतुल्यता कथं दोषः? स्वमतेन परमतेन वा, यदि स्वस्मिन्नेव मते ततस्तव प्रसिद्धिविरोधदो...भिमतैव, भावपक्षवत् ।

(अथेति) अथ सर्वतुल्यता कथं दोषः? स्वमतेन परमतेन [वा]इति प्रश्नः, उभयथाप्यदोष इति मन्यमान... । यदि ते स्वस्मिन्नेव मते दोषस्ततस्तव प्रसिद्धिविरोधदोषासक्तिर्ममाभिमतैव

---

न स्यात्, ततः कथमुभयात्मकतेत्यत्र हेतुमाह–कार्यकारणयोरिति कारणात्मनाऽभेदाद्वरणात्मकत्वं कार्यात्मना च भेदा-

25 दवरणात्मकत्वमिति भावः । भेदानङ्गीकारे दण्डमाह–अन्यथेति । सुखदुःखयोः वरणावरणाद्यात्मकत्वं यथोक्तं तथैव मोहस्याप्युभयात्मकत्वमित्याह–व...माणवच्चेति । नन्वेवं सुखदुःखमोहानामनन्यत्वसाधनमसाधनमेव, सर्वेषामेवमेव तुल्ययुक्त्या लोकप्रसिद्धानां विरुद्धानामनन्यत्वप्रसक्त्यापत्तिरित्याशङ्कते–असाधनमि...मिति, कथम...प्रसजनमित्यत्र हेतुमाह–अर्थान्तरेति, घटादर्थान्तरस्य पटादेर्यो धर्मस्तन्त्वात्मकत्वं तन्निवृत्तिरूपहेतुना घटात्मत्वापादनादित्यर्थः । तथैव प्रयोगमाह–तद्यथेति । अन्वयव्यतिरेकव्याप्तिं ग्राहयति–य...त्मक इति । ...कालनियतिस्वभावभावपक्षेषु यथा सर्वानन्यत्वमिष्टं तथैव

30 भवन्मतेऽपि सर्वानन्यत्वाल्लोकप्रसिद्धिविरोधदोषो भवदुक्तो ममेष्ट एवेत्याह–यदि त इति । न ममाभिप्रायादेव

---

१ सि. क. स्यात्व० । २ क. सपक्षोऽ० । ३ सि. क. ...धर्म्य... त्वा । ४ सि. क. घटः कटा० एवमग्रेऽपि । ()सि. क. नास्ति ।

तत्प्रतिवादिनो मम तु सर्वानन्यत्वापादनमभिमतमेव, भावपक्षवत्, यथा भावविधिविधिनयमतेऽनन्त-रातीते सर्वानन्यत्वमिष्टम्, एतस्योदाहरणमात्रत्वादुक्तक्रमेण स्वभावकालनियतिपुरुषपक्षवच्च वक्ष्यमाण-विधिनियमवच्च यथास्वम्, अत एव, एवं तावत् परवाद्यभिप्रायवशात्त्वन्मते दोषासक्तिरिष्टा।

न केवलं पराभिमते एव किं तर्हि ?—

अपि च स्वमतेऽपि सर्वानन्यत्वं सुखाद्यन्वयमात्रत्वात् सर्वस्य, मृदि घटः कट इव त्रिगुणोऽपि नास्तीति चेत्ततश्च सत्कार्यवादत्यागो वा तत्राभावात्, समुदयक्षणिकशून्यवादा-पत्तेश्च। 5

( अपि चेति ) अपि च स्वमतेऽपि सर्वानन्यत्वं सुखाद्यन्वयमात्रत्वात् सर्वस्य, न तु कटो घटादन्यः, सुखदुःखमोहान्वितमेतद्बाह्याध्यात्मिकभेदरूपं जगदिच्छतस्ते त्रैगुण्यजात्यनुच्छेदेन सर्वं सर्वात्मकमेव, त्रैगुण्यान्वयानतिरेकात् को हि सत्त्वाद्यतिरिक्तः ? यदि सत्त्वरजस्तमोऽतिरिक्तं किञ्चित् 10 स्यात् सर्वसर्वात्मकत्ववादेऽदोषः स्यात्, न त्वस्ति, तस्मात्तवैव दोषः, स्यान्मतं[मृदि]घटः कटे इव त्रिगुणोऽपि नास्तीति, ततश्च सत्कार्यवादत्यागो वा तत्राभावात्, यदि सत्त्वादिगुणे मृदादौ कटादिर्न स्यात् त्रिगुणोऽपि तथा घटोऽपि मा भूत्, अतोऽसन् घटः पश्चादुत्पन्नस्तत्र प्रागभूत [illegible]वादः सत्कार्यवादत्यागश्च प्राप्तः। किञ्चान्यत् प्रकाशादिविविक्तस्वरूपगुणसमुदयाभ्युपगमाद्रूपादिस्कन्ध-समुदयवाद एवायमपि देशभिन्नयुगपद्भाव्यनिर्देश्यगुणसमुदयमात्रत्वात्, क्षणिकवादश्चायुगपद्भाविपि- 15 ण्डशिवकाद्यनिर्देश्यनिर्विकल्पार्थमात्रत्वात्, अत एव च शून्यवादापत्तिः अनिर्देश्यस्वभावत्वात् खपुष्पवत्।

---

सर्वेषामनन्यत्वमपि तु तव मतेऽपि सर्वानन्यत्वमभिप्रेतमित्याह—अपि चेति, सर्वं हि सुखदुःखमोहान्वितत्वात्तद्व्यतिरिक्तस्य कस्यचिदभावात् सर्वात्मकमतो न घटकटयोरन्यतेति भावः, इदमेवोपपादयति—सुखदुःखेति। त्रैगुण्यजात्यनु[illegible], जलभूम्योः पारिणामिकं रसादिवैश्वरूप्यं स्थावरेषु दृष्टं, तथा स्थावराणां जङ्गमेषु जङ्गमानां स्थावरेष्वित्यादिग्रन्थेन सर्वेषु वस्तुषु 20 सर्वविकारजननशक्तिसिद्ध्या सुखत्वदुःखत्वमोहत्वजात्यनुच्छेदेन सर्वं सर्वजातीयशक्तिमदिति तेऽमीष्टमेवेति भावः। सर्वत्र गुणत्रयान्वयदर्शनात् कार्यकारणयोरभेदाच्च न कोऽपि सत्त्वाद्यतिरिक्तोऽस्तीत्याह—त्रैगुण्येति। सत्त्वाद्यतिरिक्तस्य तु कस्यचित् वस्तुनः सद्भावे तस्य भिन्नत्वेन सर्वानन्यत्वासिद्धौ प्रसिद्धिविरोधदोषस्ते न स्यात्, तच्च नास्तीत्याशयेनाह—यदीति। सर्वस्य सर्वात्मकत्वानभ्युपगमे दोषमादर्शयति स्यान्मतमिति। समुदयक्षणिकशून्यवादापत्तेश्चेत्यनेन बौद्धवादत्वं मूले यदापादितं तदेव व्याख्यास्यमानः प्रथमं समुदयवादं बौद्धवादविशेषं व्याचष्टे—[illegible] सर्वविकाराणामेव गुणात्मकत्वान्महदादि- 25 घटपटादयः परमार्थतो गुणात्मानः, त्रैगुण्यान्वयानतिरेकात्, ते च परस्परभिन्नास्त्रयो गुणा युगपद्भाविनोऽव्यक्तत्वादनिर्देश्य-इति रूपादिपञ्चस्कन्धसमुदयवादतुल्य एवायं गुणत्रयसमुदयवाद इति भावः। अथवा सुखदुःखमोहानां सत्त्वरजस्तमआत्मनां क्रमभावित्वेन निर्विकल्पत्वेन च क्रमभाविक्षणपरम्परावाद एवायमित्याह—क्षणिकवादश्चेति। ननु विचारकैर्भावस्वभावे विचार्यमाणे सर्व एव भावा निःस्वभावा एव परमार्थतः, अविद्यातिमिरोपहतमतिनयनानां भासमानाः कर्तृकर्म[illegible]ण-कार्यद्रष्टृदृश्यादिभावाः परस्परसापेक्षतामात्रेण प्रसिद्धिमुपागता गन्धर्वनगरायन्ते, सोऽयं परमार्थः भावोऽनभिलाप्योऽपरिज्ञेयोऽ- 30 विक्रियोऽकारणो न लाभो नालाभो न सुखं न दुःखं न यशो नायशो न रूपं नारूपमिति शून्यमेवेति वादवदयमपि वाद इत्याह—अत एव चेति, अनिर्देश्यनिर्विकल्पार्थमात्रत्वादेवेत्यर्थः। तदेवं सुखादनन्यदेव दुःखम्, अनात्मत्वेऽवरणाद्यात्मकत्वा-

---

१ सि. क. °नन्यथा°। २ सि. क. ननु घटः कटादनन्यः। ३ सि. तवैवादोषः। ४ सि. क. कटे त्रि०।

रूपरसगन्धस्पर्शसंख्यासंस्थानादीनां घटादिषु दृष्टानामन्यत्वाद्विपक्षोऽस्तीत्याशङ्क्याह तत्रापि—

रूपादीनामनेन न्यायेनान्यत्वेऽपक्षिप्ते प्रत्युदाहरणाभाव एव ।

**रूपादीनाञ्चानेनेत्यादि** यावत् प्रत्युदाहरणाभाव एव, न रूपं रसादन्यत्, अगन्धाद्या-त्मकत्वात् रूपस्वरूपवदित्यादि प्रसिद्धिविरुद्धासिद्ध्यतिप्रसङ्गोऽपि ते तत्प्रतिवादिनो दोषासक्तिरभिम-

5 तैवेति तदेव यावद्भावपक्षवदिति, पुनश्च स्वमतेऽपि सुखाद्यन्वयमात्रत्वादित्यादि यावत् सदसदुभयक्षणिक-शून्यवादापत्तेरिति, समानश्चार्थः, एवं सुखादनन्यद्दुःखमित्येतद्भावितम् ।

तमोऽप्यन्यदिति भाव्यं तदपि—

यथा च प्रकाशादभिन्ना प्रवृत्तिस्तथा नियमोऽप्यभिन्नः प्रकाशात्, प्रकाशस्वात्मप्र-तिलम्भ एव हि तन्नियमः, प्रकाशानन्यत्वात्, एतन्नियमलक्षणेन निरुद्ध्यतेऽन्यः प्रकाशा-

10 न्नियम इति, तत्र दोषदर्शनात् ।

(**यथा चेति**) यथा च प्रकाशादभिन्ना प्रवृत्तिस्तथा नियमोऽप्यभिन्नः प्रकाशात्, प्रकाशानति-रिक्तताप्रदर्शनार्थं नियमलक्षणमाह–प्रकाशस्वात्म[त्व]प्रतिलम्भ एव हि तन्नियमः, प्रकाशस्य स्वात्मा–स्वरूपम् तद्भावः प्रकाशस्वात्मत्वं तत्प्रतिलम्भ एव हि–तदात्मलाभ एव हि तन्नियमः रूपस्य रसस्य वा प्रकाश्यस्य स्वरूपव्यक्तिर्नियमः, नहि छिन्नाभ्रनभसीव निराश्रयः कश्चिन्नियमोऽस्ति

15 तत्पर्यायः कथं नियमः? प्रकाशानन्यत्वात्–प्रकाशस्वरूपमात्रम्, एतन्नियमलक्षणेन निरुद्ध्यते अन्यः–प्रकाशाद्भिन्नो नियम इति, तत्र दोषदर्शनात् ।

को दोष इति चेदुच्यते—

भिन्नात्मकतायां प्रकाशात्तन्नियमस्य सत्त्वं न स्यात् प्रकाशो वा, तथाऽनियतत्वात् गुणान्तररूपापत्तिरहितस्य सत्त्वस्य प्रकाशस्य चान्यथाप्रकाशनाभावात्, रजोवत्, प्रवृत्तिवत्

20 मूलत एव सत्त्वमेवं प्रकाश इति न स्यादनियतत्वाद्वन्ध्यापुत्रवत्, न च तत्प्रकाशात्मकं पुरुषवत् पूर्ववद्वाऽनग्निप्रकाशवद्वा ।

(**भिन्नात्मकतायामिति**) भिन्नात्मकतायां प्रकाशात्तन्नियमस्य सत्त्वात्तमसश्च सत्त्वं–सत्त्वमेव न स्यात्, प्रकाशो वा–प्रकाश एव, न स्यादिति वर्त्तते, तथाऽनियतत्वात् गुणान्तररूपापत्ति-

दिति माने विपक्षाभावे साधितेऽपि पुनर्विपक्षसद्भावमाशंक्य परिहरति–**रूपादीनाञ्चेति**, अनेन न्यायेन–अर्थान्तरधर्मनिवृत्त्या

25 तदात्मत्वापादनन्यायेनेत्यर्थः । तमेव न्यायं दर्शयति–**न रूपमिति** प्रकाश एव प्रवृत्तिः प्रवृत्तिरात्मैव प्रकाश इत्यन्योऽन्या-नन्यत्वं प्रतिपाद्येदानीं प्रकाशनियमयोः नन्यत्वं पूर्वोपदर्शितदिशा प्रसाधयति–**यथा चेति, प्रकाशस्वात्मत्वेति** प्रवृत्तिनियमौ ह्याश्रित्य प्रकाश आत्मलाभं लभते, नान्यथा तस्मान्नियमस्य प्रकाशजनकत्वात् कार्यकारणयोरभेदात्र नियमः प्रकाशादन्यः गुणानाञ्च परस्पराश्रयेण वृत्तेर्न प्रकाशव्यतिरेकेण नियमस्य वृत्तित्वमिति नियमस्वरूपमेव प्रकाशादन्यत्वं निवारयतीति भावः । प्रकाशनियमयोर्भेदे दोषमाह–**भिन्नात्मकतायामिति**, सत्त्वतमसोः प्रकाशनियमयोश्च परस्परमन्यत्वे सत्त्वप्रकाशयोर्निय-

30 मानात्मकत्वान्नियतपरिणामासम्भवेन गुणान्तरापत्तिरहितत्वात् सत्त्वं सत्त्वमेव न स्यात् प्रकाशः प्रकाश एव न स्यादिति भावः । हेतुमाह–**तथाऽनियतत्वात्**, गुणान्तरापत्तिरूपेण नियतत्वाभावादित्यर्थः, साम्यावस्थायां हि सत्त्वं प्रकाशश्च

१ सि. क. मन्यद्दा वि० । २ सि. क. ॰मन्यता । ३ सि. क. माव्यः । ४ सि. शानिय० ।

रहितस्य सत्त्वस्य प्रकाशस्य च, गुणान्तरात्मनो गुणान्तरात्मापत्तिरहितत्वादित्यर्थः, शब्दो हि शब्दतया प्रकाशमानो रूपाद्यात्मव्यावृत्तस्वरूपेण नियत एव प्रकाशते, अन्यथा प्रकाशनाभावात्, व्यक्त्यभावादित्यर्थः, दृष्टान्तौ यथासंख्यं रजोवत् प्रवृत्तिवत्, यथा प्रकाशात्मनाऽनियतत्वाद्रजः सत्त्वं न भवति प्रवृत्तिश्च प्रकाशो न भवति तथा सत्त्वं सत्त्वं न स्यात् प्रकाशः प्रकाशो न स्यादिति, न केवलं गुणान्तररूपापत्तिरहितस्य स्वात्माप्रतिलम्भ एव, किं तर्हि? मूलत एव सत्त्वमेवं—तथा प्रकाश इति न 5 स्यादित्यस्तित्वमेव निराक्रियते, अनियतत्वात्, यदि तत्स्वत एव नियतं ततो नास्ति तत्सत्त्वं वन्ध्यापुत्रवत्, न च तत्प्रकाशात्मकं पुरुषवदिति पूर्ववद्यथासंख्यं दृष्टान्तौ ।

इतर आह—

ननु प्रकाशात्मकत्वादेव प्रदीपवत् सत्त्वस्य सर्वतो नियतानियतप्रकाशस्य पूर्वोत्तरव्यक्त्यभिमुखतायां सति नियामके कुड्यादावग्नेरिव तमसा नियम्यत्वं तच्चानन्यथाप्रवृत्ततेति 10 दृष्टत्वाच्चानपह्नवनीयो भेदो नियम्य नियामकयोरित्यत्रोच्यते, यद्यनियतोऽसावसंस्तर्हि, अनियतत्वाद्वान्ध्येयवत् ।

नन्वित्यादि यावदनन्यथाप्रवृत्तता, नन्वित्यनुज्ञापने, प्रकाशात्मकत्वादेव प्रदीपवत् सत्त्वस्य सर्वतो नियतानियतप्रकाशस्य महदहङ्कारादिस्पर्शरूपादिपिण्डशिवकपूर्वोत्तरव्यक्त्यभिमुखतायां सत्यां प्रकाशनस्य सति नियामके कुड्यादौ अग्नेरिव—कुड्यादिनाऽऽवरणेन निरम्यत्वं नाव इव वा सर्वदि- 15 ग्गमनरोधिना लम्बनपाषाणेन गुरुणा च द्विधापि प्रदेशान्तरप्राप्तिरोधिना तमसा प्रकाशस्य दृष्टिनियम्यत्ववन्नियम्यत्वम्, तच्चानन्यथाप्रवृत्तता,—एवमेते प्रवर्त्तितव्ये नातोऽन्यथेति दृष्टत्वाच्चानपह्नव-

गुणान्तरापत्तिरहित एव, ततश्च तयोर्नियमानात्मकत्वे कस्यापि परिणामस्यासम्भवादन्यप्रकारेण व्यक्तिर्नैव भवेदिति तत् सत्त्वमेव न स्यात् प्रकाशः प्रकाश एव न स्यादिति भावः । कथं प्रकाशनं स्यादित्यत्राह—**शब्दो हीति**, कथं नियत एव प्रकाशत इत्यत्राह—**अन्यथेति** । सत्त्वांशे रजः प्रकाशांशे प्रवृत्तिर्दृष्टान्त इत्याह—**दृष्टान्ताविति** । दोषान्तरमप्यत्र दर्श- 20 यति—**न केवलमिति** । यथा प्रधानावस्थायामनियतत्वान्न सत्त्वं न प्रकाशते तथोत्तरकालमपि, एवं यथाऽग्निरनियमलब्धात्मा अनग्निरनग्निश्च न प्रकाशते एवं सत्त्वमपि अलब्धनियमोऽनियतत्वान्न प्रकाशेतेत्याशयेनाह **पूर्ववदिति** । ननु सत्त्वं प्रकाशकं स्वभावत एव, न तस्यान्येन प्रतिलम्भः तथा च तत् सर्वस्यैव सर्वदा प्रकाशकं भवेत् यदि नियामकेन केनचिन्न नियम्येत, तस्मान्नियममात्रकारी नियम इति न सत्त्वस्याभावो न वाऽप्रकाशात्मकत्वमित्याशङ्कते **नन्विति** । ननु नियतानियतवस्तु- प्रकाशात्मकं सत्त्वं भवेन्नाम, स्वयन्तर्वाक्रियतया स्वकार्ये प्रकाशने स्वकीयप्रवृत्तिजननायाशक्तं कथं सर्वं प्रकाशयेदित्यत्राह— 25 **महदहङ्कारादीति** रजसा स्वकार्यजननाय प्रवर्तितं हि तत्, अत एव महदहङ्कारादि पूर्वोत्तरवस्तुप्रकाशनेऽभिमुखमास्ते, तथा च सर्वं सकृदेव प्रकाशयेन्नियमकारिणोऽन्यस्याभावे इति भावः । अग्नेर्ज्वलनं प्रकाशो वा लघुभूतसत्त्वनिमित्तः, नावः तिर्यग्गमनस्वभाववायुसम्बन्धजन्यं सर्वदिग्गमनमपि लघुभूतसत्त्वनिमित्तम्, तत्र ज्वलनं गमनमपि प्रदेशान्तरप्राप्तिरूपं आवरणस्वभावेन कुड्यादिना गुरुस्वभावेन लम्बनपाषाणेन यथा प्रतिरुध्यते तथा गुरुवरणस्वभावेन तमसा सत्त्वस्य नियतानियतविषयप्रकाशनोन्मुखः प्रकाशो नियम्यत इत्याह—**कुड्यादिनेति** । सत्त्वरजसोस्तमसा नियम्यत्वञ्च सार्वत्रिकसार्वदिकप्रवृत्तिप्रति- 30 बन्धेन नियतविषये प्रवृत्तत्वमित्याह—**तच्चेति** । एते-सत्त्वरजसी । तथा च सत्त्वरजसोरग्निनावोरिव नियम्यत्वं तमसः कुड्यलम्बनपाषाणयोरिव नियामकत्वमत एव च नियम्यनियामकयोर्भेदो भिन्नलक्षणत्वादिति भावः । एवं प्रकाशनियमयोर्भेदे स्वयमनिय-

१ क. °थाप्रवृत्तता । २ सि. क. नियमत्वं । ३ सि. क. गुरुणैव ।

नीयो भेदो नियम्यनियामकयोः, तस्मादन्यो नियमः प्रकाशादित्यत्रोच्यते—यद्यनियतोऽसावसंस्ता --
यदि स्वयमेवानियतः प्रकाशोऽसंस्तसावनियतत्वाद्वान्ध्येयवत् ।

एवं हि कार्यं कारणेऽस्तीति घटते यदि तत्तत्र नियतमनन्यथा -त्तिकार्यमिति, तत्र सन्निधिवर्त्तेः सत्तार्थत्वात् सन्नियतो वर्त्तत इति ।

5 एवं हीत्यादि, एतस्यैव व्याख्यानमनिष्टापादनद्वारेण कार्यं कारणेऽस्तीति तद्दर्शनमेवमेव घटते यदि तत्तत्र नियतमिति, किमुक्तं भवति? अनन्यथावृत्तीत्युक्तं भवति यथा वर्तितव्यं तथैव वर्त्तते, नान्यस्वात्मनैव च वर्त्तते नान्येन केनचिद्वर्त्यते तत्रानन्यथावृत्तिरस्य तदिदमनन्यथावृत्ति कार्यं कारणे सदिति शक्यमभ्युपगन्तुम्, किं कारणं? तत्र सन्निधिवर्त्तेः सत्तार्थत्वात्—तत्र कारणे सन्निध्यर्थो वर्त्तिः सत्तार्थः सन्नियतो वर्त्तत इति, अस्तिभवतिपद्यतिविद्यतिवर्त्तयः सन्निपातषष्ठाः सत्तार्था इत्यत्र
10 वर्त्तेः सन्निधिभवनार्थवाचित्वात्, वर्त्तते नियतः सन्निहितोऽस्तीत्यर्थः ।

इतर आह—

न, आधिक्येन यतत्वादधिको यमो नियमः, तमोऽनुग्रहाद्यः स चानन्यथा-त्तिरूपता, तस्मात् सत्त्वं तमोऽनुगृहीतं तथाप्रकाशते न स्वत एवेत्येतद्यासत्, तमसोऽपि सत्त्ववत् पृथगपरिसमाप्तरूपत्वात्, तमोनियमनापेक्षप्रकाशात्मकसत्त्ववत्, तमसोऽपि हि स्वरूपव्यक्ति-
15 रसमाप्तरूपैव, तस्य तथाव्यक्तेः सत्त्वप्रकाशनप्रतिलभ्यत्वादिति तथाप्रकाशनं व्यक्तिः प्रकाशात्मकसत्त्वानुग्रहाद्भवति, अनियतश्च कथमन्यनियमने प्रवर्त्तेतेत्यादिः यावच्च परिणामस्य तत्र -[illegible]दिति ।

(नेति) न आधिक्येन यतत्वात्, निशब्दस्याधिकार्थत्वादधिको यमो नियमः सोऽत्र विवक्षितो न सन्निधिमात्रवृत्तिः, कोऽसावधिको यमः? तमोऽनुग्रहाद्यः, स चानन्यथावृत्तिरूपता,

---

20 तत्वाद्वन्ध्यापुत्रवत् प्रकाशोऽसन्नेव स्यात् अपरिणामित्वादित्युत्तरयति-यदीति, प्रकाशस्य स्वयमनियतत्वे तमसः सन्निधानादपि नियतत्वासम्भवः प्रधानावस्थायामिवेति भावः । ननु प्रकाशो यदि स्वयमनियतस्तमसा नियतो भवति तत्र तदसत उद्भवप्रसङ्गादसत्कार्यवादः स्यात्र चैषस्तेऽभिमतः, तस्मात्तत्र तस्य सद्भाव आवश्यक इत्याह-एवं हीति । कारणं कार्यस्य नियतत्वमित्यस्य कोऽभिप्राय इत्यत्राह-किमुक्तं भवतीति कारणं कार्येण येन प्रकारेण वर्तितव्यं तेनैव प्रकारेण तत्र तस्य वर्तनमेवानन्यथावृत्तिरूपं तत्र नियतत्वमिति भावः । केन प्रकारेण वर्तितव्यमित्यत्राह-नान्येति, स्वस्वात्मनैव वर्तितव्यं नान्यस्वा-
25 त्मना, स्वनैव वर्त्यते कार्यं नान्येन केनचित्तमआदिना, यदि नियमोऽन्यस्वात्मा सन्नन्येनान्यत्र वर्त्यते तर्हि न सत्कार्यवादः सेत्स्यतीति भावः । तथा च प्रकाशस्वरूपान्तर्गत एव नियम इति वृत्त्यर्थवर्णनद्वारेणाह-तत्रेति । फलितार्थमाह-वर्त्तत इति । ननूक्तरीत्या वृत्तिनियमयोः पर्यायतयाऽविशेषेण साम्यावस्थायां सन्निधिमात्रेण वृत्त्यपि तमो न नियमकारि, तथा च न प्रकाशनियमः न वाऽसत्कार्यवादः वृत्तिमात्रेण कारणे कार्यस्य सत्त्वात् नियतप्रकाशस्तु आधिक्येन यतत्वे एव, तादृशो नियमश्च तमोऽनुग्रहादेवेति सत्त्वं प्रकाशात्मापि तमोऽनुगृहीतमेव तथाप्रकाशत इत्याशङ्कते-आधिक्येनेति तमसाऽऽवृतशक्ति रजः
30 सत्त्वं क्वचिदेव महदादिकार्यकरणे प्रवर्तयति यद्वा रजःप्रवर्तितसर्वकार्यप्रकाशनशक्ति सत्त्वस्य तम आवृणोति, अत एव किञ्चिदेव प्रकाशयति, एवमेते प्रवर्तितव्ये नातोऽन्ययेति तमसोऽनन्यथावृत्तिरूपता नियम इत्ययमेवानुग्रह इति भावः ।

---

१ सि. क. °व्यक्ति० ।

तमसाऽनुगृहीतस्य सत्त्वस्य शब्दादिरूपेण रूपान्तरनिवृत्त्याऽनन्यथावृत्तिरूपता, शब्दोऽयं न रसो न रूपं नाकाशादि वेति, तस्मात् सत्त्वं तमोऽनुगृहीतं तथाप्रकाशते न स्वत एव, तस्मादन्यः प्रकाशाभियम इत्येतन्नासत्, तमसोऽपि सत्त्ववत् पृथगपरिसमाप्तरूपत्वात्, सत्त्वप्रकाशनियमने स्वयं सत्त्वप्रकाशनाकांक्षित्वात् तमस्त्वन्मतेनापरिसमाप्तमेव, तमोनियमनापेक्षप्रकाशात्मकसत्त्ववत्, तद्व्याख्यानं तमसोऽपि हीत्यादि, तमो हि सत्त्वप्रकाशरूपव्यक्तिं सत्त्वप्रकाशनप्रतिलब्धतथानियतेति कुर्यान्नाप्रकाशित- 5
तथानियतिव्यक्तिं, किं कारणं? तस्य तथाव्यक्तेः सत्त्वप्रकाशनप्रतिलभ्यत्वात्, यस्मात्तथाप्रकाशनं व्यक्तिरिति, इतिशब्दस्य हेत्वर्थत्वात्, नियमनयोग्यतया हि तमसः प्रकाशनं सत्त्वस्य व्यक्तिः, सा च प्रकाशात्मकसत्त्वानुग्रहाद्भवति, सत्त्वाप्रकाशिततमोनियमनापरिसमाप्तरूपत्वं प्रकाशाननुग्रहे सत्य-
नियतत्वात्, न च स्वयमनियतं नियमयितुमन्यं समर्थं वन्ध्यापुत्रवदित्यत आह–अनियतश्च कथमन्य-
नियमने प्रवर्त्तेतेत्यादिरत उत्तरः प्रागतीतग्रन्थातिदेश एवन्तु नानयोरित्यादिपूर्वोत्तरपक्षप्रपञ्चात्मको 10
यावन्न परिणामस्य तत्रैवोक्तत्वादिति, तद्यथा–एवन्तु नानयोरितरेतरानुग्राहिता, उत्थाप्यसाहायक-
शक्तित्वाद्वाताहतनौद्वयवद् ग्लानशिबिकावाहकवदसम्पूर्णशक्तिता वाऽप्रकर्षः–अनियत इत्यर्थः, इति कार-
णतैव न स्यादसम्पूर्णशक्तित्वादुपहतबीजवत्, असदकरणादिभ्यश्चान्यतो न तत्स्वरूपप्रकर्षः, यदा च
सुदूरमपि गत्वा प्रागवृत्तेरसत्कार्यत्वं मा भूदिति प्रकर्षः परिणामादेव तदा परिणामस्यान्यत्र वृत्तस्या-
परिणामकत्वात् युवत्वमात्रवृत्तित्वमेव नान्यत्र वृत्तोऽन्यदन्यथा करोति परिणामित्वात्, एवं तर्हि 15
पूर्ववदुदाहरणादेवाप्रवृत्त्यात्मकत्वं सुखस्य, अनियतरूपेणात्मप्रवृत्त्यात्मकत्वमित्यर्थः, को हि विशेषस्त-
मोनियमनादृते, क्षीरदधिपरिणामकालवत् पूर्वं न प्रवृत्तं पश्चात्तु प्रवृत्तमिति, न[6], परिणामस्य तत्रैवोक्त

एवमेते प्रवर्तितव्ये नातोऽन्यथेति पूर्वोदितमनन्यथावृत्तिरूपत्वं निदर्शयति–**शब्दोऽयमिति**। तमः नियमनेऽपरिसमाप्तरूपम्, तत्र स्वयं सत्त्वप्रकाशनाकांक्षित्वात्, तमोनियमनापेक्षप्रकाशात्मकसत्त्ववदित्यनुमानेन स्वतो नियामकत्वं तमसो न सम्भवति साम्यावस्थायामिवेत्युत्तरयति–**तमसोऽपीति** पृथक्-इतरानपेक्षस्य, स्वत इति यावत्, सत्त्वप्रकाशनियमने–सत्त्वस्य प्रकाशं 20
नियमयितुमित्यर्थः। आवरणमेव यदि तमसः कार्यं तर्हि सर्वं सत्त्वस्य प्रकाशं रजसो वा प्रवृत्तिमावृणुयान्न चैवम्, तस्मात्सत्त्वेन किञ्चिदावरणमेव प्रकाशनेन दूरीकृतमिति तमः सत्त्वप्रकाशनापेक्षतथानियमनमिति अपरिसमाप्तरूपमेवेति व्याख्याति–**तमो हीति**।
नियतिः–नियमः। **सत्त्वेति** सत्त्वेनाप्रकाशितस्य तमसोऽन्यनियमनेऽपरिसमाप्तरूपतैवेत्यर्थः। प्रकाशनप्रवर्तननियमनादौ स्वयमसमर्थानां सत्त्वादीनां परानुग्रहेणापि प्रकाशनादिसामर्थ्यं नास्तीत्याह–**एवन्त्विति**। व्याख्यातपूर्व एवायं ग्रन्थः, प्रकर्षश्चात्र नियमस्वरूपो बोद्धव्यस्तथा चाप्रकर्ष इत्यस्यानियत इत्यर्थ इत्याह–**अनियत इत्यर्थ इति**। **अनियतरूपेणेति** न च तत्प्रकाशात्मकं- 25
पुरुषवत् पूर्ववत् अनभिप्रकाशवद्वेति ग्रन्थेन पूर्ववदिति दृष्टान्त उपन्यस्तस्त्वया, तस्मादेव च सत्त्वस्य पूर्वोत्तरावस्थाऽभ्युपगता भवति, सत्त्वस्य पूर्वावस्थातः पाश्चात्यावस्थाया वैशिष्ट्यं तमोनियमनादेव भवति, तस्मात् सत्त्वं न स्वतो नियतप्रवृत्तिकमपि त्वनियतरूपेणात्मप्रवृत्त्यात्मकमिति शङ्कितुरभिप्रायः। नहि सत्त्वं सदैव प्रकाशात्मकं वर्तते, अपरिणामित्वेन खपुष्पवदभावप्रसङ्गात्, परिणामस्वभावा हि गुणा नापरिणम्य क्षणमप्यवतिष्ठन्त इति त्वयाप्यभ्युपगतत्वात्, तस्मात् प्रकाशस्वात्मैव प्रवृत्तिरूपतया नियमरूपतया वा परिणमत इति पूर्वमेवोक्तत्वात् न तस्य प्रकर्षोऽन्यस्माद्भवतीत्युत्तरयति **परिणामस्येति**। प्रकाशप्रवृत्त्योर- 30
नन्यतापादनग्रन्थस्य कश्चिदंशोऽत्र मूलकृताऽतिदिष्टः कश्चिदंशः कंठत उक्त इत्यत्र कारणमुपन्यस्यति–**एष ग्रन्थ इति**,

१ सि. क. तमसो। २ सि. क. नियतिं। ३ सि. क. व्यक्तिं। ४ सि. क. प्रवर्त्तेत इ०। ५ सि. क. तमःप्रवर्त्तना०। ६ सि. क. नेतिपदं नास्ति।

त्वादित्येष ग्रन्थः समानोऽत्रापि, अत उत्तरस्तु ग्रन्थोऽर्थतः समानगमनिकोऽपि विशिष्य लिख्यते भावनार्थं विशेषेणातुल्यत्वात्।

तद्यथा—

प्रकाशात्मैव तु नियमः, इतरथा स प्रकाशो न सः, तथाऽनियतत्वात्तथाऽभूतत्वात् 5 घटपुरुषवत्, य एव नियमः स एव प्रकाशः, तथानियतत्वात्तथाप्रवृत्तत्वात् घटघटस्वात्मवत्, नियम्यनियामकत्वान्नौलम्बनपाषाणवन्नेति चेन्न, तदात्मन एव तथानियतत्वात्, सन्निधिमात्रात् पूर्ववदनियमनात्।

( प्रकाशात्मैवेति ) प्रकाशात्मैव तु नियम इतरथा सः प्रकाशो न सः, तथाऽनियतत्वात् तथाऽभूतत्वादिति अस्यैवार्थकथनं प्राक्तनव्याख्यानवत्, रूपादि[illegible]तार्थप्रकाशनात् प्रकाशः स्यान्ना-10 न्यथेति त्वन्मतेन घटपुरुषवत्, यत्तथाऽनियतं तन्न प्रकाशो यथा घटः पुरुषे न नियतो घटे च पुरुषः, यो यः प्रकाशः स तथानियत एव यथा रूपरसादि लोकप्रतीतोदाहरणमेव घटपटवद्वेति, एवन्तावत् प्रकाशस्य रूपादिव्यावृत्तिरूपं नियममन्तरेण प्रकाशनाभावप्रदर्शनान्नियमात्मकत्वमुक्तम्, इदानीं य एव नियमः स एव प्रकाश इति तयोरनन्यत्वापादनम्, तथानियतत्वात्—तेन प्रकारेण नियतत्वात्, रूपप्रकाशरूपेण रसाद्यात्मनिवृत्त्या प्रकाशस्य नियतत्वात्, तथाप्रवृत्तत्वादिति अस्यैवार्थकथनम्, वृत्ति-15 नियतिव्यक्तीनामैकार्थ्यात्, घटघटस्वात्मवत्, यत्तथानियतं यत्तथावृत्तं यत्तथाव्यक्तं तदेव तत्, यथा घट एव घटस्वात्मा, यत्पुनस्तदेव न भवति न तत्तथानियतं तथावृत्तं तथाव्यक्तं वा यथा पुरुषः, नियम्यनियामकत्वान्नौलम्बनपाषाणवन्न—यथा नौः प्रवर्त्तमाना नियम्यते लम्बनपाषाणेन नियामकेन, तयोश्चान्यत्वमेवं सत्त्वतमसोरित्येतच्च न, तदात्मन एव तथानियतत्वात्—तस्यैवात्मा स एव वाऽऽत्मा तदात्मा तस्यैव प्रकाशात्मनो नियतत्वात्, तस्मादेव तेनैव वाऽऽत्मना प्रकाशात्मन एव 20 नियतत्वा[त् सत्त्व]तमसोर्भेदाभावान्नौलम्बनपाषाणवद्भेदसाधर्म्याभावादयुक्तो दृष्टान्त इति वक्ष्यते,

अत्रापि प्रकाशनियमयोरनन्यताऽऽपादनेऽपीत्यर्थः। प्रकाशात्मकत्वं नियमस्य साधयति-**प्रकाशात्मैवेति**, यदि प्रकाशः प्रकाशात्मना नियतो न स्यात्, अन्यात्मनापि स्यात्तर्हि स प्रकाश एव न स्यात्, न चैवम्, तस्मात् प्रकाशात्मना नियतत्वात् प्रकाशात्मैव नियमः, प्रकाशो हि स्वस्वरूपे नियतमर्थं प्रकाशयन् प्रकाशः स्यान्नान्यथेति भावः, दृष्टान्ते व्याप्तिं ग्राहयति-**यदिति**। व्यतिरेकव्याप्तिमाह-**यो य इति**। व्यावृत्तिरेव नियमः, वस्तु चानुवृत्तिव्यावृत्तिरूपमतो नियमात्मकः प्रकाश 25 इत्याह-**एवन्तावदिति**। प्रकाशात्मा नियमो भवतु नियमात्मा तु न प्रकाश इत्याशङ्कायामाह-**इदानीमिति** प्रकाशो हि रूपं रूपस्वरूपेण रसादिव्यावृत्तिरूपेण नियतं प्रकाशयतीति नियम एव प्रकाश इत्याह-**रूपेति**। प्रवृत्तिनियमप्रकाशानां पर्यायत्वमाह-**वृत्तीति**, वृत्तिः-प्रवृत्तिः, नियतिः-नियमः, व्यक्तिः-प्रकाशः। दृष्टान्ते हेतुं सङ्गमयति-**यत्तथेति**। नियम्यनियामकयोर्भेदव्याप्यत्वमित्यभिमानेन परः शङ्कते-**नियम्येति**। दृष्टान्तदार्ष्टान्तिकयोरतुल्यताभिप्रायेणोत्तरयति-**तदात्मन एवेति**-प्रकाशात्मनः सत्त्वस्यैव प्रकाशस्यैव वा तेन प्रकारेण नियतत्वादित्यर्थः, प्रकाशस्यैव नियमरूपतया परिणमनात् तयोर्न भेद इति, 30 नौलम्बनपाषाणसाधर्म्यं नास्ति तयोर्भेदस्य प्रकारान्तरेण सिद्धत्वात् प्रकाशनियमयोस्तु नान्यथा भेदसिद्धिरिति वैषम्यम्, सत्त्वतमसोश्च भेदे प्रधानावस्थायामुपदर्शितसन्निधानमपि तमो यथा न नियामकं तथेदानीमपीति नियामकं न भवेत्, किन्तु निय-

१ सि. क. रूपरसप्रक०। २ सि. क. पाषाणवत्।

तदाख्यातार्थमाह—सन्निधिमात्रात् पूर्ववदनियमनात्—इह तमःसन्निहितमपि प्राक् सन्निधिमात्रादेवा-नियामकं स्वयमनियतत्वात् सत्त्वाधीननियतित्वात् किन्तु नियम्यमनियमनात् ।

कस्तर्हि नियामकः ? उच्यते—

**य एवासौ सत्त्वस्यात्मा तथानियम्यव्यक्तिस्वरूपः प्रकाशः स एव नियामकः, तथानियमविधेः, इतरकर्तृककुम्भकारादिवत्, तमोनियमात्मरूपापादनात् ततस्त्वदभिमतनियामकत्वविपर्ययापत्तेः, तमसो नियम्यत्वात्, सत्त्वस्यैव नियामकत्वात् इतरतथात्मरूपापादनात्तमोवत्, तमोऽपि हि त्वन्मतेनेतरयोस्तथास्वरूपापादनादृते किमन्यत् करोति ? एवञ्च नौवत्तम एवाऽऽपद्यते सत्त्वमेव नियामकम्, तथाप्रकाशेन नियम्यत्वात् ।** 5

( **य एवेति** ) य एवासौ सत्त्वस्यात्मा प्रकाशः स नियामकः, कथमिति चेदुच्यते यस्मात्तथा-नियम्यव्यक्तिस्वरूपस्तेन प्रकारेण शब्दादिनियतत्वेन नियम्यव्यञ्जनस्वरूपः स एव—प्रकाश एव, कुतः ? 10 तथानियमविधेः—तेन हि प्रकारेण नियमस्य विधिः शब्दस्वरूपेण प्रकाशमानस्य शब्दस्य रूपाद्यनात्मना नियता प्रकाशमानता नियमविधिः, तस्माद्धेतोः प्रकाश एव नियमः, दृष्टान्त इतरकर्तृककुम्भकारादिवत्—यथा मृद्द्रव्यं पिण्डशिवकादिभावेनाभिव्यज्यमानं तथा तथा प्रकाशयता कर्त्रा कुम्भकारेण नियमकारिणा निर्वर्त्यते नियम्यते नियते रूपेऽवस्थाप्यते नाप्रकाशमानमप्रवर्तमानञ्च, सत्कार्यवादाभ्यु-पगमादसदकरणादिहेतुसामर्थ्याच्च, तस्मात् स कर्त्ता प्रकाशस्थानीयो नियामकः पिण्डशिवकादेर्नियमस्य, 15 तथा प्रकाशस्तमसः, कुतः ? तमोनियमात्मरूपापादनात्, सत्त्वेनैव हि तथा तथा प्रकाशमानेन तमसो नियमरूपमापाद्यते मृद्द्रव्यवत् तथाप्रकाशयता कर्त्रा कुम्भकारेण तदात्मलाभहेतुत्वात्, ततस्त्वदभिमतनियामकत्वविपर्ययापत्तिः तमसो नियम्यत्वात् सत्त्वाधीननियतित्वात् सत्त्वस्यैव नियामकत्वात् पक्षधर्मविपरीतता, सत्त्वापाद्यनियमात्मरूपता प्रसक्ता, सत्त्वाप्रकाशिते नियमाभावात्, सत्त्वापादितं हि तमसो नियमात्मरूपं तस्मात्तमोनियमात्मरूपापादनात् सत्त्वं नियामकमितरतथात्मरू- 20

म्यमेव स्यात्, सत्त्वेनोद्बुद्धस्यैव तमसः प्रतिलब्धनियतित्वात् तस्मात् प्रकाशात्मन एव नियतत्वमित्याह—**इहेति** । यथा सत्त्वस्यात्मा प्रकाशः शब्दादिनिर्वर्त्यप्रकारेण प्रवर्त्यव्यक्तिस्वरूपः प्रवर्तकस्तथा स एव प्रकाशः शब्दादिनियतत्वेन नियम्यव्यक्तिस्वरूपो नियामक इत्याह—**य एवासाविति** । प्रकाशेन प्रकाशमानस्यैव शब्दस्य शब्दरूपेण प्रकाशमानता, न तु रूपाद्यात्मनेति तमसा नियम्यते, प्रकाशाप्रकाशिते तमसाऽनियमनादित्याशयेनाह—**तथा नियमविधेरिति** । दृष्टान्तं घटयति—**यथेति** पिण्डशिवकादि-प्रकाशनशीलं मृद्द्रव्यं तत्तद्रूपेण प्रकाशयन् कुम्भकारो यथा प्रतिनियतस्वरूपेण नियमयति न त्वप्रकाशमानं न वाऽप्रवर्तमानं निय- 25 मयति तथेति भावः, इतरत्-मृद्द्रव्यादि कर्तृ-प्रकाशयितृ प्रवर्तयितृ यस्य पिण्डादेः, तस्य कुम्भकार इवेत्यक्षरार्थः । अप्रकाश-मानाप्रवर्तमानयोरनियम्यत्वे हेतुमाह—**सत्कार्येति** । तमो हि स्वयमप्रकाशरूपतयाऽप्रवर्तकतया च सत्त्वधर्मं प्रकाशं रजोधर्मं प्रवृत्तिञ्चाश्रित्य नियमं करोतीति तस्य नियमधर्मता सत्त्वरजोऽधीनेत्याह—**तमोनियमेति**, एवञ्च तमस एव नियम्यत्वं नियामकत्वञ्च सत्त्वस्य रजसो वेति त्वदभिमतविपरीततापसक्त्या तमः सत्त्वादिभिन्नम्, नियम्यनियामकत्वात्, नौलम्बनपाषाण-वदिति भेदसाधकहेतोरपक्षधर्मतेति भावः । सत्त्वस्य नियामकत्वमेव द्रढयति—**सत्त्वं नियामकमिति**, इतरस्य तमसः, तथा- 30 त्मरूपापादनात्—नियमात्मरूपापादनात् तमोगुणोऽपि सत्त्वरजःकार्यभूते प्रकाशप्रवृत्ती सहकारित्वेनोपादाय स्वकार्येण नियमेन

१ सि. नियमविधिनियमः ।

पापादनात्तमोवत्, तमोऽपि हीत्यादि, तमसोऽपि हि नियामकत्वमेवमेव[1] युज्यते, [तमोऽपि] त्वन्मते-[2]
न हीतरयोः सत्त्वरजसोरात्मस्वरूपापादनं कुर्यादन्यथा इतरस्वरूपापादनादृते तमः किमन्यत् करोति ?
तयोर्हि[3] सत्त्वरजसोरात्मरूपतापादनमेव कुर्वन्नियामकमित्युच्यते, यथा तमः पूर्वं प्रकाशप्रवृत्त्या-
त्मभ्यामनियतयोः सत्त्वरजसोस्तथानियमनान्नियामकमेवं सत्त्वमपि इतरतथा नियमात्मरूपापादनान्नि-
5 यामकमस्तु को दोषः ? एवञ्च नौवत्तम एवापद्यते—एवञ्च सत्त्वस्यैवोक्तविधिना नियामकत्वान्नौस्थानीयं
नियम्यं तम एव स्यात्, न नियामकं, लम्बनपाषाणस्थानीयं सत्त्वमेव नियामकं न नियम्यं स्यात्, किं
कारणं ? तथाप्रकाशेन नियम्यत्वात्, यस्मात्तेनोक्तप्रकारेण प्रकाशेन नियम्यत्वं मोहस्य, तस्मात्तमसः
सत्त्वेन नियम्यत्वादित्यर्थः, तस्मात् प्रकाशाप्रकाशिते तमसो नियत्यभावात्तमसः प्रकाशेन तथानियम्य-
त्वात्तदात्मन एव तथानियतत्वादिति साधूक्तम्, एवं तावत्सत्त्वतमसोर्भेदमभ्युपेत्य विपर्ययापत्त्या
10 नियम्यनियामकत्वादित्यस्य हेतोरसिद्धिरुक्ता ।

नैव वा सत्त्वव्यतिरिक्तं तमोऽभ्युपेम इत्यत आह—

**तथा[प्र]काशानतिरिक्ततत्त्वरूपत्वाद्वा नियमस्य कुतोऽनौ[illegible]णभेदसाधर्म्यम् ? भेदे सति लम्बनपाषाणो नौविलक्षणो नावं प्रवर्त्तमानां निरुणद्धीति युज्यते, न तद्रूपत्वमत-[द्वृ]त्तित्वादिति चेन्न तमसः स्वनियमवत्तदात्मन एव नियतत्वात्, अन्यथा सत्त्वं न स्यात्
15 प्रकाशो वेत्युक्तत्वात्, तथाऽन्यथा तु नियत्यभावात् प्रकाश एव नियमः ।**

(**तथेति**) तथाप्रकाशानतिरिक्ततत्त्वरूपत्वाद्वा नियमस्य—शब्दप्रकारेण रूपादिप्रकारेण च यः
प्रकाशस्तदनतिरिक्ततत्त्वरूपत्वान्नियमस्याभिव्यक्तेः कुतोऽनौलम्बनपाषाणभेदसाधर्म्यम् ?—न नौरनौः,
कः ? लम्बनपाषाणस्तस्य नावो भेदस्तत्साधर्म्यमनौलम्बनपाषाणभेदसाधर्म्यं तत्कुतः सत्त्वतमसोर्भेद-
साधर्म्ये ? भेदाभावादित्यर्थः, ततो दृष्टान्तदार्ष्टान्तिकयोः साधर्म्याभावादयुक्तमिति वैधर्म्यं दर्शयति—
20 भेदे सति लम्बनपाषाणो नौविलक्षणो नावं प्रवर्त्तमानां निरुणद्धीति युज्यते, न तु तथाप्रकाशातिरिक्त-
तत्त्वरूपो मोहो नियामकोऽस्त्येतयोः, शब्दाद्याविर्भावमात्रफलत्वादतो न युज्यते, न तद्रूपत्वमतद्वृत्तित्वा-
दिति चेत्—स्यान्मतं प्रकाशनमात्रं सत्त्वस्य वृत्तिर्नियमनन्तु तमसस्तस्मात्सत्त्वस्यानियमादतद्वृत्तित्वाद्रू-

सत्त्वरजसोः साहाय्यमाचरतीति सत्त्वरजसोस्तदात्मरूपापादनमेव करोति नान्यत् किञ्चिदित्येवं सत्त्वमपि स्वधर्मेण प्रकाशेन
तमसो नियमात्मरूपमापादयतीति तदेव नियामकमित्याह—**तमोऽपीति** । उपसंहरति—**तस्मादिति** । ननु कार्यकारणयोर-
25 भेदात् शब्दादिरूपस्येतरानात्मतया नियतस्य सत्त्वप्रकाशस्य सत्त्वात्मतया सत्त्वमेव प्रकाशरूपं प्रवृत्तिरूपं नियमरूपञ्च, तथा च
सति य एव सत्त्वस्यात्मा प्रकाशः सैव प्रवृत्तिः स एव च नियम इति नियमः प्रकाशानतिरिक्ततत्त्वः, शब्दादेः सत्त्वप्रवृत्तिरूपत्वात्
सत्त्वप्रकाशरूपत्वात् रूपाद्यनात्मना नियतत्वेन नियमरूपत्वाच्च, तस्मान्न सत्त्वतमसोरनौलम्बनपाषाणभेदसाधर्म्यमस्ति, अभिन्न-
त्वादित्याह—**तथेति** । **भेदे सतीति**, नौलम्बनपाषाणयोर्भेदे सतीत्यर्थः । त्रिगुणानां शब्दाद्याविर्भावलक्षणैककार्यकारित्वादपि
भेदासिद्धेर्न प्रकाशादितो मोहोऽन्यो नियामको येनानौलम्बनपाषाणभेदसाधर्म्यं युज्येतेत्याह—**न त्विति** । सत्त्वं न नियमरूपम्
30 सत्त्वान्यवृत्तित्वात्, सत्त्वस्य हि प्रकाश एव वृत्तिः, तमसो नियम एव वृत्तिः, न ह्यन्यव्यापारोऽन्यस्येत्याशङ्कते—**स्यान्मतमिति** ।

१ सि. क. °त्वमेव यु० । २ सि. क. त्वन्मते यदीतर० । ३ सि. क. °रात्मरूपापादनमेवात्मरूपतापादनं नि° ।

त्तिभेदाच्च न नियमनं सत्त्वस्य तमसश्च न प्रकाशनमित्यस्ति भेद इत्येतच्च न, तमसः स्वनियमवत्तदात्मन एव नियतत्वात्—यथा तमसः स्वो नियमः प्रागवृत्तः पश्चात् स्वत एव तमःस्वात्मनः नियतस्तमसा विनाऽभूतत्वात्तदत्यागेन वृत्तेस्तदधीनत्वात्तद्रूप एव तदात्मन एव नियतत्वात्तथा सत्त्वप्रकाशवृत्त्यनतिरिक्ततत्त्वरूपस्तमोनियमः सत्त्वाव्यतिरिक्तः प्रकाशाधीनत्वात्तदविनाभावात्तदपरित्यागेन प्रवृत्तेस्तदात्मन एव नियतत्वादिति । किञ्चान्यत्—अन्यथा सत्त्वमित्यादि—यदि स्वत एव नियमो न स्यात् ततोऽ- 5 न्यथा सत्त्वं सत्त्वमेव प्रकाशो वा प्रकाश एव न स्यात्तथाऽनियतत्वाद्रजोवत् प्रवृत्तिवत्, मूलत एव तथा प्रकाश इति न स्यादनियतत्वाद्वन्ध्यापुत्रवत् पुरुषवदित्युक्तत्वादिति, तथाऽन्यथा तु नियत्यभावात्—प्रकाशाप्रकाशिते तमसो नियत्यभावादनियतस्य वाऽभावात् प्रकाश एव नियम इति । स्यान्मतं प्रकर्षेण काशनं प्रकाशनमित्यादि यावत् प्रवृत्तिवदिति प्रासङ्गिकं तदेव चोद्यं तत्रोत्तरमपि । तत्रापि सत्त्वस्यापि तमोवदपरिसमाप्तरूपत्वादित्याद्यक्षरविपर्यासेन यथायोगाक्षरोपन्यासं यावदुत्थाप्यसाहाय- 10 कशक्तित्वाद्वाताहतनौद्वयवद् ग्लानशिबिकावाहकवत् यावच्चोपहतवीजवदिति वाच्यम्, तस्मादिदं व्याख्यातार्थं नियामकाभावस्य च पर्याप्तत्वेनोक्तत्वात् ।

**एवञ्चैकैकविनिद्रावस्थापुरुषत्ववदित्यादि यावद्भङ्गचक्रावर्त्तनं प्रवृत्तिस्थाने नियमतश्च, पुनश्च नियमस्थाने वा त्रीण्यपीति पुरुषावस्थावद्भङ्गचक्रावर्त्तनं यावत्सुखादनन्यद्दुःखमिती-**

यया युक्त्या तमोनियमरूपं तयैव प्रकाश एव नियमरूप इत्याह-**तमस इति** तमसो हि कार्यं नियमः, स तु कार्यत्वादेव 15 पूर्वमप्रवृत्तः, प्रधानावस्थायां हि अप्रवृत्तसमा इष्यन्ते वैषम्यावस्थायाम् तमः स्वात्मनैव, न त्वन्येन भवन् तमोव्यतिरेकेणाभवन् तमसोऽन्यत्रावृत्तेस्तमोऽधीनत्वात्तमोरूप एव नियम उच्यते तथैव सत्त्वधर्मप्रकाशात्मैव नियमः तमसः स्वयमप्रकाशरूपतया सत्त्वधर्मं प्रकाशमाश्रित्य तेन नियमनात् प्रकाशाधीनत्वात् प्रकाशं विनाऽभावात् प्रकाशपरित्यागेनावृत्तेः प्रकाशात्मन एव नियतत्वादिति भावः । प्रकाशनियमयोर्भेदे तु सत्त्वस्य सत्त्वतया प्रकाशस्य प्रकाशतया प्रत्ययव्यपदेशौ न स्याताम्, तयोरन्यानात्मतया नियतत्वाभावात्, सत्त्वात्मना प्रकाशात्मना चानियतत्वादेव हि रजः प्रवृत्तिर्वा सत्त्वं प्रकाशो वा न भवति, सत्त्व- 20 प्रकाशयोश्च स्वतोऽनियतत्वेऽन्येनापि नियतत्वासम्भवात् गुणान्तरापत्तिलक्षणपरिणामासम्भवात् स्वात्मप्रतिलम्भ एव न स्यात्तथा च कथं सत्त्वं सत्त्वं भवेत्, प्रकाशलक्षणं हि सत्त्वम्, तदप्रतिलम्भे च न तल्लक्षणं सत्त्वं स्यात्, प्रकाशश्च कथं प्रकाशः स्वात्मलाभाभावादित्याशयेनाह-**अन्यथेति** । भिन्नात्मकतायामित्यर्थः । न केवलं सत्त्वं सत्त्वमेव प्रकाशः प्रकाश एव न स्यादिति लक्षणाभाव एव दोषोऽपि तु तयोरसत्त्वमेव, सत्त्वादेः क्षणमपि परिणामशून्यतयाऽवस्थानासम्भवादित्याशयेनाह-**मूलत एवेति** । सत्त्वस्य प्रकाशात्मनाऽनियतत्वे च सत्त्वेन तमसोऽप्रकाशनान्नियमलक्षणं तमो न भवेत्, गुणानामन्योन्याश्रयवृत्तितया सत्त्वध- 25 र्मप्रकाशाश्रयेणैव नियमकारित्वात्तदभावे तदभाव एव स्यात्, तस्मात् प्रकाशात्मैव नियमोऽभ्युपेयः इत्याह-**तथाऽन्यथा त्विति** । अथ सामान्यतः सत्त्वादौ काशनवर्तनयमनानां सद्भावात् प्रागुपसर्गयोगप्रकृष्टताया एव रजआद्यनुग्रहसम्पाद्यत्वेन नासत्कार्यवादापत्तिर्न वा सत्त्वप्रकाशादेरभावप्रसङ्ग इत्याशङ्क्य रजआदीनामनुग्राहकत्वायोगस्य समर्थितत्वात्तद्दोषतादवस्थ्यमेवेत्युक्तार्थं स्मारयति-**स्यान्मतमित्यादिना** एवञ्च नियामकत्वं तमसो न सम्भवतीति साधनम् । अधुना यथा पुरुषः चतुरवस्थास्वरूपोपवर्णनद्वारेणैव निरूपणादवस्थात्मक एव, तत्रापि विशेषेणात्यन्तिकनिद्राविगमरूपनिरूप्यत्वाद्विनिद्रावस्थैव सः, 30 तथा त्रिगुणस्वरूपोपवर्णनद्वारेणैव निरूपणात्त्रिगुणात्मकमेव प्रधानम्, तत्रापि नियमापत्तिरूपनिरूप्यत्वान्नियमस्वात्मवन्नियम एव प्रधानमिति साधनाय तद्ग्रन्थमेवात्रातिदिशति-**एवञ्चेति** । तदेवं गुणस्वरूपत्वं प्रधानस्योक्त्वेदानीं प्रधानस्वात्मत्वं गुणानामित्यभ्युपगमेऽगुणत्वात् प्रधानस्याभावः भावे वा गुणानामैक्यमित्यादिरूपेण पूर्व एव ग्रन्थोऽत्रापि भाव्य इत्याह

१ सि. क. प्रवर्त्तमान० । २ सि. क. प्रवृत्त० । ३ क. तत्स्वरूपः । ४ सि. क. प्रवृत्त° । ५ सि. क. नियत ।

यद्दूरम्, अत्र तु विशेषः [illegible]खादनन्य एव मोहः, अनात्मत्वेऽशोषाद्यात्मकत्वात्, सुखस्वात्मवदित्यादिसाक्षेपपरि[illegible]ारं पूर्ववत्।

(एवश्चेति) एवश्चैकैकविनिद्रावस्थापुरुषत्ववदित्यादि यावद्भङ्गचक्रावर्त्तनमिति प्रागुक्तं भङ्गचक्रक्रममावर्त्य व्याख्येयमिति तदेवातिदिशति समानत्वान्, तत्र तु प्रवृत्तिरेव प्रधानं प्रवृत्त्यापत्तिरूपनिरूप्यत्वात् प्रवृत्तिस्वात्मवदिति प्रवृत्तिमात्रत्वे प्रधानभङ्गचक्रमावर्त्तितम्, इह तु प्रवृत्तिस्थाने नियमं कृत्वा प्रधानस्थाने प्रधानमेव च कृत्वा भङ्गचक्रावर्त्तनं तद्वदेव कार्यम्, पुनश्च नियमस्वात्मैव वा त्रीण्यपीति पुरुषावस्थावद्भङ्गचक्रावर्त्तनं द्वितीयं लिखितं यथा तथाऽत्र प्रवृत्तित्रैगुण्यवन्नियमत्रैगुण्यं लिखितं द्रष्टव्यमिति, भङ्गग्रन्थपरिवृत्तिपरिमाणमप्याह—यावत् सुखादनन्यदुःखमितीयद्दूरम्, अत्र तु विशेषः सुखादनन्यो मोह इति प्रतिज्ञा, हेतुरनात्मत्वेऽशोषाद्यात्मकत्वादिति, दृष्टान्तः सुखस्वात्मवदिति, इत्यादि साक्षेपपरिहारं पूर्ववदिति, अवधारणेन चोक्तसाधनान्तरापक्षिप्तान्यत्वो विपक्षाभावः सूच्यते इत्यादि सर्वातीतव्याख्यानप्रपञ्चातिदेशः, तद्व्याख्यातोपायदिङ्मात्रप्रदर्शनश्चैतत् प्रवृत्तिस्थाने नियमतश्चेति।

न वापीदमेकत एव तत्त्वं सुखदुःखमोहानां [illegible]विशेषभावात्, किन्तूभयतः, अनन्यत्वात्, अभिन्नत्वात्, एकत्वात् पूर्ववत्.........सन्निहितापत्तिभवनसत्तार्थत्वन्त्वयथार्थं स्यात्, आपत्तिभवनं सन्निधिभवनाविनाभावे युज्यते, यदि त[illegible]जे न तु सन्निहितं ततोऽ[illegible] स्यात्......................।

न वापी[illegible]मेकत एव तत्त्व[illegible]दीत्युत्तरस्य विकल्पोत्थापनग्रन्थस्य सम्बन्धः सुखदुःखमोहानामनन्यत्वं तत्त्वमुक्तम्, तत्त्वमेकतः सामान्यविशेषभावात्—सामान्यविशेषभेदभावात् यथा वृक्ष इति सामान्यं कदम्ब इति विशेषः, यथाऽत्र कदम्बो नियमाद्वृक्षो वृक्षस्तु स्यात् कदम्बोऽन्यश्चेत्येकतस्तत्त्वं तथा यदि सामान्यविशेषभावः स्यात् स्यादेकत एव तत्त्वम्, न तु तथेह सुखदुःखमोहानां सामान्यविशेषभावोऽस्तीति, किन्तूभयतोऽनन्यत्वादभिन्नत्वादेकत्वादित्यादिना सत्त्वरजस्तमसामेकत्वापादनार्थं पूर्ववत् सर्व एव प्रक्रमभेदैः स एव तथैव ग्रन्थः प्रवृत्त्या प्रकाशविशेषितया मोहविशेषितया

पुनश्चेति। अशोषेति, शोषाद्यात्मकं हि रजः तमस्तु दैन्याऽऽवरणसदनापध्वंसनबीभत्सगौरवात्मकं बोध्यम्। ननु भवतु सत्त्वस्य प्रकाशस्य वा प्रकाशप्रवृत्तिनियमात्मकत्वं मृदः पिण्डशिवकाद्यात्मकत्ववत्, तथाप्यनेकात्मकैककारणपूर्वकत्वमेवास्मिन् जगत आयातम्, न त्वेकात्मकैककारणपूर्वकत्वं भवद्भिरापाद्यमित्याशंकते—न वापी[illegible]मिति, सुखदुःखमोहानामेकतः—एकपार्श्वेन मृत्पिण्डादीनां मृदात्मकत्ववदनन्यत्वं न सम्भवति सुखदुःखमोहानां परस्परं सामान्यविशेषभावाभावादिति भावः। पूर्वपक्षमेव तावद्वर्णयति—सुखदुःखमोहानामिति, ययोरेकतोऽनन्यत्वं भवति तयोः सामान्यविशेषभावो दृष्टः, यथा वृक्षकदम्बयोः सामान्यविशेषभावो वर्त्तते, एकपार्श्वतश्चानन्यत्वमस्ति, कदम्बो हि नियमात् वृक्षात्मकः, वृक्षस्तु नियमात् कदम्बात्मको न भवति एवं वृक्षोऽनेकात्मकैकरूपः तथाऽत्र नैकपार्श्वेनानन्यत्वं सुखादीनाम्, सामान्यविशेषभावाभावादित्याह—तथा यदीति। तर्हि किमित्यत्राह—किन्तूभयत इति, सुखमेव दुःखम्, दुःखमेव सुखम्, सुखमेव मोहः, मोह एव सुखमित्येवमुभयत एवानन्यत्वं भाव्यमिति भावः। अत उत्तरं कियान् मूलग्रन्थो नोपलभ्यते, टीकाकृद्भिः भाष्य एव सुलिखितत्वान्न विव्रियत इत्युक्तत्वात्, तथा प्रकाश्यार्थप्रकाशभेदान्नर्त्तकीनर्त्तकाचार्यवच्चेति चेन्न, तदात्मन एवेत्यादि, कुतो नर्त्तकीनर्त्तकाचार्यभेदसाधर्म्य-

१ सि. क. सर्वमेव।

नेयः तथा च भाष्य एव सुलिखितत्वान्न विव्रियते, सन्निहितापत्तिभवनसत्तार्थत्वमयथार्थं स्यादित्यत्र तु विशेषः आपत्तिभवनं सन्निधिभवनाविनाभावे युज्यते, नान्यथा, यदि तद्रूपादिबीजे न तु सन्निहितं [1]ततोऽङ्कुरस्यासत्त्वाद्यापत्तिः स्यात्, सत् कार्यं कारणं चेति द्वैविध्यञ्च भवनस्यैवमेव युज्यते, आपत्त्यनाप[2]त्तिभेदादिति, शेषं पूर्ववत्, सत्त्वेन तमसा च सह भावनायां कृतायां पुनश्च तथैव तमसोऽपि [3]सत्त्वेन रजसा तद्वदेव भावनाग्रन्थो निरवशेषो लिखित आचार्येणै[4]वेति न विवृण्महे स एवानुसर्त्तव्यः, सर्वत्र भेदचोद्येषु प्रवर्त्यप्रवर्त्तकत्वात् पल्लवपवनवन्नेति चेन्न, तदात्मन एवेत्यादि तदेव सत्त्वरजःसंयोगेपि, प्रकाश्यार्थप्रकाशभेदान्नर्त्तकीनर्तकाचार्यवन्नेति चेन्न तदात्मन एवेत्यादि सत्त्वरजःसंयोगे [ नियम्यनियामकत्वान्नौलम्बनपाषाणवन्नेति चेन्न तदात्मन एवेत्यादि ] रजस्तमःसंयोगे च तत्र तत्र प्रकाशनप्रवर्त्तननियमवचनानि च यथोपपत्ति योज्यानि । कुतोऽपल्लवपवनभेदसाधर्म्यं कुतोऽनर्त्तकीनर्त्तकाचार्यभेदसाधर्म्यं कुतोऽनौलम्बनपाषाणभेदसाधर्म्यमिति चोपनयेषु द्वयं द्वयं द्वयोर्द्वयोर्गुणयोः [5]सम्भाव्य चोदयित्वा परिहार्यमिति ।

**एवञ्च तावत् सुखदुःखमोहानां प्रकाशप्रवृत्तिनियमात्मकानामनन्यत्वा[देका]त्मकैक-कारण[पू]र्वकत्वामिति [6]सम्यगभ्यधाम् । एवन्त्वनभ्युपगमे इदं निरूप्यं यत्तद्भिन्नात्मकत्वं परिगृह्य प्रयुक्ते [7]कार्यकारण[वी]तेऽभिहितं सत्त्वरजस्तमांसि त्रीणि शब्दाद्यात्मभिर्व्यवति[ष्ठ]मानानि परस्परार्थं [कु]र्वन्तीति, एतत्कथं निरूप्यते ? वक्ष्यमाणेषु विचारविकल्पेषु यथा यथोच्यते तथा तथाऽनुपपत्तिरेवेति ।**

(**एवञ्च तावदिति**) एवञ्च तावत सुखदुःखमोहानां प्रकाशप्रवृत्तिनियमात्मकानामनन्यत्वादेकात्मकैककारणपूर्वकत्वमिति सम्यगभ्यधामिति । एवन्त्वनभ्युपगमे इदं निरूप्यमित्यादि, एवमेकैकात्मकैककारणानभ्युपगमे सांख्यैरिदं निरूप्यं कतमत ? यत्तद्भिन्नात्मकत्वं परिगृह्य प्रयुक्ते कार्यकारणवीतेऽभिहितम्—अस्ति प्रधानं भेदानां कार्यकारणभावात्—आध्यात्मिकानां बाह्यानाञ्च भेदानां कार्यकारणभावो दृष्टः, आध्यात्मिकानां कार्यात्मकानां वक्ष्यामः । सत्त्वरजस्तमांसि त्रीणि शब्दाद्यात्मभिर्व्यवतिष्ठमानानि परस्परार्थं कुर्वन्तीत्येवमादि, एतत् कथं निरूप्यते ? वक्ष्यमाणेषु विचारविकल्पेषु यथा यथोच्यते तथा तथाऽनुपपत्तिरेवेति, इतिशब्द[स्य] हेत्वर्थत्वात् निरूपणाभाव एवेत्यभिप्रायः ।

मित्येवमत्रातिदिष्टं मूलमपि पूर्वं नोपलभ्यते, सन्निधिभवनमापत्तिभवनञ्च अस्तिभवतिविद्यतिपद्यतिवर्त्ततयः सन्निपातषष्ठाः सत्तार्था इति वचनात्, अस्तिविद्यतिसन्निपातानां सन्निधिमात्रसत्तार्थत्वात्, पद्यतिवर्त्तत्योरापत्तिभवनार्थत्वात् भवतेश्च सामान्येन सत्तावाचित्वात्, तत्र कारणभूतं सत् सन्निधिभवनरूपं कार्यञ्चापत्तिभवनरूपं सत्, असतो भवनाभावात् कारणमापत्तिभवनत ईषद्भिन्नं सन्निधिभवनमेव, सन्निहितमेव कार्यं बीजादौ देशकालाकारादिनिमित्तवशाद्व्यक्तीभवति आपन्नीभवतीति भवनद्वैविध्यमेवमेव घटत इत्याशयेनाह—**आपत्तिभवनमिति** । एतावता ग्रन्थेन परिनिष्पन्नमुपदर्शयति—**एवञ्चेति** । अथ विकल्पान्तरमुत्थापयति—**एवन्त्विति** । **भिन्नात्मकत्वमिति**, सुखदुःखमोहानां परस्परं भेदमभ्युपगम्येत्यर्थः, अनेकात्मकैककारणरूपत्वाभावात् सत्त्वादीनामिति भावः । **कार्यकारणवीत इति**, प्रधानसाधनाय सांख्यैः पञ्च हेतव उपन्यस्ताः, ते वीताख्याः लिङ्गस्य

१ सि. क. बनोङ्कु० । २ क. त्तिभेदाभेदादि० । ३ सि. तस्वेन । ४ सि. नास्तीदं पदम् । ५ सि. क. सम्भविश्वा । ६ सि. क. साम्यधामेति । ७ सि. क. कार्ये कारणपीतेऽ० ।

तद्विचारोद्देशार्थं साधनमाह–

**अनेकात्मकत्वकारणकल्पनाऽसद्वाद एव, सम्भाव्यविकल्पानुपपन्नार्थत्वात्, तदुक्तसत्यत्वानुपपन्नार्थसर्वोक्तानृतत्वपक्षवत् ।**

**( अनेकेति )** अनेकात्मकत्वकारणकल्पनाऽसद्वाद एव, सम्भाव्यविकल्पानुपपन्नार्थत्वात्–
5 अनुपपन्नसम्भाव्यविकल्पार्थत्वादित्यर्थः, येऽत्र सम्भाव्यन्ते विकल्पास्तेऽनुपपन्नार्था इति वक्ष्यते, तस्मादयमसद्वाद एव, दृष्टान्तः तदुक्तसत्यत्वानुपपन्नार्थसर्वोक्तानृतत्वपक्षवत् तेनैवोक्तस्तदुक्तः सर्वमनृतमिति स एवोक्तस्तदुक्तो वा, असौ सत्यश्चेन्न तर्हि सर्वमुक्तमनृतमस्य सत्यत्वात्–सर्वान्तःपातित्वाच्च, अथासत्यमिदं न तर्हि सर्वस्योक्तस्यानृतत्वमनेनानृतेन प्रतिपाद्यते, अस्यानृतस्याप्रमाणत्वादित्युभयथापि असद्वादः विकल्प्याभावाच्च, तथेयमपि त्रिगुणमेकं कारणमित्यनेकात्मकैककारणकल्पना-
10 ऽसद्वाद इति । तत्पुनः कतमद्वचनमिति तत्प्रदर्शयन्नाह–

**यदुच्यते सत्त्वरजस्तमांसि त्रीणि शब्दाद्यात्मभिर्व्यवतिष्ठमानानि परस्परार्थं कुर्वन्तीति, सत्त्वं शब्दकार्यं प्रख्याय तदात्मना व्यवतिष्ठमानं रजस्तमसोः शब्दात्मभावाय प्रवृत्तिं प्रख्यापयतीति अत्र च किं प्रकाशात्मकेन सत्त्वेन शब्दात्मना व्यवस्थानेन प्रकाशात्मकयोरेव रजस्तमसोः शब्दात्मभावाय प्रवृत्तिर्व्यक्तिः प्रख्याप्यते ? उताप्रकाशात्मकयोः ? ।**

15 **( यदुच्यत इति )** यदुच्यते सत्त्वरजस्तमांसीत्युद्देशवाक्यं यावत् परस्परार्थं कुर्वन्तीति, निर्देशवाक्यञ्च सत्त्वं शब्दादिकार्यमित्यादि यावत् प्रवृत्तिं प्रख्यापयतीति, एतदसद्वादधर्मेण पक्षीकृतं वाक्यम्, अत्र च द्वयं सम्भाव्यते तृतीयाभावात्, तद्दर्शयति–प्रकाशात्मकेनेत्यादि यावत् प्रख्याप्यत इत्ययमेको विकल्पः सत्त्वेन प्रकाशात्मकेन सता तदात्मकयोरेव रजस्तमसोः शब्दात्मना व्यवस्थानेनेति, स्वयं शब्दात्मना व्यवतिष्ठमानेन तेनात्मनोपकुर्वता तयोः शब्दात्मभावाय प्रवृत्तिः प्रख्याप्यते, का सा

20 वीतावीतभेदेन द्वैविध्यात्, तयोर्लक्षणञ्च 'यदा हेतुः स्वरूपेण साध्यसिद्धौ प्रयुज्यते । स वीतोऽर्थान्तरक्षेपादितरः परिशेषितः' इत्युक्तम्, पञ्च हेतवश्च 'भेदानां परिमाणात् समन्वयाच्छक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्ये'ति ( सां० का० १५ ) बोध्याः । **अनेकात्मकेति,** सत्त्वरजस्तमोलक्षणप्रधानस्य त्रिगुणस्यैकस्य कारणत्वाभ्युपगमोऽसदभ्युपगम एव, वक्ष्यमाणा ये प्रकाशात्मकयोरप्रकाशात्मकयोर्वेत्यादिसम्भाव्यमाना विकल्पास्तेषामनुपपन्नार्थत्वादित्यर्थः । दृष्टान्तं वर्णयति–**असाविति** सर्वमनृतमिति वाक्यरूपः । अथ सत्त्वरजस्तमसां प्रकाशप्रवृत्तिनियमलक्षणैर्धर्मैरितरेतरोपकारेण प्रवृत्ति-
25 र्भवतीत्यर्थकं वाक्यमाह–**यदुच्यत इति,** सत्त्वं प्रवृत्तिनियमावाश्रित्य रजस्तमसोः प्रकाशेनोपकरोति, रजः प्रकाशनियमावाश्रित्य प्रवृत्त्या सत्त्वतमसोरुपकरोति, तमः प्रकाशप्रवृत्ती आश्रित्य सत्त्वरजसोः नियमेनोपकरोतीति भावार्थोऽस्य वचनस्य, तत्र सत्त्वमात्रविषयं वाक्यमाह–**सत्त्वं शब्दकार्यमिति । उद्देशवाक्यमिति,** सामान्यतो विचारविषयीभूतगुणत्रयकार्यव्यावर्णनपरं वाक्यमित्यर्थः, एतद्वाक्यादेव सिषाधयिषितस्यासद्वादस्य धर्मिभूतं वाक्यमाकृष्य प्रदर्शयति–**निर्देशवाक्यञ्चेति ।** सर्वस्य त्रिगुणात्मकत्वात् प्रकाशलक्षणं सत्त्वं शब्दं प्रकाश्य व्यवस्थितशब्दात्मना स्वयं परिणतं सत् रजस्तमसोरपि शब्दरूपेण
30 परिणमितुं प्रवर्त्तयिष्यतीति तद्वाक्यार्थः । अथ विकल्पमुत्थापयति–**अत्र चेति,** विचारेऽस्मिन् विकल्पद्वयमेव सम्भाव्यते प्रकाशात्मकयोरुताप्रकाशात्मकयोरिति, न तु तृतीयः प्रकारः कश्चिदस्तीति भावः । कर्तृप्रयोगघटितं वाक्यमेव कर्मप्रयोगघटितेन वाक्येन विवृणोति–**सत्त्वेनेति ।** प्रकाशः पौरुषचैतन्येन चेतनावद्भवनम्, बुद्धिवृत्त्यादिरूपालोकः, भौतिकालोकश्च, नेदृशः

१ सि. क. पूर्वोक्ता० । २ सि. क. सद्वादस्तुविकल्पा० । ३ सि. क. सत्त्वंप्रकाशात्मकं सत् । ४ सि. क. व्यवतिष्ठमानं । ५ सि. क. कुर्वन् ।

प्रवृत्तिः ? व्यक्तिरित्यर्थकथनम्, प्रवृत्तिं प्रख्यापयतीत्येतदेव स्फुटीकर्त्तुकामः प्रवृत्तिः प्रख्याप्यत इति विभक्तिविपर्यासेन विवृणोति, आख्यातेनाभिहितकर्मकत्वात् प्रथमया, एषः प्रथमः प्रश्नविकल्पः, द्वितीयस्तु उताप्रकाशात्मकयोरिति—रजस्तमसोरप्रकाशात्मकयोर्वा तत्सत्त्वं शब्दकार्यं प्रख्याय शब्दात्मना व्यवतिष्ठमानं शब्दात्मभावाय प्रवृत्तिं ख्यापयतीति प्रश्नः।

**प्रकाशात्मकयोरित्येष विकल्पो न घटत एव, सत्त्वरजस्तमसां जात्यन्तरत्वाभ्युपगमात् यद्यप्रकाशात्मके रजस्तमसी शब्दात्मभावाय प्रख्याप्येते सत्त्वं पुरुषमपि तर्हि शब्दात्मभावाय प्रख्यापयिष्यति-शब्दत्वायैनं प्रवर्त्तयिष्यति, सत्त्वेन शब्दकार्यप्रख्यातिना शब्दात्मना व्यवतिष्ठमानेन पुरुषः शब्दात्मभावाय प्रवर्त्त्यतेऽभिव्यज्यते व्यवस्थाप्यते च, अप्रकाशात्मकत्वात्, यद्यदप्रकाशात्मकं तत्तत् सत्त्वेन शब्दकार्यप्रख्यातिना शब्दात्मना व्यवतिष्ठमानेन शब्दात्मभावाय प्रवर्त्त्यं व्यङ्ग्यं व्यवस्थाप्यञ्च दृष्टं रजस्तमसी इव, अप्रकाशात्मकेन तेनापि शब्दभावाय प्रवर्त्तितव्यं प्रकाशितव्यं व्यवस्थातव्यम्, प्रकाशकारकत्वोपपत्तेः, रजस्तमोभ्यामिव, रजस्तमश्च यथा प्रवर्त्तते प्रकाशते व्यवतिष्ठते तथा स प्रवर्तते प्रकाशते व्यवतिष्ठते।**

**प्रकाशात्मकयोरिति**, एष विकल्पो न घटत एव, सत्त्वरजस्तमसां जात्यन्तरत्वाभ्युपगमात् प्रकाशप्रवृत्तिनियमकार्यभेदात्, सुखदुःखमोहात्मभेदाच्च, रजस्तमसी न प्रकाशात्मके इत्यत्रोच्यते यद्यप्रकाशेत्यादि यावद्रजस्तमसी इवेति, यद्यप्रकाशात्मके रजस्तमसी शब्दात्मभावाय प्रख्याप्येते ततस्तद्वत् सत्त्वं पुरुषमपि तर्हि शब्दात्मभावाय प्रख्यापयिष्यति, तदर्थविवरणं शब्दत्वायैनं प्रवर्तयिष्यति, शब्दत्वपरिणामेनैनं परिणमयिष्यतीत्यर्थः, सत्त्वेन शब्दकार्यप्रख्यातिना शब्दात्मना व्यवतिष्ठमानेन पुरुषः शब्दात्मभावाय प्रवर्त्त्यतेऽभिव्यज्यते व्यवस्थाप्यते च, अप्रकाशात्मकत्वात्, यद्यदप्रकाशात्मकं तत्तत् सत्त्वेन शब्दकार्यप्रख्यातिना शब्दात्मना व्यवतिष्ठमानेन शब्दात्मभावाय प्रवर्त्त्यं व्यङ्ग्यं व्यवस्थाप्यञ्च दृष्टम्, यथा रजस्तमश्च, विपक्षाभावाद्व्यावृत्तिर्वाच्या, तत्साधनव्याख्यानद्वारेण साधनान्तरोपन्यासद्वारेण वा ग्रन्थः—अप्रकाशात्मकेनेत्यादि यावद्रजस्तमोभ्यामिवेति, अपिशब्दाद्रजस्तमोभ्यामपीति, तेनापि

प्रकाशो रजसस्तमसो वाः, तत्र पुरुषचैतन्यप्रतिबिम्बासम्भवात् शब्दकार्यं प्रख्यायेत्यनेन सत्त्वस्य प्रकाश उक्तः, शब्दात्मना व्यवतिष्ठमानमित्यनेन प्रवृत्तिनियमयोरुक्तौ, पूर्वोदितप्रकारेण प्रकाशप्रवृत्तिनियमानामेकात्मत्वात्, अत एवांशेऽपि रजस्तमसोः पुरुषस्य प्रकाशप्रवृत्तिनियमा आपाद्यन्त इति बोध्यं तथैव परिणामस्योपपत्तेः। **सत्त्वरजस्तमसामिति,** स्वरूपभेदात् कार्यभेदाच्च सत्त्वादीनां परस्परं भेदस्त्वयाऽभ्युगम्यते, तत्र सुखादयः सत्त्वादीनां स्वरूपम्, प्रकाशादयश्च कार्यम्, तत्र यदि रजस्तमसोरपि प्रकाशात्मकत्वं तर्हि कार्याभेदात् सत्त्वभिन्नत्वं तयोर्न स्यात्, तथा च प्रकाशात्मकयोः रजस्तमसोरिति प्रथमविकल्पो न युक्त इति भावः। द्वितीयं विकल्पमुत्थाप्य दूषयति-**रजस्तमसी इति,** प्रकाशात्मकं सत्त्वमप्रकाशात्मके रजस्तमसी शब्दात्मना परिणतं यथा प्रेरयति तथा पुरुषमपि प्रेरयेत्, अप्रकाशात्मकत्वाविशेषादिति दूषणाभिप्रायः। **प्रख्याप्येते इति,** सत्त्वेनेति शेषः। यदप्रकाशात्मकं तदन्येन प्रकाशात्मना व्यज्यते प्रवर्त्त्यते व्यवस्थाप्यते च यथा रजस्तमश्च, तथा पुरुषोऽपीत्याह-**सत्त्वेनेति।** स्वयमप्रकाशात्मकं सदन्येनाप्रवर्त्यमव्यङ्ग्यमव्यवस्थाप्यञ्च न किञ्चिदस्तीति विपक्षाभावात्ततो हेतुर्व्यावृत्त एवेत्याह-**विपक्षाभावादिति।** अप्रकाशात्मकेनेत्यादिग्रन्थोऽप्रकाशात्मकत्वादिति हेतोरेव व्याख्यानपरः, अथवा प्रोक्तहेतोर्यद्यदप्रकाशात्मकमिति ग्रन्थेनैव व्याख्यातत्वात् प्रकाशकारकत्वोपपत्तेरिति साधनान्तरोपन्यासाय वा प्रोक्त इत्याह-**तत्साधनेति।** प्रवर्तितव्यमिति भावे तव्यप्रत्ययः, पुरुषः प्रवर्तते प्रकाशते व्यवतिष्ठते इति कर्त्तरि प्रयोगः तस्यैव भावे प्रयोगः

च पुरुषेणाप्रकाशात्मकेन शब्दभावाय प्रवर्त्तितव्यं प्रकाशितव्यं व्यवस्थातव्यमित्येते प्रवृत्तिप्रकाशनियमाः पुरुषकार्याः स्युः स प्रवर्त्तते प्रकाशते व्यवतिष्ठते पा[illegible]र्थः, कुतः? प्रकाशकारकत्वोपपत्तेः, तस्याप्रकाशकत्वे सत्युपपन्नप्रकाशकारकत्वादित्यर्थः, यद्यदप्रकाशकत्वे सत्युपपन्नप्रकाशकारकं तेन तेन शब्दभावाय प्रकाशितव्यं प्रवर्त्तितव्यं व्यवस्थातव्यं यथा रजसा तमसा च, अथवा रजस्तमश्च
5 यथा प्रवर्त्तत इत्यादि यथाभिव्यक्तार्थानुरूपं व्याख्यातमिति ।

एतस्य साधनस्यानैकान्तिकत्वोद्भावनार्थं साधनद्वारेण परमतमाशङ्क्याह—

**अथोच्यतेऽप्रकाशत्वान्नैकान्तः शक्यते कर्त्तुम्, शक्यते हीत्थं वक्तुमपि, पुरुषः सत्त्वान्न प्रकाशते, अ[illegible]काशकत्वे सन्निहितप्रकाशकारकत्वात् प्रदीपेनेव वियत्, रजस्तमसी च प्रकाशेते, अप्रकाशकत्वात्, प्रदीपेनेव पृथिवी, यथा च वियत्पृथिव्योरप्रकाशक[illegible]सामान्ये सत्येव 10 कारकसान्निध्येऽपि प्रकाशाप्रकाशौ दृष्टौ, एवं पुरुषस्याप्रकाशात्मकत्वेऽप्यप्रकाशतैव रजस्तमसोः प्रकाशतैवेति ।**

**अथोच्यतेऽप्रकाशत्वान्नैकान्त इत्यादि** सोपसंहारहेतुकप्रकाशनाप्रकाशनसाधने यावत् प्रकाशतैवेति, अप्रकाशत्वान्नैकान्तः शक्यते कर्त्तुम्, यस्माच्छक्यते वक्तुमित्थमपि पुरुषः सत्त्वान्न प्रकाशते न व्यज्यते इति, कस्मात्? अप्रकाशकत्वे सन्निहितप्रकाशकारकत्वात्, यदप्रकाशकत्वे 15 सन्निहितप्रकाशकारकं तदप्रकाशमानं दृष्टं यथा प्रदीपेनेव वियत्, रजस्तमसी प्रकाशेते अप्रकाशकत्वात् प्रदीपेनेव पृथिवीत्येतत् पूर्वेण साधनेन व्याख्यातार्थं सत् सन्निहितप्रकाशकारकत्वादिति न विशेष्यते, यथा च वियत्पृथिव्योरप्रकाशकत्वसामान्ये सत्येव कारकसान्निध्येऽपि प्रकाशाप्रकाशौ दृष्टौ, एवं पुरुषस्याप्रकाशात्मतैव रजस्तमसोः प्रकाशतैवेति विशेषोऽस्त्विति ।

अत्रोच्यते—

20 **एवं तावद्विकल्पसमजातित्वादनुत्तरमेव, प्रयत्नान[illegible]रीयकत्वे सत्येव मूर्ता[illegible]र्तत्वादिवि[illegible]षवद्घटशब्दयोरनित्यो नित्यश्चेति विशेषः स्यादिति वचनवत्। एतदपि च नैवं वियतोऽप्र-**

पुरुषेण प्रवर्तितव्यं प्रकाशितव्यं व्यवस्थातव्यमिति, एवञ्च प्रकाशप्रवृत्तिनियमाश्रयत्वं पुरुषस्य रजस्तमसोश्च स्यादिति, तत्र **हेतुमाह–प्रकाशेति,** स्वयमप्रकाशात्मकः सन् सत्त्वप्रकाशसाहाय्येन पुरुषः प्रकाशाश्रयो भवतीत्यर्थः, उपपन्नं प्रकाशकारकत्वं यस्य तस्मादिति विग्रहः, अत एव स शब्दात्मभावाय प्रकाशेत प्रवर्तेत व्यवतिष्ठेतेति भावः । कर्त्तरि प्रयोगतो व्याख्यां सूच- 25 यति–**अथ वेति ।** ननु पुरुषो गगनवत् स्वरूपतोऽप्रकाशकः, तेन प्रकाशसन्निधानेऽपि न तस्य प्रकाशकत्वं सम्भवति, स्वतोऽप्रकाशकस्य प्रकाशसहस्रसन्निधानेनापि प्रकाशकत्वानुपपत्तेः, अन्यथा प्रदीपसन्निधानेन गगनमपि प्रकाशकं भवेदित्याशङ्कते–**अथोच्यत इति ।** यदप्रकाशकं तत् प्रकाशकसन्निधाने प्रकाशमानमेवेत्येकान्तो न सम्भवति, अप्रकाशकस्य गगनस्य प्रकाशकप्रदीपसन्निधानेऽप्यप्रकाशमानत्वात्, अप्रकाशके अपि रजस्तमसी प्रकाशकसन्निधाने प्रकाशमाने भवतः, यथा प्रकाशकप्रदीपसन्निधानेऽप्रकाशकस्वरूपा पृथिवी प्रकाशमाना भवति तथा पुरुषोऽप्रकाशकत्वे सत्यपि सन्निहितप्रकाशकारकः किं गगनवद- 30 प्रकाशमानः किं वा पृथिवीवत् प्रकाशमानो वेति संदेहात् प्रोक्तं साधनमनैकान्तिकमित्याशयेनाह–**यस्माच्छक्यते वक्तुमिति । सन्निहितेति,** सन्निहितः प्रकाशकारको यस्य तद्भावादिति विग्रहः, प्रकाशकारकत्वलक्षणं प्रकाशकत्वं सत्त्वस्यैव पुरुषरजस्तमांसि अप्रकाशकानीति बोध्यानि । **एवं तावदिति** साधनधर्मयुक्ते दृष्टान्ते धर्मान्तरविकल्पात् साध्यधर्मविकल्पं

१ सि. क. प्रकाशे इति ।

काशकत्वम्, त्वन्मतेनैव शब्दात्मना प्रकाशमानत्वात्, रूपविषयाप्रकाशनमपि च पृथिव्यादिषु न घटते, यस्माद्रूपादिपृथग्भूतपृथग्विपरिणतिषु पृथिव्यादिषु तेजोरहितेषु विद्यमानः प्रकाशकत्वप्रकाशः स्वगतोऽतो विपरिणतः, किन्तु प्रकाश्यत्वप्रकाशोऽस्त्याविर्भूतत्वादतस्तेषां प्रकाशतैव क्वचित्, अत्यन्तमतिरोभूतत्वात् ज्ञादिषु प्रकाश्यप्रकाशकत्ववत् ज्ञानस्वभाव एव हि मनुष्यः प्रकाशात्मा प्रकाश्यो दृष्टः तस्मान्नाप्रकाशकत्वे प्रकाशनम्। 5

(**एवं तावदिति**) एवं तावद्विकल्पसमजातित्वादनुत्तरमेव, प्रयत्नानन्तरीयकत्वे सत्येव मूर्तामूर्तत्वादिविशेषवद्घटशब्दयोरनित्यो नित्यश्चेति विशेषः स्यादिति वचनवत्, किञ्चान्यत्– एतदपि च नैवं वियतोऽप्रकाशकत्वम्, त्वन्मतेनैव शब्दात्मना प्रकाशमानत्वात्, यदपि च रूपविषयाप्रकाशनं पृथिव्यादिष्वेतदपि च नैवाप्रकाशनं घटते, यस्माद्रूपादीत्यादि यावन्नाप्रकाशकत्वे प्रकाशनमिति, यस्मादिति हेतुर्वक्ष्यमाणार्थो नाप्रकाशनं घटत इति साध्यम्, रूपादीति, रूपरसगन्धास्तेजोऽम्भोभूमिषु 10 तेभ्यः पृथग्भूतावाकाशानिलौ शब्दस्पर्शात्मकौ रूपादिपृथग्भूताभ्यामेव वा ताभ्यां पृथग्भूता विपरिणतिर्येषां तेषु रूपादिपृथग्भूतपृथग्विपरिणतिषु पृथिव्यादिषु तेजोरहितेषु विद्यमानः प्रकाशकत्वप्रकाशः स्वगतोऽतो विपरिणतस्तिरोभूतः किंतु प्रकाश्यत्वप्रकाशोऽस्ति, आविर्भूतत्वात्, अतस्तेषां प्रकाशतैव क्वचित्, अत्यन्तमतिरोभूतत्वात्, ज्ञादिषु प्रकाश्यप्रकाशकत्ववत्, ज्ञानस्वभाव एव हि मनुष्यः प्रकाशात्मा प्रकाश्यो—बोध्यो बोधकश्च दृष्टः न कुड्यादिरचेतनः, तथा पृथिव्यादयः, मनु- 15 ष्यग्रहणमस्यैव रथ्यापुरुषस्योदाहार्यत्वात्, स्यान्मतं बोधकबोध्ययोर्हेतुहेतुमद्भावान्नोभयोरुभयधर्मतेति दृष्टान्तदार्ष्टान्तिकवैधर्म्यमित्येतच्चायुक्तम्, यस्माद्धेतु[हेतु]मत्त्वेऽपि तयोः सूरिशिष्ययोर्द्वयोरपि प्रत्येकं

प्रसञ्जयतो विकल्पसमा जातिर्भवति, यथा शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वात्, घटवदित्युक्ते यदि ब्रूयात् प्रयत्नानन्तरीयकं किञ्चिन्मूर्तं दृष्टं यथा घटः, किञ्चिदमूर्तं यथा रूपादि, एवं प्रयत्नानन्तरीयकं किञ्चिदनित्यं स्यात्, यथा घटः, किञ्चिन्नित्यं स्यात्, यथा शब्द इति, अन्यथा विशेषो वा वाच्य इति, उत्तरमिदमनुत्तरमेव, विकल्पसमजातित्वात्, एवं प्रकृतेऽपि पुरुषस्याप्रकाशात्म- 20 कत्वेऽप्यप्रकाशतैव, रजस्तमसोश्च प्रकाशतैवेत्युत्तरमसदुत्तरमेवेति भावः। ननु तथापि गगनस्याप्रकाशकस्य प्रकाशमानत्वाभावादनैकान्तिकत्वं तदवस्थमेवेत्यत्राह–**एतदपि चेति,** अप्रकाशकत्वलक्षणो हेत्वंशो गगने नास्त्येव, येनानैकान्तिकत्वं भवेत्, व्यक्तमात्रस्य प्रसवधर्मित्वेन परिणामस्वरूपप्रसवस्य च प्रकाशप्रवृत्तिनियमव्याप्यत्वात् शब्दात्मना चाकाशस्य प्रकाशमानतास्त्येव, तस्माच्छब्दप्रकाशकत्वान्नानैकान्तिकत्वमिति भावः। एवं पृथिव्यादीनामप्यप्रकाशकत्वं नास्तीत्यत्राह–**यदपि चेति।** शब्दस्पर्शरूपरसगन्धानां मध्ये रूपादयः शब्दस्पर्शव्यतिरिक्ता भवन्तीति व्याचष्टे–**रूपादीतीति** 25 **पृथिव्यादिष्विति** प्रकाश्यत्वप्रकाशकत्वलक्षणो द्विविधः प्रकाशः पृथिव्यादेः प्रकाशकत्वलक्षणः प्रकाशस्तिरोभूत एव, न तु तत्र तस्याभावः, प्रकाश्यत्वलक्षणस्तु प्रकाशः तत्रातिरोभूतः, स्वरूपतः पृथिव्यादेराविर्भूतत्वात्, तथा च तत्र प्रकाशता विद्यत एव, एवञ्च पृथिव्यादेर्नाप्रकाशनं घटते, अत्यन्तमतिरोभूतत्वात्, ज्ञादिषु प्रकाश्यप्रकाशकत्ववत्, तेजसस्तु रूपप्रकाशनं स्फुटमेवेति तेजोरहितेष्वित्युक्तम्, आकाशे वायौ च रूपविषयप्रकाशनं कदापि न घटत इति पृथिव्यादीनामेव परिग्रहणं कृतमित्यभिप्रायः। बोधको हेतुः बोध्यञ्च कार्यमित्येकस्य बोध्यत्वबोधकत्वे न सम्भवत इत्याशङ्कते–**स्यान्मतमिति,** 30 उभयोः–ज्ञस्य पृथिव्यादेश्च, उभयधर्मता प्रकाश्यत्वप्रकाशकत्वे न सम्भवतोऽतः पृथिव्यादेः प्रकाश्यत्वमेव, ज्ञस्य प्रकाशकत्वमेवेति दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यमिति भावः। भिन्नापेक्षयोभयत्रोभयधर्मसम्भवान्न वैधर्म्यमित्युत्तरयति–**यस्मादिति** एवञ्चाकाशपृथिव्योरपि प्रकाशकत्वात् न दृष्टान्तत्वमप्रकाशकत्वहेतोस्तत्राभावात्, न वा रजस्तमसोः पुरुषस्य च विशेषोऽस्ति

१ सि. क. °प्रकाशोऽस्त्यावि०।

नाप्रकाशत्वे प्रकाशनमिति तस्मान्न वियत्पृथिव्योरपि प्रकाशकत्वसाम्याद् दृष्टान्तभावः पुरुषस्य रजस्तमसोश्च विशेषापादनसिद्धिः।

अथापि त्वदनुवृत्त्या वियत्पृथिवीविशेषोपपत्तिमभ्युपेमः पुरुषस्याप्रकाशकत्वे सत्यप्रवर्त्तनादि रजस्तमसोश्च प्रवर्त्तनादि तथापि ते—

5 **वियत्पृथिवीविशेषोपपत्तिवच्च ते एव प्रवर्त्तेते न पुरुष इत्यस्तु नाम, किन्त्वयमन्यस्ते दोष आपद्यते, प्रकाशात्मके तर्हि रजस्तमसी, शब्दात्मभावाय प्रवृत्तेः सत्त्ववत्, वैधर्म्येण पुरुषवत्, असत्कार्यवादिता चात्यन्तानिष्टा प्रसक्ता, सा च विस्फुटैव, सत्त्वे प्रवृत्तिनियमयोरभूतयोः शब्दात्मव्यवस्थावचनादभ्युपगमात्।**

(**वियदिति**) वियत्पृथिवीविशेषोपपत्तिवच्च ते एव प्रवर्त्तेते रजस्तमसी न पुरुष इत्यस्तु 10 नाम—नैवास्तीत्यभिप्रायः, किन्त्वयमन्यस्ते दोषोऽनिष्ट आपद्यते प्रकाशात्मके तर्हि रजस्तमसी, सत्त्वविलक्षणे न भवत इत्यर्थः कुतः? शब्दा[त्म]भावाय प्रवृत्तेः सत्त्ववत्; यच्छब्दा[त्म]भावाय प्रवर्त्तते तत्प्रकाशात्मकं दृष्टम्, यथा सत्त्वम्, वैधर्म्येण पुरुषवदिति—यत् प्रकाशात्मकं न भवति न तच्छब्दात्मभावाय वर्त्तते यथा तव पुरुष इति, किञ्चान्यत्,—असत्कार्यवादिताऽत्यन्तानिष्टा प्रसक्ता, एवमनभ्युपगम इति वर्त्तते, सा चासत्कार्यवादिता विस्फुटैव, कथं? सत्त्वे प्रवृत्तिनियमयोरभूतयोः 15 शब्दात्मव्यवस्थावचनादभ्युपगमात्,—सत्त्वस्य कार्यं प्रकाश एवेष्टो न प्रवृत्तिनियमौ, जात्यन्तरभूतरजस्तमःकार्यत्वात् तौ तत्रासन्तौ पुनस्तस्य कार्यावभ्युपगतौ, कुतः? व्यवस्थावचनात्, सत्त्वं शब्दकार्यं प्रख्याय शब्दात्मना व्यवतिष्ठमानमिति ब्रुवताऽभ्युपगमादिति।

तथा—

**यदि तत्सत्त्वमप्रवृत्तमनियतं वा पूर्ववदप्रवृत्तत्वादनियतत्वाच्च तयोस्तथारूपां प्रवृत्तिं न** 20 **प्रख्यापयेत्, नैवम् वन्ध्यापुत्रवदित्युक्तत्वात्, व्यवस्थानस्य च प्रागसतः सत्त्वविषयस्याऽऽरम्भावस्थायामभ्युपगतत्वात्।**

तस्मात् रजस्तमसीव पुरुषः प्रकाशप्रवृत्तिनियमधर्मा भवेदिति निगमयति **तस्मादिति**। विशेषमङ्गीकृत्यापि दोषं वक्तुमाह—**अथापीति**। अभ्युपगमवादत्वादरुतौ रजस्तमसोः पुरुषस्य च वियत्पृथिव्योरिव विशेषो नैवास्तीत्यभिप्राय इत्याह—**वियत्पृथिवीति**। शब्दात्मभावाय प्रवृत्तेः रजस्तमसोरपि सत्त्ववत् प्रकाशात्मकत्वमापादयति-**प्रकाशात्मक इति**। **सत्त्ववत्** 25 रजस्तमसोः प्रकाशात्मकत्वानभ्युपगमे केवलं प्रकाशात्मके सत्त्वे प्रागसतोः प्रवृत्तिनियमयोः पश्चादभ्युपगमेनासत्कार्यवादित्वं प्रसज्यत इत्याह—**किञ्चान्यदिति**। कथमभ्युपगम इति दर्शयति—**सत्त्व इति**, शब्दकार्यं प्रख्यायेत्यनेन प्रकाश उक्तः, शब्दात्मना व्यवतिष्ठमानमित्यनेन प्रवृत्तिनियमावुक्तौ, इतरानात्मतया शब्दात्मतया स्थितेः नियतप्रवृत्तिरूपत्वादिति **भावः**। **स्वयं** तदात्मना प्रवृत्त एव नियत एव चान्यं तथा प्रवर्त्तयितुं नियमयितुञ्चेष्टे, अन्यथा वंध्यापुत्रोऽपि प्रवर्त्तयेत् नियमयेच्चेत्याशयेनाह—**यदि तत्सत्त्वमिति**। प्रकाशप्रवृत्तिनियमस्वरूपाया व्यवस्थायाः साम्यतादशायां सत्त्वेऽभावात् वैषम्यदशायाश्चा-

१ सि. क. दृष्टान्ता०। २ सि. क. विशेषापादना०। ३ सि. क. वृत्त्यापि यत्पृ०। ४ सि. एव प्रवर्त्तेते, क. एव वर्त्तते।

**( यदीति )** यदि ततःसत्त्वमप्रवृत्तमनियतं वा पूर्ववदप्रवृत्तत्वादनियतत्वाच्च तयोस्तथारूपां-शब्दात्मिकां प्रवृत्तिं न प्रख्यापयेत्, नैवम्, कस्मात्? वन्ध्यापुत्रवदित्युक्तत्वात्, व्यवस्थानस्य च प्रकाशप्रवृत्तिनियमात्मकस्य प्रागसतः सत्त्वविषयस्याऽऽरम्भावस्थायां साम्यावस्थाविलक्षणायामभ्युपगतत्वादसतोः प्रवृत्तिनियमयोः सत्त्वाभ्युपगमादतिस्फुटा ।

किञ्चान्यत्—

**रजस्तमसोः शब्दभावाय प्रवृत्तिं प्रख्यापयतीति वचनात्तयोः प्रागसतः प्रकाशनस्याभ्युपगमादसतोऽभिव्यक्तिरुत्पत्तिर्वाऽभ्युपगता. यदि ते तथाप्रतिपद्येते ततः सत्त्वेन प्रकाशिते, आचार्येणेव नर्त्तकी ।**

**रजस्तमसोरित्यादि** यावत् प्रकाशनस्याभ्युपगमादिति, असत्कार्यवादिता विस्फुटैवेति वर्त्तते, तस्मिन्नेव सत्त्वप्रकाशनात्मव्यवस्थानोपकारवाक्ये रजस्तमसोः शब्दभावाय प्रवृत्तिं प्रख्यापयतीति वचनात्तयोः–रजसि तमसि च प्रागसतः प्रकाशस्य जात्यन्तरकार्यभूतस्य तदानीं प्रख्यापनात् असतोऽभिव्यक्तिरुत्पत्तिर्वाऽभ्युपगता, यदि ते रजस्तमसी तथाप्रतिपद्येते–व्यवतिष्ठेते प्रवर्त्तेते वा ततः सत्त्वेन प्रकाशिते, तस्मादाचार्येणेव नर्त्तक्याः प्रागप्रतिपन्नायाः प्रवृत्ताया अवतिष्ठमानायाः, तस्मात् प्रकाशोऽपि तयोः प्रागसन् पश्चाज्जात इत्यसत्कार्यवादिता ।

सेदानीं वैशेषिकासत्कार्यवादितया तुल्येति भाव्यते–

**पृथग्भूततत्त्वाश्रयकारणे गुणेऽसतां प्रकाशप्रवृत्तिनियमानामुत्पत्तिः वैशेषिकाभिमततन्त्वाश्रयपटवत् ।**

**पृथग्भूततत्त्वेत्यादि** पृथग्भूतं तत्त्वमात्मा कार्यं तद्भावो यस्य स पृथग्भूततत्त्वो गुणः,

भ्युपगमात् प्रवृत्तिनियमापेक्षया सत्त्वेऽसत्कार्यवादप्रसङ्ग इत्याह–**व्यवस्थानस्य चेति,** विशेषतोऽवस्थानं स्थितिः नियमः, तत्र विशेषश्च प्रकाशप्रवृत्तिरूपाभ्याम्, अथवा अवस्थानं सद्भावः, स च साम्यावस्थायामपि वर्त्तते प्रकृतौ **सर्वविकाराणां** शक्त्यात्मना सद्भावाङ्गीकारात्, तत्र च विशेषः प्रकाशप्रवृत्तिनियमस्वरूपतयेति व्यवस्थायाः प्रकाशप्रवृत्तिनियमात्मकत्वमुक्तम्, **आरम्भावस्थायामिति** स्थित्या गत्या च प्रधानस्य प्रवृत्तिः प्रधानव्यवहारं लभते, यदा स्थित्या प्रवृत्तिस्तदा साम्यावस्थेत्युच्यते, यदा तु गत्या प्रवृत्तिस्तदाऽऽरम्भावस्था वैषम्यावस्थेत्युच्यते अत उभयोर्वैलक्षण्यं बोध्यम् । एवमेव रजस्तमसोः प्रागसतः प्रकाशस्यारम्भावस्थायामभ्युपगमादसत्कार्यवादप्रसङ्ग इत्याह–**रजस्तमसोरिति** यदि रजस्तमसोः प्रवृत्तिनियमौ प्रतिपद्येते तर्हि तयोस्तौ सत्त्वप्रकाशप्रतिलब्धस्वरूपावेवेति यथा नर्त्तकी नर्त्तकाचार्यप्रेरिता नृत्याय प्रतिपद्यते प्रवर्त्तते व्यवतिष्ठते च तथा ते अपीति तयोः प्रकाशः प्रागसन् जात इत्याह–**यदि ते इति ।** कारणमधिकृत्य वादिनां विप्रतिपत्तय एवं सन्ति, तद्यथा विनष्टाद्बीजादङ्कुर उत्पद्यते नष्टाच्च दुग्धाद्दधीत्येवमभावप्रध्वंसाभ्यां बीजादिभ्योऽङ्कुराद्युत्पत्तिदर्शनात् **सर्वे कार्यभावाः अभावकारणका** इत्यसतः सज्जायत इति सौगताकूतम्, एकं पुरुषादेव अनिर्वचनीयानाद्यविद्योपधानादनेकविधनामरूपप्रपञ्चात्मना विवर्त्तते रज्जुरिव सर्पाद्यात्मना, मुखमिव च मणिकृपाणदर्पणादिभेदादनेकविधप्रतिबिम्बात्मना, तथा चैकस्य सतो विवर्त्तः कार्यं न वस्तुसदिति, एकपुरुषादिवादिनः, सत एव परमाण्वादिकारणात्, पूर्वमविद्यमानं द्व्यणुकादिकार्यं जायत इति **वैशेषिकासत्कार्यवादः,** एतद्वादतुल्यो भवदीयो वाद इदानीं संवृत्त इत्याह–**पृथग्भूतेति.** स्वपृथग्भूतकार्यकं हि कारणं तदेव कार्यस्याश्रयः पटादिकार्यं स्वाश्रये समवायिकारणे तन्त्वादावविद्यमानं असमवायिकारणतन्तुसंयोगापेक्षं यथोत्पत्तिं भजते तथैव सत्त्वे पूर्वमवर्त्तमानौ प्रवृत्तिनियमौ रजस्तमोऽपेक्षावुत्पद्येते, रजसि च प्रकाशनियमौ सत्त्वतमोऽपेक्षौ, तमसि च प्रकाश-

१ सि. क. प्रकाशितं । २ सि. क. भ्युपग० ।

स एवाश्रयः कारणं च, तस्मिन् गुणे सत्त्वे रजसि तमसि च वैशेषिककल्पितपटादिकार्यस्य च तन्त्वादिषु परस्परसंयोगापेक्षेष्वसतो भवनवत् प्रकाशप्रवृत्तिनियमानां कार्याणां—सत्त्वे प्रवृत्तिनियमयोरसतोः प्रकाशनियमयोश्च रजसि [प्रवृत्ति]प्रकाशयोश्च तमसि, असतां परस्परापेक्षप्रवृत्तिषु सत्त्वादिषूत्पत्तिः—भवनमुक्तं भवति—प्रागसन्तः प्रकाशप्रवृत्तिनियमाः शब्दाद्यारम्भकाले उत्पन्ना इति प्रतिपद्यस्व, पृथ-

5 ग्भूततत्त्वाश्रयकारणाभिव्यक्तवैशेषिकाभिमततन्त्वाश्रयपटवत् ।

किञ्चान्यत्—

**तैर्यथास्वमकारणमद्भिरारब्धं यत्कार्यं त्रिगुणं शब्दादि तदपि भ्रान्तिमात्रम्, त्वदुक्तहेतुसामर्थ्यादेव, त्वयैवोक्तं हि यच्च यन्मयैरारब्धं तदात्मकं तदिति, तस्माच्छब्दाद्यसदात्मकं तन्मयैरारब्धत्वात् कार्पासिकतन्त्वारब्धपटकार्पासिकत्ववत् तन्मयतन्मयञ्च भूतादि शरी-**

10 **रादि घटादि च रूपादिसुखादिमयत्ववत् ।**

**तैर्यथास्वमित्यादि,** वैशेषिकाभिमतकार्यादप्येतत् पापीयो भ्रान्तिमात्रत्वात्, उक्तन्यायेन ते सत्त्वादिषु प्रकाशादयः कारणेष्वसन्तो यथास्वं योज्याः, यथास्वं—प्रकाशः सत्त्वे नास्ति, इतरापेक्ष उत्पन्नः, एवमितरावपीति, तैरकारणसद्भिः—प्रकाशाप्रकाशादि[भि]रारब्धं—परस्पराश्रयेण व्यक्तं प्रवृत्तं नियतञ्च यत्कार्यं त्रिगुणं शब्दादि तदप्यलातचक्रवद्भ्रान्तिमात्रं न परमार्थतोऽस्तीत्यापन्नम्, त्वदुक्तहेतु-

15 सामर्थ्यादेव, तन्मयारब्धत्वात्तदात्मकमेव हि तत्, त्वयैवोक्तं हि यच्च यन्मयैरारब्धं तदात्मकं तदिति शब्दादीनां सुखाद्यात्मकत्वं शब्दाद्यारब्धानां भूतानां भूतारब्धानाञ्च शरीरादिघटादीनाम् । तस्माद्वयमपि तथैव ब्रूमः—शब्दादि असदात्मकं तन्मयैरारब्धत्वात् कार्पासिकतन्त्वारब्धपटकार्पासिकत्ववदिति, यथा कार्पासिकैस्तन्तुभिरारब्धः पटः कार्पासिक इत्युच्यते तथा शब्दाद्यसन्मयं तन्मयप्रकाशाद्यारब्धत्वादिति, तन्मयतन्मयञ्चेति, यदपि च भूतादि शरीरादि घटादि सर्वमसदात्मकं तन्मयतन्मयारब्ध-

20 त्वात् कार्पासिकपटकुटैरपि कार्पासिकत्ववदिति । तच्छास्त्रप्रसिद्धमेवोदाहरणं रूपादिसुखादिमयत्ववदिति

प्रवृत्ती सत्त्वरजोऽपेक्षे इत्याह—**वैशेषिकेति** । इदमेव प्रयोगद्वारा प्रकाशयति **प्रागिति** । एकपुरुषादिवादवदयं वाद आपन्न इत्याह—**तैरिति** प्रकाशप्रवृत्तिनियमैरित्यर्थः, शब्दादयो हि सत्त्वरजस्तमआत्मकाः सत्त्वादिकारणेष्वविद्यमानैः प्रकाशप्रवृत्तिनियमैरारब्धाः प्रकाशाद्यात्मका इति फलितम्, सत्त्वादिषु प्रकाशादयो न सन्ति परस्पराश्रयेण प्रकाशादीनामसतामुत्पादाभ्युपगमात्, एषोऽभ्युपगमोऽपि रज्ज्वादौ सर्पविभ्रमवद्भ्रान्तरूप एव, असन्मयारब्धस्यासदात्मकत्वात्, यद्यन्मयारब्धं

25 तत्तदात्मकमिति व्याप्तेस्त्वयैवोक्तत्वादिति भावः, तदेव व्याप्तिं प्रदर्शयति—**त्वयैवोक्तं हीति**, शब्दादीत्यनेन शब्दस्पर्शरूपरसगन्धतन्मात्राणि ग्राह्याणि, तेभ्य एव भूतानामारम्भात्, एते शब्दादयः प्रकाशादिमयसत्त्वाद्यारब्धाः प्रकाशादिमयाश्च तथैव प्रकाशाद्यसन्मयसत्त्वाद्यारब्धत्वात् शब्दादयोऽसन्मया एव प्राप्ता इति शब्दादयो रज्ज्वां सर्पवद्भ्रमरूपा एव । एवं शब्दाद्यारब्धभूततदारब्धशरीरादितदारब्धघटादीनामप्यसन्मयत्वमसन्मयारब्धारब्धत्वादिना भाव्यमित्याह—**तन्मयतन्मयञ्चेतीति** । **रूपादीति,** सुखाद्यात्मकशब्दाद्यारब्धभूतारब्धरूपादीनां सुखाद्यात्मकत्ववदित्यर्थः । तथा च शब्दाद्यसन्मयं,

30 असन्मयारब्धत्वात्, रूपादिसुखादिमयत्ववत्, रूपादि, असन्मयासन्मयारब्धारब्धत्वादिति युक्तं प्रतिभाति । ननु वयं प्रकाशाद्यात्मकशब्दाद्याविर्भावं प्रति सत्त्वमेवोपादानकारणं रजस्तमसी निमित्तमात्रे इति न ब्रूमो येन सत्त्वादौ प्रवृत्त्याद्यभावेन

१ सि. क. अपृथग्भू० । २ सि. क. तत्त्वकारणाश्रया० । ३ सि. क. रारब्धय० । ४ सि. क. इदं पदं नास्ति । ५ सि. क. कुटैरपि ।

शब्दाद्यसत्त्वस्य साध्ये रूपादिसुखादिमयत्वमुदाहरणम्, रूपादीनामपि तथैवासन्मयत्वं शब्दादिसुखादिमयत्वं दृष्टान्तेनापाद्यमिति ।

**अथोच्येत एवमेव तत्कारणत्वं युज्यते तत्र च तेषु कार्यसत्त्वमेव, शुक्लरक्तकृष्णतन्त्वात्मिकाया रज्जोः कार्यायास्तन्तुकारणत्ववदिति, नन्वेवमेवमेवेति वचनस्य द्वयी गतिः यथा वाऽस्मदुक्तवदेकात्मकं कारणमनेकाकारविपरिवृत्ति पुरुषवदिति रजस्तमसी सत्त्वमेव. प्रकाशकारकत्वादित्येतस्यां गतौ दोषः स एव पुरुषाद्यन्यतमैककारणवादाभ्युपगमः. अथ त्वन्मतेन जात्यन्तरसुखादित्रयकारणतदात्मककार्याभ्युपगमेनैवमेवेति ।**

(**अथोच्येतेति**) अथोच्येत एवमेव तत्कारणत्वं-तेषां सत्त्वादीनां कारणत्वमेवमेव युज्यते, तत्र च तेषु सत्त्वादिषु कारणेषु शब्दादिकार्यसत्त्वमेव युज्यते प्रतिस्वं प्रकाशादिकार्याणां, शुक्लरक्तकृष्णतन्त्वात्मिकाया रज्जोः कार्यायास्तन्तुकारणत्ववत्, यथा प्रत्येकं शुक्लादिगुणास्तन्तवस्त्रयोऽपि त्रिगुणामेकां रज्जुमारभमाणाः कारणत्वं नातिवर्त्तन्ते ततस्तेषु सत एव त्रैगुण्यस्याविर्भावाद्रज्जोः सत्कार्यत्वं तथा सत्त्वादिकारणत्वं शब्दादिसत्कार्यता चेत्यत्रोच्यते-नन्वेवमित्यादि यावत् सत्त्वमेवेति, एवमेवेति यदेतद्वचनं तस्य द्वयी गतिः, यथा वाऽस्मदुक्तवदेकात्मकं कारणमनेकाकारविपरिवृत्ति पुरुषवदित्यभ्युपगमादिति, तद्दर्शयति सकारणं, यथाऽस्मदुक्तवद्वा एकत्वं रजस्तमसी अपि सत्त्वमेव, प्रकाशकारकत्वञ्च तयोर्यथा प्राग्व्याख्यातं सिद्धमत एव तस्यां गतौ दोषः स एव पुरुषाद्यन्यतमैककारणवादाभ्युपगम इति । अथ त्वन्मतेन जात्यन्तरसुखादित्रयकारणतदात्मककार्याभ्युपगमेनैवमेवेत्येषा गतिरिति ।

इतर आह—

**एषा गतिरस्तु को दोषः? इति चेद्ब्रूमः सर्वव्यक्तव्यापि चासत्कार्यत्वम्, प्रतिगुणं प्रकाशाद्योर्द्वयोः कार्यात्मनोः प्रागभूतत्वात्, अन्यगुणकारणकार्यात्मनामन्यत्रासतामुत्पत्तेर्व्यवस्थानवचनात् प्रख्यापनवचनाच्चाभ्युपगतत्वात् ।**

(**एषेति**) एषा गतिरस्तु को दोषः ? इति, अत्र दोषकुतूहलश्चेद्ब्रूमः—सर्वव्यक्तव्यापि चेत्यादि,

प्रकाशप्रवृत्त्याद्यात्मकशब्दाद्याविर्भावेऽसत्कार्यवादः प्रसज्येत, किन्तु शुक्लकृष्णरक्ततन्तूपादानकरज्ज्वाविर्भाववत् प्रकाशप्रवृत्तिनियमात्मकसत्त्वरजस्तमउपादानकः शब्दादिपरिणामः, गुणत्रयसंयोगस्यानादितया वियोगासम्भवादित्याशयेनाऽऽशङ्कते-**अथोच्येतेति । शुक्लरक्तेति** यथा श्वेतरक्तकृष्णवर्णमयतन्तुभिरनेकैरारब्धा रज्जुस्त्रिगुणात्मकतन्तुपरिणामाऽप्येका प्रागेकैकतन्तुषु विद्यमाना रज्जुकालेऽपि श्वेतादीनि सूत्राण्यसङ्कीर्णतयैवोपलभ्यन्ते तथैव प्रकाशाद्यात्मकत्रिगुणारब्धं शब्दादि प्राक् त्रिगुणेषु सदेवाविर्भूतमसङ्कीर्णप्रकाशाद्यात्मकधर्मकर्दमकस्य शब्दादेः पुरुषभेदेन सुखाद्यात्मकत्वानुभवात्, तस्माच्छब्दादेः सत्त्वादिकारणकत्वं सत्कार्यत्वञ्चेति भावः । अथैवमेव तत्कारणत्वं युज्यत इति वाक्यस्य कोऽभिप्रायः, किं सुखदुःखात्मकशब्दाद्यनेकपरिणामानामेकात्मकैकस्य कारणत्वमिति, किंवा परस्परासङ्कीर्णप्रकाशाद्यनेकात्मकानेकेषां कारणत्वमिति वा, प्रकारान्तरासम्भवात्, मया पूर्वमापादितस्यैकात्मकैककारणत्वस्याभ्युपगमे दोषमादर्शयति-**एवमेवेतीति** । अनेकात्मककारणत्वपक्षे दोषं वक्तुमाह-**एषेति** यद्यपि 'हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम् । सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तमि'तीश्वरकृष्णेनानेकात्मकैकस्य कारणत्वमुक्तम् तथाप्यत्र सत्त्वरजस्तमांसि त्रीणि शब्दाद्यात्मभाविन्यादिवचनमवलम्ब्य विचारप्रस्तुतेरनेकात्मककारणत्वमुक्तं बोध्यम् । **सर्वव्यक्तेति**, महदादिभूतान्तं त्रयोविंशतितत्त्वरूपं व्यक्तं तथा तन्तुपटादयोऽपि

१ सि. क. सत्वस्वात्मवदिति । २ सि. क. यद्वा । ३ सि. क. °कारण ।

तदेव ह्यसत्कार्यत्वं स्वभावान्तरेणापद्यते, सर्वं व्यक्तं शब्दादि तन्तुपटादि वा व्यापितुं शीलमस्य तदसत्कार्यत्वं सर्वव्यक्तव्यापि, कस्माद्धेतोः ? प्रतिगुणं प्रकाशनियमयोर्द्वयोः कार्यात्मनोः प्रागभूतत्वात्— गुणं गुणं प्रति प्रतिगुणं, सत्त्वे द्वयोः प्रागभूतत्वादेव कार्यात्मनोः, तथा रजसि प्रकाशनियमयोः, तमसि प्रकाशप्रवृत्त्योः कार्यात्मनोरभूतत्वात्, अन्यगुणकारणकार्यात्मनामन्यत्र व्यक्तिप्रवृत्तिनियतिका-
5 र्याणामसतामुत्पन्नेऽवस्थानवचनात् प्रख्यापनवचनाद्वाभ्युपगतत्वात्तस्माद्वैशेषिककार्यवदसत्कार्यत्वम् ।

न केवलं वैशेषिकवदेव, किन्तर्हि ?—

**बौद्धवद्वाऽसत्कार्यत्वम्, तथाभूतवस्तुनिर्मूलोत्पत्तित्वात्, द्वितीयक्षणघटवत्, पुरुषवत् ।**

**( बौद्धवद्वेति )** बौद्धवद्वाऽसत्कार्यत्वम्, वरं हि वैशेषिकासत्कार्यतुल्यत्वं त्वदसत्कार्यत्वस्य, कारणैः सह कञ्चित् कालं तिष्ठतीति तेरिष्टत्वात्, इदं बौद्धासत्कार्यत्वतुल्यमेव ते प्राप्तम्, कुतः ? तथा-
10 भूतवस्तुनिर्मूलोत्पत्तित्वात्—तेन प्रकारेण भूतं वस्तु शब्दो रूपमित्यादि, तथाभूतवस्तुना निर्मूलोत्पत्तिस्त-द्भावात् तथाभूतवस्तुनिर्मूलोत्पत्तित्वात्, किमर्थं पुनर्निर्मूलोत्पत्तित्वादिति सिद्धे तथाभूतवस्तुग्रहणं ? दृष्टान्तद्वयेनार्थद्वयप्रदर्शनार्थम्, तद्यथा—द्वितीयक्षणघटवत्—यथा क्षणः क्षणान्तरे उत्पन्न एवोत्तरस्मिन् पूर्वो निरुद्ध्यते, उत्तरश्च तदनन्तरमुत्पद्यते निर्मूलः, 'नामोन्नामौ तुलान्तरयोरिव' [ ] इत्युक्त-त्वात्, तत्सहचरितश्च घटादिवस्तु पूर्वस्मिन्निरुद्धे पाश्चात्यस्योत्पादाभ्युपगमान्निर्मूलोत्पत्तिरेव,
15 पुरुषदृष्टान्तसाध्यश्चोभयतत्साधर्म्यादिदमपि सत्त्वादिप्रकाशादिकार्यं शब्दादि सांख्यमतमिति योज्यम् ।
तस्मान्निर्मूलोत्पत्तिसाधर्म्याद्बौद्धासत्कार्यवादतुल्यतेति ।

सर्वाविकारत्वात् व्यक्तरूपा एव, एते सर्वेऽसत्कार्यरूपाः स्युः, सत्त्वे प्रवृत्तिनियमयो रजसि प्रकाशनियमयोस्तमसि प्रकाश-प्रवृत्त्योरभावेन सर्वविकाराणां प्रकाशप्रवृत्तिनियमात्मकानां कारणे एकैकावच्छेदेनाभूतेरिति भावः । यथा हि शुक्लरूपावच्छिन्ने तन्तौ रक्तरूपावच्छिन्नस्य चित्रपटस्यासत्त्वं तथैव प्रकाशात्मनि सत्त्वे प्रवृत्तिनियमात्मनः शब्दादेः प्रवृत्त्यात्मनि रजसि
20 प्रकाशनियमात्मकस्य प्रवृत्तिनियमात्मनि तमसि प्रकाशप्रवृत्त्यात्मकशब्दादेरसत्त्वात् प्रकाशप्रवृत्तिनियमात्मकस्य शब्दादेरसत्कार्य-त्वम्, शब्दादेश्च प्रकाशप्रवृत्तिनियमात्मकत्वं त्वया स्वीकृतमेवेत्याह—**अन्यगुणेति** । त्वदीयोऽयं वादो बौद्धपरिकल्पितासत्कार्य-वादतुल्य इत्याह—**बौद्धवद्वेति** । वैशेषिकासत्कार्यवादे हि कार्योत्पत्त्यनन्तरं कारणे कार्यस्य सद्भावोऽभिमतः, त्वदीयवादे च शब्दादिकार्याणामसत्त्वमयारम्भत्वात् सत्त्वादेरसत्त्वेन निर्मूलोत्पत्तित्वात् क्षणमात्रमपि न कारणे कार्यसत्त्वमिति बौद्धासत्कार्य-तुल्यतैवेत्याह—**वरं हीति**, उत्तरस्मिन् क्षणे उत्पद्यमाने पूर्वः क्षणो निरुध्यते, इत्येकोऽर्थः, विनष्टाद्बीजादङ्कुरो जायते विनष्टात्
25 क्षीराद्दधि, विनष्टाच्च मृत्पिण्डाद्घट इत्यपरोऽर्थः, तत्र प्रथमपक्षे उत्तरक्षणोत्पत्तिसमकालं पूर्वक्षणनिरोधः प्राप्तस्तथासत्यचिरनिरु-ध्यमानस्य तदैव परिनिष्पन्नस्य कार्यजननोपयोगिव्यापाराभावेन हेतुत्वासम्भवादुत्तरक्षणो निर्मूल एवोत्पद्यते, अपरपक्षे तु बीजादेः कार्योत्पत्तिप्राक्काल एव विनाशात्तस्य हेतुत्वासम्भवेनाङ्कुरादेर्निर्मूलोत्पत्तिकत्वं स्फुटमेवेत्याशयेनाह—**दृष्टान्तद्वयेनेति,** क्षणदृष्टान्तेन घटदृष्टान्तेन चोत्पत्तिसमकालं विनाशः, विनाशोत्तरकालं वोत्पत्तिरित्यर्थद्वयम् । **उत्पन्न एवेति** उत्पद्यमानता-दशायामेवेत्यर्थः, पदधातोर्ज्ञानार्थत्वेन वर्तमाने क्तप्रत्ययात् । उत्तरक्षणश्च पूर्वक्षणविनाशव्यवधानव्यतिरेकेणोत्पद्यते इत्यर्थः,
30 विनाशकाल एवेति यावत्, अभावग्रस्तेभ्यो बीजादिभ्योऽङ्कुरादीनामुत्पद्यमानत्वादभावाद्भावोत्पत्त्या निर्मूलोत्पत्तिरेवेत्याह—**तत्सहचरितश्चेति** वस्तुमात्रस्य क्षणिकत्वेन क्षणसहचरितं घटादिवस्त्विति भावः, अथवा क्षणिकघटदृष्टान्तादनिर्मूलोत्पत्ति-त्वादसत्कार्यत्वं बौद्धासत्कार्यत्ववदित्येकोऽर्थः, पुरुषवादे पुरुषाद्यथा निर्मला पुरुषेऽविद्यमानशब्दाद्युत्पत्तिः पूर्वमुपपादिता तथा तव शब्दाद्युत्पत्तिरिति द्वितीयोऽर्थ इत्याशयेनाह—**पुरुषदृष्टान्तेति, सांख्यमतमिति** सांख्यसम्मतमित्यर्थः । प्रतिगुणं

१ सि. क. ग्राम्यक्तिः । २ सि. क. तिष्ठत इति । ३ सि° निरुध्यते ।

एवं प्रकाशाद्यसत्कार्यत्वे सिद्धे सर्वव्यक्तासत्कार्यत्वसाधनम्—

**असत्कार्याः शब्दादयः कारणत्वात्, अन्यगुणात्मकसुखप्रवृत्त्यादिवत्, सुखं सत्त्वगुणं प्रागसत् प्रवृत्तिनियमकार्यं पश्चात्तत् कार्यं दृष्टं कारणञ्च तद्वच्छब्दादयोऽसत्कार्याः कारणताञ्च बिभ्रति, इतरानुपकृताविद्यमानप्रकाशादित्रयसुखादिकारणवत्, प्रत्येकमितरानुपकृतविद्यमानप्रकाशादित्रयस्वकार्या वा सुखादयः कारणत्वाच्छब्दादिवत्तन्त्वादिवद्वेति पुरुषादिवाद एवैषः ।** 5

(**असत्कार्या इति**) असत्कार्याः शब्दादयः कारणत्वात्, यद्यत् कारणं तत्तदसत्कार्यं दृष्टम्, अन्यगुणात्मकसुखप्रवृत्त्यादिवत्—अन्यो गुणः सत्त्वाद्रजः, तदात्मा सुखं तत्र स्वयं साम्यावस्थायां एकप्रकाशात्मकार्यमपि सत् जात्यन्तररजःकार्यं प्रवृत्त्यात्मकमारम्भावस्थायामिष्टम्, त्र्यात्मकशब्दाद्यात्मव्यवस्थानवचनात्, तथा नियमानियमात्मकमप्यादिग्रहणात्, अतः सुखं सत्त्वगुणं प्रागसत् 10 प्रवृत्तिनियमकार्यं पश्चात्तत्कार्यं दृष्टं कारणञ्च तद्वच्छब्दादयोऽसत्कार्याः कारणताञ्च बिभ्रतीति, एवमन्यगुणदुःखप्रकाशननियमवदन्यगुणमोहप्रकाशप्रवृत्तिवदित्येकैकमेव दृष्टान्तं कृत्वा योज्यम् । एतस्यार्थस्य स्फुटीकरणार्थमाह—इतरानुपकृताविद्यमानप्रकाशादित्रयसुखादिकारणवदिति, इतरेण—रजसा तमसा चानुपकृतौ—प्रागसन्तौ पश्चात्तदुपकारजौ तथा [1]मोहेनापीति । यद्येवं नेष्यते ततः प्रत्येकमितरानुपकृतविद्यमानप्रकाशादित्रयस्वकार्या वा सुखादयः कारणत्वाच्छब्दादिवत्तन्त्वादिवद्वेति, स्वशब्दादेक- 15 स्यैव सत्त्वगुणस्य त्रयोऽपि प्रकाशादय आत्मीया एव कार्यास्तथेतरयोश्चेति पुरुषादिवाद एवैषः संज्ञामात्रविप्रतिपत्तिरिति । एवं तावदप्रकाशात्मकयो रजस्तमसोः शब्दात्मना व्यवस्थितिप्रमाणेन तत्प्रख्यातिना सत्त्वेन तदात्मप्रख्यापने दोषा उक्ताः ।

यदि चैवं सत्कार्यवादस्योक्तत्वात् अमूलत्वप्रसङ्गभयादसत्कार्यवादस्य प्रतिष्ठितमूलत्वप्रसङ्गभयाच्च नेष्यतेऽयं विकल्पोऽप्रकाशात्मकयोरिति ततः प्रकाशात्मकयोरित्यस्तु, तत्रापि च दोषं वक्तुकाम इदमाह— 20

---

प्रकाशाद्योर्द्वयोरसतोरुत्पत्तिं समर्थयित्वेदानीं तन्निदर्शनेन निखिलव्यक्तकार्येष्वसत्कार्यत्वं वक्ति-**असत्कार्या इति**, यथा सुखं साम्यावस्थायां प्रकाशात्मकसत्त्वमात्रकार्यमपि वैषम्यावस्थायां प्रवृत्त्यात्मरजःकार्यम्, सुखदुःखमोहात्मकशब्दादेः प्रकाशप्रवृत्तिनियमकार्यत्वस्य शब्दात्मभावाय प्रवर्त्यते प्रकाश्यते व्यवस्थाप्यत इति प्रतिपादनात् तस्मात्तदसत्कार्यं प्रवृत्त्यात्मकत्वादेव कारणं तथा शब्दादयोऽपि सुखदुःखमोहात्मकत्वात् प्रकाशप्रवृत्तिनियमात्मकत्वाच्चासत्कार्यं सुखाद्यात्मकत्वात् कारणञ्च प्रवृत्त्याद्यात्मकत्वादिति समर्थयति-**अन्यो गुण इति** । एवमेवान्यगुणात्मकसुखनियमवदिति दृष्टान्त उक्तस्तस्यैव प्रदर्शनाय व्याचष्टे **तथेति** । एवं दुःखापेक्षया मोहापेक्षया चान्यगुणदुःखप्रकाशवदन्यगुणदुःखनियमवदन्यगुणमोहप्रकाशवदन्यगुणमोहप्रवृत्तिवदिति दृष्टान्ता वाच्या इत्याह-**एवमिति** । उक्तदृष्टान्ता मूलकृतैव सूचिता इत्याह-**एतस्येति** । यदि रजस्तमःसहकारमन्तरेणैव स्वात्मनि विद्यमानानेव प्रकाशप्रवृत्त्यादीन् सत्त्वं करोतीतीष्यते तर्हि एकस्मादेव सर्वसमुद्भवाभ्युपगमेन पुरुषादिवाद एवायं नाममात्रभेदमिश्र इत्याह-**यद्येवमिति**, सत्त्वस्य त्रयोऽपि प्रकाशादय आत्मीयाः सत्कार्याः, तथा रजसस्ते तथा, तमसोऽपि ते तथेत्याह-**स्वशब्दादिति**, प्रकाशादित्रयस्वकार्या इत्यत्र स्वशब्दादित्यर्थः । अप्रकाशात्मकयोरिति द्वितीयविकल्पप्रत्याख्यानमुपसंहरति-**एवं तावदिति** । अप्रकाशात्मकयोरिति विकल्पपक्षे सत्कार्यवादो निर्मूलः स्यात्, असत्कार्यवादः समूलः स्यादिति भयात्तत्त्याग इत्याह-**यदि चैवमिति** । अथ सत्कार्यवादे कारणे कार्यस्य सत्त्वात् 25 30

---

1 सि. क. तत्तच्छब्दा० । 2 सि. क. मोहोऽपीति ।

अथ प्रकाशात्मकयो रजस्तमसोः शब्दात्मना व्यवति[illegible]मानेन तत्प्रख्यातिना सत्त्वेन तदात्मभावाय प्रवृत्तिः प्रख्याप्यते इति विकल्प इष्यते, अ[illegible]काशात्मकयोरिति च नेष्यते ततो यथैव कारणे कार्यस्य सत्त्वाद्घटेनैव घटः क्रियते तदात्म[illegible]क्तिप्रतिनियतस्वसाधनक्रमसमावेशाच्च कारणघटेन कार्यघटस्तथाभूतव्यक्तिशक्तिस्थूलतापत्त्याऽभिव्यज्यते, निर्मल[illegible]पणस्वरूपोपलब्धिवत् कर्मैव सद्वस्तु कर्तृ भवति, मृद एव घटत्वात् कुलालदण्ड[illegible] एव तत्साधनत्वात्, वीरणादितोऽकरणात् तथैव सत्त्वेन शब्दादिप्रकाशेनापृथग्भूतप्रकाशादितत्त्वमाकाशादि प्रकाश्यते प्रवर्त्यते नियम्यते च शब्दादिप्रवृत्त्या शब्दादिनियमेन च ।

**अथ प्रकाशात्मकयोरित्यादि** यावन्नेष्यत इति, गतार्थम्, ततो यथैवेत्यादि दृष्टान्तमेव तावत् प्रक्रियार्थसङ्ग्रहमुदवर्णयति—कारणे कार्यस्य सत्त्वाद्घटेनैव घटः क्रियते इति—मृत्पिण्डघटेनोर्ध्वग्रीवकुण्डलोष्ठपृथुकुक्ष्याद्याकारो घटः क्रियते—प्रकाश्यते करोतेः प्रकाशार्थत्वात्, यथा पृष्ठं कुरु पादौ कुरु [ महा. भा. १-३-१ सूत्रे ]न्न करणं विमलीकरणं प्रकाशनमित्यर्थः कारणे कार्यस्य सत एव प्रकाशनात्, सर्पस्फटाटोपमुकुलत्वादन्तर्गतकुण्डलीभावत्वं, तत्र यथा सर्पेणैव सर्पः क्रियते तथेहापि घटेनैव मृदा पृथुकुक्ष्याद्याकाराः क्रियन्ते, अत्यन्तभिन्नेनान्येनान्यस्याकरणात् । किञ्चान्यत् तदात्मव्यक्तिप्रतिनियतस्वसाधनक्रमसमावेशात्—घटात्मनो व्यक्तिः—प्रागनुपलभ्यस्य पश्चाच्चोपलब्धिः सा प्रतिनियतानामात्मीयानां कुलालदण्डादीनां तत्क्रमस्य च कालाख्यस्य साधनत्वात्, पिण्डशिवकादिभावेषु यथावस्थं व्याप्रियमाणानां क्रमेण व्यापारादित्यर्थः, तद्दर्शयति—कारणघटेन कार्यघटोऽभिव्यज्यत इति, कथं व्यज्यत इति चेत्—तथाभूत-

कार्यकारणयोरभेदाच्च मृदात्मना घटेनैव घटः क्रियते मृदात्मना विद्यमान एव घटो व्यापारानन्तरं स्वस्वरूपेणाविर्भवति नान्यत् किञ्चिदसदुत्पद्यत इत्याह—**कारण इति** । बह्वर्था धातवो भवन्तीति निरूपणावसरे सर्वतन्त्रसिद्धान्तमहाभाष्ये प्रोक्तं 'करोतिरभूतप्रादुर्भावे दृष्टः निर्मलीकरणे चापि वर्तते पृष्ठं कुरु पादौ कुरु' इत्युक्तं तदनुसारेण क्रियत इत्यस्य प्रकाश्यत इत्यर्थः कृत इत्याह **क्रियत इति** । सर्पशरीरे सत एवावयवविशेषस्य निःसरतः स्फटाटोपतयाऽऽविर्भावः निविशमानस्यैव मुकुलरूपतया तिरोभावस्तथादीर्घीभावः कुण्डलीभावश्च, न तत्रासतः कस्यचिदुत्पत्तिः किन्तु स्फटाटोपावच्छिन्नः सर्प एव मुकुलावच्छिन्नो भवति, एवं मृदात्मा घट एव पृथुकुक्ष्याद्याकारो घटो भवतीत्याह—**सर्पेति** । यदि मृद्घटयोरत्यन्तमसम्बन्धस्तर्हि उपादानैः कार्यस्यासम्बन्धात् सर्वं कार्यजातं सर्वस्मात् भवेदसम्बद्धत्वाविशेषात्, तस्मात् कार्येण सम्बद्धं कारणं कार्यस्य जनकम् । सम्बन्धश्च कार्यस्यासतो न सम्भवति तस्मात् सदेव तथा भवतीत्याशयेनाह—**अत्यन्तेति** । घटेनैव घटः क्रियते इत्यनेनोत्पत्त्यादिक्रियाकर्तृतया कार्यस्य प्राक् सत्त्वं सूच्यते, अन्यथा हि उत्पत्तेः क्रियात्वेन तस्याः सकर्तृकतया कर्तुरभावे क्रियाया आश्रयरहिताया असम्भवात् घट उत्पद्यत इत्यादिव्यवहारोऽनुपपन्न एव स्यादिति । ननु प्रागपि घटादेः सत्त्वे कुलालदण्डचक्रसूत्रादीनि साधनानि किं कुर्वन्तीत्याशङ्कायामाह—**तदात्मेति**, क्रमेण प्रवर्तमानानां साधनानां व्यापारो न घटादिस्वरूपसिद्धये तत्स्वरूपस्य सदा सत्त्वात्, स हि घटः सर्वत्र सर्वदा घट एव, न कदाचिदघटः, तस्मात् त्रिष्वपि कालेषु स सन्नेव, किन्तु आविर्भावे एव, तत्र कार्यस्याविर्भावो नाम साक्षाद्विज्ञानालम्बनत्वप्राप्तिः लोकेऽपि घटादिवस्तु अन्धकारादिनाऽऽवृतं तत्प्रदीपप्रकाशादिनाऽऽवरणान्तरस्काररेण विज्ञानविषयत्वं प्राप्नुवत् प्राक्सद्भावं न व्यभिचरति तथात्रापि, इदमिन्द्रियप्रत्यक्षविषयत्वमेव स्थूलत्वमत एवाग्रे वक्ष्यति स्थूलतापत्त्या—इन्द्रियग्राह्यतयेति । ननु कार्यकारणयोरभेदे स्वस्मात् स्वस्योत्पत्तेरसम्भव इत्याशंकायामाह—**कारणघटेनेति** सर्पस्य स्फटाटोपादयः सर्पादभिन्ना एव यथाऽऽविर्भवन्ति तिरोभवन्ति च तथैवाभिव्यक्तिविशिष्टघटादिः कार्यमुच्यते सूक्ष्मावस्थाविशिष्टश्च स एव कारणमुच्यते ततो नासम्भव इति भावः । एतदेवाह—**तथाभूतेति** सर्वं हि सर्वशक्तिकं सर्वत्र

१ सि. क. घटात्मत्वस्य ।

व्यक्तिशक्तिस्थूलतापत्त्या–पृथुबुध्न्यादिप्रकारेण व्यक्तिशक्तिरस्य, मृदि शक्तिमत्यां सूक्ष्मावस्थानादुत्त-रकालं देशकालाद्यवबन्धापगमात् स्थूलतापत्त्या–इन्द्रियग्राह्यतया, [1]निर्मलदर्पणस्वरूपोपलब्धिवत् कर्मैव सद्वस्तु कर्तृ भवति, मृद एव घटत्वात्–मृदेव हि घटो भवति, घटमात्मानमात्मनाऽवस्थान्तरमात्रवि-शिष्टमवस्थान्तरमात्रविशिष्टेन करोति, [2]कर्मण एव कर्तृत्वाभ्युपगमात्, कुलालदण्डादीनां तर्हि साधन-त्वाभावः, स्वयमेव मृदः कर्तृकर्मत्वाभ्युपगमाद्घटस्यैवेति चेन्न, अत एव तत्साधनत्वात्, वीरणादितोऽ- 5
करणात्, अमदकरणादिहेतुभ्यो मृद्येव सन्तं घटं कुलालचक्रदण्डादयोऽभिव्यञ्जयन्तः कर्तृकरणसम्प्रदा-नापादानाधिकरणादिभावं प्रतिलभन्ते तद्विषयमेव, न वीरणादिविषयम्, न तन्त्वादिविषयम्, तदात्मगत-व्यक्तिशक्तिप्रतिनि[3]यतस्वसाधनक्रमसमावेशादेव तानि च कारणानि परस्परोपजनितकार्यसाधनशक्तीनी-त्येकप्रबन्धेन प्रवर्त्तमानानि कारणानीत्युच्यन्ते नान्यविषयाणि, तस्मात् कुलालादीनामपि तथैव कर्तृत्वा-दिभावोपपत्तेः घटेनैव घटः क्रियते इति साधूक्तम्, एवं दृष्टान्तमात्मनैवात्मानं प्रकाशयति करोतीति 10
प्रतिपाद्य दार्ष्टान्तिकं प्रतिपादयति–तथैव सत्त्वेनेत्यादि, यथा कारणे कार्यस्य सत्त्वाद्घटेनैव घटः क्रियते इत्युक्तं तथा कारणे कार्यस्य सत्त्वात् सत्त्वेन सुखप्रकाशादिकारणात्मना तदात्मकं सत्त्वमेव प्रकाश्यते मृद्घटावस्थावत्, तद्दर्शयति–शब्दादिप्रकाशेनापृथग्भूतप्रकाशादितत्त्वं किं तत् ? आकाशादि, रूपाद्यपृथग्भूततत्त्वाया मृदो [4]घटात्तदपृथग्भूत[ त ]त्त्वघटादिप्रकाशवत्, प्रकाशापृथग्भूतेन प्रकाशा-पृथग्भूततत्त्वं प्रकाश्यत इत्यर्थः । प्रकाशापृथग्भूतावेव प्रवृत्तिनियमावपीति तद्दर्शयति–शब्दादिप्रवृत्त्या 15
शब्दादिनियमेन, तदप्याकाशादि यथा प्रकाशापृथग्भावात् प्रकाश्यते तथा प्रवर्त्यते नियम्यते चेति ।

तद्विस्तरेण पर्यायशब्दान्वाख्यानेन भावयति—

**अपृथग्भूततत्त्वेनैव सत्त्वेन प्रकाशेन प्रवृत्तिसत्त्वेनानपेक्ष्यया स्वात्मस्था स्वव्यक्तिरावि-**

परिणामिनि सर्वविकारजननशक्तिमत्त्वात्, तथा च मृदः सर्वविकारजननसामर्थ्येऽपि देशकालाकारनिमित्तप्रतिबन्धान्नैकदा निखि-लभावानामभिव्यक्तिः, यथा कुङ्कुमस्य काश्मीरेऽभिव्यक्तिः, न पाञ्चालादिषु, निदाघे काले न प्रावृषोऽभिव्यक्तिः, न मृगी 20
मनुष्यं प्रसूते तस्यां मनुष्याकारसामग्रीप्रतिबन्धात्, नापुण्यवान् सुखं भुङ्क्ते, तत्र पुण्यनिमित्तस्यावबन्धात्, एतेषामवबन्धानाम-पगमे यथा निर्मले दर्पणे मुखस्योपलब्धिस्तथैव यथाभिव्यञ्जकसामग्रीसमवधानं सूक्ष्मतमसूक्ष्मतरसूक्ष्मबृहद्बृहत्तरबृहत्तमादिक्र-मेण स एव घटः कर्त्ताऽभिव्यक्तिविषयत्वलक्षणं कर्मत्वमुपैतीति भावः । मृदेव चूर्णपिण्डघटकपालकणाकारपरिणतिपरम्परां क्रमवतीमुद्वहतीत्याह–**मृद एवेति** । केवलमवस्था एव आविर्भावतिरोभावधर्मकाः धर्मी तु कूटस्थनित्य इत्याशङ्कायामाह–**अव [illegible]ति** तथा चावस्थाद्वारेणावस्थावतोऽपि परिणामशालितया न कौटस्थ्यमिति भावः । कार्येण सम्बद्धमेव 25
कारणं साधकं भवतीति कार्यसत्त्वे एव कारणानां कारणत्वमित्याह–**अत एवेति** । एवं प्रकाशात्मकं सत्त्वमपि प्रकाशते शब्दा-दिरूपेणेत्याह–**कारणे कार्यस्य सत्त्वादिति** । **शब्दादीति,** शब्दतन्मात्रादिप्रकाशेनाकाशादिप्रकाशो कारणापृथग्भूतो भवति, सूक्ष्माकाशाख्येन स्थूलमाकाशं भवति, तन्मात्रपदेनोपभोगयोग्यसकलविशेषसम्बन्धो व्यवच्छिद्यते, न तु गुणान्तरसं-पर्कः, सर्वस्य त्रिगुणात्मकत्वात्, तामसाहङ्कारात्तन्मात्राण्याविर्भवन्ति तत्र सत्त्वरजस्तमसामपृथग्भूततत्त्वत्वस्य प्रागुपपादित-त्वात् प्रकाश एव प्रवृत्तिर्नियमश्चेत्याशयेनाह–**प्रकाशापृथग्भूतावेवेति** । प्रकाशात्मकयो रजस्तमसोरिति विकल्पाभ्युपगमात् 30
प्रवृत्तिप्रकाशयोर्नियमप्रकाशयोश्चापृथग्भूतत्वम्, तथा च प्रकाशाद्यात्मकसूक्ष्माकाशेन प्रकाशाद्यात्मकस्थूलाकाशः क्रियत इति भावः । सत्त्वं रजस्तमोभ्यामपृथग्भूततत्त्वमत एव प्रकाशात्मकसत्त्वमेव प्रवृत्त्यात्मकं सत्त्वं तेन स्वात्मप्रकाशनेऽन्यानपेक्षेण सम्व्यक्तिः क्रियत इत्याह–**अपृथग्भूततत्त्वेनैवेति** । सत्त्वात् पृथग्भूतो गुणः कश्चिन्नास्त्येवेति सूचयत्येवकार इत्याह–**एव-**

१ सि. पृथक्०। २ सि. क. निर्मज्यद०। ३ सि. क. कर्तृरेवकर्तृत्वा०। ४ सि. क. नियतश्च सा०। ५ सि. क. घटे।

**भावः, आविर्भावेन प्रवृत्त्या प्रवृत्तिसत्त्वेनानपेक्षा स्वव्यक्तिराविर्भावः प्रवृत्तिः, स्वशक्त्याऽऽविर्भावेन स्वनियत्या नियमसत्त्वेनानपेक्षा स्वव्यक्तिः स्वप्रवृत्तिः स्वनियम इति प्रकाश एव प्रवृत्तिर्नियमश्च, एवं प्रवृत्तिरेव चेतरद्वयम्, नियम एवेतरद्वयम् ।**

**अपृथग्भूततत्त्वत्वादेव**, अपृथग्भूततत्त्वत्वादेव तेन सत्त्वेन प्रकाशेन प्रवृत्तिसत्त्वेनेति प्रकाशप्रवृत्त्योरैक्यं दर्शयति, एवकारेणावधारणार्थेन ततः पृथग्भूतार्थाभावञ्च दर्शयति, अत एवाह—अनपेक्ष्यया स्वशक्त्या, यदुक्तं भवति प्रकाशेनापृथग्भूततत्त्वेन सत्त्वेनेत्यादिपर्यायाः तदुक्तं भवति प्रवृत्तिसत्त्वेन प्रवृत्त्या स्वशक्त्या [ स्व ] व्यक्तिराविर्भावः 'जनी प्रादुर्भावे' प्रादुः प्राकाश्ये [ जन्मनि च ] प्रकाशो जन्माभिव्यक्तिरित्यनर्थान्तरम् । प्रकाशात्मयोरेव प्रकाश इति दर्शयति आविर्भावेन प्रवृत्त्या प्रवृत्तिसत्त्वेन प्रवृत्तिसत्त्वमेवानपेक्षा स्वव्यक्तिः—स्वतः पृथग्भूतप्रकाशनियमानपेक्षा स्वात्माभिव्यक्तिरित्यर्थः, तत्पर्यायकथनमाविर्भावः प्रवृत्तिरिति, तथा नियमसत्त्वेनानपेक्षेत्यादिना ग्रन्थेन प्रकाशप्रवृत्त्यनर्थान्तरभूतो नियम एव सत्त्वं रजश्चेत्यत आह—स्वशक्त्याऽऽविर्भावेन स्वनियत्या, का च सा ? नियमेनानपेक्षा स्वव्यक्तिः पूर्ववत् स्वप्रवृत्तिः स्वनियम इत्येकार्थ इति प्रागुपपादितत्वात् प्रकाश एव प्रवृत्तिर्नियमश्च, यस्मात् प्रकाशमानः प्रवर्त्तते नियतश्चार्थ इति, एवं प्रवृत्तिरेव चेतरद्वयं यस्मात् प्रवर्त्तमानं प्रकाशते नियतञ्च, नियम एवेतरद्वयं नियतो ह्यर्थः प्रकाशते प्रवर्त्तते, तस्मादिहापि तदेव भावितमैक्यम् ।

कथं तर्ह्येकमेव प्रकाशप्रवृत्तिनियमभेदप्रत्ययव्यपदेशभाग्भवतीति ? अत्रोच्यते—

**अत एषामेकपुरुषप्रवृत्तश्यामायताक्षप्रलम्बबाहुत्ववत्तथैकवस्तुस्वतत्त्वभूताभिधानप्रयोजनकार्याणामव्यतिरेकेकवृत्तितेति ।**

(**अत इति**) अत एषामेकपुरुषप्रवृत्तश्यामायताक्षप्रलम्बबाहुत्ववत्—यथैकस्मिन् पुरुषे प्रवृत्तानि तदव्यतिरिक्तानि श्यामत्वमायताक्षत्वं प्रलम्बबाहुत्वमित्येतानि भिन्नानीव तद्भेदप्रत्ययव्यपदेशभाञ्जि भवन्ति तथैकवस्त्वित्यादिनोपसंहरति—तथैकस्य वस्तुनः स्वतत्त्वभूतानां तदभिधानप्रयोजनानां सत्त्वर-

**कारेणेति** । पृथग्भूतगुणाभावादेव सत्त्वं स्वकार्यव्यक्तौ नान्यापेक्षमित्याह—**अनपेक्ष्ययेति** । यथा प्रवृत्त्याद्यपृथग्भूतं प्रकाशात्मकं सत्त्वं स्वशक्त्यैवान्यानपेक्षं प्रकाशते तथैव प्रकाशाद्यपृथग्भूतं प्रवृत्त्यात्मकं रजः स्वशक्त्यैवान्यानपेक्षमाविर्भवतीत्याह—**यदुक्तं भवतीति** । आविर्भावः प्रकाशः प्रवृत्तिर्नियम इत्यनर्थान्तरमित्याह—**तत्पर्यायकथनमिति** । सत्त्वेन रजसा च तमस ऐक्यमादर्शयितुमाह—**तथा नियमसत्त्वेनेति** । प्रकाशमानस्यैव प्रवर्त्तमानत्वान्नियतत्वाच्च प्रकाश एव प्रवृत्तिर्नियमौ, प्रवर्तमानस्यैव प्रकाशमानत्वान्नियतत्वाच्च प्रवृत्तिरेव प्रकाशनियमौ नियतस्यैव प्रकाशमानत्वात् प्रवर्त्तमानत्वाच्च नियम एव प्रकाशप्रवृत्ती, तस्य तस्यैव तथातथाभावादित्याह—**प्रकाश एवेति** । प्रकाशप्रवृत्तिनियमानामेकत्वं प्रकाशतेऽयं प्रवर्त्तते नियम्यत इति कथं ज्ञानवैलक्षण्यं तस्मात् रूपरसवद्भिन्नज्ञानाधेयत्वात्तेषां भेद एव, प्रकाशमान एव प्रवर्त्तते नियतश्च प्रवर्त्तमान एव प्रकाशते नियतश्च नियत एव प्रकाशते प्रवर्त्तते चेति हेतुहेतुमद्भावव्यपदेशात्तेषां भेद एव, कथमेकस्य तदुपपद्यत इत्याशङ्कायामाह—**अत एषामिति** यथा श्यामत्वायताक्षत्वप्रलम्बबाहुत्वादयो विशेषा पुरुषाव्यतिरेकिणोऽपि भेदप्रत्ययव्यवहारभाजस्तथैव प्रकाशप्रवृत्तिनियमाः सत्त्वरजस्तमांसि चैकात्मभूतान्यपि भेदव्यपदेशभाञ्जि भवन्तीत्याह—**तथैकस्येति**, सत्त्वस्यैव रजस एव तमस एव वैकस्य वस्तुन इत्यर्थः । सत्त्वरजस्तमसां परस्परं भेदमभ्युपगम्य सत्त्वमधिकृत्य विकल्पद्वयमारचय्यैक्यमापाद्य

१ सि. क. °पेक्ष्यात्स्वशक्तिः । २ सि. क. °नपेक्षणे० ।

जस्तमसां तत्कार्याणाञ्च प्रकाशप्रवृत्तिनियमानामव्यतिरेकैकवृत्तिता, इतिः परिसमाप्त्यर्थः, एवन्तावदे-तया भावनयाऽऽपादितैक्यानां सत्त्वादीनां सत्त्वस्वात्मनैव कर्तृकर्मत्ववृत्तिरुक्ता परस्परस्वरूपापादनेन भेदमभ्युपगम्य ।

इदानीं फलाभेदान्नैव भेद इति प्रतिपादयिष्यन्नाह—

सत्त्वसत्त्वेनैव सत्त्वसत्त्वं प्रकाश्यते त्रयाणामपि सत्त्वरूपत्वस्यापादितत्वात्, यत्तत्सत्त्वं सत्त्वमेव भवति नान्यद्भवति रजस्तमो वा तत्सत्त्वसत्त्वं तेन सत्त्वसत्त्वेनैव प्रकाश्यते व्यज्यते, परिणामेन मृत्सत्त्वे यद्विद्यमानं सत्त्वसत्त्वं तेनैव तद्व्यज्यते, स्वपरिणामेन सदेव हि सत्त्वेन परिणमति नासत्, यदुक्तम्भवति व्यक्तीभवतीति तदुक्तम्भवति प्रवृत्तिनियमानपेक्षेण सत्त्वस-त्त्वेन सत्त्वसत्त्वं प्रकाश्यत इति, सत्त्वसत्त्वमिति च विशेषणं रजःसत्त्वतमःसत्त्वाभ्याम्, तयोरपि त्वन्मतप्रसिद्ध्या भेदेऽस्मदुक्तवदभेद एव, सतो हि भावः सत्त्वं यस्मात्तदेव सद्भवति तस्मात्तदेव सत्त्वं तत्त्वं तद्भावः परिणाम इत्यनर्थान्तरम् ।

(**सत्त्वसत्त्वेनैवेति**) सत्त्वसत्त्वेनैव [सत्त्व] सत्त्वं प्रकाश्यते त्रयाणामपि सत्त्वरूपत्व-स्यापादितत्वात्, सत्त्वसत्त्वं रजःसत्त्वं तमःसत्त्वमिति भिद्यते, तस्याभेदः फलाभेदादापाद्यतेऽधुना, यत्तत्सत्त्वं सत्त्वमेव भवति नान्यद्भवति रजस्तमो वा, तत्सत्त्वसत्त्वं तेन सत्त्वसत्त्वेनैव प्रकाश्यते व्यज्यते तदेव, सत्त्वस्य सत्त्वस्यैव भवनं व्यज्यते स्फुटीक्रियते, पूर्ववत् कर्तृकर्मभावोऽवस्थावशात्, तद्दर्शयति—परिणामेन मृत्सत्त्वे यद्विद्यमानं सत्त्वसत्त्वं—घटप्रकाशसत्त्वं तेनैव तद्व्यज्यते, स्वपरिणामेन सदेव हि सत्त्वेन परिणमति नासत्, यथोक्तम् 'अत्थित्तं अत्थित्ते परिणमति' (**भग. श. १ उ. २ सू. ३३**) इति, यदुक्तं भवति व्यक्तीभवतीति तदुक्तं भवति सत्त्वसत्त्वेन सत्त्वसत्त्वं प्रकाश्यत इति, सत्त्वसत्त्वमिति च विशेषणं रजःसत्त्वतमःसत्त्वाभ्याम्, तयोरपि त्वन्मतप्रसिद्ध्या सत्यपि भेदेऽस्मदुक्तवदभेद एवेत्यभिन्नफलत्वादैक्यमापाद्यम्, किं कारणं? यस्मात् सतो हि भावः सत्त्वम्, यस्मात्तदेव सद्भवति तस्मात्तदेव सत्त्वं तत्त्वं तद्भावः परिणाम इत्यनर्थान्तरम्, 'तद्भावः परिणामः'

यथा कर्त्रा घटेनैव कर्म घटः क्रियते सत्त्वस्वात्मनैव सत्त्वस्वात्म भवतीत्युक्तमित्युपसंहरति-**एवं तावदिति** । सत्त्वादीनां भेदाभ्युपगमेऽप्यनेनासाध्यभूतस्य कस्यचित्फलविशेषस्याभावात्तेष्वन्यतमं यथेच्छमेकमेवाभ्युपगन्तुं युक्तमिति वक्तुमुपक्रमते-**सत्त्वसत्त्वेनैवेति** सत्त्वादीनां परस्परमैक्यस्यापादितत्वात् कर्तुरेव कर्मत्वाच्च सत्त्वाद्याश्रयेण नव विकल्पा भवन्ति, तत्र प्रथमो विकल्पोऽयम्, सत्त्वस्वरूपेण सत्त्वेन सत्त्वस्वरूपं सत्त्वं प्रकाश्यत इत्यर्थः । एवकारव्यवच्छेद्यमाह-**यत्तत्सत्त्वमिति** तदेव सत्त्वसत्त्वमेव, सुखप्रकाशादिकारणात्मना सत्त्वेन कर्तृभूतेन तदात्मकस्य सत्त्वस्यैव कर्मभूतस्याविर्भाव इत्याह-**सत्त्वस्येति** । **परिणामेनेति,** वस्तुनः आत्मीयो भाव एव परिणामः, ततश्च मृदः सत्त्वसत्त्वं स्वो भावस्तस्मात्तेनैव तद्व्यज्यत इति भावः । तदेव स्फुटयति-**स्वपरिणामेनेति** । तत्रार्षं मानमाह-**यथोक्तमिति** । व्यक्तीभवतीत्युच्यमाने प्रकाशात्मकतत्त्वस्यैव लाभ इत्याशयेनाह-**यदुक्तं भवतीति** । सत्त्वरूपं सत्त्वमिति विशिष्योक्तेः प्रयोजनमाह-**सत्त्वसत्त्वमिति चेति** । सत्त्वरजस्तम-सामनन्यत्वेनात्र सत्त्वरूपस्य सत्त्वस्यैव ग्रहणं न तु रजोरूपस्य तमोरूपस्य वा सत्त्वस्येति भावः । सूत्रकृद्वचनमपि प्रमाणयति-**तद्भाव इति** । तस्य भावस्तद्भावः, कर्मणि षष्ठी भवतेरकर्मकत्वात्, तदेव मृद्द्रव्यं तेन तेनाकारेण भवति न कूटस्थमवतिष्ठते

१ सि. क. °हत्वया ।

( तत्त्वा. अ. ५ सू. ४१ ) इति वचनात्, तद्धि प्रवर्त्तमानं न किञ्चिदपेक्षते इति प्रवृत्तिनियमानपेक्षेणेति सत्त्वसत्त्वेनेति ।

एवं रजःसत्त्वेन सत्त्वसत्त्वं, किमुक्तम्भवति व्यक्तिप्रवृत्तिपरिणत्या तयैव प्रवृत्त्यात्मिकया व्यक्त्येत्येतदुक्तम्भवति, एवं तमःसत्त्वेन सत्त्वसत्त्वं किमुक्तम्भवति व्यक्तिनियमपरिणामेन तयैव नियमात्मिकया व्यक्त्येत्येतदुक्तम्भवति, एवमेव रजःसत्त्वेन सत्त्वसत्त्वं प्रकाश्यते व्यक्तिप्रवृत्तिपरिणत्या प्रवृत्त्यैवेत्युक्तम्भवति, रजःसत्त्वेन रजःसत्त्वं प्रकाश्यते व्यक्तिप्रवृत्तिपरिणत्या प्रवृत्त्यैवेत्युक्तम्भवति, रजःसत्त्वेन तमःसत्त्वं प्रकाश्यते व्यक्तिप्रवृत्तिपरिणत्या प्रवृत्त्यैवेत्युक्तम्भवति, तथा तमःसत्त्वेन सत्त्वसत्त्वं प्रकाश्यते व्यक्तिनियतिपरिणत्या नियमेनैवेत्युक्तम्भवति, तमःसत्त्वेन रजःसत्त्वं प्रकाश्यते व्यक्तिनियतिपरिणत्या नियमेनैवेत्युक्तम्भवति, तमःसत्त्वेन तमःसत्त्वं प्रकाश्यते व्यक्तिनियतिपरिणत्या नियमेनैवेत्युक्तम्भवतीति ।

( एवमिति ) एवं रजःसत्त्वेन सत्त्वसत्त्वं प्रकाश्यत एवेति वर्त्तते, पूर्ववद्व्यक्तिरिति प्रकाशैकार्थ्यम्, किमुक्तं भवति व्यक्तिप्रवृत्तिपरिणत्या–प्रकाशनप्रवर्त्तनपरिणामेन तयैव प्रवृत्त्यात्मिकया व्यक्त्येत्येतदुक्तं भवति इत्यैक्यं दर्शयति । एवं तमःसत्त्वेनेत्यादि । व्यक्तिनियमपरिणामेनेत्यक्षरविपर्यासमात्रेण भेदादर्थैक्यापादनं गतार्थम् यावद्व्यक्त्यैवेत्युक्तं भवतीति । सत्त्वेनैव व्यक्त्यात्मना प्रवृत्तेन नियतेन चावश्यं भवितव्यमन्यथा तत्स्वरूपाद्यभावादित्युक्तत्वात् । एवमेव रजःसत्त्वेन सत्त्वसत्त्वं प्रकाश्यते व्यक्तिप्रवृत्तिपरिणत्या प्रवृत्त्यैवेत्युक्तं भवति, सतो हि भावः सत्त्वम् । रजःसत्त्वेन रजःसत्त्वं प्रकाश्यते व्यक्तिप्रवृत्तिपरिणत्या प्रवृत्त्यैवेत्युक्तं भवतीति तथैव गमनीयम्, तथा रजः सत्त्वेन तमःसत्त्वं प्रकाश्यते व्यक्तिप्रवृत्तिपरिणत्या प्रवृत्त्यैवेत्युक्तं भवतीति, । तथा तमःसत्त्वेन [सत्त्व]-

न सर्वथोत्पद्यते नापि सर्वथोच्छिद्यते, तस्मात् सामान्यरूपः परिणामः, अनुवृत्तिरूपत्वात्, पिण्डस्थासकोशकुशूलादिषु स्वरूपापरित्यागेन मृद्रव्यं ह्यनुवर्त्तते, ततो मृद्रव्यस्य समानभावः सामान्यं मृद्रव्यमेव, तदेव समानं भवति, तथा च द्रव्यस्य स्वो भाव आत्मलाभोऽवस्थान्तरप्राप्तिः तदेव स्वं तत्त्वं परिणाम इति सूत्रार्थः । अत एव सत्त्वं तत्त्वं तद्भावः परिणाम इति पर्यायकथनम् । सत्त्वस्वरूप एव प्रकाशप्रवृत्तिनियमानामन्तर्लीनत्वात् सत्त्वं प्रकाशनाय नान्यां प्रवृत्तिनियमौ अपेक्षत इत्याह–तद्धीति । अथ रजोरूपं यत्सत्त्वं तेन सत्त्वसत्त्वं प्रकाश्यत इति द्वितीयं विकल्पमाह–एवमिति । प्रवृत्त्यात्मप्रकाशसत्त्वेन प्रवृत्त्यात्मकं प्रकाशसत्त्वं प्रकाश्यत इत्यर्थं स्फुटयति–किमुक्तं भवतीति । एवं तमोरूपं यत्सत्त्वं तेन सत्त्वसत्त्वं प्रकाश्यत इति तृतीयं विकल्पं दर्शयति–एवं तमःसत्त्वेनेति । नियमात्मप्रकाशसत्त्वेन नियमात्मकं प्रकाशसत्त्वं प्रकाश्यत इति नियमप्रकाशयोरैक्यमाह–व्यक्तीति । अथ रजोरूपेण सत्त्वेन सत्त्वसत्त्वं प्रकाश्यत इति चतुर्थमाह–एवमेवेति । प्रवृत्तिप्राधान्येनायं विकल्पः प्रकाशात्मकप्रवृत्तिसत्त्वेन प्रकाशात्मकप्रवृत्तिसत्त्वं प्रकाश्यते इति प्रकाशप्रवृत्त्योरैक्यमाह–व्यक्तीति । रजोरूपेण सत्त्वेन रजोरूपं सत्त्वं प्रकाश्यत इति पञ्चममाह–रजःसत्त्वेनेति । पूर्ववत् प्रवृत्तिप्रधानोऽयं विकल्पः प्रकाशप्रवृत्त्योरैक्यविषयः । एवं रजोरूपेण सत्त्वेन तमोरूपं सत्त्वं प्रकाश्यत इति षष्ठमाह–तथा रज इति अयमपि प्रवृत्तिप्रधानः प्रकाशप्रवृत्त्योरैक्यविषयो विकल्पः । अथ तमोरूपेण सत्त्वेन सत्त्वसत्त्वं प्रकाश्यत इति सप्तममाह–तमःसत्त्वेनेति, नियमप्रधानः प्रकाशनि-

१ सि. क. °रूपादिभा° ।

सत्त्वं प्रकाश्यते व्यक्तिनियतिपरिणत्या नियमेनैवेति, नियतो हि भावो व्यज्यते प्रवर्त्तते, तथा तमः- सत्त्वेन रजःसत्त्वं प्रकाश्यते व्यक्तिनियतिपरिणत्या नियत्यैवेत्युक्तं भवतीति, [तमःसत्त्वेन तमःसत्त्वं प्रकाश्यते व्यक्तिनियतिपरिणत्या नियमेनैवेत्युक्तं भवतीति]

तदेव भावितम्—

**एवमेव च सत्त्वप्रकाशेन सत्त्वप्रकाशो रजःप्रकाशस्तमःप्रकाशश्च प्रकाश्यते, रजःप्रकाशेन सत्त्वप्रकाशो रजःप्रकाशस्तमःप्रकाशश्च प्रवर्त्यते, तमःप्रकाशेन सत्त्वप्रकाशो रजःप्रकाशस्तमःप्रकाशश्च नियम्यत इति त्रयोऽप्यर्था ऐक्यमापादनीयाः।** 5

**एवमेव चेत्यादि,** यथा सत्त्वरजस्तमसां नवापि विकल्पा उक्तास्तथा सत्त्वप्रकाशेन सत्त्वप्रकाशः प्रकाश्यत इति, सत्त्वप्रकाशेन रजःप्रकाशः तमःप्रकाशश्चेति त्रयः, रजःप्रकाशेन सत्त्वप्रकाशो रजःप्रकाशस्तमःप्रकाशश्चेति त्रयः, तमःप्रकाशेन सत्त्वप्रकाशो रजःप्रकाशस्तमःप्रकाशश्चेति त्रयो 10 विकल्पाः प्रकाश्यते प्रवर्त्यते नियम्यत इत्यनेनैव ग्रन्थेन त्रयोऽप्यर्था ऐक्यमापादनीयाः प्रत्येकं नवस्वपि योज्या इत्यर्थः। एष दार्ष्टान्तिकोऽप्यर्थो व्याख्यातः।

स इदानीं दृष्टान्तेन साधर्म्येणोपसंह्रियते—

**सर्वाप्येषा मृद्घटव्यक्तिशक्तिस्थूलतैव, तथा सत्त्वप्रकाशादिप्रपञ्चा व्यक्तिरेकैव सत्त्वमिति वा रज इति वा तम इति वा प्रधान इति वा यथेच्छसि तथाऽस्तु सर्वथाऽप्येकस्य कारणाख्यस्य वस्तुनः सूक्ष्मस्य स्थूलतैव व्यक्तिरिति। यदुच्यते रजः शब्दकार्यं प्रख्याय तदात्मना व्यवतिष्ठमानं सत्त्वतमसोः शब्दात्मभावाय प्रवृत्तिं प्रख्यापयतीति तदपि पूर्ववत् प्रश्नद्वयं कृत्वा प्रकाशस्थाने प्रवृत्तिं कृत्वा [illegible] यावद्वायुमिति, तथा तमः शब्दकार्यमित्यादि तथैवानुगन्तव्यं प्रकाशस्थाने नियमं कृत्वा यावलम्बनपाषाणमिति।** 15

(**सर्वापीति**) सर्वाप्येषा मृद्घटव्यक्तिशक्तिस्थूलतैव यथा प्रागुपवर्णिता कारणे कार्यस्य 20 सत्त्वान्मृद्घनभिव्यक्ताया घटव्यक्तिशक्तेः स्थूलता—ऊर्ध्वग्रीवादिव्यक्तेन्द्रियग्राह्यता सैकैव तथा सत्त्व-

यमयोरैक्यविषयो विकल्पः। तमोरूपेण सत्त्वेन रजोरूपं सत्त्वं प्रकाश्यत इत्यष्टममाह–**तथा तम इति,** नियमप्रधानः प्रकाशनियमाभेदविषयो विकल्पोऽयम्। एवं तमोरूपेण सत्त्वेन तमोरूपं सत्त्वं प्रकाश्यत इति नवमं नियमप्रधानं प्रकाशनियमाभेदविषयं विकल्पमाह–**तमः सत्त्वेनेति,** तदेवं सत्त्वरजस्तमसां फलाभेदादैक्यमापादितम्। फलस्याप्यैक्यमाह–**एवमेव चेति,** पूर्वोक्तनवविकल्पक्रमेणैव सत्त्वरजस्तमसां प्रकाशेन सहैक्यविषया नवापि विकल्पा विज्ञेया इत्याह–**यथेति,** मूलं 25 व्याख्या च स्फुटार्थैव। यथा कारणं कार्यस्य सत्त्वाद्घटेनैव घटः क्रियत इति ग्रंथेनोक्तदृष्टान्तसाधर्म्येण दार्ष्टान्तिकः प्रकृतोऽर्थो वर्णित इत्याह–**एष इति**। यथा मृदि स्थासकोशकुशूलघटकपालादयोऽवस्था अव्यपदेश्यरूपेण शक्त्यात्मनाऽमेदेन सत्य एव, क्रमोपनिपतिततत्तत्सहकारिसमवधानक्रमेण च तासां मृदेव कर्त्री तथातथाव्यपदेश्येन्द्रियग्राह्यान्यतमावस्थाभाग् भवति तथा सत्त्वाद्यन्यतमदेवान्तर्लीनप्रकाशप्रवृत्तिनियमलक्षणं वस्तु तथातथा प्रकाशते ततो गुणत्रयाभ्युपगमो निरर्थक एवात एकात्मकैककारणमेव शब्दादीत्याशयेनाह–**सर्वाप्येषेति** मृदेव यथा स्वगतां पृथुबुध्नाद्याकारेण व्यक्तिशक्तिं प्रति 30 प्रतिनियतानां परस्परोपजनितकार्यसाधनशक्तीनां स्वसाधनानां क्रमेण समावेशात् घटाद्यात्मा मृद्भवति तथैवैकस्मादेव निखिलाभिव्यक्तिरित्येकं सूक्ष्मं कारणमेव व्यक्तात्म भवतीत्येककारणपूर्वकमेवेदं जगदित्याशयेनाह–**यथेति**। तत्र नामविशेषे नाग्रह

१ सि. क. नियतिप्रवृत्तिपरिणत्या।

प्रकाशादिप्रपञ्चा व्यक्तिरेकैव—एकार्थविषया, 'सत्त्वमिति वा रज इति वा तम इति वा प्रधान इति वा यथेच्छसि तथास्तु सर्वथाऽप्येकस्य कारणाख्यस्य वस्तुनः सूक्ष्मस्य स्थूलैव व्यक्तिरिति तद्विषया व्याव-र्ण्यत इति, इतिः विचारपरिसमाप्त्यर्थः, यत् प्रतिज्ञातं सत्त्वं प्रकाशात्मकयोः रजस्तमसोः शब्दभावाय व्यवतिष्ठते तत एकात्मकैककारणमिति तत् साध्वभ्यधामेति, त्वया यदुच्यते रजःशब्दकार्यमित्यादि ग्रन्थ-

5 स्यापि समानदोषापादनार्थोऽतिदेशः भाष्य एव सुलिखितातिदेशोपायत्वान्न विव्रियते विशेषणविन्या-सोपायश्च सुलिखित एव प्रकाशस्थाने प्रवृत्तिं कृत्वेत्यादि सर्वमनुगन्तव्यं यावद्वायुमिति। तथा तमः शब्दकार्यमित्यादि तथैवानुगन्तव्यं यावल्लम्बनपाषाणमिति।

एवमवसायितप्रसङ्ग इदानीं साधनमाह—

**अतस्त्रीण्यप्येकम्, अपृथग्भूतसमवस्थानस्वरूपभेदात्मकत्वात्, वरणादितमस्त्ववत्।**

10 **अतस्त्रीण्यप्येकमित्यादि** तमस्त्ववदिति, सत्त्वरजस्तमांसि त्रीण्यपि प्रकाशप्रवृत्तिनियमा-त्मकानि जात्यन्तराभिमतान्येकम्, वस्तुतः त्रित्वस्यातन्त्रत्वाद्भिन्नमप्यभिन्नमिति पक्षार्थः, परमतापेक्षया त्रयाणामैक्यासिद्धेः साध्यं, त्रीण्यपि च परस्परसिद्धानि धर्मित्वेनास्माकञ्च वस्तुशक्तित्वभेदेनेतीत्थं साध्यते, अन्यथा त्रीणि चैकञ्चेति विरुद्धं स्यात्, अपृथग्भूतसमवस्थानस्वरूपभेदात्मकत्वात्—भूतं भवनं भावो भूतिरिति [भावे] निष्ठाविधानात्, अपृथग्भवनं सङ्कल्यैकीभावेनावस्थानं तदिदमपृथग्भूत-

15 समवस्थानं तदेव स्वरूपं भेदाश्चात्मा येषां तानि सत्त्वादीनि अपृथग्भूतसमवस्थानस्वरूपभेदात्मकानि तद्भावात्, क्षीरोदकवद्देशकालभेदेन सहभवनेऽपि सङ्कल्यैक्यैकावस्थानस्वरूपत्वविशेषणात् क्वचित् कदाचित्

इत्याह—**सत्त्वमिति वेति**। एकात्मकैककारणत्वानभ्युपगमे सांख्यस्य स्वोक्तवचननिरूपणाशक्यतामुद्भावयितुं प्रक्रान्तं विचारमुपसंहरति—**इतिरिति**। गुणत्रयोद्देशवाक्ये सत्त्वविषयमेव—वाक्यं निर्दिश्य कृतं विचारमेव रजोविषयवाक्ये तमो-विषयवाक्ये चातिदिशति **त्वया यदुच्यत इति**। अत्र भाष्यं पूर्णतया न गम्यते। अतिदेशोऽयमाचार्येणैव नर्तक्या

20 इति ग्रन्थं यावद् बोध्य इति प्रतिभाति। अथ सत्त्वरजस्तमसामैक्यं साधयितुमाह—**अत इति**। त्रीण्यप्येकमिति त्रित्ववि-शिष्टे एकत्वस्य विधानं व्याहतार्थं भवतीति पक्षार्थं विशदयति—**वस्तुत इति**, तंत्रं—प्रधानमतंत्रमप्रधानमित्यर्थः, विशेषण-स्याप्रधानत्वमविवक्षितत्वादुपलक्षणत्वाद्वा भवेत्, भवतां जात्यन्तरत्वेन त्रित्वतया यान्यभिमतानि सत्त्वादीनि तानि एक-त्वविशिष्टान्येवेति भावः। तथैकत्वं सांख्यानामसिद्धमतः साध्यत इत्याह **परमतापेक्षयेति** सांख्यमतापेक्षयेत्यर्थः, तेषां मते सत्त्वादीनां परस्परं सिद्धत्वाद्धर्मित्वम्, अस्माकमपि सुखदुःखमोहात्मकानां तेषां वस्तुशक्तिविशेषतया सिद्धत्वाद्ध-

25 र्मित्वं नातो धर्म्यप्रसिद्धिरित्याह—**त्रीण्यपि चेति**। प्रतिज्ञाते हेतुमाह—**अपृथगिति**। अत्र भूतशब्दो भावे क्तप्रत्ययान्तः, धात्वर्थमात्रस्य भावत्वाद्भवनार्थो भूतशब्द इत्याह—**भूतमिति**। **निष्ठाविधानादिति**, व्याकरणे क्तप्रत्ययस्य निष्ठासंज्ञा कृता, क्तप्रत्ययस्य भावेऽपि विधानादित्यर्थः। हेत्वर्थं स्फुटीकरोति—**अपृथग्भवनमिति**, अयं भावः जात्यन्तरत्वेन भवता-मभिमतानि सत्त्वरजस्तमांसि वस्तुतोऽभिन्नान्येव, सङ्कल्यैकीभावेनावस्थितानामपि तेषां स्वस्वस्वभावेष्ववस्थितत्वात्, यथा रूप-यौवनसाधुत्वशीलाविलाससम्पन्ना कुलस्त्री सत्त्वस्य रूपमुपदिश्यते सा भर्तुः सुखावहा भवति सपत्नीनां दुःखाय रागिणां मोहाय

30 च, क्षत्रिया प्रहरणकृतापराधा दस्युसेनामभिनिघ्नती काचित् रजसो रूपमित्यपदिश्यते दस्युभिरुपद्रुतानां दार्यमाणानां सुखावहा भवति, तेषां दस्यूनां प्रहारैर्दुःखाय पलायमानानाञ्च विषादाय, घनाघनो महानीलस्तोयाध्मातस्तडिद्विलसितः सबलाकस्तमसो रूपमित्यपदिश्यते, स च सज्जीकृतबीजोपकरणानां कर्षकाणां सुखाय अनाच्छादितवेश्मनां दुःखाय प्रोषितभ-र्तृकाणां मोहाय च, तत्र यत्सुखहेतुस्तत्सुखात्मकं सत्त्वं यद्दुःखहेतुस्तद्दुःखात्मकं तमः यन्मोहहेतुस्तन्मोहात्मकं तम इत्येकम-

१ सि. भवनस्य। क. भवनमस्य। २ सि. क. स्थानस्य। ३ सि° त्यैक्याव०।

पृथग्भवनाभावादित्युक्तं भवति, तत्स्वरूपभेदात्मकत्वञ्च वादिप्रतिवादिप्रसिद्धम्, दृष्टान्तो वरणादितमस्ववत्, यथा वरणसदनापध्वंसनबैभत्स्यदैन्यगौरवाणां परस्परतो भिन्नानां छादनस्तम्भनविशरणारोचनविषादाधोगमनधर्माणां भेदात्मकत्वे सत्यपि मोहात्मकतमःसारूप्यानतिक्रमेणैक्यमपृथग्भवनसमवस्थानस्वरूपभेदात्मकत्वात् तथाऽस्मादेव हेतोः सत्त्वादीन्येकमिति ।

अत्राह—

**अपृथग्भवनसमवस्थानस्वरूपभेदात्मकत्वमसिद्धं सुखदुःखमोहानां जात्यन्तरत्वात्, कथं पुनरेतदुपलभ्यते सुखदुःखमोहा जात्यन्तराणीत्यत्रोच्यते सुखं लघ्वप्रवृत्तिशीलं प्रकाशकं दृष्टम्, सुखाश्च करणप्रकाशाः, तस्मात् प्रवृत्तिनियमाभ्यामन्ये, तथा दुःखं चलमप्रकाशकं प्रवृत्तिशीलं दृष्टम्, दुःखाश्च करणप्रवृत्तयः, तस्मात् प्रकाशनियमाभ्यामन्याः तथा मोहो गुरुरप्रकाशको दृष्टः मूढाश्च करणनियमाः तस्मात् प्रकाशप्रवृत्तिभ्यामन्य इति, एवं आध्यात्मिकानां कार्यकरणात्मकानां सुखदुःखमोहमयत्वं बोध्यम् । सत्त्वरजस्तमांसि जात्यन्तराणि, लक्षणभेदात् चेतनशरीरवत्, लक्षणभेदश्च सत्त्वं लघ्वप्रवृत्तिशीलं प्रकाशकं दृष्टमित्युभाभ्यामन्यत्, रजश्चलमप्रकाशकं प्रवृत्तिशीलमित्युभाभ्यामन्यत्, मोहो गुरुरित्युभाभ्यामन्य इति ।**

**अपृथग्भवनसमवस्थानेत्यादि** जात्यन्तरत्वसाधनानि यावद्गुरुरित्युभाभ्यामन्य इति, ननूक्तमन्वयो वीत एवात्राह—कथं पुनरेतदुपलभ्यते सुखदुःखमोहा जात्यन्तराणीति, अत्रोच्यते सुखं लघ्वप्रवृत्तिशीलं प्रकाशकं दृष्टम् सुखाश्च करणप्रकाशास्तस्मात् प्रवृत्तिनियमाभ्यामन्ये, तथा दुःखं चल-

...व्यवस्थितस्वभावभेदात्मकमतो न तानि जात्यन्तराणीति । अविनाभाववर्तित्वं सत्त्वादीनां 'अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः' इति वदतां वादिनामपि सम्मतमेव, अत एवोच्यते-**तत्स्वरूपभेदात्मकत्वञ्चेति** । वरणादीनां कार्यं दर्शयति-**छादनेति** वरणादयो भिन्नस्वभावा अपि तमसोऽभिन्नत्वादेकरूपा एव सहत्यैकीभावेनावस्थिताः, अत एव च तेषां क्वचित् कदाचित् पृथग्भवनं नास्ति, एवं सत्त्वादयोऽप्यपृथग्भूतनत्त्वात्वादविनाभाववर्तिनः सहत्यैकीभावेनावस्थिताः स्वरूपभेदेऽप्येकरूपा एवेति भावः । ननु सत्त्वरजस्तमसामेकीभावेनावस्थानस्यासिद्धत्वात्त्वदुक्तो हेतुरसिद्धः लक्षणभेदेन तेषां जात्यन्तरत्वादित्याशङ्कते-**अपृथग्भवनेति** । ननु पूर्वमेकात्मकैककारणपूर्वकत्वसमर्थनसमये वीतानुमानप्रतिज्ञावाक्यविचारे सत्त्वादीनामप्यन्वयरूपत्वमुक्तमभवातो न जात्यन्तरत्वमित्याशङ्कायामुच्यते-**ननूक्तमिति** । सत्त्वादीनां लक्षणभेदाद्भेद इत्याशयेन लक्षणान्याह-**सुखमिति**, सत्त्वमित्यर्थः, ऊर्ध्वगमनतिर्यग्गमनहेतुधर्मो लघुत्वं एतच्चाग्निवाय्वादिवस्त्वन्तरव्याप्ति, प्रवृत्तं रजोधर्मत्वेन सत्त्वमप्रवृत्तिशीलम्, इदञ्च स्वरूपवर्णनम्, न तु लक्षणम् तमसोऽप्यप्रवृत्तिशीलत्वात्, एवमग्रेऽपि प्रकाशो बुद्ध्यादिवृत्तिरूपालोकः भौतिकालोकश्च तत्कारणं सत्त्वं लघुत्वादेव, सत्त्ववृत्तिलघुत्वं दर्शयति-**सुखाश्चेति,** आहरणधारणप्रकाशनसाधनानां त्रयोदशप्रकाराणामिन्द्रियाणां करणानां प्रकाशाः, स्वस्वविषयग्रहणानुकूलानां वृत्तीनां स्वस्वविषयग्रहणोन्मुख्यरूपनैपुण्ये हेतुर्लाघवं भवति, तत्रैकादशेन्द्रियाणि बुद्धिरहङ्कारश्चेति त्रयोदशविधं करणम्, बुद्ध्यहङ्कारमनःकरणैराहृतं पञ्च ज्ञानकरणैः प्रकाशितं पञ्च-कर्मकरणानि धारयन्ति, तस्मात् करणानामाहरणधारणप्रकाशा लघुत्वलक्षणसत्त्वकार्याः सुखरूपाः, अत एवोक्तं 'प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः' इति । एवञ्च सुखरूपं सत्त्वं प्रवृत्तिनियमाभ्यां रजस्तमोभ्यामन्यत् लघुत्वादिभ्य इति भावः । **दुःखमिति** रज इत्यर्थः, तस्य दुःखरूपत्वात्, चलं सक्रियत्वेन प्रवृत्तिशीलं न प्रकाशकारि च, करणमिदं चालयत् स्वकार्ये प्रवर्त्यते, चलता च द्विविधा परिणामप्रस्पन्दभेदात् परिणामस्तु सर्वेषां गुणानां स्वतो भवति, प्रस्पन्दश्च रजस एव लक्षणम्, सोऽयं प्रस्पन्दः प्राणादीनां कर्मेन्द्रियवृत्तीनां वचनादीनां बाह्यानां द्रव्याणामुत्पतननिपतनभ्रमणादिः, तत्र करणप्रवृत्तयः क्वचिदप्यवस्था-

१ सि. क. °त्स्यादिगौर० ।

मप्रकाशकं प्रवृत्तिशीलं दृष्टम् दुःखाश्च करणप्रवृत्तयस्तस्मात् प्रकाशनियमाभ्यामन्या[1]ः, तथा मोहो गुरुर- प्रकाशको दृष्टः, मूढाश्च करणनियमास्तस्मात् प्रकाशप्रवृत्तिभ्यामन्य इति । एतेनाध्यात्मिकानां कार्य- कारणात्मकानामित्यादिनोत्तरेण ग्रन्थेन तैर्यग्योनादिसंसारगताध्यात्मिककार्यकारणात्मकभेदानां सुखदुः- खमोहमयत्वातिदेशः कार्यकारणात्मकत्वात्तेषामपीति । अस्य ग्रन्थस्यार्थव्याख्यानं साधनैरेव क्रियते— सत्त्वरजस्तमांसि जात्यन्तराणि लक्षणभेदात्, चेतनशरीरवत्, लक्षणभेदः— सत्त्वं लघ्वप्रवृत्तिशीलं [प्रकाशकं] दृष्टमित्यादि तत्साधनं भाष्ये सुलिखितमिति न विवृणमहे, तथा रजस्तमसोरन्यत्वापादन- साधनान्यनुगन्तव्यानि यावद्गुरुरित्युभाभ्यामन्य इति ।

आचार्य उत्तरमाह—

**ननु लक्षणभेदहेतुत्वमपि न, लघुत्वप्रकाशाप्रवृत्तिशीलत्वान्यपि ह्येकम्, अपृथग्भूत- समवस्थानस्वरूपलक्षणभेदात्मकत्वात्, भिन्नलक्षणतमस्त्ववत् ।**

**ननु लक्षणभेदहेतुत्वमित्यादि** यावत्तमस्त्ववत्, लक्षणभेदहेतुनां लघुत्वादीनामप्यहेतु- त्वम्, एतेनैव प्रत्युक्तत्वात्, कथम्? लघुत्वप्रकाशाप्रवृत्तिशीलत्वान्यप्येकम्, अपृथग्भूतसमवस्थान- स्वरूपलक्षणभेदात्मकत्वादिति भिन्नलक्षणतमस्त्ववत्, तथैव व्याख्येयं लक्षणशब्दाधिकेन विग्रहस्तु— तत्स्वरूपमेव लक्षणं स एव भेदो यस्येति तस्मात् ।

तादृक्स्वरूपलक्षणभेदात्मकत्वमप्यहेतुरतो नानै[3]न्यत्वं सत्त्वादीनामितीतर आह—

**न, अपृथग्भूतसमवस्थानस्वरूपेत्याद्यसिद्धम्, तत्कथमिति चेत्—सुखं मोहाद्गुरोरन्यत्, लघुत्वात्, लोष्ठादिवार्कतूलः, दुःखात् प्रवृत्तिशीलादन्यत्, अप्रवृत्तिशीलत्वात्, वायोरिवा- काशम्, दुःखमोहाभ्यामप्रकाशकाभ्यामन्यत् प्रकाशकत्वात्, घटादिव प्रदीपः, दुःखं मोहाद-**

नासमर्थत्वेन दुःखरूपत्वात् प्रकाशनियमाभ्यां सत्त्वतमोभ्यामन्या इति भावः । **तथा मोह इति** तमसो गुरुत्वं लक्षणम्, तच्च कार्यस्याधोगमनहेतुर्धर्मः लघुत्वविरोधिस्थितिहेतुभूतो धर्म इति यावत्, तत एव करणान्यलसानि स्वविषयग्रहणासमर्थानि भवन्त्यतो मूढानि करणानीत्युच्यन्ते, तस्मात् प्रकाशप्रवृत्तिभ्यां सत्त्वरजोभ्यामन्यानीति विभिन्नलक्षणत्वात् सत्त्वादीनां जात्यन्तर- त्वमिति भावः । सर्वेषां वस्तूनां सुखदुःखमोहमयत्वातिदेशग्रन्थमभिदधाति- **एतेनेति, तैर्यग्योनादीति**, तैर्यग्योनमानुषदैवा- त्मको भौतिकः सर्ग उच्यते पशुपक्षिमृगसरीसृपस्थावरास्तैर्यग्योनाः, एकविध एव मानुषः, ब्राह्मप्राजापत्यैन्द्रगान्धर्वासुरयक्षरा- क्षसपैशाचा देवाः, एतत्सर्वं कार्यकारणवादेऽग्रे व्यक्तीभविष्यति । तदेवं लक्षणमुक्त्वा जात्यन्तरत्वं साधयति—**सत्त्वरज इति** । चेतनशरीरयोर्भोक्तृत्वभोगसाधनत्वरूपलक्षणभेदाद्भेदो भाव्यः । अथ त्वदुक्तलक्षणभेदोऽपि न हेतुः, सत्त्वरजस्तमसां प्रकाश- प्रवृत्तिनियमानामपृथग्भूततत्त्वतायाः पूर्वं प्रसाधितत्वात् लघुत्वचलत्वगुरुत्वादीनामप्यपृथग्भूततत्त्वात् स्वस्वरूपेषु व्यवस्थित- त्वाच्च जात्यन्तरत्वाभावात् जात्यन्तरत्वसाधकत्वमित्याशयेनोत्तरयति—**नन्विति** । तत्र लघ्वप्रवृत्तिशीलं प्रकाशकमिति यदुक्तं धर्मत्रयं तस्यापि न चलाप्रकाशप्रवृत्तिशीलत्वादिभ्यो भेदोऽपि तु वरणाद्यात्मकतमस्त्ववदेकत्वमेवेत्याह—**लघुत्वेति** । वरणसद- नापध्वंसनादीनां तमोलक्षणानां हि भिन्नस्वरूपत्वेऽपि तैर्न तमसो भेदः किन्तु तेषां तमःसारूप्यानतिवृत्तेरेकत्वमेव तथा लघुत्वप्रका- शाप्रवृत्तिशीलत्वानामपि लक्षणानां सत्त्वसारूप्यानतिक्रमादैक्यमपृथग्भूतसमवस्थानस्वरूपलक्षणभेदात्मकत्वादित्याह—**लक्षणभे- देति** । उक्तहेतोरप्यसिद्धिमाशङ्कते—**नेति** । तामेवोपपादयति—**सुखमिति** । एक एव लोष्टदृष्टान्तः सुखदुःखमोहानां परस्पर-

१ सि. क. °मन्ये । २ सि. क. एवाभेदो । ३ सि. क. नान्यत्वे ।

चलादन्यत् चलत्वात् पर्वतादिव वायुः, सुखादप्रवृत्तिशीलादन्यत्, प्रवृत्तिशीलत्वात्, आकाशादिव वायुः. मोहः सुखदुःखाभ्यामगुरुभ्यामन्यो गुरुत्वात्. अर्कतूलादिव लोहपिण्डः। दुःखं सुखात् प्रकाशकादन्यत्, अप्रकाशकत्वात्, प्रदीपादिव घटः, अतश्च सुखत्वाद्दुःखत्वान्मोहत्वादित्यादयोऽप्यन्यत्वहेतवः स्युः. शरीरेन्द्रियगत आत्मैकदेशस्तदेकदेशभूताभ्यां रजस्तमोभ्यामन्यः सुखत्वाल्लोष्टवत्. लोष्टादिर्हि सुखदुःखमोहैः पुरुषभोग्यैरन्योऽन्यतोऽन्यैरुपेतः, एवं दुःखमोहौ। 5

**न, अपृथग्भूतेत्यादि,** हेत्वसिद्धिप्रतिपादनसाधनानि लोकप्रसिद्धदृष्टान्तानि यावत प्रदीपादिव घट इति, लोष्टदृष्टान्तो वक्ष्यते सुखदुःखमोहैः पुरुषभोग्यैरन्योऽन्यतोऽन्यैरुपेत इत्यतिदेशसाधनोक्तिकाले उत्तरत्र। अपृथग्भूतसमवस्थानस्वरूपेत्याद्यसिद्धं तत्कथमिति चेत्–तत्साधनैरेवोच्यते सुखं मोहाद्गुरोरित्यादि सुबोधत्वान्न व्याख्येयं परस्परान्यत्वसाधनकदम्बकं यथा भाष्यलिखितमनुगन्तव्यम्, 10 पुनः–अतश्चेत्यादि, एतस्मादन्यसाधनप्रपञ्चात् सुखत्वाद्दुःखत्वान्मोहत्वादित्यादयोऽप्यन्यत्वहेतवः स्युः, आदिग्रहणात् प्रमादादयोऽपीति, तत्प्रयोगदिगुपप्रदर्शनार्थमाह–शरीरेन्द्रियगत आत्मैकदेशस्तदेकदेशभूताभ्यां रजस्तमोभ्यामन्यः, सुखत्वाल्लोष्टवत्, यथा लोष्टो भोग्यो हि पुरुषस्य भोक्तुरुपभोगार्थप्रवृत्तेः कपोतोड्डयनार्थं क्षेपणादानादिषु सुखं दृष्टं चलनपीडनादौ दुःखं लोष्टो नु कपोतो न्वित्यादि संशयविपर्ययादिषु मोहः, तस्मात सुखं दुःखमोहाभ्यामन्यत लोष्टवत, एवं दुःखमोहावित्यतिदेशः, दुःखं शरीरे- 15 न्द्रियगतं तदात्मैकदेशभूताभ्यामन्यत् दुःखत्वाल्लोष्टवत, मोहः सत्त्वरजोभ्यामन्यो मोहत्वाल्लोष्टवदिति।

**अत्र ब्रूमः सर्वेऽप्येतेऽन्यत्वहेतवोऽप्रसिद्धसाध्यधर्मसमन्वयव्यावृत्तयः, पृथग्भूतसुखा[illegible]त्वादिलघ्वादितूललोष्टादिवस्त्वभावात्, सर्वस्य त्रैगुण्याव्यतिरेकाच्च न चैषां विपक्षाद्व्यावृत्तिरस्ति. तूललोष्टादेरेव विपक्षत्वेन व्यवस्थानात्. साध्यसाधनोभयानन्वयो धर्म्यसिद्धिश्च. साध्याव्यावृत्त्यादिदोषश्च. स्वत एवानुमाननिराकृतस्य पक्षीकरणार्थाश्चैते।** 20

**अत्र ब्रूमः सर्वेऽप्येत इत्यादि,** सर्वग्रहणात् लघुत्वादयो मोहत्वपर्यन्तास्त्वयोक्ता अन्य-

तोऽन्यत्वसाधनेऽनुरूपमेव प्रदर्शयत इत्याह–**लोष्टदृष्टान्त इति, अतिदेशसाधनोक्तिकाल इति,** शरीरेन्द्रियगत आत्मैकदेश इत्याद्यनुमानप्रदर्शनावसर इत्यर्थः. स्फुटमन्यत्। **शरीरेति** शरीरस्येन्द्रियाणाञ्च त्र्यात्मकत्वात् सुखावच्छिन्नः शरीरेन्द्रियैकदेशः रजस्तमोऽवच्छिन्नशरीरेन्द्रियैकदेशाभ्यां भिन्नः सुखात्मकत्वात्, यथा यदा लोष्टः सुखस्वरूपस्तदा रजस्तमोभ्यामन्य एव, पुरुषोपभोगार्थं हि सर्वेषां सर्जनम्, यथा यथा पुरुषस्योपभोगस्स तेन प्रकारेण तदात्मा भवति कपोतोड्डयनादिप्रवृत्तौ प्रव- 25 र्तयितुः स सुखरूपो भवति, चलनं पीडाकारी यदा भवति तदा स दुःखात्मकः, यदा चायं लोष्टो वा कपोतो वेति संशयकारी न लोष्टः कपोत एवेति विपर्ययकारी वा तदा स मोहरूपो भवतीति सुखात्मकत्वदशायां रजस्तमोभ्यामन्यस्तथा शरीरेन्द्रियगतः सुखप्रदेशोऽपीति भावः। एवं दुःखावच्छिन्नं मोहावच्छिन्नं शरीरेन्द्रियभागं पक्षीकृत्यापि भेदो भाव्य इत्याह–**एवमिति**। अथोक्तानामन्यत्साधनानां साधनाभासत्वमाह–**अत्र ब्रूम इति**। सर्वपदबोधितान हेतून दर्शयति–**सर्वग्रहणादिति**। प्रोक्तहेतूनां साध्यधर्मेण सहान्वयो व्यतिरेकश्चाप्रसिद्ध इत्यर्थः। लघ्वेवेत्यवधारणपक्षेऽसजातीयलक्षणव्यावृत्तार्थविषयतयेत्याद्यभि- 30

१ सि. कार्यभूतस्य शरीरस्य कारणभूतानां चेन्द्रियाणामाध्यात्मिकानामेकदेशस्तदात्मभूतस्तद्भूतस्तदात्मभूताभ्यां रजस्तमोभ्यामन्यः। २ सि. क. °तो नयनार्थ०।

त्वद्धेतवोऽप्रसिद्धसाध्यधर्मसमन्वयव्यावृत्तयः, एते हेतवोऽसिद्धा एवावधारण इति वक्ष्यति, सिद्धत्वेऽप्यप्रसिद्धसाध्यधर्मसमन्वयाः, पृथग्भूतसुखाद्यात्मकसत्त्वादिलघ्वादितूललोष्टादिवस्त्वभावात् सर्वस्य त्रैगुण्याव्यतिरेकाच, न चैषां विपक्षाद्व्यावृत्तिरस्ति तूललोष्टादेरेव विपक्षत्वेन व्यवस्थानात्, विविक्तैकसुखाद्यात्मकाद्धि वस्तुनोऽन्यद्धि विक्तदुःखाद्यात्मकं स्यात्, सपक्षस्तु नास्ति, सर्वस्य त्रिगुणै-
5 कत्वात्मकत्वात्, न पुरुषोऽसत्त्वात्, तस्यापि सुखादन्यत्वादिति, ततश्च तूललोष्टादेरपि विपक्षत्वात्ततश्च लघुत्वादिहेतूनामप्यव्यावृत्तेरप्रसिद्धसाध्यधर्म[समन्वय]व्यावृत्तयस्ते हेतव इति विरुद्धत्वं हेतुदोषः, साध्यसाधनोभयानन्वयो धर्म्यसिद्धिश्च साधर्म्यदृष्टान्ते, साध्याव्यावृत्त्यादिदोषश्च वैधर्म्यदृष्टान्त इति दर्शयति । किञ्चान्यत्- स्वत एवानुमाननिराकृतस्य पक्षीकरणार्थाश्चैते हेतव इति वर्त्तते, अस्ति प्रधानं भेदानामन्वयदर्शनादिति प्रक्रम्य सुखदुःखमोहान्विता आध्यात्मिका बाह्याः शब्दादयः कार्यात्मकाः,
10 त्रयाणामेककार्यभावात् तदारब्धाश्चाकाशवाय्वनलाम्भोभूमयो भूताख्यास्तैर्यग्योनमानुषदैवानि शरीराणीन्द्रियाणि च तन्मयानि त्रयाणामेककार्यभावात् सुखाद्यन्वितान्येव चन्दनशकलादिवदित्येवमाद्यनुमानसिद्धं त्रैगुण्यं 'अन्यत् सुखं दुःखमोहाभ्यां लघ्वेव चे'त्येवमादिपक्षं निराकरोति, तस्य स्वपक्षस्यानुमाननिराकृतस्यान्याविदितस्यासर्वलोकप्रत्यक्षस्य सतः पक्षीकरणार्था एते हेतवः संवृत्ता इतीत्थमनुमानविरुद्धप्रतिज्ञादोषोद्भावनवक्रोक्तिरेषा ।

15 किञ्चान्यत्—

अनवधारितलघ्वादेर्हेतोः[illegible]मितरात्मकमपीति लघुचलगुर्वाद्यात्मकतयैव पक्षधर्मता [illegible]तया तेनैव, असजातीयलक्षणव्यावृत्तार्थविषयतया अस्मान् प्रति तावदसिद्धं लघुरेवेति । तद्यथा 'णिच्छयओ सव्वलहुं'ति गाथा ।

समन्येनासिद्धेर्वक्ष्यमाणतयाऽत्र सिद्धत्वकृत्यान्वयव्यतिरेकयोरप्रसिद्धत्वमुच्यत इत्याह-**एते हेतव इति** । तत्रान्वयाप्रसिद्धिं
20 प्रथममाह-**पृथग्भूतेति** तूललोष्टादेः परस्परं भेदाभावायत्र यत्र लघुत्वादिकमस्ति तत्र तत्र मोहगुरुभेद इति नान्वयग्रहः गुरुभूतलोष्टाभिन्नत्वात्तूलस्य, तथा तूलस्य सुखाभिन्नत्वेन दृष्टान्तत्वासंभवश्च, पक्षभिन्नस्य दृष्टान्तत्वात्, ननु तूलादेः सुखाद्यात्मकत्वं कथमित्यत्राह-**सर्वस्येति** । अथाप्रसिद्धसाध्यधर्मव्यावृत्तिमाह-**न चैषामिति** । यो दृष्टान्तत्वेनोपन्यस्तस्तूललोष्टादिः स न दृष्टान्तो भवेत् सुखाद्यात्मकवस्तुनो भिन्नस्य दुःखाद्यात्मकत्वनैयत्याद्रजआद्यात्मकत्वेन तत्र साध्यधर्मोद्यसम्भवादित्याह-**विविक्तैकेति** । तत्रैव पोषकं हेतुमाह-**सर्वस्येति** । पुरुषोऽपि त्वदभ्युपगतो नास्त्येव सत्त्वेऽपि न सुखस्वरूप इति न तस्य
25 दृष्टान्तत्वमित्याह-**न पुरुष इति** । तथा च तूललोष्टादेः सुखाद्यनात्मकत्वे रजआद्यात्मकत्वेन साध्याभाववत्तया विपक्षत्वात्तत्र च लघुत्वादिहेतूनां सत्त्वेन न विपक्षव्यावृत्ततेत्याह-**ततश्चेति** । एवञ्च विपक्ष एव लघुत्वादीनां सत्त्वाद्विरुद्धत्वमित्याह-**विरुद्धत्वमिति** । **साध्येति** अर्कतूलादिसाधर्म्यदृष्टान्ते एकान्तलघुत्वादेर्गुरोरन्यत्वस्य चासत्त्वम्, तत्र गुरुलघुत्वस्यैव व्यवहारनयेनाभ्युपगमात्, स्वन्मतेन च त्र्यात्मकैकस्मादन्यस्याप्रसिद्ध्या पक्षव्यतिरिक्तस्य दृष्टान्तधर्मिणोऽसिद्धिश्चेत्यर्थः । लोष्टादिवैधर्म्यदृष्टान्ते व्यतिरेकानन्वयमाह-**साध्येति** । त्वदीया हेतवोऽनुमाननिराकृतपक्षा इत्याह-**स्वत एवेति सर्वस्य**
30 सुखादित्रैगुण्यात्मकत्वमनुमानैर्भवद्भिरेव साधितम्, तेन चानुमानेन सुखं दुःखमोहाभ्यामन्यदित्यादिपक्षो निराक्रियत इति भावः । ननु सुखं मोहाद्गुरोरन्यदित्यत्र किमेकान्तेन लघुत्वादित्यवधारणरूपे हेतुरुच्यते, उत लघुत्वादित्यनवधारणात्मेति विकल्पमारचय्य दूषयति-**अनवधारितेति** । अनवधारणपक्षे दोषं प्रदर्शयति-**तत्रेति**, अनवधारितस्य लघुत्वादेर्हेतुत्वे

१ सि. क. विविक्तैव । २ सि. क. विपक्षतस्तु । ३ सि. क. °व्यावृत्ते° । ४ सि. क. °नुमते निराकृतश्च प्रत्यक्षी° । ५ सि. क. तदाद्यानि । ६ सि. क. प्रत्यक्षी° ।

**अनवधारि तेत्यादि** यावदतथा तेनैव, लघुत्वादित्यादयो हेतवः किमवधारितार्थाः ? उतान-वधारितार्थाः ? इति सम्प्रधार्यमेतत्, लघ्वेव सुखं न गुरु न चलं वा तथाऽन्येषामपि चलत्वादीनाम्, चलमेव गुर्वेव प्रवृत्तिशीलमेवेति, तत्रानवधारितलघ्वादिधर्मतायां सत्यामितरात्मकमपीति–लघुचल-गुर्वादित्र्यात्मकमपीति लघुचलगुर्वादित्र्यात्मकतयैव पक्षधर्मता स्यादेषां तथा सतीत्यतथा तेनैव–अन-न्यतैवेत्यर्थः, इतिशब्दस्य हेत्वर्थत्वात् त्र्यात्मकैकत्वादित्यर्थः, असजातीयेत्यादि यावदस्मान् प्रति तावदसिद्धम्, अथावधारितार्था एते लघ्वादिहेतवो गुर्वाद्यसजातीयलक्षणव्यावृत्तार्थविषयाः ततस्ते-षामसजातीयलक्षणव्यावृत्तार्थविषयतया[3] विशेषहेतोः पक्षधर्मतैव भवेतः, तत्रास्मान् प्रति तावदपक्षधर्मत्वम्, तद्यथा 'णिच्छयओ सव्वलहुं'ति गाथा, निःकृष्यावधार्य चयतो–ज्ञानतः परमार्थन-यतो वा सर्वथा लघु सर्वं वा लघु न विद्यते तथा सर्वगुरुद्रव्यम्, परमाणुद्विप्रदेशाद्यसंख्येयान्तानां केषाञ्चिदनन्तप्रदेशानाञ्च स्कन्धानां शेषद्रव्याणाञ्चागुरुलघुत्वात् ततः परमनन्तानन्तप्रदेशानां बाद-राणामापेक्षिकलघुगुरुपरिणामित्वात्, व्यवहारनयेन तु युज्यते लघुत्वं गुरुत्वञ्चान्योन्यस्मात् लघुर्गुरु-र्वेति बातं रातीति बातरा बदरप्रमाणबादरा वा स्कन्धाः स्थूला इत्यर्थः, ण इतरेसु–नेतरेषु प्रागुक्तपरमाण्वादिषु सूक्ष्मेष्वगुरुलघुत्वमेवेत्यर्थः ।

**अत्यन्तगुरुतायामेतदेव पतेत् संयोगभावेऽप्यविषह्यगुरुत्वात् प्रतिबन्धानिवार्यस्यूतो-पलवत्, योगिनोऽपि च गुरुत्वात् सुतरां पतनमेव स्यात् शिलावद्धशिलावत् ।**

**अत्यन्त[6]गुरुतायामित्यादि**, निरपेक्षैकान्तगुरुतायामेतदेव पतेत्–पतनक्रियमेव स्यात् न तिष्ठेन्नोर्ध्वं वा गच्छेत, गुरुत्वात् दृष्टान्तो वक्ष्यमाणः, स्यान्मतं पतेदेव यदि प्रतिबन्धी न स्यात्,

लघुत्वाद्याश्रयस्य वस्तुनो गुरुत्वचलत्वादिधर्मवत्त्वाप्रतिषेधेन लघुगुरुचलाद्यात्मकत्वाल्लघुत्वादिहेतवो लघुगुरुचलाद्यात्मन एव धर्मा भवेयुः, तथा च सति सुखं न रजस्तमोभ्यामन्यत्, त्र्यात्मकैकत्वादिति भावः । **इति शब्दस्येति** । स्यादितीत्यत्रस्थेति शब्दस्येत्यर्थः, तथा च सर्वस्य त्र्यात्मकैकत्वेन तद्व्यतिरिक्तस्य कस्यचिदभावात् सर्वे हेतवः पक्षमात्रवृत्तय इति तेषां साध्यधर्मेण सह समन्वयो व्यतिरेकश्चाप्रसिद्ध एव, सपक्षविपक्षयोरभावादिति भावः । अथावधारणपक्षे दोषमाह–**असजातीयेत्यादीति**, एकान्तेन लघुत्वादित्युक्तौ गुरुत्वादिविजातीयेभ्यो व्यावृत्त एवैकान्तलघुभूते लघुत्वादेर्वृत्तित्वेन केवलं पक्षधर्मतैव स्यात् सुखा-त्मकवस्तुव्यतिरिक्तस्यैकान्तलघुत्वाभावादिति भवन्मतमनुसृत्योक्तमिति भावः । अस्मन्मतेन चैकान्तलघुभूतवस्त्वप्रसिद्धेरसिद्धा एव लघुत्वादिहेतव इत्याह–**तत्रास्मानिति**, अत्रार्थे गाथां प्रमाणयति–**तद्यथेति**, निच्छयओ सव्वगुरुं सव्वलहुं वा न विज्जए दव्वं । ववहारओ उ जुज्जइ वायरखंधेसु नण्णेसु (बृहत्कल्पभा० गा० ६५) इति गाथा दृश्यते, सूक्ष्माणां पुद्गलस्कन्धानां शेषद्रव्याणां धर्माधर्माद्यरूपिणां निश्चयनयेनागुरुलघुत्वात् बादरस्कन्धानाञ्चापेक्षिकलघुगुरुत्वात् न किञ्चित् सर्वथा लघु गुरु वा, न वा सर्वं वस्तु गुरुलघु वा विद्यते, व्यवहारनयेन तु बादरस्कन्धेष्वेव सापेक्षं लघुत्वं गुरुत्वञ्चास्ति न सूक्ष्मेष्वरूपिषु चेति तदर्थः । एवञ्चोभयनयेनापि न किञ्चिल्लघुरेव गुरुरेव वेति सावधारणा लघुत्वादिहेतवोऽसिद्धा एवेति भावः । एकान्तेन गुरुत्वाङ्गीकारे च दोषमादर्शयति–**अत्यन्तेति** । एवकारो भिन्नक्रम इत्याशयेनाह–**पतनक्रियमेवेति** । ननु कारणसद्भावमात्रेणावश्यं कार्येण भवितव्यमेवेति नास्ति नियमः कारणसत्त्वेऽपि प्रतिबन्धकसम्बन्धेन कार्योदयादर्शनादित्याशङ्कते **स्यान्मतमिति** लोष्टादीनां गुरुत्वेऽपि पतनप्रतिबन्धकभूम्यादिसंयोगस्य सत्त्वेन न पातः, यथा फलस्य वृन्तम्, वृन्तं प्रसवबन्धननामा संयोगविशेषः ।

१ सि. क. तत्त्वान० । २ सि. क. भवंतर्मात । ३ सि. क. विषयतायाविशेषतायावि० । ४ सि. क. मूलतः । ५ क्ष. °मनन्तप्रदेशानां । ६ सि. क. अन्त्यतः ।

अस्ति तु संयोगः प्रतिबन्धी पतनस्य, फलस्येव वृन्तमतो विशेषयामः संयोगभावेऽपि पतनप्रतिबन्ध्य-विषयगुरुत्वादिति, प्रतिबन्धिना यद्विपयं न भवति गुरु तत्पतेदेव, न चास्य नास्ति प्रतिबन्धी त्वयै-कान्तगुरुत्वाभ्युपगमात् स नु प्रतिबन्धानिवार्यम्यूतोपलवत्–एकेन तन्तुना प्रतिबन्धिना सत्यपि संयोग-भावे तदविषयगुरुत्वात् पतत्येव यथोपलस्तथैतत् पतेदेव मुख्यं लघुत्वशून्यगुरुत्वादिति । योगिनोऽपि
5 चेत्यादि, योऽपि चास्ति योगी प्रतिबन्धकः तस्यापि च योगिनः प्रतिबन्धिनो गुरुत्वात् तत्पतनोपचय-हेतुत्वात् सुतरां पतनमेव स्यात्, पतेदेव तेनापि सह शिलाबद्धशिलावदिति पातहेतुत्वं दृढयति, एवं तावदत्यन्तगुरुत्वे पतनमेव प्रसक्तम् ।

अथवा मा भूदेष दोष इत्यत्यन्तलघुत्वमिष्यते ततः—

**अत्यन्तलघुतायां न कदाचिदपि पतनं स्यात् तस्योत्पत्तिकारणाभावात् खपुष्पवत्,**
10 **दृष्टविरुद्धमुच्यते गुरुलघुत्वदर्शनात्, अर्कतूलो लघुर्गुरुर्लोहपिण्ड इति, न, कन्यानुदरवत्तु व्यवहारोऽयमपेक्षाकृतो बादरस्कन्धविषय इति ।**

( अत्यन्तेति ) अत्यन्तलघुतायां न कदाचिदपि पतनं स्यात्–पाताख्यो भाव एव न स्यात्, तस्योत्पत्तिकारणाभावात्–तस्य कारणं गुरुत्वं पतनस्य तदभावात् खपुष्पवत्, स्यान्मतं दृष्टविरुद्ध-मुच्यते गुरुलघुत्वदर्शनात् अर्कतूलो लघुर्गुरुर्लोहपिण्ड इति दृष्टत्वादिति, एष दोषो न, यस्मात् व्यव-
15 हारतस्तु युज्यत इत्युक्तत्वादित्यत आह–कन्यानुदरवत्तु व्यवहारोऽयमपेक्षाकृतो बादरस्कन्धविषय इति, यथाऽनुदरा कन्येत्यन्यासामुदरवतीनामुदरेण सदृशमुदरमस्या नास्तीत्युदरवत्यैवानुदरेत्युच्यते व्यव-हारतः तथा बादरस्कन्धेषु लघुगुरुत्वे ।

यदपि च लोहपिण्डार्कतूलोदाहरणं तदपि तत्तुला[भारा]पेक्षिकलघुगुरुत्वे एव साधयतीत्यत आह–

**एवमापेक्षिकलघुगुरुत्वे अनवस्थिततत्त्वे अस्मान् प्रति न परस्परतोऽन्ये इति नायःपि-**
20 **ण्डार्कतूलदृष्टान्तोऽस्ति ।**

लोष्टादि पतेदेव गुरुत्वादित्यनुमितेः फलादौ व्यभिचारे शङ्किते हेतुं विशेषयति–**अतो विशेषयाम इति** । एकान्तेन गुरुत्वाभ्युपगमात् प्रतिबन्धकस्य प्रतिरोधाशक्तेः प्रतिबन्धानिवार्यतन्तुवेष्टितोपलवल्लोष्टादिः पतेदेवेत्याह–**प्रतिबन्धिनेति**, एतदेव स्फुटयति–**एकेनेति** । अत्यन्तगुरुत्वादित्यस्यार्थमाह–**लघुत्वेति** । शक्तिमत्प्रतिबन्धकस्यापि च गुरुत्वाच्छिलया बद्धा यथा शिला पतत्येव, उभयोर्गुरुत्वात् तथा प्रतिबन्धयुतमपि सुखादि सुतरां पतेदेवेत्याह–**योगिनोऽपीति** प्रतिबध्यसम्बन्धिनोऽपि
25 प्रतिबन्धकस्येत्यर्थः । तेनापि सह–प्रतिबन्धकेनापि सहेत्यर्थः । अत्यन्तगुरुतामपहायात्यन्तलघुत्वाभ्युपगमे तु लोष्टादीनां कदाचिदपि पतनं न स्यात्, तत्कारणस्य गुरुत्वस्याभावात्, यस्य कारणं नास्ति नास्त्येव तत्, यथा खपुष्पादीत्याह–**अत्यन्तलघुतायामिति** । नन्वेवं गुरुत्वलघुत्वाभावप्रतिपादनं प्रत्यक्षविरुद्धम्, दृश्यते हि लघुत्वमर्कतूलादेः लोहपिण्डादेश्च गुरुत्वमित्याशङ्कते **स्यान्मतमिति**, परमार्थनयत एवास्माभिः तदभावः प्रतिपादितः न तु व्यवहारनयेन, तन्नयेन चापेक्षिक-लघुत्वगुरुत्वाभ्युपगमात् न दृष्टविरोध इत्याह–**एष दोषो नेति** । अर्कतूललोहपिण्डादीनां लघुगुरुत्वव्यवहारो नैकान्तेन
30 लघुत्वगुरुत्वसद्भावप्रयुक्तः, अपि त्वापेक्षिकलघुगुरुत्वप्रयुक्तः, उदरवत्यप्यनुदरा कन्येति व्यवहारवदित्याह–**कन्येति**, तत्र हेतुमाह–**बादरेति**, व्यवहारस्य स्थूलद्रव्यविषयत्वेन गुरुत्वसद्भावावश्यंभावेन तत्र लघुत्वव्यवहारस्यापेक्षाव्यति-रेकेणानुपपत्तेरिति भावः, व्यवहारविषयलघुत्वगुरुत्वयोस्तत्त्वमनवस्थितमेव, तस्मात् लोहपिण्डो गुरुरेव, अर्कतूलो लघुरेवेति भवदुक्तोदाहरणमस्मान् प्रत्यसिद्धमेवेत्याह–**एवमिति** । 'पलानां द्विसहस्रञ्च भार एकः प्रकीर्तितः । तुलापलशतं ज्ञेयं सर्वत्रैवैष

१ सि. क. ननु । २ सि. क. पीतो० । ३ सि. क. चास्त्ययोगी । ४ सि. क. हारतोऽनुयु० । ५ सि. क. तत्तुल्या० ।

**एवमापो**ऽनेकेत्यादि यावदनवस्थिततत्त्वे अल्पावधिकलोहपिण्डकः पलमात्रप्रमाणोऽर्कतूल-भाराल्लघीयान् 'पलशतिका तुला, विंशतिस्तुला भार इति'परिभाषितत्वात्, अयःपिण्डो गुरुरपि लघु-रर्कतूलो लघुरपि गुरुर्दृष्ट इत्यनवस्थितगुरुत्वलघुत्वतत्त्वे गुरुलघुत्वे आपेक्षिकत्वादस्मान् प्रति न गुरु-त्वलघुत्वे परस्परतोऽन्ये[2] ततो नायःपिण्डार्कतूलदृष्टान्तोऽस्ति ।

इतर आह—　　5

**अथ ममाऽत्र किम्? यत्तु भवनञ्च प्रसिद्धम् यदपि च भवत्सिद्धान्तेनोक्तः[3]—द्रव्यत्वे-तदेवं लघुगुरुत्वापेक्षया तदेव दृष्टमिति, तन्नोपपद्यते, गुरुलघ्वादयो हि गुणाः सत्त्वरजस्तमांसि च, द्रव्यता तेषां सन्द्रावे एकत्वापत्तौ भवति, ते च गुणाः परस्परतोऽन्य इति ।**

**अथ ममाऽत्र किमित्यादि** यावदेकत्वापत्तौ भवतीति, यदि युष्मत्सिद्धान्तेनानवस्थि-ततत्त्वे लघुगुरुत्वे युज्येते ततो युक्तमस्मान् प्रत्यसिद्धं लघुरेवेति, ततो ममात्र किम्? यत्पुनरेतदुक्तं 10 भवनञ्च प्रसिद्धमिति तदयुक्तमुक्तम्, यदपि च भवत्सिद्धान्तेनोक्तं यस्माद्द्रव्यत्वे तदेवं लघुगुरुत्वापेक्षया तदेव दृष्टमिति, तदपि नोपपद्यते गुरुलघ्वादयो गुणाः सत्त्वरजस्तमांसि च,—लघ्वादिप्रकाशा-त्मका गुणास्त्विमे तल्लक्षणा मयोच्यन्ते, तेषां—गुणानां सन्द्रावे—सङ्क्रमे तदर्थगतेरेकत्वापत्ताविति तत्त्वे-तस्मिन् गुणैकगमने द्रव्यता भवति 'गुणसन्द्रावो द्रव्यम्' (पातं० महा. अ ५ पा० १ सू० ११९) इति लक्षणात्, ते च गुणाः परस्परतोऽन्ये, तस्मान्नासिद्धमित्यभिप्रायः ।　　15

निश्चयः ॥ इति पलशतस्य तुलात्वेन तुलाविंशतेर्भारत्वेनोक्तत्वात्, तुला पलापेक्षया गुर्व्यपि भारापेक्षया लघ्वीति नावस्थि-ततत्त्वे लघुगुरुत्वे इति दर्शयति—**अल्पेति,** भवत्सिद्धान्ते लघुत्वगुरुत्वयोरप्रसिद्धत्वं स्यान्नाम किं नश्छिन्नमित्याशङ्कते—**अथेति ।** **अनवस्थिततत्त्व इति,** गुरुत्वलघुत्वयोस्तत्त्वमनवस्थितम्, इदं लघ्वेवेदं गुर्वेवेति नास्ति स्वरूपेऽवस्थानं तयोः, आपेक्षि-कत्वात्, अपेक्षया लघोरपि गुरुत्वाद्गुरोरपि लघुत्वात्, तथाविधयोरेव तयोः प्रमाणासिद्धत्वात्, तस्माल्लघुरेवेति हेतुरस्मान् प्रत्यसिद्ध इत्यभिधानं भवतां युक्तं भवतु, अवस्थिततत्त्वयोस्तयोरभ्युपगन्तुर्ममात्र किमिति भावः । ननु भवद्भिः सत्त्वादीनां 20 द्रव्यं च भव्य इति प्रकाशात्मसत्त्वेन प्रवृत्त्यात्मसत्त्वं प्रकाश्यत इत्येवं भवनं मृदात्मघटेन घटः क्रियत इत्यादाविव प्रतिपादितं, तथा भवनलक्षणद्रव्यत्वादेव च तदेव गुरुलघुत्वमापेक्षिकमनुभवतीत्युक्तं तदपि नास्माकमभिमतमित्याशङ्कते—**यत्पुनरेतदु-क्तमिति,** भवनात्मकत्वादेव सत्त्वादेर्द्रव्यत्वमुक्तप्रायम्, शब्दादिभावेन भवनस्य प्रसिद्धत्वादिति भावः । तस्य द्रव्यत्वादेवा-पेक्षिकं लघुगुरुत्वमिति व्यवहारस्तु युज्यत इति भवत्सिद्धान्तेनोक्तं तदपि न युक्तमिति दर्शयति—**यदपि चेति ।** कथमयुक्त-मित्यत्राह—**गुरुलघ्वादय इति,** सत्त्वरजस्तमसामनादित्वेन 'गुणास्तु न प्रत्यस्तमयन्ते नोपजायन्त' इत्येवमुत्पत्तेर्निषिद्धत्वा- 25 न्नास्माकं तेषां भवनं प्रसिद्धम्, परिणमनन्तु न निषेधामः, तस्मान्न भवनलक्षणं द्रव्यत्वं सत्त्वादेः, न वा गुणवत्स्वरूपं द्रव्यत्वम्, तेषां लघुगुरुत्वादिधर्मवत्त्वेऽपि पुरुषोपकरणत्वात् पुरुषपशुबन्धकत्रिगुणात्मकमहदादिरज्जुनिर्मातृत्वाच्च गुणत्वमेव, प्रकाशादीना-मेव तेषां लक्षणत्वात्, द्रव्यञ्च सन्द्रावरूपं गुणानाम्, पार्थक्येन स्थितानां गुणानामेकीभावगमनं हि गुणानां सन्द्रावस्तदेव च द्रव्यत्वम्, तस्मात् सत्त्वादयो गुणाः परस्परतोऽन्ये लक्षणभेदादिति भावः । पातञ्जलं द्रव्यलक्षणं दर्शयति—**गुणेति** सन्द्रूयते सङ्गम्यते, समित्येकीभावे, एकीभावो गम्यत इति सन्द्रावः, गुणानां सन्द्रावो गुणसन्द्रावः, 'यस्य गुणान्तरेष्वपि प्रादु- 30 र्भवत्सु तत्त्वं न विहन्यते तद्द्रव्यं यथाऽऽमलकादीनां फलानां रक्तादयः पीतादयश्च गुणाः प्रादुर्भवन्ति, आमलकं बदरमित्येव भवति, अन्वर्थं खल्वपि निर्वचनं गुणसन्द्रावो द्रव्यमिति' महाभाष्ये दृश्यते । अथाऽऽचार्यः सत्त्वादीनां द्रव्यत्वमेव न गुणत्वम्, तेषां सदैकीभावेनावस्थानात् सत्त्वरजस्तमसां हि परस्परं संयोगस्य 'अन्योन्यमिथुनवृत्तय' इत्यनादिता भवद्भिरङ्गी-

१ सि. क. °तकत्वे । २ सि. क. °तोऽनन्यं । ३ सि. क. नोक्तं तदपि नोपपद्यते य० । ४ सि. क. तदर्थव्यतिरे० ।

आचार्य आह—

आ अद्यापि प्रतिपादनमेव वर्त्ततेऽन्यत्वं गुणानाम्, गुणसन्द्रावद्रव्यत्वे तवाप्येतद्द्रव्यमेव न गुणाः पृथक् सन्द्रुतानामेवावस्थानात् कुतः स्यात् सन्द्रावः? तत्रापि च प्रतिज्ञायते सत्त्वादयो गुणाः तत्सन्द्रुतिलक्षणं द्रव्यमेव शब्दादिभावेन व्यवस्थानात् शब्दादिस्वात्मवदिति।

5 आ अद्यापीत्यादि यावच्छब्दादिस्वात्मवदिति, नन्वेतत् प्रतिपादनमेव वर्त्ततेऽन्यत्वं गुणानाम्, तस्मादेकात्मकैककारणम्, यदि भवता गुणसन्द्रावो द्रव्यमिष्यते ततस्तवाप्येतद्द्रव्यमेव, न गुणाः पृथक् सन्द्रुतानामेवावस्थानात् कुतः स्यात् सन्द्रावः? न प्रधानावस्थायां नापि व्यक्तावस्थायामसन्द्रावो यतोऽस्यामन्द्रावादद्रव्यत्वं स्यात्, तस्माद्द्रव्यमेव न पृथग् लघ्वादयो गुणा इति, तत्रापि प्रतिज्ञायते—सत्त्वादयो गुणा लघुत्वादिलक्षणाः तत्सन्द्रुतिलक्षणं द्रव्यमेव, शब्दादिभावेन व्यवस्थानात्,
10 यो यः शब्दादिभावेन व्यवतिष्ठते स सोऽर्थो लघ्वादिलक्षणगुणसन्द्रुतिद्रव्यमेव, शब्दादिस्वात्मवत्, यथा शब्दादिस्वात्मा सत्त्वादिगुणसन्द्रुतिलक्षणं द्रव्यमेव शब्दादिभावेन व्यवस्थानात् तथा लघुगुरुत्वादिलक्षणाः सत्त्वादय इति।

अनापन्नतद्रूपसत्त्वस्यामन्त्वस्यासन्द्रुतस्य स्वेनैव रूपेण स्थितस्य प्रागारम्भादारभमाणस्य शब्दादिभावापत्तिकालः व्यवस्थाशब्देनोच्यते इति चेन्न, पूर्वतुल्यत्वात्. नान्तरेण प्रवृत्त्या-
15 द्येकत्वगतिं व्यवस्थापत्तेः।

अनापन्नेत्यादि यावदुच्यत इति चेदिति, शब्दादिरूपमनापन्नस्य सत्त्वस्यासत्त्वस्यासन्द्रुतस्य गुणान्तरासङ्गतस्य-तदनात्मकस्य स्वेनैव रूपेण स्थितस्य प्रागारम्भादारभमाणस्य च यः शब्दादिभावापत्तिकालो यावदनिष्पन्नशब्दादित्वकाल इत्यर्थः, सा ह्यवस्था-सत्त्वं शब्दकार्यं प्रख्याय शब्दात्मना व्यवतिष्ठमानमिति व्यवस्थानशब्देनोच्यते, अन्यथावस्थितमेव शब्दादिभावेन स्वासत्त्वमिति,
20 एतच्च न, पूर्वतुल्यत्वात्, यथा प्रागुक्तं लघ्वादिलक्षणसत्त्वाद्यैक्यापत्तिर्द्रव्यम्, तन्न कदाचित् सत्त्वादिप्रधानावस्थायाम्, यदि व्यक्तावस्थायामित्यत आह—नान्तरेण प्रवृत्त्याद्येकत्वगतिं व्यवस्थापत्तेरिति,

कृतैवेति तेषामेकात्मकत्वादेकात्मकैककारणत्वमेव जगतः, सत्त्वरजस्तमसां कदापि वियोगाभावात् त्रित्वासिद्धेरित्युत्तरयति—आ अद्यापीति, सत्त्वादीनां द्रव्यत्वमेव न गुणत्वम्, पृथगनवस्थानात्, सन्द्रुतानामेवावस्थानादित्याह—यदि भवतेति, पृथगवस्थानाङ्गीकारे तेषां कदाचिदपि सन्द्राव एव न भवेदित्याह—कुत इति, प्रधानावस्थायां व्यक्तावस्थायां वा सन्द्रावा-
25 सम्भवात्तेषां द्रव्यत्वं न स्यात्, इष्टञ्च द्रव्यत्वं तस्मात् सदा सन्द्रुता एवेति तेषां पृथगवस्थानाभावाद्गुणत्वानौचित्याद्धेदसाधनमसङ्गतमिति तेषां द्रव्यत्वमेव सेत्स्यतीति भावः। उक्तमेवानुमानेन साधयति—तत्रापीति, शब्दादिभावेन व्यवस्थानादित्यत्र व्यवस्थानशब्दार्थमाह—अनापन्नेति यावच्छब्दोत्पत्तिकालं शब्दादिभावानापन्नं गुणान्तरासङ्गतं स्वस्वरूपावस्थितं सत्त्वाद्येव शब्दात्मना व्यवतिष्ठमानमित्युच्यते तदानीम् द्रव्यत्वं बाधितमिति नोक्तहेतोर्गुणानां द्रव्यत्वं सिद्ध्यतीति शङ्कितुरभिप्रायः। सत्त्वस्यासत्त्वं कथमित्यत्राह—अन्यथेति। एवं तेषामसन्द्रावेऽङ्गीक्रियमाणे सन्द्रावः कदाचिदपि न स्यात् तथा चाद्रव्यत्वमेव
30 तेषां प्राप्तमित्युक्तमेवेत्युत्तरयति—पूर्वतुल्यत्वादिति। ननु व्यक्तावस्थायां तेषां सन्द्रावो भविष्यतीत्यत्राह—नान्तरेणेति

१ सि. क. °नन्यत्वं। २ सि. क. °देकैकका०। ३ सि. क. सम्भूतानामे०। ४ क. लक्षणात्संद्रुति०। ५ क. गुणसंभवति०। ६ सि. क. °स्वात्मनः।

आदिग्रहणान्नियमो गृह्यते, प्रवृत्तिनियमावन्तरेण न व्यवस्थापत्तिरस्त्यतो हेतोः नान्तरेण प्रवृत्त्याद्येकत्वगतिं व्यवस्थापत्तेः पूर्वेण तुल्यत्वमिति नास्ति सत्त्वादिपृथक्त्वं तथापीति ।

अतो यथाहेत्वनैकान्तिकस्त्वां प्रति यथा सुखं मोहाद्गु[रोरन्यत्] ल[घु]त्वात् लोहपिण्डवदर्कतूलवत् शब्दभावव्यवतिष्ठमानसुखादिवद्वा, दुःखात् प्रवृत्तिशीलादनन्य[त्], अप्रवृत्तिशीलत्वा[त्] वा[यु]वदाकाशवदित्यादि, स्वप्रयुक्तलक्षणभेदवैलक्षण्या[...]पक्षविरचनया लघ्वादय एव विपर्यसनीयाः । 5

अतो यथा[हे]त्वनैकान्तिक इत्यादि यावद्विपर्यसनीयाः, एतस्मादेव सत्त्वाद्येकत्वात् यो यो हेतुर्यथाहेतु सुखं मोहाद्गुरोरन्यत् लघुत्वादित्यादि त्वत्प्रयुक्तः स स हेतुर्विशेषेणास्मत्पक्षं साधर्म्यनैकान्तिको भवति त्वां प्रति यथानैकान्तिको भवति तथोच्यते—सुखं [मोहात्] गुरोर[न]न्यत् लघुत्वात्, यद्यल्लघु तत्तद्गुरोर[न]न्यत्, लोहपिण्डवदर्कतूलवत्, यथा प्रागुपवर्णितमापेक्षिकमर्कतूलगुरुत्वं लोहपिण्डलघुत्वञ्च तद्द्वयं महितं दृष्टान्तः शब्दभावव्यवतिष्ठमानसुखादिवद्वेति—लौकिकार्थातिक्रमेऽपि त्वन्मतेनैव दृष्टान्तान्तरमिति, तथा दुःखात् प्रवृत्तिशीलादनन्यत्, सुखमिति वर्त्तते, कुतः ? अप्रवृत्तिशीलत्वात्, वायुवदाकाशवदिति, यथा वायुराकाशं वा सुखात्मकं दुःखात् प्रवृत्तिशीलादनन्यत्तथेहापीति, आदिग्रहणात्—दुःखं सुखादनन्यत् अप्रवृत्तिशीलात् प्रवृत्तिशीलत्वात् यद्यत् प्रवृत्तिशीलं तत्तदप्रवृत्तिशीलादनन्यत्, वाय्वाकाशवत् तथा सुखं दुःखमोहाभ्यामप्रकाशकाभ्यामनन्यत् प्रकाशकत्वात्, घटप्रदीपादिसुखवत् तथा दुःखं मोहादनन्यदचलात् चलत्वात् पर्वतादिदुःखवत्, तथा सुखात् प्रकाशकादनन्यत् अप्रकाशकत्वात् प्रदीपघटादिदुःखवत्, तथा मोहः सुखदुःखाभ्यामगुरुभ्यामनन्यो गुरुत्वात् पृथिव्यप्यादिगुरुत्ववत्, एवञ्च सुखत्वाद्दुःखत्वान्मोहत्वात् प्रसादादिकार्यत्वादित्यादयोऽप्यनन्यत्वहेतवः, एवं प्रत्येकमितरगुणस्वरूपानन्यत्वं प्रतिज्ञाय तत्तद्रूपविनिर्वृत्तिहेतुतो यत्किञ्चिद्वस्तूदाहृत्य साध्यम्, सर्वस्य लोष्टादेर्लघुप्रसवादिपरस्पराापृथग्भूतगुणात्मकत्वात् तद्यथा शरीरेन्द्रियगत आत्मैकदेशस्तदेकदेशभूताभ्यां रजस्तमोभ्यामनन्यः सुखत्वाल्लोष्टवत्, सत्त्वरजोभ्यामनन्यो 10 15 20

असन्ततस्य कथं व्यवस्था, सा हि अनुपगतशब्दादिभावस्य स्वात्मन्यवस्थितस्य यावच्छब्दाद्यात्मलाभं तदुन्मुखता, इयञ्च प्रवृत्तिनियमात्मतां विना न सम्भवत्येवेति सन्ततत्वमवश्यमभ्युपेयमिति सत्त्वादेः केवलगुणत्वेनावस्थानासम्भवात् सदैकीभावं गतत्वाच्च न सत्त्वादिमोहादिभिन्नमिति भावः । एवञ्च सत्त्वं मोहाद्गुरोरन्यल्लघुत्वादिति लघुत्वादिहेतवो गुरुभेदाभाववद्वृत्तित्वादनैकान्तिका इत्याह—अत इति भेदसाधनाय ये ये हेतवः प्रयुज्यन्ते ते सर्व एव हेतवोऽनैकान्तिका इति भावः, सुखमिति सुखं साध्यधर्मी मोहानन्यत्वं साध्यधर्मः, तत्र मोहस्य तल्लक्षणं गुरुत्वं विशेषणं लघुत्वादिति हेतुः, लोहपिण्डवदर्कतूलवदिति दृष्टान्तः, लोहपिण्डे गुरुत्वस्यापेक्षिकत्वाल्लघुत्वमपि वर्त्तते, अर्कतूले लघुत्वस्यापेक्षिकत्वाद्गुरुत्वमपि वर्त्तते, तथा च य एव लघुः स एव गुरुः, य एव गुरुः स एव लघुरिति सत्त्वस्य लघोर्गुर्वभेदः सिद्ध्यतीति लघुत्वं हेतुर्गुरुभेदे साध्येऽनैकान्तिकमिति भावः । यथेति आपेक्षिकलघुगुरुत्वप्रदर्शनायैव समुच्चितस्य दृष्टान्तता, एवञ्चार्कतूलो लघुर्गुरुरपि लोहपिण्डो गुरुर्लघुरपि, लघुगुर्वोर्न परस्परं भेद इति सर्वलोकप्रसिद्धोऽर्थ इति भावः । तदुपेक्षया तन्मतप्रसिद्धमेव दृष्टान्तमाह—शब्देति, शब्दो हि सत्त्वादित्र्यात्मकः, अत एव लघुर्गुरुरपि, एवञ्च शब्दात्मसुखं मोहात्मकाद्गुरोरनन्यदेव, मोहस्यापि शब्दात्मकत्वादिति भावः । एवं पूर्वोक्तान् हेतूनखिलान् विपर्यासयति—तथा दुःखादिति, स्पष्टं सर्वमन्यत् । स्वप्रयुक्तेति सुखं मोहाद्गुरोरन्यदिति सांख्येन 25 30

१ सि. क. °हेत्वकान्तिकेत्वा० । २ सि. क. सत्वादेक० । ३ सि. क. यथैका० । ४ सि. क. यथैका० ।
५ सि. क. यथकघुत्वात्० । ६ सि. क. °शीलाद० । ७ सि. क. यदप्रवृ० । ८ सि. क. °र्लघु प्रकाशो नरादि० ।
९ सि. क. °देशस्तदेकस्तदेक० ।

मोहत्वाल्लोष्टवत्, तथा शरीरेन्द्रियगत आत्मैकदेशस्तदेकदेशभूताभ्यां रजस्तमोभ्यामनन्यः प्रसाद-
कार्यत्वाल्लोष्टवत् एवं लाघवप्रसवादिभ्यः, तथा सत्त्वतमोभ्यामनन्यः शोषत्वाल्लोष्टवत्, एवं तापा-
दिभ्यः, तथा सत्त्वरजोभ्यामनन्यः वरणत्वात् एवं सदनादिभ्य इति । एवं तावद्यथाहेतुत्वेनैकान्तिकत्वं
प्रति, त एवान्यत्वहेतवोऽनन्यत्वहेतव इत्युक्ताः स्वप्रयुक्तलक्षण [भेद] वैलक्षण्यविशेषणपक्षविरचनया
5 लघ्वादय एव ।

**अथवा मुक्त्वापि तां सत्त्वादिभेदलक्षणाभिमतेभ्य एव त्वदुक्तेभ्यो लघ्वादिहेतुभ्योऽ-
भेदसिद्धिः शक्याऽऽपादयितुं स्फुटेनैव न्यायाध्वना । सुखं मोहादनन्यत्, अपुरुषत्वे चलत्वात्
मोहस्वात्मवत्, दुःखादनन्यत्, प्रवृत्तिशीलत्वात् दुःखस्वात्मवत्, तथा दुःखादि ।**

( **अथ वेति** ) अथ वा मुक्त्वापि तां—लक्षणभेदहेतूनां सुखं मोहाद्गुरोरनन्यल्लघुत्वान्महालोह-
10 पिण्डार्कतूलवदित्यादीनां विशेषणमन्तरेण भेदो न शक्यः साधयितुमिति तद्वचनाकृतिर्यथा त्वया
क्रियते तथैव मया कृता, किन्तु तां मुक्त्वापि लक्षणभेदवैलक्षण्यविशेषणपक्षविरचनां सत्त्वादिभेद-
लक्षणाभिमतेभ्य एव त्वदुक्तेभ्योऽभेदसिद्धिः शक्याऽऽपादयितुं स्फुटेनैव न्यायाध्वना भ्रान्तिजननेन
विनेत्यर्थः, तद्यथा—सुखं मोहादनन्यत्, अपुरुषत्वे चलत्वात्, मोहस्वात्मवत्, अपुरुषत्वविशेषणं
द्रष्टव्यमधिकारात्, दुःखस्वात्मवदिति तथा दुःखादीत्यादि ।

15 इतर आह—

**नन्वेवं विरुद्धाव्यभिचारिवदुभयानिश्चयः, न, उक्तत्वात् ।**

( **नन्वेवमिति** ) नन्वेवं विरुद्धाव्यभिचारिवदुभयानिश्चयः यथोक्तलक्षणयोर्द्वयोर्विरुद्धयोर्नि-
त्यानित्य[त्व]साधकयोरेकत्र सन्निपतितयोर्हि तयोरेकस्मिन् धर्मिणि शब्दे परस्परनिवारितव्याप्त्योः
श्रावण[त्व] कृतकत्वयोः शब्दत्वघटादिदृष्टान्तयोरुभयत्र संशयो भवतीति तथेहाप्याभ्यामुक्तैरन्यत्वान-

20 प्रयुक्तं यल्लक्षणं मोहादेर्गुर्वादि ततो भेदस्तं विशेषणीकृत्य गुरोरन्यादिति तेन पक्षविरचनाकृता मयापि तदनुसारेणैव तल्लक्षणभेदस्य
वैलक्षण्यं मोहाद्गुरोरनन्यदित्येवं रूपं तद्विशेषणीकृत्य पक्षविरचनया त एव लघ्वादिहेतवो विपर्यासिता इति भावः । तथाविध-
विरचनां त्यक्त्वापि केवलं सुखं मोहादनन्यदित्यादिपक्षविरचनयापि स्फुटाध्वना प्रोक्तहेतुभ्य एवाभेदः साध्यत इत्याह—
**अथ वेति, विशेषणमिति** गुरोरित्यादिविशेषणमित्यर्थः, **सुखमिति** इदञ्च सुखस्य मोहस्य च दुःखादनन्यत्वं सिद्धवत्कृत्य,
अन्यथा चलत्वस्य पक्षसपक्षधर्मता न स्यादिति बोध्यम्, यथा सत्प्रतिपक्षस्थले तुल्यबलत्वादुभयोर्हेत्वोर्न साध्यस्य तदभावस्य
25 वा सिद्धिस्तथाऽत्रापि हेतुभिरुभाभ्यामुक्तैर्नैकस्यापि सिद्धिस्तुल्यबलत्वादित्याशङ्कते—**नन्वेवमिति**, परस्परं विरुद्धयोर्वाव्यभि-
चारिणौ हेतू ताभ्यामिवेत्यर्थः, परस्परविरोधिनोः साधकत्वाद्विरुद्धौ यावव्यभिचारिणौ हेतू तद्वदिति वार्थः । दृष्टान्तमेव
स्फुटयति—**यथेति,** नित्यत्वाव्यभिचारि श्रावणत्वम्, अनित्यत्वाव्यभिचारि च कृतकत्वम् तौ हेतू यदैकत्र धर्मिणि प्रयुक्तौ
यथा शब्दो नित्यः श्रावणत्वात् यच्छ्रावणं तन्नित्यं यथा शब्दत्वम् एवं शब्दोऽनित्यः कृतकत्वात् यत्कृतकं तदनित्यं यथा घट
इति, तदाऽनित्यत्वव्याप्यकृतकत्वबुद्ध्या नित्यत्वनिश्चयस्य नित्यत्वव्याप्यश्रावणत्वबुद्ध्या चानित्यत्वनिश्चयस्य निवारितत्वेन किं
30 शब्दो नित्योऽनित्यो वेति संशयस्यैवोदयेन नान्यतरनिश्चयो भवति, समानबलत्वात् तथा लघुत्वादिभ्यो न मोहादिभेदो न वा

१ सि. क. सत्त्वतमोभ्या० । २ सि. क. °हेत्वैका० । ३ सि. क. °विरचना ४ सि. क. °दित्यादिवि० ५ सि. क.
सदादि० । ६ सि. क. °रेकत्व० ।

न्यत्वहेतुभिरुभयानिश्चयोऽस्तु मा भून्मयोक्तानामेवैकान्तिकत्वमित्यत्राच्यते न, उक्तत्वात्-नैष उभयनिश्चया युज्यते, अस्माभिर्भिन्नात्मकतायान्त्वित्यादि प्रक्रम्य सुखं दुःखादनन्यत्, अनात्मत्वे सत्यवरणाद्यात्मकत्वात्, दुःखस्वात्मवदित्यादिभिरैकान्तिकैर्हेतुभिरन्यत्वस्य निषिद्धत्वात्, अथवा न, उक्तत्वादिति, त्वत्प्रयुक्तानामन्यत्वहेतूनां लघुत्वादीनामुक्तदोषत्वात्, सर्वेऽप्येतेऽप्रसिद्धसाध्यधर्मसमन्वयव्यावृत्तयः अनुमाननिराकृतपक्षा अनवधारणे विपर्ययहेतवः, अवधारणे चापक्षधर्मा एवेति तस्मादनैकान्तिकाः, 5 तेषाञ्चैकान्तिका अस्मदुक्ता निवर्त्तका एवेति न तुल्य[त्व]मावयोः ।

इतश्चातुल्य[त्व]मावयोः—

**भावितत्वाच्च गुणेषु सदा सद्भावस्य, विरुद्धाव्यभिचारिणि च न परस्परनिवारितव्याप्तित्वमात्रात् संशय एव, किं तर्हि? प्रत्यक्षागमबलीयस्त्वभूतादेव निश्चयोऽन्वेष्यत इति युक्तम्, बलीयस्त्वञ्चास्मदुक्तानामाद्यहेतुभावनातः ।** 10

( **भावितत्वाच्चेति** ) भावितत्वाच्च गुणेषु सदा सद्भावस्य-बहुधा भावितं हि सदा सत्त्वादयो गुणाः सन्भूता एव प्रधानमहदहङ्कारादिसर्वावस्थासु, न जातु पृथग्भूतसमवस्थानाश्चेति, किञ्चान्यत् विरुद्धाव्यभिचारिणि च-उक्तविरुद्धाव्यभिचारिण्यपि न परस्परनिवारितव्याप्तित्वमात्रात् संशय एव, किं तर्हि? प्रत्यक्षागमबलीयस्त्वभूतादेव निश्चयोऽन्वेष्यत इति युक्तम्—तयोर्विरुद्धाव्यभिचारिणोः पक्षधर्मयोर्यः प्रत्यक्षीकृतार्थेनागमेन बलीयान् प्रत्यक्षसंवादिना प्रत्यक्षेण आगमेन च जनितबलाद्वा प्रत्- 15 क्षेणैवागमेनैव वा यथाप्रसिद्धं यो बलीयान् तत एव निश्चयोऽन्वेष्यत इत्यादिव्याख्याविकल्पेषु प्रत्यक्षागमेन घटादिषु प्रसिद्धसाध्यानित्यत्वान्वयस्य कृतकत्वहेतोर्बलीयस्त्वात्ततोऽनित्य इति निश्चयः

---

मोहाद्यभेदः सिध्यति, न तु तेषां मोहादिभेदसाधनेऽनैकान्तिकत्वमिति भावः । मोहादिभेदाव्यभिचारित्वमेव लघ्वादौ नास्तीत्याशयेन समाधत्ते-**नैष इति** । अस्माभिः सत्त्वरजस्तमसां भिन्नात्मकत्वे भिन्नात्मकतायां त्वित्यादिग्रन्थेन दोषमुपदर्श्यानात्मत्वे सत्यवरणात्मकत्वादित्यादिभिरभेदस्यैव साधितत्वेन न लघुत्वादेर्मोहादिभेदाव्यभिचारित्वम्, सत्त्वादीनां हि पर- 20 स्परं भेदे सति लघुत्वादीनां मोहादिभेदाव्यभिचारित्वं स्यात् स एव नास्तीति भावः । उक्तत्वादित्यस्य सत्त्वादीनामभेदस्योक्तत्वादित्यर्थमभिमत्य तदनुसारेण व्याख्यायेदानीं लघुत्वादेर्मोहादिभेदसाधने दोषाणामुक्तत्वादित्यर्थानुसारेण व्याख्याति-**अथ वेति** । दोषानेव पूर्वोदितान् दर्शयति **सर्वेऽप्येत इति** व्याख्यात एव पूर्वोऽयं ग्रन्थः । अन्यथापि तुल्यत्वाभावमाह-**भावितत्वाच्चेति** सत्त्वादयः परस्परमनादित एकरूपेणावस्थिता एव, न तु कदाचिदपि तेषां पृथगवस्थानमस्ति, तथात्वे तेषां प्रधानावस्थायां व्यक्तावस्थायां वा सद्भावासम्भवेन महदादिकार्यं नैव स्यात्, तस्माद्व्यत्वादपि नास्ति तेषां भेदो येन तुल्यता भवेदिति 25 भावः । विरुद्धयोरव्यभिचारित्वात् संशयो भवतीत्येतदपि न युक्तं तुल्यबलयोस्तत्तदभावव्याप्ययोरेकत्रैकदाऽसम्भवात् प्रत्यक्षेणागमेन वाऽवश्यमन्यतमस्य बलीयस्त्वादन्यतमनिश्चय एव भवतीति ततोऽपि न तुल्यतेत्याह-**किञ्चान्यदिति** । प्रत्यक्षागमबलीयस्त्वेत्यस्य व्याख्याभेदान् दर्शयति-**प्रत्यक्षीकृतार्थेति** प्रत्यक्षीकृतोऽर्थो यस्यागमस्यासौ प्रत्यक्षागमस्तेन बलीयानित्येको व्याख्याभेदः प्रत्यक्षसंवादिना प्रत्यक्षेणागमेन च जनितं यद्बलं तेन यो बलीयानित्यन्यः, प्रत्यक्षेणैव यद्वाऽऽगमेनैव यो बलीयानित्यपर इति । पूर्वोदितदृष्टान्तेऽपि न संशयः घटादावनित्यत्वान्वयस्य कृतकत्वे प्रत्यक्षीकृतत्वेन तस्य बलीयस्त्वम्, श्रावणत्वे नित्यत्वान्वयस्य 30 शब्दत्वादौ न प्रत्यक्षतः प्रसिद्धता, [illegible]त्वादित्याह-**प्रत्यक्षागमेनेति** । अनन्यत्वसाधकहेतूनां बलीयस्त्वमाह **बलीयस्त्वञ्चेति** भिन्नात्मकतायामित्यादिग्रन्थेन भेदे दोषं प्रदर्श्य 'तचेव ते पोग्गला परिणमंति ते चेव ते पोग्गला दुब्भिगं-

१ सि.क. °रेकत्व० । २ क. नास्तीदंपदम् । ३ सि. क, सन्नूता एव । ४ सि. क. उक्ता० । ५ लि. क. °त्वा भूत एव । ६ सि. क. °यत्यक्षी० ।

स्यात्, न तु श्रावणत्वस्य शब्दत्वे प्रत्यक्षीकर्त्तुं शक्योऽन्वयः शब्दत्वस्याप्रसिद्धत्वादिति, तद्वत् किमिह साधर्म्यमिति चेदुच्यते—बलीयस्त्वञ्चास्मद्धेतूनामाद्यहेतुभावना[तः,]भिन्नात्मकतायान्त्वित्यादि प्रक्रम्याना-त्मत्वे सत्यवरणाद्यात्मकत्वादित्यादिभिराद्यहेतुभिः प्रत्यक्षागमबलीयस्त्वमापादि[तम्], तस्मान्न समतेति।

इतर आह—

**मा मंस्थाः त्वदीया हेतवो बलीयांसः, तदबलत्वञ्चास्मत्पक्षसाधनाय इतोऽपि विपरिव-र्त्तयितुं शक्यत्वा[त्], यथा सुखादन्य[द्दुः]खं प्रसादाद्यनात्मकत्वा[त्] पुरुषवत्, मोहश्च दुःखा-दन्यः तत एव तद्वदिति, अत्रोच्यते किं तन्मात्रादेव विपरिवर्त्तन[म्] ? उत त्रैलक्षण्यात् ? त्रैल-[क्ष]ण्यादिति चेन्न, आ[त्मलक्षण]मेव हि नास्तीह यदाधारेण शेषद्वयम्, न ह्यनात्मकत्वं नाम किञ्चि-दस्ति, आत्मा न भवति, आत्मैव ना[स्ती]त्यनात्मकमिति द्विधाऽप्यसिद्धं दुःखस्यानात्मकत्वं धर्म्यसिद्ध्यापत्तेः, न दुःखं नान्यो मोहः पुरुषो वा प्रसादाद्यनात्मकत्वात् खपुष्पवत् स्यादिति।**

(**मा मंस्था इति**) मा मंस्थास्त्वदीया हेतवो बलीयांसोऽवरणाद्यात्मकत्वादय इति, तद-बलत्वञ्चास्मत्पक्षसाधनाय इतो विपरिवर्त्तयितुं शक्यत्वात्, पूर्वहेतवस्तावदबला यतः शक्यन्तेऽव इतोऽपि–सुतरां पुरुषनिवृत्त्यर्थमनात्मत्वविशेषणादृतेऽपि विपरिवर्त्तयितुम्, तद्यथा सुखादन्यद्दुःखं प्रसादाद्यनात्मकत्वात् पुरुषवत्, असमर्थसमासेनागमकेनापि अर्थं गृहीत्वा वाँहीकोक्त्यनुसारेणोक्तम्, मोहश्च दुःखादन्यस्तत एव तद्वदिति, चशब्दाद्दुःखादन्यौ सुखमोहौ सुखाद्यनात्मकत्वात् पुरुषवत् तथैव व्याख्या द्वे साधने समस्योक्ते, मोहादन्ये सुखदुःखे त्वरणाद्यनात्मकत्वात् पुरुषवदिति तथैवेति, अत्रो-च्यते किं तन्मात्रादेव विपरिवर्त्तनं[उत]त्रैलक्षण्यादिति प्रश्नः, प्रतारणार्थं भाववाचिप्रत्ययसहितपञ्चम्य-

---

धत्ताए परिणमंति' इत्याद्यागमेन चैकत्वं समर्थितं तेनास्मद्धेतवः प्रत्यक्षागमबलीयांस इति भावः। अथ न सन्ति त्वदीया हेतवो बलीयांसः, अस्माभिरपि तेषां दौर्बल्यं संविधातुं शक्यत्वात्, येनास्मत्पक्षसिद्धिर्भवेदित्याशङ्कते–**मा मंस्था इति**। प्रसाद-लाघवादयः सत्त्वस्य कार्यं ततः प्रसादाद्यात्मकं सत्त्वं कार्यकारणयोरभेदात् दुःखञ्च न प्रसादादीनामात्मा, अतः प्रसादाद्यनात्म-कत्वाद्दुःखं सुखादन्यदेव, अन्यथा दुःखादपि प्रसादादिप्रसङ्गात् दृष्टो हि यः प्रसादाद्यनात्मकः स सुखादन्यो यथा पुरुषः, तथा च सुखान्यत्वव्याप्यप्रसादाद्यनात्मकत्वाद्दुःखं सुखादन्यदित्याशयेनानुमानमाह–**यथेति**। मोहादपि प्रसादानुदयेन सोऽपि न प्रसादाद्यात्मेति तत एव हेतोर्मोहस्यापि सुखभिन्नत्वसिद्धिरित्याह–**मोहश्चेति**। दुःखं सुखादनन्यदेव, अनात्मत्वे सत्यवरणाद्यात्मकत्वादित्यादिसुखानन्यत्वसाधनहेतोर्विपक्षभूतपुरुषवृत्तित्वस्य व्यावर्त्तनायात्मत्वे सतीति विशेषणं भवद्भिः कृतम्, तद्विशेषणव्यतिरेकेण भवदुक्तहेतुत एव भवत्पक्षो विपरिवर्त्तयितुं शक्यते, यथा अनात्मत्वे सत्यवरणाद्यात्मकत्वहेतावनात्मत्व-विशेषणं परित्यज्य तत एव दुःखस्य सुखादनन्यत्वं भवदिष्टं विपरिवर्त्तनीयम्, सुखादन्यद्दुःखं वरणाद्यनात्मकत्वात्, पुरुषवदि-त्याशयेनाह–**पूर्वहेतव इति**। **इत इति**, अनात्मत्वविशेषणविरहिताद्भवदुक्तहेतोरित्यर्थः। प्रसादादिर्न भवत्यात्मा यस्येति प्रसादाद्यनात्मक इत्ययमसमर्थसमासोऽगमकत्वात्तथापि कथञ्चिदर्थं गृहीत्वा प्रसादाद्यनात्मकत्वादिति वादिना प्रयुक्तमित्याह–**असमर्थेति**। वाहीकोक्त्यनुसारेण वाहीको गोपालः तदुक्तिमेवेयमुक्तिरनुसरति, न तु शब्दस्वारस्य[मनु]सरतीति भावः। प्रसादाद्यनात्मकत्वादिति यो हेतुरुच्यते स किं हेतोः प्रतिकृतिमात्ररूपः, किंवा त्रैलक्षण्यसमन्वित इति विकल्प्य दूषयितुमाह–**किमिति**। केवलं पञ्चम्यन्तशब्दप्रयोगव्यङ्ग्यात् त्रैलक्षण्यशून्यान्न कस्यचित्सिद्धिरिति भावमाख्याति **प्रतारणार्थमिति** अकोविदान् छलयितुमित्यर्थः। भाववाचित्वप्रत्ययघटितहेतोः पक्षधर्मत्वमात्रं प्रतिभासते तन्मात्रमेव सादृश्यं सद्धेतुना **सहेति**

---

१ सि. क. समंताचिति। २ सि. क. °त्वात् तद्यथा। ३ सि. क. तर्हि कोपेनुसा०।

न्तशब्दप्रयोगमात्रात् पक्षधर्मसादृश्यात् त्रैलक्षण्यशून्यात् परिवर्त्तनमित्यभिप्रायः, स्यान्मतं न तन्मात्रात्, किं तर्हि ? त्रैलक्षण्यात्, एवञ्चेन्मन्यसे तदयुक्तं, यस्मादादिलक्षणमेव नास्तीह–पक्षधर्मत्वमेव तावन्नास्ति यदाधारेण शेषद्वयम्, कथं पक्षधर्मो नास्तीति चेत् यस्मान्नह्यनात्मकत्वं नाम किञ्चिदस्ति, यदि प्रसादाद्यात्मा न भवतीत्यनात्मकं दुःखमुच्यते, अथात्मैव नास्तीत्यनात्मकमित्युच्यते द्विधाऽप्यसिद्धं दुःखस्यानात्मकत्वम्, धर्म्यसिद्ध्यापत्तेः, कथमिति चेदुच्यते-न दुःखं नान्यो मोहः पुरुषो वा त्वत्परिकल्पितं दुःखं प्रसादाद्यनात्मकत्वात् खपुष्पवत्स्यादिति धर्म्यभावादपक्षधर्मत्वम् । 5

इतर आह—

**नन्वन्यपदार्थविषयत्वाद्बहुव्रीहेरनात्मकश्रुतेरस्ति प्रसादाद्यनात्मा वा चित्रगुदेवदत्तवत् कोऽप्यन्यः, सोऽत्र च सद्धर्मवान् धर्मी पक्षो भवितुमर्हतीति ।**

**नन्वन्यपदार्थेत्यादि** यावत् सद्धर्मवान्, ननु बहुव्रीहेरन्यपदार्थविषयत्वात् तत्सूचकसमासान्तकप्रत्ययान्तत्वादनात्मकश्रुतेरस्ति प्रसादाद्यनात्मा वा चित्रगुदेवदत्तवत् कोऽपि वरणादिभ्यः प्रसादादिभ्यश्चान्यः सोऽत्र च सद्धर्मवान् धर्मी पक्षो भवितुमर्हतीति । 10

**अत्रोच्यते, बहुव्रीहेरन्यपदार्थविषयत्वानैकान्त्यात्, एवमपि स्थूलशिरा राहुरिति तद्गुणसंविज्ञानपक्षाश्रयेण शिरोऽव्यतिरिक्तस्य राहोरसदाख्यया व्यपदेशदर्शनेन यथा व्यवहारो दृष्टस्तथेदमपि स्यात्, तस्य व्यपदेशिवद्भावव्यवहारानभ्युपगमे धर्मधर्मिस्वरूपविरोधात् ।** 15

**( अत्रेति )** अत्रोच्यते नैतदुपपद्यते बहुव्रीहेरन्यपदार्थविषयत्वानैकान्त्यात्, एवमपीत्यादि यावद्धर्मधर्मिस्वरूपविरोधादिति, स्थूलं शिरोऽस्य स्थूलशिरा राहुः, कपोऽतंत्रत्वात्, बहुव्रीहेरेव तंत्र-

सूचयति **पक्षधर्मेति** । मात्रपदव्यावर्त्यं दर्शयति **त्रैलक्षण्यशून्यादिति**, पक्षधर्मत्वसपक्षधर्मत्वविपक्षाश्रितित्वशून्यादित्यर्थः । द्वितीयं विकल्पमुत्थाप्य निराकरोति **स्यान्मतमिति** । **पक्षधर्मत्वमेवेति**, सपक्षसत्त्वविपक्षासत्त्वयोः हेतौ सत्त्वेऽपि यावता स हेतुः पक्षे न वर्तते तावता सिषाधयिषिते साध्यधर्मिणि न साध्यनिश्चयो भविष्यतीति पक्षधर्मत्वं मुख्यतया हेतोरावश्यकं तत एवापरे द्वे लक्षणे फलवती भवत इति भावः । नञः प्रसज्यप्रतिषेधपर्युदासान्यतरार्थाङ्गीकारेऽपि नानात्मकत्वं नाम धर्मः प्रसिद्ध्यतीत्याचष्टे **यदीति** यस्यात्मा प्रसादादिर्न भवति तद्दुःखमनात्मकमुच्यत इति वक्तव्यं पर्युदासपक्षे, आत्मा नास्तीत्यनात्मकमिति प्रतिषेधपक्षे, उभयोरपि पक्षयोर्दुःखादि नास्ति प्रसादाद्यनात्मकत्वात् खपुष्पवदित्यनुमानेन दुःखाद्यभावस्यैव सिद्धेर्धर्म्यभावात् क्व सुखादिभेदः सिद्ध्येत, त्रैलक्षण्यविरहादित्याह–**द्विधापीति** । नन्वनात्मकत्वादिति बहुव्रीहिणा समस्तं पदम्, कप्प्रत्ययश्रुतेः, बहुव्रीहिश्च 'अनेकमन्यपदार्थे' इति सूत्रेण समासघटकपदार्थातिरिक्तपदार्थवृत्तित्वेऽनेकप्रथमान्तपदानां समासो विधीयते यथा चित्रा गावो यस्यासौ चित्रगुरिति चित्रगोव्यतिरिक्ते देवदत्तादौ बहुव्रीहिः, तस्मात् प्रसादाद्यनात्मा कश्चिदस्ति, स एव चात्र पक्षीक्रियते तेन वा पक्षधर्मता हेतोरित्याशङ्कते-**नन्वन्यपदार्थेति** । **सद्धर्मवानिति** अन्यस्य कस्यचित् सिद्धत्वादेवानात्मकत्वं नाविद्यमानधर्मः येन खपुष्पदृष्टान्तेन धर्म्यसिद्धिः स्यादिति भावः । समस्यमानपदार्थव्यतिरिक्तस्यान्यपदार्थस्य क्वचिदसत्त्वेऽपि बहुव्रीहेर्दर्शनान्न तन्मात्रदन्यस्य दुःखादेः सिद्धिरित्याशयेन समाधत्ते-**अत्रोच्यत इति** । अथ यद्यन्यपदार्थे एव बहुव्रीहिरित्यभ्युपगम्यते स्थूलशिरा राहुरित्यादौ शिरोव्यतिरिक्तस्य राहोरभावेऽपि तदतिरिक्तं राहुं प्रकल्प्य तत्र स्थूलशिरस्त्वेन व्यपदिश्यते तदाप्याह–**एवमपीति** । ननु स्थूलशिरा राहुरिति कथं बहुव्रीहिः कबभावात्, कथं वा न कर्मधारय इत्यत्राह–**कपोऽतंत्रत्वादिति**, कपो वैभाषिकत्वादतंत्रता विज्ञेया, स्थूलशिरःशब्दस्यात्र 20 25 30

१ सि. क. °श्रुते नास्ति प्रसादाद्यात्मा वा ।

त्वात्तस्य चान्यपदार्थत्वव्यभिचारं दर्शयति, तद्गुणसंविज्ञानपक्षाश्रयणेन 'भवति बहुव्रीहौ तद्गुणसंविज्ञानमपि' (महाभा० अ १ पा. १ सू० २१) इति वचनात्, न हि स्थूलशिरोलक्षितस्य व्यतिरिक्तो राहुरस्ति, चित्रगोविशिष्टदेवदत्तवत्, तदेव हि स्थूलशिरो राहुः, तद्वतोऽसदाख्या–शिरोव्यतिरिक्तस्याऽऽख्या व्यपदेशः, स्थूलेन शिरसा व्यपदेशेन चित्राभि[र्गोभि]रिव व्यपदेशिनो देवदत्तस्य व्यतिरिक्तस्य तद्वदव्यतिरिक्त-
5 स्यापि राहोः, तया व्यपदेशिवद्भावं कृत्वा व्यवहारो दृष्टोऽसतोऽपि तथेदमपि स्यात्, तस्य च व्यपदेशिवद्भावव्यवहारस्यानभ्युपगमे–उक्तोपपत्त्या दृष्टमिममसदाख्यया व्यपदेशिवद्भावव्यवहारमनभ्युपगच्छतस्ते धर्मधर्मिस्वरूपविरोधौ दोषौ भवतः।

धर्मिस्वरूपविरोधस्तावत्—

**आत्मनोऽनन्यदेव दुःखम्, प्रसादाद्यनात्मकत्वात्, आत्मस्वतत्त्ववत्, पुरुषत्वापत्तेश्च,**
10 **अन्यथा सुखान्यत्वप्रसादाद्यनात्मकत्वानुपपत्तेः।**

**( आत्मन इति )** आत्मनोऽनन्यदेव दुःखम्, पुरुषादित्यर्थः, प्रसादाद्यनात्मकत्वात् बहुव्रीहिसामर्थ्यात् प्रसादाद्यात्मनोऽन्यत्वादित्यर्थः, आत्मस्वतत्त्ववत् पुरुषस्वात्मवदित्यर्थः, पुरुषत्वापत्तिश्च दुःखस्य धर्मिस्वरूपवैपरीत्यम्, अतो धर्मिस्वरूपविरोधः। किं कारणं? अन्यथा सुखान्यत्वप्रसादाद्यनात्मकत्वानुपपत्तेः पुरुषत्वापत्तिमन्तरेण सुखस्य दुःखादन्यत्वं वरणाद्यनात्मकत्वं दुःखस्य वा सुखा-
15 दन्यत्वं प्रसादाद्यनात्मकत्वं मोहस्य ताभ्यामन्यत्वं प्रसादादिशोषाद्यनात्मकत्वञ्च नोपपद्यते, भावितन्यायत्वात् सुखदुःखमोहानामैक्यवृत्तित्वस्य, तस्मात् पुरुषस्वरूपापत्तेः प्रसादादिशोषादिकार्याणां सुखदुःखमोहानां धर्मिस्वरूपविपरीततेति।

---

पुंलिङ्गत्वेन बहुव्रीहेरेव तंत्रत्वादन्यपदार्थव्यभिचारित्वमिति भावः। **तद्गुणेति** तस्य अन्यपदजन्यप्रतीतिविषयस्य गुणा विशेषणानि तेषां संविज्ञानं यत्र सोऽयं तद्गुणसंविज्ञानबहुव्रीहिः, बहुव्रीहिसमासघटकपदव्यतिरिक्तराहुपदजन्यप्रतीतिविषयस्य विशेषणान्यपि-
20 स्थूलशिरोरूपाणि तदुपलक्षितस्य तदभिन्नस्य राहोर्बोधकानि भवन्ति, वैषम्योदाहरणं चित्रेति, तत्र व्यतिरिक्तोऽन्यपदार्थोऽस्ति, अत्र तु तदेव समासघटकशिर एव तद्वतो राहोरसदाख्या भवतीत्यर्थः। **भवतीति,** सर्वादीनि सर्वनामानीत्यत्र सर्व आदिर्येषां तानीमानीति विग्रहे सर्वशब्दस्य सर्वनामसंज्ञा न प्राप्नोति, अन्यपदार्थप्रधानत्वाद्बहुव्रीहेः, यदन्यत सर्वशब्दात्तस्य सर्वनामसंज्ञा प्राप्नोतीति शङ्कायां नैष दोषः, भवति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि, यथा चित्रवाससमानय इति तद्गुण आनीयत इति महाभाष्ये प्रोक्तम्। **व्यपदेशिवद्भावमिति** यत्र निमित्तसद्भावान्मुख्यो व्यपदेशो यस्यास्ति स व्यपदेशी यस्तु व्यपदेशहेत्वभावादविद्यमानव्यप
25 देशः स तेन तुल्यं वर्तते कार्ये प्रतीतौ व्यपदेशवद्भवतीत्युच्यते देवदत्तस्य सतश्चित्राभिर्गोभिर्व्यपदेशो मुख्यः राहोरसतः स्थूलशिरसा व्यपदेशो गौण इति भावः। एवं दुःखस्य प्रसादाद्यनात्मकत्वाभावेऽप्यसदाख्यया प्रसादाद्यनात्मकत्वं व्यपदेशिवद्भावेन व्यवहार्यमित्याह–**तथेदमपीति**। तथानभ्युपगमे दोषमाह–**तस्य चेति**। व्यपदेशिवद्भावमनभ्युपेत्य मुख्य एव प्रसादाद्यनात्मकत्वव्यवहारेऽभ्युपगम्यमाने पुरुषस्यापि प्रसादाद्यनात्मकत्वाद्यथा पुरुषस्वात्मा पुरुषादनन्यो भवति तथा दुःखस्यापि प्रसादाद्यनात्मत्वात् पुरुषादनन्यत्वेन पुरुषत्वापत्त्या धर्मिस्वरूपविरोधः प्रसज्यत इत्याह–**आत्मन इति** पुरुषादित्यर्थः। यदि दुःखं
30 पुरुषात्म न भवेत्तर्हि तत् प्रसादाद्यनात्मकं मुख्यं न स्यात्, सुखादन्यदपि मुख्यं न स्यात्, पुरुषव्यतिरिक्तस्य सुखदुःखमोहात्मकत्वेन पूर्वं व्यवस्थापितत्वात् तत्र च प्रसादाद्यनात्मकत्वसुखाद्यन्यत्वव्यवहारस्यामुख्यत्वात् पुरुष एव च मुख्यत्वात्, एवञ्च दुःखादौ प्रसादाद्यनात्मकत्वसुखाद्यन्यत्वव्यवहारस्य मुख्यत्वे पुरुषत्वापत्तिर्दुर्वारैवेत्याह–**पुरुषत्वापत्तिश्चेति**। इदमेव कारणमाह–**अन्यथेति**। कुतो नोपपद्यत इत्यत्राह–**भावितेति**। एवं सुखदुःखमोहानां पुरुषत्वापत्तौ सुखादीनां पुरुषधर्मत्वेन

किञ्चान्यत् योऽपि धर्मस्वरूपविरोधः सोऽप्युच्यते तद्यथा—

**धर्मस्वरूपविरोधोऽपि चैवमेव, ततश्च प्रकृतिपुरुषयोरप्येकतैव, एवं सुखमोहयोरपि ।**

(**धर्मेति**) धर्मस्वरूपविरोधोऽपि चैवमेव—यथा पुरुषत्वापत्तौ सुखादीनां सुखाद्यात्मपरित्यागे धर्मिस्वरूपविरोधः तथा पौंस्नापत्तौ त्रयाणामैक्यापत्तौ चान्यधर्मस्वरूपविरोधश्च, ततश्च प्रकृति-पुरुषयोरप्येकतैव—तस्माद्धेतोः पुरुषत्वापत्तेरनन्यत्वापत्तेश्च प्रकृतिः पुरुषादन्या पुमान् वा प्रकृतेरन्य 5 इति नोपपद्यते, ततोऽस्मदभीष्टमेकमेव कारणमित्येतद्दर्शनं साधीयः, एवं सुखमोहयोरपि-यथा दुःखं सुखादन्यदित्येतत् किं तन्मात्रात् [उत] त्रैलक्षण्यादित्यतः प्रभृति यावत् प्रकृतिपुरुषयोरप्येकतैवेत्युक्तं तथा सुखं दुःखमोहाभ्यामन्यत् मोहः सुखदुःखाभ्यामन्य इत्येतेष्वपि चतुर्षु दुःखं सुखादन्यदिति च साधनेन सह एवं ग्रन्थो योज्य इति ।

**अथ मा भूदेष दोष इत्यनात्मत्वविशेषणं त्वद्वदाब्रवीमोऽत्रोच्यते तथा सति यथा किं** 10 **सुखादन्यत् आत्मानं मुक्त्वा इदं तदिति निदर्शयितुं शक्यते ? इति समन्वयाभावः सुखादे-रपि दुःखादन्यस्य विपक्षत्वाद्विपक्षाव्यावृत्तिरपि ।**

(**अथ मा भूदिति**) अथ मा भूदेष दोष इत्यनात्मत्वविशेषणं त्वद्वत्—एतद्दोषपरिहारार्थं यथा त्वयाऽनात्मत्वे सति वरणाद्यात्मकत्वात् सुखं दुःखाद[न]न्यन्मोहवदित्याद्यभिहितं तथाऽहमप्य-नात्मत्वे सति लघुत्वात् सुखं दुःखादन्यन्मोहवदित्याब्रवीम्यतो[धर्म]धर्मिस्वरूपविरोधौ प्रकृतिपुरुष- 15 दोषश्च नेति, अत्रोच्यते तथा सति यथा किमिति-एवं सति यथा किं सुखादन्यदात्मानं मुक्त्वेति दृष्टान्त इदं तदिति निदर्शयितुं न शक्यते—इदं तत् सुखात् पुरुषाच्चान्यद्वस्त्विति समन्वयस्याभावः, अत एव चान्यत्वेन पक्षीकृते सुखादिपुरुषव्यतिरिक्तसपक्षाभावात् सुखादेरपि सुखादन्यस्य विपक्षत्वा-द्विपक्षाद्धेतोर्व्यावृत्त्यर्थं यदुच्यते यच्च सुखादनन्यत् तदनात्मत्वे न प्रसादाद्यनात्मकं न लघ्वाद्यनात्म-कञ्चेति निदर्शयितुं न शक्यते, न च मोहादि सुखादन्यन्न भवतीति शक्यं दर्शयितुमिति विपक्षाव्यावृत्तिरपि 20 अतो विपक्ष एव सत्त्वाद्विरुद्धाश्च हेतव इत्यभिप्रायः ।

प्रकृतिधर्मत्वं न स्यादिति धर्मस्वरूपविरोध इत्याह-**धर्मस्वरूपेति** । दोषान्तरमप्याह-**ततश्च** । पुरुषत्वापत्तेश्चेत्यर्थः । सुख-दुःखमोहात्मन एव प्रकृतित्वात् सुखादीनां पुरुषत्वापत्तौ पुरुषादनन्यत्वे च पुरुष एव प्रकृतिः स्यात्, नान्या काचित प्रकृतिः पुरुषादत एकमेव कारणं सुखं वा दुःखं वा मोहो वा प्रकृतिर्वा पुरुषो वा भवेत्, न तु त्र्यात्मकमेकं भवदिष्टमिति भावः । प्रोक्तं दुःखधर्मिकं विचारमेव सुखमोहयोरपि समानत्वादतिदिशति-**एवमिति** । एतमेव स्फुटयति-**यथेति** । चतुर्ष्विति, 25 सुखं दुःखादन्यत्, सुखं मोहादन्यत, मोहः सुखादन्यः दुःखादन्य इति पक्षेष्वित्यर्थः । अथ सुखादीनां पुरुषत्वाद्यापत्ति-वारणार्थं सुखादि दुःखाद्यन्यत्, अनात्मत्वे सति लघुत्वादिभ्य इत्युच्यते इत्याशङ्कते-**अथेति, त्वद्वदिति**, भवद्भिर्यथा सुखं दुःखादनन्यत, अनात्मत्वे सति वरणाद्यात्मकत्वादित्यनात्मत्वेन हेतुर्विशेषितस्तथाऽस्माभिरपि पुरुषव्यावर्तनाय तदेव विशेषणमुच्यते तथा च न पूर्वोक्ता दोषा इति भावः । एवं सति ते हेतवोऽप्रसिद्धसाध्यधर्मसमन्वयव्यावृत्तयो विरुद्धाश्चे-त्युत्तरयति-**तथा सतीति** अनात्मत्वे सतीति विशेषणं कृत इत्यर्थः, दुःखं सुखादनन्यत, अनात्मत्वे सति प्रसादाद्य- 30 नात्मकत्वादिति प्रयोगे पुरुषव्यतिरिक्तस्य निश्चितसाध्यसाधनोभयस्य दृष्टान्तस्य कस्यचित् प्रदर्शयितुमशक्यत्वान्न साध्यसा-धनयोरन्वयः सिध्यति, सर्वं हि सुखदुःखमोहात्मकमविभक्तस्वतत्त्वमत इदं सुखं दुःखं मोहो वेति न पृथक् विभज्य दर्शयितुं

१ सि. क. दुःख० । २ सि. क० सुखं दुःखाद० । ३ सि. क० दुःखं सुख । ४ सि. क. सुखं मोहाद० । ५ सि० क० °दन्यन्न भवतीत्यसक्तं ।

अथ तु विभक्तस्वतत्त्वं सुखं दुःखादन्यन्न भवति प्रसादाद्यनात्मकमपि न भवतीति, उच्यते तथा सति तेन प्रकारेण नियमवत् सुखमेवानन्यत् प्रसादाद्यात्मकं भवति चेति तथा तस्य वस्तुनः प्रवर्त्तनात् तथाव्यक्तेश्च नियमप्रवृत्तिप्रकाशात्मकं सुखमेवेति त्वदभ्युपगमेनैवैक्यं मोहादीनामापन्नमस्मिन् साधने, एवं शेषसाधनेष्वपीति को वादार्थ उभयोरपि ।

5 अथ त्विति यावत्सुखमिति, अथ मतं यद्विभक्तस्वतत्त्वं दुःखमोहाभ्यां तत्सुखं सुखादन्यन्न भवति तन्न प्रमादाद्यनात्मकमपि न भवतीति विविक्तस्वरूपस्य सुखस्य दुःखादन्यत्वान् प्रसादाद्यात्मकत्वाच्च तदेव शक्यते वैधर्म्येण निदर्शयितुमत एव च तमः सुखादन्यत् विविक्तस्वरूपमप्रसादाद्यात्मकमपुरुषश्चेति साधर्म्यदृष्टान्तश्च स्यादिति, एवमितरसाधनेष्वप्युभयदोषपरिहार इत्यत्रोच्यते तथा सतीत्यादि यावत् को वादार्थ उभयोरपीति, एवं सति तेन प्रकारेण नियमोऽयं यत्

10 सुखादन्यत् न भवति तन प्रसादाद्यनात्मकमपि न भवत्येवेति, एतेन प्रकारेण नियमवत् सुखमेवानन्यत् प्रसादाद्यात्मकं भवति चेति तथा तस्य वस्तुनः प्रवर्त्तनात् तथाव्यक्तेश्च नियमप्रवृत्तिप्रकाशात्मकं सुखमेवेति त्वदभ्युपगमेनैवैक्यं मोहादीनामापन्नमस्मिन् साधने, एतदभ्युपगमवच्च शेषसाधनेष्वपि, दुःखादन्यत् सुखं मोहश्चेत्येवमादिषु, यदृदनात्मत्वे दुःखादन्यन्न भवति तच्छोषादिवरणाद्यनात्मकमपि न भवतीत्येवं नियमाद्व्यक्तेः प्रवृत्तेश्चैक्यं मोहादीनामभ्युपगतं त्वयैवे[ना]तरेतरैकत्वाभ्यु-

15 पगमः, इतिशब्दो हेत्वर्थे, इत्यतः को वादार्थः—वादप्रयोजनमुभयोरावयोः त्वयैवैक्याभ्युपगमान्न वादार्थस्तव ममापि, प्रतिपन्नार्थप्रतिपादनवैफल्यादिति ।

एवं तावदवरणाद्यात्मकत्वादिहेतवः प्रथमोक्तानन्यत्वपक्षस्यैव साधका अनात्मत्वाविशेषणा अपि, तत्रैव त्ववरणाद्यात्मकत्वादिवद्विदोषा लघ्वादिहेतवोऽपि ।

(एवं तावदिति) एवं तावदवरणाद्यात्मकत्वादिहेतवः प्रथमोक्तानन्यत्वपक्षस्यैव साधकाः,

---

20 शक्यते तस्मान्न सपक्षोऽस्ति, सुखस्य साध्यशून्यस्य विपक्षतया ततो हेतोर्न व्यावृत्तिः प्रदर्शयितुं शक्या सुखादेरनिर्देश्यत्वादेव अत एव च यत् सुखादन्यन्न भवति तन प्रसादाद्यनात्मकमपि न भवति, तथा सुखादन्यो मोह इत्यपि दर्शयितुमशक्यत्वात् विपक्षाद्धेतोर्व्यावृत्तिरपि न सिध्यतीति विरुद्धता हेतूनामिति भावः । अथ सुखादयो नाविभक्तस्वतत्त्वाः किन्तु विभक्तस्वतत्त्वा एव, तथा च साध्यसाधनयोरन्वयव्यतिरेकौ सेत्स्यत इत्याशङ्कते—अथ त्विति । तद्व्याचष्टे—अथ मतमिति सुखदुःखमोहानां विविक्तत्वस्त्वात् सुखादन्यत्वे साध्ये मोहस्साधर्म्यदृष्टान्तः सुखश्च वैधर्म्यदृष्टान्त इति प्रदर्शयितुं शक्यते ततश्च नानन्वयो न

25 वाऽव्यतिरेक इति भावः । एवं सति सुखमेव प्रकाशप्रवृत्तिनियमात्मकमिति त्वदीयाभ्युपगमेनैव सुखदुःखमोहानामैक्यमस्मत्साधनीयं सिद्धमेवेति नेदानीं किमप्यस्ति वादप्रयोजनमित्याशयेनोत्तरयति—तथा सतीति. विभक्तस्वतत्त्वतायां सुखादीनामङ्गीकृतायां सत्यामित्यर्थः । सुखस्य नियमात्मकत्वं दर्शयति—तेन प्रकारेणेति सुखं सुखमेव, सुखादन्यन्न भवति, प्रसादाद्यात्मकमेव, प्रसादाद्यनात्मकं न भवतीति प्रतिनियतरूपत्वान्नियमात्मकमित्यर्थः । सुखस्य प्रवृत्त्यात्मकत्वं प्रकाशात्मकत्वञ्च दर्शयति—तथा तस्येति सुखं सुखात्मतया प्रवर्त्तते प्रकाशते चेति प्रवृत्तिप्रकाशात्मकमित्यर्थः । एवं दुःखमोहयोरपि प्रकाशप्रवृत्तिनियमात्म-

30 कत्वादितरेतररूपत्वमतिदिशति—एतदभ्युपगमवच्चेति । सिषाधयिषितस्यार्थस्य त्वयाऽप्यभ्युपगतत्वात्तस्य पुनः प्रतिपादनं निष्फलमेवेति नावयोरिदानीं कश्चिद्वादार्थोऽस्तीत्याह—इत्यत इति । एवञ्चावरणाद्यात्मकत्वादिहेतूनामनात्मत्वविशेषितानामप्यनन्यत्वसाधन एव सद्धेतुत्वं न त्वन्यत्वसाधने, सदोषत्वादित्युपसंहरति—एवं तावदिति । नन्वेवं लघुत्वादिहेतुना

अनात्मत्वविलक्षणा अपि, नान्यत्वपक्षस्येति प्रतिपादिताः, तत्रैव—अनन्यत्वपक्ष एव त्ववरणाद्यात्मकत्वादिवत् विदोषा लघ्वादिहेतवोऽपि, नान्यत्वपक्षे, तत्र सदोषा एवेत्यभिप्रायः ।

ननु लघ्वादयोऽनन्यत्वहेतव[1] उक्ता एव, किं पुनरनुशयेनेत्यत्रोच्यते—

सुखादावपि च परिहारपक्षेऽपि कृतेऽपि च परधर्मेणापि विशिष्टेन प्रतिपादनविधिनाऽनन्यत्वहेतवः सुखं दुःखादनन्यत् चलाप्रकाशकत्वात्, अविभक्ताशेषगुणात्मकलोष्टवदिति । 5

(सुखादावपि चेति) सुखादावपि च न सत्त्वादिष्वेव, तत्रापि च परिहार[2]पक्षेऽपि कृतेऽपि[3] च—यथा त्वया सुखं मोहाद्गुरोरन्यदिति परिहारपक्षे[4] कृतेऽपि च परधर्मेणापि दुःखं सुखादनन्यल्लघुत्वादित्येतेनापि—न केवलमनात्मत्वे चलत्वादेवेति, इत्थं विशिष्टेन प्रतिपादनविधिनाऽनन्यत्वहेतव इति, अपिशब्दात् स्वधर्मेण—सुखं दुःखादनन्यत्, लघुत्वादिभिः सुकरप्रतिपादनमेवेत्यर्थः । परधर्मेण 10 तावत्— सुखं दुःखादनन्यत्, चलाप्रकाशकत्वात्, चलमप्रकाशकं प्रवृत्तिशीलं दुःखमिति वचनाद्दुःखधर्मेण सुखं ततोऽनन्यदिति साध्यते, अविभक्ताशेषगुणात्मकलोष्टवदिति दृष्टान्तः, प्रागुपवर्णितः । अविभक्तसुखदुःखमोहात्मकसत्त्वरजस्तमोगुणात्मको लोष्ट इति त्रित्वैक्यानतिक्रमाद्यत एवाशेषगुणस्तदात्मको लोष्टः चलाप्रकाशकत्वात् दुःखादनन्यदिति स एव लोष्टो दृष्टान्तो भावितः सुखाद्यात्मकत्वात्, एवं तावत् परधर्मेण । 15

एवञ्च स्थिते सुखं दुःखादनन्यल्लघुत्वात्, एवमप्रवृत्तिशीलत्वात् प्रकाशकत्वादेतानि च चत्वारि साधनानि, अत्र द्विकसंयोगेनापि त्रीणि, एवं मोहादपि, परधर्मेण सुखस्य दुःखधर्माभ्यां प्रत्येकं द्वे समुदायेनैकमिति त्रीणि, प्रवृत्तिशीलत्वादित्यपि तत्संयोगेनेतराभ्यामपि सप्तसाधनानि, एवं मोहादपि, एवं सुखं दुःखादनन्यत् गुरुत्वादप्रकाशकत्वात्तत्संयोगाच्च । एवं मोहादपि द्वाभ्यामप्यनन्यत् सुखं तेभ्य एव हेतुभ्य इति एत एव सर्वे हेतवः स्वपरधर्माः । प्रसा- 20 दादयश्चेतरेतरसंयोगेन चाभ्यूह्याः, अन्येऽप्यचेतनत्वादिसमासदण्डकमध्ये यावच्छरीराद्यापत्तित्वाप्रतीतिधर्मैस्सामान्यभूतैर्विशेषितैश्च यावत्किञ्चिदिहास्ति सर्वं तदनन्यत्वे त्रिलक्षणतां प्रतिपद्यते [illegible] कुतः सङ्कलना? भावितत्रैगुण्यैकात्मकलोष्टादिवस्तुन्यायव्यापित्वात् ।

सुखादीनां दुःखाद्यनन्यत्वमित्थं साधितमेव, पुनरपि किमर्थं तदेवोच्यत इत्यत्राह—सुखादावपि चेति स्वोक्तदार्ढ्याय त्वदुक्ताः स्वपरधर्माः सर्वे एवानन्यत्वसाधका भवन्तीति प्रकाश्यत इति भावः । अपिशब्दार्थमाह—न सत्त्वादिष्वेवेति, न केवलानां 25 सत्त्वादीनामनन्यत्वसाधन एव ते हेतव इति भावः । त्वया परिहारपक्षे कृतेऽपि सोऽकिञ्चित्कर इत्याशयेनाह—तत्रापि चेति । परधर्मेणापीति त्वदभ्युपगमेन दुःखादेर्लघुत्वादि परधर्मः, सुखं लघ्वप्रवृत्तिशीलं प्रकाशकं दृष्टमित्युक्तेः । अपिशब्दार्थमाह—न केवलमिति । चलत्वमप्रकाशकत्वं च दुःखधर्मः । तदेव समुच्चित्य सुखेऽनन्यत्वसाधने हेतूक्रियते चलाप्रकाशकत्वादिति । अविभक्तेति, अविभक्ता अपृथक्सिद्धतत्त्वा येऽशेषा गुणाः सुखदुःखमोहास्तदात्मको यो लोष्टः तद्वदित्यर्थः । साधितञ्च सुखदुःखमोहानामैक्यमपृथग्भूतसमवस्थानस्वरूपमेदात्मकत्वादितिहेतुनेत्याशयेनाह—प्रागुपवर्णित इति । अथ 30 सुखादीनां परस्परमनन्यत्वसाधनहेतूनां सङ्कलनाशक्यतामभिधातुं स्वपरधर्मेण परोक्तलक्षणाश्रयेण सङ्कलयति—एवञ्च स्थित

१ सि. क. लघ्वादयोऽन्यत्वहे० इत्यधिकं दृश्यते । २ सि० क० विपरिहार० । ३ सि. क. ऽपि च न य० । ४ सि. क. पक्षोकृतात्वे० ।

(एवञ्चेति) एवञ्च स्थिते-स्वधर्मेणापि लोष्टाद्यर्थानां दुःखाद्येकात्मकत्व स्थितेऽनन्यत्वे लघुत्वा-
दिहेतवोऽपि साधका इति तद्दर्शयति-सुखं दुःखादनन्यल्लघुत्वात्, लोष्टादिवदिति वर्त्तते, एवमप्रवृत्ति-
शीलत्वात् प्रकाशकत्वादेतानि च चत्वारि साधनानि- प्रत्येकं त्रीणि समुदितान्येकमिति, अत्र द्विकसं-
योगेनापि त्रीणि-लघ्वप्रवृत्तिशीलत्वात् लघुप्रकाशात्मकत्वात्, अप्रवृत्तिप्रकाशात्मकत्वादिति । एवं
5 मोहादपीति-मोहात् सुखमनन्यदित्यत्रापि त एव हेतवस्तावन्तः, परधर्मेण सुखस्य दुःखधर्माभ्यां
प्रत्येकं द्वे समुदायेनैकमिति त्रीणि चलत्वादप्रकाशकत्वात् चलाप्रकाशकत्वादिति, प्रवृत्तिशीलत्वादित्यपि
तत्संयोगेनेतराभ्यामपि सप्तसाधनानि, एवं मोहादपीति मोहादनन्यत्, चलत्वादिभ्यस्तेभ्यः, एवं
सुखं दुःखादनन्यत्, गुरुत्वादप्रकाशकत्वात्तत्संयोगाच्चेति, एवं मोहादपीति, तेभ्य एव मोहधर्मेभ्य-
स्त्रिभ्यो मोहादप्यनन्यत् सुखमिति, द्वाभ्यामप्यनन्यत्-सहिताभ्यामपि दुःखमोहाभ्यामनन्यत् सुखं
10 लघुत्वादित्यादिभ्यस्तेभ्य एव हेतुभ्यो द्वित्रिचतुरादिसंयोगेन प्रत्येकञ्चानुगन्तव्यमिति, अत आह-एत
एव सर्व इति, अनया दिशाऽभ्यूह्याः, न केवलमेत एव लघुत्वादयः चलत्वादयो गुरुत्वादयो वा
स्वपरधर्महेतवः, किं तर्हि ? स्वपरधर्माः प्रसादादयश्च प्रसादलाघवादयः शोषतापभेदादयः, वरण-
सदनापध्वंसनादयश्च, इतरेतरेत्यादि, द्वित्रिचतुरादिसंयोगेन चेति सुखस्य दुःखान्मोहाद्द्वाभ्याञ्चानन्यतया
तिस्रः, एवं दुःखस्य तिस्रः, मोहस्य तिस्रः, त्रयाणां परस्परतोऽनन्यता एकैवेति दश प्रतिज्ञाः, एतासु
15 सुखधर्मा लघ्वादयो दुःखधर्माश्चलादयः मोहधर्मौ गुर्वप्रकाशौ प्रत्येकं द्विकादिसंयोगेन सप्तत्यधिकं
शतं साधनानाम्, लाघवगौरवे त्वपनीय प्रसादादिशोषादिवरणादीनाञ्च हेत्वग्रं पञ्चषष्टिसहस्राणि
पञ्चशतानि च षट्त्रिंशानि, किञ्चान्यत्, न केवलमेत एव हेतवोऽन्येऽप्यचेतनत्वेत्यादिसमासदण्डकमध्ये
यावच्छरीराद्यापत्तित्वादि प्रकृतिधर्मैः सामान्यभूतैर्[3]विशेषितैश्चापुरुषत्वे सति सत्त्वात् प्रमेयत्वात्

इति । स्वधर्मेण सुखं दुःखान्यत्वसाधने हेतून् गणयति-स्वधर्मेणापीति । सुखं लघ्वप्रवृत्तिशीलं प्रकाशकं दृष्टमिति
20 वचनाच्चत्वारो हेतव इत्याह-सुखमिति, दुःखादनन्यत्वे साध्ये प्रत्येकं त्रीणि त्रिकसंयोगेनैकं द्विकसंयोगेन त्रीणीति सप्त साध-
नानीति भावः । एवं मोहादनन्यत्वे साध्ये त एव तावन्तो हेतव इत्याह-एवं मोहादपीति । दुःखं चलमप्रकाशकं प्रवृत्ति-
शीलं दृष्टमिति दुःखधर्मेण सुखस्य दुःखादनन्यत्वे साध्ये सप्त हेतवः मोहादनन्यत्वे च साध्ये त एव तावन्त इत्याह-परधर्मे-
णेति । मोहो गुरुरप्रकाशको दृष्ट इति वचनात् मोहधर्मेण सुखस्य मोहादनन्यत्वे साध्ये त्रयो हेतव इत्याह-एवं मोहादपीति ।
प्रोक्त एव सर्वे हेतवो दुःखमोहाभ्यामनन्यत्वे साध्ये प्रयोज्या इत्याह-द्वाभ्यामपीति । एवं प्रसादलाघवाभिष्वङ्गोद्धर्षप्रीतयः
25 सुखस्य कार्यम् शोषतापभेदस्तम्भोद्वेगापद्वेगा दुःखस्य वरणसदनापध्वंसनबैभत्स्यदैन्यगौरवाणि मोहस्येति वचनेन प्रसादादयोऽपि
सुखस्य दुःखाद्यनन्यत्वे साध्ये हेतवो भवन्तीत्याह-किं तर्हीति । सत्त्वस्य स्वधर्माः प्रसादादयः परधर्माः शोषादयो वरणाद-
यश्चेति बोध्यम् । अथ प्रतिज्ञाभेदान् प्रदर्श्य हेतुसंख्यां सामान्यत आह-द्वित्रीति । अनन्यतया-अनन्यत्वसाध्येनेत्यर्थः ।
त्रयाणामिति सुखदुःखमोहानां परस्परतोऽनन्यत्वसाधने एका प्रतिज्ञा, त्रयोऽप्यनन्य इत्येवंरूपेत्यर्थः । साधनानि गणयति-
एतास्विति प्रोक्तप्रतिज्ञास्वित्यर्थः । लाघवगौरवे त्विति, लघुत्वगुरुत्वयोः सुखधर्मे मोहधर्मे चोक्तत्वादिति भावः, इतोऽ-
30 न्यान्यपि बहूनि साधनानि सम्भवन्तीत्याह-किञ्चान्यदिति । नन्वेवं सुखदुःखमोहानामनन्यत्वसाधने सुखाद्यन्यतमस्यैव
परमार्थतो वस्तुत्वापत्त्या सुखमिति दुःखमिति मोह इति वचनमपि न घटते, त्वया पृथगुच्चारणाच्चानन्यत्वसाधनं स्ववचनवि-
रुद्धम्, लोकेन तेषां भिन्नस्वरूपेणानुभवात् लोकविरोधः, शरीरे विकारविशेषमुपलभ्यायं सुखी अयं दुःखी अयं मुग्ध इत्येवं

---

१ सि. क. °भ्यामिति । २ सि. क. स्थूल° । ३ सि. क. °भूतैरवि° ।

सर्वगतत्वादनेकत्वादित्यादि वा यावत्किञ्चिदिहास्ति सर्वं तदनन्यत्वे त्रिलक्षणतां प्रतिपद्यते धर्मजातमित्यतः कुतः सङ्कलना ? न शक्यमेव संकलयितुम्, प्रत्येकद्वित्रिचतुरादिसंयोगधर्मानन्त्यादिति स्वपक्षसाधनहेतुसौलभ्यं दर्शयति भावितत्रैगुण्यैकात्मकलोष्टादिवस्तुन्यायव्यापित्वादिति ।

इतर आह—

**नन्वेवं स्ववचनविरोधादिदोषा अनन्यत्वप्रतिज्ञाया इत्ययुक्तम्, तवात्मन एवोपालम्भात् ।** 5

**नन्वेवं स्ववचनविरोधादीति,** सुखं दुःखादनन्यदिति पक्षे सुखदुःखयोः प्रतिपुरुषं स्वानुभवेन पृथक्त्वसिद्धेः शरीरविकारादिभिरनुमेयत्वाच्च लोकप्रसिद्धेरभ्युपगतत्वाच्च त्वयापि स्ववचनेन च सुखं दुःखमिति पृथगुच्चारणात् स्ववचनाभ्युपगमलोकप्रसिद्धिप्रत्यक्षानुमानविरोधदोषा अनन्यत्वप्रतिज्ञाया इति एतच्चायुक्तम्, तवात्मन एवोपालम्भात्, यस्मादेवं पुनः स्वसिद्धान्त एव स्ववचनादिविरोध 10 उन्नीयते त्वयाऽऽत्मन एव, न ममोद्दिश्य आत्मनोऽपरिहारेण वचनवक्रतयोच्यते ।

कुत इति चेदुच्यते—

**प्रधानमेकं सुखदुःखमोहात्मकत्वादभिन्नगुणात्मकं साम्येन चावस्थितमिति तथा परस्परमुपकुर्वन्ति सत्त्वादयः शब्दादिभावेन च व्यवतिष्ठन्ते प्रत्येकं सुखाद्यात्मनेति सुखादित्र्यात्मकत्वं घटादावेकस्मिन्नेव चेति त्वयैवाभ्युपगतत्वात् कस्य स्ववचनविरोधादिदोषाः ? इति** 15 **स्वस्थेन चेतसा चिन्त्यताम् ।**

**प्रधानेत्यादि** यावदभ्युपगमात्, प्रधानमेकं सुखदुःखमोहात्मकत्वादभिन्नगुणात्मकं साम्येन चावस्थितमिति कस्यायं स्ववचनविरोधः, तथा परस्परमुपकुर्वन्ति सत्त्वादयः शब्दादिभावेन च व्यवतिष्ठन्ते प्रत्येकं सुखाद्यात्मनेति सुखादित्र्यात्मकत्वं घटादावेकस्मिन्नेव चेति त्वयैवाभ्युपगतत्वात्, अन्यत्वैकत्वोक्तेश्चेति कस्य स्ववचनविरोधादिदोषा इति स्वस्थेन चेतसा चिन्त्यताम्, मम तु त्वद्दोषो- 20 द्भावनपरप्रयासत्वाददोषः, एवमस्मद्दोषोत्कीर्तनद्वारेण स्वदोषोत्कीर्तनमेवैतद्भवत इति ।

पार्थक्येनानुमानादनुमानविरोधश्चेत्याशङ्कते-**नन्वेवमिति** । एवं वदतस्तवैवायं दोषो न ममेत्याशयेनोत्तरयति-**तवात्मन एवेति** । विरोधमेवोद्भावयति-**प्रधानमेकमिति,** सुखादिधर्मकसत्त्वादित्रयात्मकमेकं प्रधानं धर्मधर्मिणोस्तादात्म्यात्, तादात्म्यञ्च भेदसहिष्णुर्भेदोऽतस्त्र्यात्मकमेकमन्यूनाधिकभावेनावस्थितमभ्युपगम्यते, न्यूनाधिकभावदशायां प्राधान्यमेको गुणोऽन्यतरमपेक्ष्य जनयति, यथागुणप्रधानभावं सुखदुःखमोहधर्मकशब्दाद्यात्मना परिणमन्ति सत्त्वादयः, सत्त्वादेश्च 25 प्रतिक्षणपरिणामस्वभावतया घट एक एव कञ्चन सुखाकरोति तं प्रति तस्य सुखरूपसमुद्भवात्, कञ्चन दुःखाकरोति तं प्रति तस्य दुःखरूपसमुद्भवात्, कञ्चन मोहयति तम्प्रति तस्य मोहरूपसमुद्भवादित्येकस्य सुखदुःखमोहात्मकत्वं वदतस्तवैव स्ववचनाभ्युपगमलोकप्रसिद्धिप्रत्यक्षानुमानविरोधदोषाः, त्रिगुणमेकमिति विरोधादिति भावः । मम च प्रयासः केवलं तव मते दोषमुद्भावयितुम्, न तु यथा मया प्रतिपादितं तथा मम मतम्, अतो न मे विरोधादिदोषाः, एवञ्च मयि दोषमुद्भावयता त्वया तव मत एवोद्भावित इत्याह-**मम त्विति** । एवं हेतुदोषा अप्यप्रसिद्धसाध्यसमन्वयव्यावृत्तित्व- 30

१ सि. क. प्रत्यक्षं । २ सि. क. स्वानुभवने । ३ क. दुःख० । ४ सि. क. स्ववचनादिति । ५ सि. क. नघटा० ।
६ सि. क. नान्यत्वेकत्वेति ।

किञ्चान्यत्—

**हेतुविरुद्धतोक्तावप्येवमेवेति स्फुटमेव सुखं सदा व्यक्तशब्दस्पर्शरूपरसगन्धं चेत्यभ्युपगम्यताम्, किमन्यापादनेन परदोषाभिधानेन वा तत्त्ववादिनैव भवितव्यमृजुना, तेभ्य एव लघ्वादिभ्यो हेतुभ्यो वियदादिवदिति, स्वमतेन तु व्यक्तशब्दस्पर्शरूपरसगन्धवत्प्रति-
5 ज्ञायां वियद्वर्जान्युदाहरणानि ।**

( **हेत्विति** ) हेतुविरुद्धतोक्तावप्येवमेव—यथोक्तमेते हेतवः सप्रपञ्चाः सविशेषणनिर्विशेषणाः प्रतिज्ञादोषोद्भावनद्वारेण विरुद्धाव्यभिचार्युद्भावनद्वारेण चास्मत्पक्षस्यानन्यत्वस्य साधका इति, तथा हेतुविरुद्धतापि अन्यत्वपक्षे, प्राग्व्याख्यात[म]मन्वयव्यावृत्त्यभावविधिनाऽन्यत्वपक्ष एव दर्शनादिति तदुपसंहारार्थमाह इति स्फुटमेवेत्यादि यावद्वियदादिवदिति, इतिशब्द[स्यो]पसंहारार्थत्वात्, यदभि-
10 लिख्यते त्वया प्रधानं नाम गुणसाम्यावस्थानं किञ्चिदस्तीति तन्नाभिलिखनीयम्, सुखं सदा व्यक्तशब्दस्पर्शरूपरसगन्धं चेत्यभ्युपगम्यतां स्फुटमेव किमन्यापादनेन परदोषाभिधानेन वा, तत्त्ववादिनैव भवितव्यमृजुना, तेभ्य एव लघ्वादिभ्यो हेतुभ्यो वियदादिवत्—यथाऽऽकाशवाय्वग्न्यम्बुभुवः पञ्च महाभूतानि व्यक्तशब्दादिभावानि तथा सुखमिति लघ्वादिभ्य एव हेतुभ्यः पृथिव्यामिव शब्दादयः पञ्चापि, शेषेष्वपि च चतुर्षु भूतेषु व्यक्ता इत्यभ्युपगम्यताम्, परिणतिविशेषात्तु हिङ्गुगन्धवत् सूपे
15 लवणरसवच्चाप्सु कस्यचिदेव प्रत्यक्षता शब्दादेर्न शेषस्य, अभिभवादिभिरिति परमतेनैवैतदुक्तम्, स्वमतेन तु व्यक्तशब्दस्पर्शरूपरसगन्धवत्प्रतिज्ञायां वियद्वर्जान्युदाहरणानीति 'स्पर्शरसगन्धवर्णवन्तः पुद्गला इति' [तत्त्वा अ. ५, सू०, २३] सामान्येन 'अणवः स्कन्धाश्च' [तत्त्वा. अ. ५. सू. २५] मूर्त्तत्वात् पृथिवीवत् वाय्वादयोऽपि, शब्दबन्धसूक्ष्मस्थौल्यादयस्तु स्कन्धेष्वेव पुद्गलेष्विति, आकाश-

विरुद्धाव्यभिचारित्वविरुद्धत्वादयोऽन्यत्वपक्ष एव न त्वनन्यत्वपक्ष इत्याह—**हेत्विति** । एतदेव विशदयति—**यथोक्तमिति,**
20 **सविशेषणेति** अनात्मत्वे सतीत्यादिविशेषणेन सहिता रहिता वा हेतवः प्रतिज्ञाश्च मोहादुरित्यादिरीत्या(?) गुर्वादिविशेषणेन सहिता रहिता वेति भावः, हेतुविरुद्धत्वोक्तिरप्येवमेव अन्यत्वपक्ष एव नानन्यत्वपक्ष इत्याह **तथा हेत्विति** । सांख्यं शिक्षयति—**यद भिलिख्यत इति,** सुखं सदा व्यक्तशब्दस्पर्शरूपरसगन्धं लघुत्वादिभ्यः, वियदादिवदिति सदा स्फुटमनुभूयमानशब्दादिगुणं सुखाद्येवाभ्युपगम्यताम्, किमव्यक्तप्रकृतिमहदादिपरिकल्पनाक्लेशेन, तत्र दृष्टान्तेष्वपि गगनादिपञ्चभूतेषु वैषम्यमन्तरेण सर्वत्र शब्दादिपञ्चगुणा व्यक्ता एवाभ्युपगम्यताम्, यथा च परिणामवैचित्र्येण पञ्चगुणसद्भावेऽपि हिङ्गुगन्धस्यैव सूपे लवणस्यैव
25 रसस्य जले प्रत्यक्षत्वमपरेषामभिभवात् तथाऽऽकाशे शब्दस्यैव वायौ शब्दस्पर्शयोस्तेजसि शब्दस्पर्शरूपाणां जले शब्दस्पर्शरूपरसानां पृथिव्यां च शब्दस्पर्शरूपरसगन्धानां प्रत्यक्षत्वमिति भावः । वर्णनमिदं परमतानुसारेणोक्तं स्याद्वादसिद्धान्तानुसारेण तु शब्दस्य पौद्गलिकत्वात् स्पर्शादीनाञ्च पुद्गलगुणत्वाद्वियद्वर्जानामेवोदाहरणत्वं विज्ञेयमित्याह—**स्वमतेन त्विति** । स्पर्शादयः पुद्गलानामेव धर्मा भिन्नाभिन्नात्मानः, ते पुद्गलाः समासतो द्विविधाः, अणवः स्कन्धाश्चेति, तत्राणवोऽस्मदिन्द्रियविषयातीताः सूक्ष्माः परस्परेणासंयुक्ताः, स्थूला ग्रहणादानादिव्यापारसमर्थाः प्रायः स्कन्धाः संघाता इति पुद्गलभेदा-
30 उक्ताः । अथ यथा पृथिवी मूर्त्तत्वात् स्पर्शादिचतुर्गुणा तथा वायुतेजोजलान्यपीत्याह—**मूर्त्तत्वादिति,** रूपं हि मूर्तिः मूर्त्याश्रयाश्च द्रव्यादयः, नहि स्पर्शादयो मूर्तिं व्यभिचरन्ति, अविनाभावित्वात्, यत्र हि रूपपरिणामः तत्रावश्यंतया स्पर्शरसगन्धा भवन्ति ततश्च परमाणावपि ते विद्यन्ते, न च परमाणवश्चतुर्गुणत्रिगुणद्विगुणैकगुणजातिभेदाः, सर्वेषामेकरूपत्वात् किन्तु किञ्चिद्-

१ सि. क. °नन्यत्व० । २ सि. क. शब्दसम्बद्ध० ।

स्यावगाहोपकारस्या नैते धर्माः सन्तीति वादपरमेश्वरमतम्, अतो वियद्वर्जान्युदाहरणानीत्युक्तम्, इत्थं सुखदुःखमोहानां जात्यन्तरत्वासिद्धिरापादिता ।

तस्मादेव वीतावीतानां सुखादित्रैगुण्यकारणपूर्वकत्वानुमानानामनुमानाभासतेत्यत आह—

सत्त्वादित्रयविषयसमन्वयपरिमाणोपकारशक्तिप्रवृत्तिवैश्वरूप्यगत्याख्यानां प्रकृतिसाधकानां वीतानां व्यवहारसम्प्रसिद्धेः प्रत्ययसर्गास्तित्वैकत्वार्थवत्त्वपारार्थ्यान्यत्वाकर्तृत्वपुरुषबहुत्वयोगवियोगस्थितिविषयस्य शास्त्रस्यैतेषामेव पञ्चानां वीतानां हेतुत्वावधारणार्थानाञ्चावीतानामतथार्थत्वात्तद्विषयः प्रत्ययोऽप्यज्ञानमेव, तदज्ञानत्वात् ज्ञानप्राप्यपुरुषार्थाभावोऽपीति किमवशिष्यते वार्षगणे तन्त्रे सुभाषिताभिमतमतस्त्याज्योऽयमनुपपन्नपरोक्षार्थवादः । * * * * * 5

[सत्त्वादि] त्रयविषयसमन्वयेत्यादि यावद्वीतानां व्यवहारसम्प्रसिद्धेरित्यादि यावच्च हेतुत्वावधारणार्थानाञ्चावीतानां अतथार्थत्वादिति, तेषां वीतावीतानां लक्षणं तद्यथा—प्रागनुमानं सप्रभेदं 10 व्याख्याय तेषां यदेतत् सामान्यतो दृष्टं शेषवत् एष हेतुरतीन्द्रियाणां भावानां समधिगमे, तस्य प्रयोगोपचारविशेषाद्वैविध्यम्, वीतः[ अवीत ]इति सामान्येन, विशेषेण च स्वरूपेण वीतसिद्धिः, यदा हेतुः परपक्षमक्षेप्य यथार्थेन स्वरूपेण कार्यसिद्धावपदिश्यते तदा वीताख्यो भवति, परिशेषादवीतसिद्धिः, यथा नेदमतोऽन्यथा सम्भवति, अस्ति चेदम्, तस्मात्

व्यमुत्कर्षं गुणपरिणाममासाद्य परान् त्यजति, यथा लवणहिङ्गुनी संहतिपरिणामसामर्थ्यवती लोचनस्पर्शनादिग्रहणगोचरतामुपेत्य 15 जले विलीने सती रसनघ्राणग्रहणयोग्यतामागच्छतः । न च वर्णस्पर्शौ तत्र सम्भवन्तावपि पुनर्ग्रहीतुं शक्यौ परिणामविशेषवत्त्वात्, एवं पार्थिवाप्यतैजसवायवीयाणवोऽप्येकजातीयाः कदाचित् कञ्चित् परिणामं बिभ्रतो न सर्वेन्द्रियग्राह्या भवन्ति, अतो रूपरसगन्धस्पर्शा एव विशिष्टपरिणामानुगृहीताः सन्तो मूर्तिव्यपदेशभाजो भवन्तीति भावः । तत्र स्पर्शादयः परमाणुषु स्कन्धेषु च प्रादुर्भवन्ति, शब्दादयस्तु अनन्ताणुकस्कन्धविषया एवेत्याह—शब्दबन्धेति, शब्दो ध्वनिरर्थप्रत्यायको नियतसङ्केतवर्णादिविभागवान्, बन्धः परस्पराश्लेषलक्षणः प्रयोगविस्रसामिश्रभेदः, सौक्ष्म्यं स्थौल्यञ्च प्रत्येकमापेक्षिकान्त्यभेदम्, आदिग्रहणात् 20 संस्थानभेदतमश्छायातपोद्योतानां ग्रहणम्, एते सर्वे शब्दादयः स्पर्शादयश्च पुद्गलेष्वेव भवन्तीति वियद्वर्जनं कृतमिति भावः । इत्थमेव प्रकृतिसाधकानुमानानामप्याभासतामाचष्टे—सत्त्वादित्रयविषयेति सुखदुःखमोहविषयेत्यर्थः 'भेदानां परिमाणात् समन्वयाच्छक्तितः प्रवृत्तेश्च । कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य' ॥ इति कारिकोक्ताः पञ्च हेतवोऽत्र ग्राह्याः । प्रागिति प्रमाणत्रैविध्यव्यावर्णनावसरेऽनुमानस्य पूर्ववत् शेषवत् सामान्यतो दृष्टमिति त्रीन् भेदानाख्याय तत्र सामान्यतो दृष्टं शेषवच्चातीन्द्रियाणां प्रकृतिपुरुषादीनां प्रतिपत्तौ समर्थं भवतीति प्रोक्तमिति भावः । तत्रादावनुमानं द्विविधं वीतमवीतञ्च, वीतं पूर्ववत्, सामान्यतो 25 दृष्टञ्चेति, अवीतन्तु शेषवदित्याशयेनाह—तस्येति अनुमानस्येत्यर्थः, उक्तञ्च तल्लक्षणम् 'यदा हेतुः स्वरूपेण साध्यसिद्धौ प्रयुज्यते । स वीतोऽर्थान्तराक्षेपादितरः परिशेषितः ॥' इति, तत्र साधनस्य स्वरूपं द्विविधम्, साधारणमसाधारणञ्चेति, इन्द्रियग्रहणयोग्यार्थाविनाभाविरूपं साधारणं यत्सामान्यस्वरूपमुच्यते, इदमेव च पूर्ववदिति, असाधारणन्तु इन्द्रियग्रहणायोग्यार्थाविनाभावविशिष्टं स्वरूपमिदमेव च सामान्यतो दृष्टमुच्यत इत्याशयेनाह—सामान्येनेति । वीतलक्षणमेव तावदाह—यदा हेतुरिति, परपक्षस्य क्षेपमपोहमकृत्वेत्यर्थः, अन्वयव्याप्तिप्राधान्येन प्रवर्तमानं विधायकं वीतमिति भावः । यदा तु स्वसाध्यादर्थान्तरभूतानां प्रासङ्गिका- 30 नामपोहं विधाय परिशेषतः साध्यसिद्धावपदिश्यते तदाऽवीतं व्यतिरेकव्याप्तिप्राधान्येन प्रवर्तमानं भवतीत्याह—परिशेषादिति, प्रासङ्गिकानामपोहं दर्शयति—यथेति, इदं जगत्सर्जनं परमाणुपुरुषेश्वरकर्मदैवकालस्वभावयदृच्छाभ्यो न सम्भवति, अस्ति चेयं

१ सि. क. °नुमानस्यानु° । २ सि. प्रयोगोपचारविशेषा° । ३ सि. क. विशेषेण तु स्वरूपाद्वीत° । ४ सि. क. °मप्यपेक्ष्यास्येनैव रूपेण । ५ सि. क. °षादावीत° ।

परिशेषतो हेतुत एवायमित्यवधार्य कार्यसिद्धौ व्यपदिश्यते तदा वीताख्या भवतीति प्रयोगलक्षणम्, स्वलक्षणन्त्वस्य परपक्षप्रतिषेधेन स्वपक्षपरिग्रहक्रिया अवीत इति, वीतस्य बाऽभावः, पञ्च प्रदेशाः प्रतिज्ञा हेतुर्दृष्टान्त उपसंहारो निगमनमिति, तत्र साध्यावधारणं प्रतिज्ञा, साधनसमासवचनं हेतुः, तन्निदर्शनं दृष्टान्तः, साध्यदृष्टान्तयोरेकक्रिया उपसंहारः, प्रतिज्ञाभ्यासो निगमनमिति ।
5 पुरस्ताद्वीतस्य प्रयोगं न्याय्यं मन्यन्ते पश्चादवीतस्येति, प्रयोगश्च—अस्ति प्रधानं भेदानामन्वयदर्शनात्, आध्यात्मिकानां भेदानां कार्यकारणात्मकानामेकजातिसमन्वयो दृष्ट इति, चन्दनशकलादिदृष्टान्तं वक्ष्यति, सामान्यपूर्वकाणाञ्च भेदानामित्यादि एकजातिसमन्वयप्रदर्शनार्थम्, सुखादित्रिगुणैकजातिसमन्वितानां कार्यात्मकानां तत्सन्निवेशविशेषत्वं पक्षीकृत्यैककार्यत्वादिति हेतुमाह तथोत्तरत्रोपसंहारान्, पञ्चानां पञ्चानामित्यादिवीप्सया व्याप्तिं दर्शयति, तथा

10 जगदुत्पत्तिः, तस्मात् परिशेषतः प्रधानाख्यात् कारणादेव सम्भवतीति साध्यसिद्धौ हेतुरपदिश्यते तदाऽवीताख्यो भवतीति भावः । वक्ता स्वयं प्रतिपन्नमर्थं परं प्रतिपिपादयिषितुं वाक्यभावमुपनीयते तदन्तरेण परं बोधयितुमशक्यत्वात् तस्य च पुनरवयवाः पञ्चेत्याह-**पञ्चप्रदेशा इति** पञ्चावयवा इत्यर्थः, यद्विषयौ जिज्ञासासंशयौ तस्य साध्यस्य तद्व्युदासेन निर्णयवचनं प्रतिज्ञेति तल्लक्षणमाह-**साध्येति । साधनेति** । साध्यतेऽनेनेति साधनं लिङ्गम्, समासः संक्षेपः, साधनस्य समासवचनं साधनसमासवचनम्, साधनग्रहणं तदाभासव्यावर्त्तनाय, तदाभासो हि संशयविपर्ययहेतुत्वान्न साधनम्, समासग्रहणमवयवा-
15 न्तरावकाशदानार्थम्, यश्च हेतोः साध्यसहभावित्वप्रकाशकः प्रपञ्चः सोऽवयवान्तराणीति भावः । दृष्टान्तमाह-**तदिति**, तस्य साधनस्य साध्येन सहभावित्वनिदर्शनं दृष्टान्तः, यथा संहत्यकारिणां परार्थत्वं दृष्टम्, शयनासनशरणानामिवेति भावः । उपसंहारलक्षणमाह-**साध्येति**, साध्यस्य चक्षुरादिपारार्थ्यलक्षणस्य दृष्टान्तस्य च शयनासनादेर्धर्मस्य सामान्यात् यथेदं तथेदमित्येकक्रियोपसंहार इत्यर्थः । निगमनलक्षणमाह-**प्रतिज्ञेति**, हेतुदृष्टान्तोपसंहारापेक्षया पुनः प्रतिज्ञाया अभ्यासो निगमनम्, यथा तस्मादस्ति पुरुष इति, एषामवयवानां विशिष्टार्थसमुदायो वाक्यमिति भावः । वीतावीतयोः प्रयोगनियममाह-**पुरस्तादिति**,
20 अवीतस्य हि लक्षणं परिशेषतः साध्यानुग्रहः, तत्र प्रथमं वीतेन प्रधाने धर्मिणि स्वरूपेणानधिगते परपक्षप्रतिषेधमात्रेणावीतेनोपसंहारे क्रियमाणे परिशेषलक्षणं बाध्यते, आदौ हि प्रतिषेधमात्रं क्रियते, तेन यथा हेतुविरोधात् परमाण्वादिभ्यो न व्यक्तमुत्पद्यते, तथा हेत्वभावात् प्रधानादपि नोत्पद्यत इति कल्पयितुं शक्यत्वादवीतात् तद्व्यवच्छेदोऽपि गम्येत, ततश्च कः परिशेषः स्यात्, वीतेन स्वरूपेण परिच्छिन्ने तु धर्मिणि यथावदुपसंहारोऽवकल्पते, न चेत् परमाण्वादिभ्य उत्पद्यते तर्हि परिशेषतः प्रधानादेव व्यक्तमुत्पद्यत इति तस्मात् प्राग् वीतप्रयोगो न्याय्य इति भावः । अथ पञ्चवीतान् वीतप्रयोगान् दर्शयितुमादौ भेदानां समन्व-
25 यादिति प्रथमवीतं दर्शयति-**अस्तीति** भेदानां विशेषाणां समन्वयात्, समन्वयोऽनुगमः, एकजात्यनुगमादित्यर्थः, ये एकजात्यनुगता भेदास्तेषां तथाभूतं कारणं दृष्टम्, यथा शकलकपालामत्रभूषणप्रभृतीनां चन्दनादिः, तथैषामपि बाह्याध्यात्मिकानां कार्यकारणात्मकानां सुखदुःखमोहानुगतत्वादेकेन तथाविधेन भवितव्यम्, य एषां समुदायस्तत्प्रधानमिति भावः, एतदेवानुमानं स्पष्टयति-**आध्यात्मिकानामिति** । एतस्यैव व्याख्यानं साध्यपक्षहेतूपदर्शनमुखेन दर्शयति-**सामान्यपूर्वकाणाञ्चेति**, मूलकारकालीनसांख्यग्रन्थानामिदानीमनुपलम्भादत्र मूलं नोद्ध्रियते, सामान्यपूर्वकाणाञ्च भेदानामाध्यात्मिकानां कार्यात्मकानां पञ्चानां
30 शब्दस्पर्शरूपरसगन्धानां सुखदुःखमोहसन्निवेशविशेषत्वम्, पञ्चानां पञ्चानामेककार्यत्वात्, सुखानां शब्दस्पर्शरूपरसगन्धानां प्रसादलाघवाभिष्वङ्गोद्धर्षप्रीतयः कार्यम्, दुःखानां शोषतापभेदस्तम्भोद्वेगापद्वेगाः, मूढानां वरणसदनाध्वंसनबैभत्स्यदैन्यगौरवाणीति, तथा कारणात्मकाः श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तपादपायूपस्थमनांस्येकादश, पञ्चभूतान्याकाशादीनि च, बाह्याश्च तिर्यग्योनमानुषदेवाः ब्रह्मादिस्तम्बपर्यन्ताः सर्व एवैते सुखदुःखमोहकार्यत्वात्तत्समन्वयाच्च तत्पूर्वकाः चन्दनशकला, दिवदित्याह-**सामान्यपूर्वकाणाञ्च भेदानामिति** । सामान्यपूर्वका बाह्याध्यात्मिका भेदाः सुखादिगुणत्रयसन्निवेशविशेषाः-एककार्यत्वादित्यनुमानं दर्शयति-**तत्सन्निवेशेति** । यत्प्रसादादिकार्यं दृष्टं तत्सुखादित्रयैकजातिसमन्वितमिति व्याप्तिं दर्शयति-

१ सि. क. दृष्टान्तः । २ सि. क. °समन्वयं कार्यकात्मकानां ।

कारणात्मकानां नेयम्, प्रसादादिशोषादिवरणादि का[र्या]त्मकं दृष्टं गुणत्रयैकजातिसमन्वितम्, तैरारब्धान्याकाशादीनि भूतानि एकोत्तरगुणवृद्ध्या तत्कार्यत्वात्तत्समन्वयाच्च तत्पूर्वकाणि, तथा बा[illegible]नामपि तैर्यग्योनमानुषदैवानां तत्पूर्वकतेति, तस्मात् त्रैगुण्यसमन्वितत्वाद्भेदाः त्रिगुणपूर्वकाः चन्दनशकलादिवत्, शकलकपालामत्रभूषणप्रभृतीनामिति व्याप्तिदर्शनार्थं साधनस्य दृष्टान्तबाहुल्यम्। इतश्चास्ति प्रधानम्, भेदानां परिमाणात्, आध्यात्मिकानां कार्यकारणात्मकानां परिमाणं दृष्टम्, 5 सामान्यतः त्रयः सुखदुःखमोहाः कार्यम्, कारणं विशेषतः षोडश भावाः—पञ्च भूतानि, एकादशेन्द्रियाणि चेत्यादि रूपपरिमाणम्, प्रवृत्तिपरिमाणं द्विधा—हिताहितप्राप्तिपरिहारार्थत्वात्, धर्मादिप्रयोजनत्वाच्च-तुर्धा, धृतिसदाचारकामसुखकुतूहलविनिवृत्तिप्रयोजनं पञ्चधा प्राणादिलक्षणा चेति प्रवृत्तिपरिमाणम्, फलपरिमाणं द्विविधं दृष्टमदृष्टञ्च, अदृष्टं कार्यकरणसामर्थ्यं प्रभुशक्तिः, साधनसान्निध्यं विभुशक्तिश्चेति द्विधा, एवमशक्तिस्तद्विपरीता द्विधैव, शक्तिर्देवगन्धर्वयक्षरक्षःपितृपिशाचाः, अशक्तिर्मानुषपशुमृग- 10 पक्षिसरीसृपस्थावराणि, शक्तेः प्रकृतिः शरीरं निमित्तमशक्तेर्जराय्वण्डजोद्भित्संशोकाः मातापितृभ्यां जरायुः, अण्डञ्च तत् षाट्कौशिकम्, पृथिव्या उद्भिज्जं पृथिव्युदकसंशोकासंशोकजम्, इत्यदृष्टफल-

**प्रसादादीति। एकोत्तरेति,** आकाशस्य शब्दः, वायोः शब्दस्पर्शौ, तेजसः शब्दस्पर्शरूपाणि, जलस्य शब्दस्पर्शरूपरसाः पृथिव्याः शब्दस्पर्शरूपरसगन्धा इति भावः। समन्वयात् तत्पूर्वकत्वं साधयति—**तस्मादिति।** प्रधानसाधकं द्वितीयं वीत-माह—**इतश्चेति,** भेदानां कार्यकारणात्मकानामियत्तालक्षणं परिमाणं दर्शयति—**आध्यात्मिकानामिति,** रूपपरिमाणं 15 प्रवृत्तिपरिमाणं फलपरिमाणञ्चेति परिमाणं त्रिविधं तत्रादौ रूपपरिमाणमाह—**सामान्यत इति।** प्रवृत्तिपरिमाणं द्विधा चतुर्धा पञ्चधा च दर्शयति—**प्रवृत्तीति,** हितप्राप्त्यर्थाऽहितनिवृत्त्यर्था चेति द्विधा, धर्मार्थकाममोक्षार्था चेति चतुर्धा, धृत्यादिभेदेन पञ्चधा, तत्र व्यवसायादप्रच्यवनं धृतिः सर्वविषयिणी रजस्तमोबहुला च, फलमनभिसन्धाय शास्त्रोक्तेषु कार्येषु अवश्यकर्त-व्यताबीजभावः श्रद्धापरपर्यायः सदाचारः आश्रमविषयः सत्त्वरजोबहुलः। दृष्टानुश्रविकफलाभिलाषद्वारको बुद्धेराभोगः कामसुखा दृष्टानुश्रविकविषयिणी सत्त्वतमोबहुला च, वेत्तुमिच्छा विविदिषा तत्पर्याया कुतूहला व्यक्तविषयिणी रजोबहुला च। वेद- 20 नेच्छानिवृत्तिरविविदिषापर्याया निवृत्तिरव्यक्तविषयिणी तमोबहुला चेति। प्राणापानसमानोदानव्यानाः पञ्च प्रवृत्तयः, इमाः पञ्च प्राणादिवृत्तयः धृत्यादिपञ्चकर्मयोनिभ्यः प्रवर्त्तन्त इति भावः। फलपरिमाणमाह—**फलेति** ब्रह्मादिस्तम्बपर्यन्ते संसारे कर्मप्रति-लम्भोऽदृष्टम्, तत्र प्रकृतेः प्रभुशक्तिः कार्यकरणसामर्थ्यम्, तया हि पुरुषस्यार्थः कर्त्तव्य इति महदादिसूक्ष्मपर्यन्तं लिङ्गमुत्पाद्य धर्मादिनाऽष्टविधेनाधिवासयति, तदधिवासितं सूक्ष्मशरीरं लिङ्गाख्यं तेषु तेषु निकायेषु यथायथं संसरति, सेयं प्रधानस्य प्रभुशक्तिः। साधनसान्निध्यं निमित्तनैमित्तिकप्रसक्तिर्विभुशक्तिः, धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि निमित्तरूपाः, 25 महदादिकरणाश्रिताः, तत्कार्यं स्थूलं शरीरं नैमित्तिकम्, निमित्तरूपा अपि प्राकृतिकाः वैकृतिकाश्चेति द्विविधाः, प्राकृतिका धर्म-ज्ञानवैराग्यैश्वर्यरूपा उत्तमसत्त्वस्यादिविदुषः कपिलस्येव, वैकृतिकाः प्रयत्नसाध्याश्चत्वारः प्राचेतसादीनामपरेषामधर्मादिसहिता अष्टावपि। तत्र वैकृतिकधर्मादिनिमित्तेन नैमित्तिकं दर्शयति—**शक्तिरिति** शक्तिर्धर्मादि, धर्मादिनिमित्तेन देवादियोनिप्राप्तिरिति भावः, तद्विपरीतेनाशक्तिरूपेणाधर्मादिना पश्वादियोनिप्राप्तिः, मिश्रेण मनुष्यलोके स्थितिरिति भावः, तत्र धर्मादयश्चतस्रः शक्तयो महदाद्यन्तःकरणं संसरन्ति संसारे, कार्यञ्च शरीरं जराय्वादिकं तदाश्रित्य शक्तयोऽशक्तयश्च वर्त्तन्त इत्याशयेनाह—**शक्तेरिति।** 30 **षाट्कौशिकमिति** षड्भिः कोशैर्निर्वृत्तं षाट्कौशिकं लोमरुधिरमांसास्थिस्नायुशुक्रलक्षणाः कोशाः, तत्र लोमरुधिरमांसानां मातृतः सम्भवः, अस्थिस्नायुशुक्राणां पितृतः, तच्च जरायुजमण्डजञ्चेति, उद्भिज्जपदेन स्वेदजस्यापि ग्रहणम्, स्वेदजोद्भिज्जयोः भूम्युदकोद्भेदप्रभवत्वादित्याशयेनाह—**पृथिव्या इति,** संशोकः स्वेदः। सिद्धितुष्ट्यशक्तिविपर्ययलक्षणं दृष्टफलपरिमाणमाह—

१ सि. क. तिर्यग्योनि०।

परिमाणम् । दृष्टफलपरिमाणं करणानि प्रवर्त्तमानानि[1] क्रियन्ते सामान्यतश्चतुर्णां शक्त्यादीनामन्यतमं प्रत्ययं कुर्वन्ति, शक्तिरुक्ता, सिद्धिरूहेन साधनं तारं शब्देन सुतारमध्ययनेन तारतारं वातादीन्याध्यात्मिकानि अभ्यतीत्य क्रियया तारसुतारतारतारं तदन्यतमेन प्रमोदं मानुषाद्याधिभौतिकात्ययेन तत्रयान्यतमेनैव प्रमुदितं शीताद्याधिदैविकात्ययेन तत्रयान्यतमेनैव मोदमानं यदा कुशलसंस्पृष्टव्यपाश्रयात् संदेहातिक्रमात्तदन्यतमेन रम्यकं दौर्भाग्यातिक्रमेण सदाप्रमुदितमित्यष्टौ सिद्धयः । सन्निहितविषयसंतोषाच्चिकीर्षितादर्थादूनस्य निवृत्तिरेवैका तुष्टिरुपायनवत्वान्नवविधा तुष्टिः प्रकृत्युपादानकालभाग्यकारणपूर्वकपुरुषान्यत्वापरिज्ञानान्माध्यस्थ्यलाभः, अम्भःसलिलौघवृष्ट्याख्याः शरीरशरीरिविशेषणोपायाश्चतस्रस्तुष्टयः, बाह्याश्च विषयनिर्वेदजाः पञ्चविषयेषु अर्जनरक्षणक्षयसङ्गहिंसादोष-

---

**दृष्टफलेति,** करणानि त्रयोदश, दश बाह्येन्द्रियाणि द्वाराणि, द्वारवती च समनोऽहङ्कारा बुद्धिः, एतानि प्रवर्त्तमानानि शक्तितुष्टिसिद्धिविपर्ययाणामन्यतमं विदधति, एषः सामान्यतः प्रत्ययसर्ग उच्यते, विशेषतस्तु पञ्चाशत् प्रकारः प्रत्ययसर्गः । प्रभुशक्त्यादिः पूर्वमुक्त इत्याह-**शक्तिरुक्तेति** । **ऊहेनेति,** यस्य जन्मान्तरसंस्कृतधियो बन्धमोक्षकारणमुत्प्रेक्षमाणस्य प्रधानपुरुषान्तरज्ञानमुत्पद्यते तस्य सिद्धिरूहहेतुका प्रथमा तारमित्युच्यत इति भावः । **शब्देन सुतारमिति,** इतरेणाधीयमानं सांख्यपाठं निशम्य यदुदेति तत्त्वज्ञानं सा सिद्धिः शब्दहेतुका द्वितीया सुतारमित्युच्यत इति भावः । **अध्ययनेनेति** यस्य शिष्याचार्यसम्बन्धेन सांख्यशास्त्रं शब्दतोऽर्थतश्चाधीत्य ज्ञानमुत्पद्यते तस्याध्ययनहेतुका तृतीया सिद्धिः तारतारमित्युच्यत इति भावः । आध्यात्मिकाधिभौतिकाधिदैविकानि त्रीणि दुःखानि तद्विघातरूपास्तिस्रः सिद्धीराह-**वातादीनीति,** आध्यात्मिकानां वातादीनां सिद्धिविरोधिनामायुर्वेदक्रियानुष्ठानेन विघातं कृत्वा पूर्वोदितानां तारसुतारतारताराणामन्यतमेन साधयति सा चतुर्थी सिद्धिः प्रमोदमित्यभिधीयत इति भावः । **मानुषादीति** मानुषादिनिमित्तकानामाधिभौतिकानां सिद्धिविरोधिनां सामदानादिना यतिधर्मानुगुणेन वोपायेन निरोधं कृत्वा ताराद्यन्यतमेन यत् प्रसाधनं सा पञ्चमी सिद्धिः प्रमुदितमित्युच्यत इति भावः । **शीतादीति,** शीतादीनामाधिदैविकानां दुःखानां स्वधर्मानुरोधेन शममानीय पूर्वेषां तारादीनामन्यतमेन यत्साधनं स षष्ठी सिद्धिर्मोदमानमित्यभिधीयत इति भावः । **यदेति** यदा तु कुशलं संस्पृष्टं सन्मित्रमाश्रित्य संशयानिवृत्तिं लभते न तु गुरोः सकाशादवधारयति सा सिद्धिः सप्तमी रम्यकमित्युच्यत इति भावः । **दौर्भाग्येति** यदा च दौर्भाग्यं दानेनातीत्य सवासनसंशयविपर्ययानां परिहारेण ताराद्यन्यतमेनैव विवेकसाक्षात्कारं साधयति सेयमष्टमी सिद्धिः सदाप्रमुदितमित्युच्यत इत्यष्टौ सिद्धयो वेदितव्या इति भावः । अथ सन्निहितेष्वेव विषयेष्वेव सन्तोषात् चिकीर्षितानुष्ठानादूनेनैव निवृत्तिः सन्तोषः तुष्टिः, सैकभेदापि विषयभेदान्नवधेत्याह-**सन्निहितेति** । **प्रकृतीति,** प्रकृतितुष्टिरुपादानतुष्टिः कालतुष्टिर्भाग्यतुष्टिश्चेत्याध्यात्मिक्यश्चतस्रः, तत्र कश्चित् प्रकृतिमात्रं जानाति तद्विकाराणामपारत्वात् तन्मात्रसन्तुष्टः प्रव्रजितो न जानाति तस्याः सगुणागुणत्वनित्यानित्यत्वचेतनाचेतनत्वसर्वासर्वगतत्वादिधर्मान्, न चैतावता मोक्षस्तस्मादेषा प्रकृतितुष्टिरम्भ इत्यभिधीयते, प्रधानममितं भातीत्यम्भ इति व्युत्पत्तेः । प्रव्रज्यालिङ्गं दण्डाद्युपादानम्, तस्मादेव मुक्तिः प्राप्तव्या न प्रकृतिज्ञानमात्रेण, तस्मात्तत्रैव परितुष्टः प्रव्रजितस्तस्योपादानरूपा द्वितीया तुष्टिः सलिलनाम्नी कथ्यते । न केवलं प्रकृत्युपादानमात्रान्मोक्षः किन्तु कालपरिपाकमपेक्ष्य सिद्धिर्भवतीति तुष्टः कालापेक्षी स्थितस्तस्य तृतीया तुष्टिरोघाभिधानोच्यते । या तु न प्रकृतेर्नोपादानान्न वा कालात्, किन्तु भाग्यादेवेति भाग्यमेव हेतुर्नान्यदिति तुष्टिस्सा भाग्याख्या चतुर्थी वृष्टिरित्युच्यते । यद्वा प्रकृतिमात्रादेव भावोत्पत्तिरिति, उपादानाद्भावोत्पत्तिर्न प्रधानमात्रादिति, कालाद्भावोत्पत्तिर्न केवलं प्रकृतित उपादानतो वेति, भाग्यादेव भावोत्पत्तिर्न केवलं प्रकृत्युपादानकालेभ्य इति चतस्रः प्रकृत्यादितुष्टयो विज्ञेयाः । बाह्याः पञ्च तुष्टीराह-**बाह्याश्चेति** अभ्युत्पन्नात्मविचारस्य योगिनो विषयदोषदर्शनमात्रात् सङ्गदोषान्निवृत्तिर्बाह्या तुष्टिः, शब्दादिविषयाणामर्जने रक्षणे विनाशे उपभोगे हिंसायाश्च दोषदर्शनात्तेभ्यो निवृत्तिर्यथाक्रमं तारसुतारसुनेत्रसुमरीचौत्तमाम्भसिक्याः पञ्च तुष्टयः पूर्वतुष्टिभिः सह

1 सि. क. °निक्रियन्ते सा० ।

दर्शनात् तारसुतारसुनेत्रसुमरीचौत्तमाम्भसिकाख्या इति नव तुष्टयः। एकादशेन्द्रियवधा बधिरा-घ्रात्रन्धमूकजडोन्मादकुणिकुष्ठिक्लीबोदावर्त्तपङ्गुताः, पूर्वोक्तेभ्यः सिद्धयुपायेभ्यो विपरीतनामानोऽष्टाव-सिद्धयः, तथा तुष्टिविपरीतनामानोऽनाम्भसिक्यादयो नवातुष्टय इत्यशक्तिरष्टाविंशतिविधा, अश्रेयःप्रवृत्त्यहङ्कारममकारक्रोधमरणविषादाः तमोमोहमहामोहतामिस्रान्धतामिस्राः पञ्च विपर्यया इत्येतद्दृष्टफलपरिमाणम्। इत्थं रूपप्रवृत्तिफलपरिमाणमाध्यात्मिकानां कार्यकारणात्मकानां भेदानां 5 निर्दिष्टम्। अनेन तैर्यग्योनमानुषदैवेष्वपि सप्रपञ्चेषु ज्ञेयम्, तस्मात् परिमितत्वात् संसर्गपूर्वका भेदा व्रीहाविव संसृष्टा मूलाङ्कुरपर्णनालकाण्डप्रसवतुषशूकपुष्पक्षीरतन्दुलकणभावाः, यथा वा शुक्रशोणित-संसृष्टाः कललार्बुदमांसपेशिशरीरव्यूढबाल्यकौमारयौवनस्थाविरा भावा इति। इतश्चास्ति प्रधानं भेदानां कार्यकारणभावात्, शब्दात्मना व्यवतिष्ठमानानि सत्त्वरजस्तमांसि प्रकाशप्रवृत्तिनियमैः पर-स्परार्थं कुर्वन्ति, सत्त्वं शब्दात्मना व्यवतिष्ठमानं तद्भावायेतरयोः प्रवृत्तिं ख्यापयति, एवं रजः प्रव- 10 र्त्तयति तमो नियमयति, शब्दाद्यारब्धानि पृथिव्यादीन्यारम्भक्रमेण वृत्तिसङ्ग्रहपक्तिव्यूहावकाशदानैः पर-स्परार्थं कुर्वन्ति, इन्द्रियाण्यन्योन्यविषयग्रहणसाहायकेनोपकुर्वन्ति, यच्च यस्य विषयं प्रख्यापयति अर्जयति पाति संस्कारमभ्युपधत्ते वा तत्कारणमितरत् कार्यम्, स्थानसाधनात्मप्रख्यात्युपभोगैः करणार्थं करोति कार्यम्, करणं वृद्धिक्षतभग्नसंरोहणसंशोकपरिपालनैः कार्यार्थं करोति, एवं बाह्याध्यात्मिकानां दैवमानुष-

नव तुष्टय इति भावः। करणवैकल्यप्रयुक्ता अशक्तीराह-**एकादशेति** इन्द्रियाणां प्रकर्षोपचयेन तमसा ग्रहणरूपस्य 15 सत्त्वस्याभिभवात् स्वस्वविषयाप्रवृत्तय इन्द्रियाणामेकादशत्वात्तद्वधा अप्येकादश, तत्र बाधिर्याघ्रातृत्वान्धत्वानि श्रोत्रघ्राणचक्षुषाम्, मूकता वाचो जडता रसस्योन्मादो मनसः कुणिता पाणेः कुष्ठिता त्वचः क्लीबतोपस्थस्योदावर्तः पायोः पङ्गुता पादयोरिति। एवं सिद्धिविपरीतास्तारादिविपरीता असिद्धयः अतारादिनामानोऽष्टविधाः, तुष्टय आम्भसिक्यादयस्तद्विपरीता अनाम्भसिक्यादयो नवविधा इत्याह-**पूर्वोक्तेभ्य इति,** विपर्ययभेदानाह-**अश्रेयःप्रवृत्तीति** अश्रेयसि प्रवृत्तस्य भौतिकेष्वाकारेषु शिरःपाण्यादि-ष्वात्माभिमानः प्रथमो विपर्ययस्तम इत्युच्यते, करणवृत्तिष्वहं श्रोताऽहं द्रष्टेत्येवमहङ्कारो मोहो द्वितीयः, बाह्येषु विषयेषु पित्रादि- 20 गृहादिषु ममेदमित्यभिनिवेशो महामोहस्तृतीयः, दशविधे कुटुम्बे विषयेषु वा प्रतिहन्यमानस्य यः क्रोधोऽभिनिवेश आवेशः स तामिस्रश्चतुर्थः, मरणविषादोऽन्धतामिस्रः पञ्चम इति सामान्येन पञ्च विपर्ययभेदा इति दृष्टफलपरिमाणमुक्तम्। तदेवं रूपप्रवृत्ति-फलपरिमाणमुक्तमित्याह-**इत्थमिति,** अथ भूतसर्गमाह-**अनेनेति** पशुपक्षिमृगसरीसृपस्थावरान्ताः पञ्च तैर्यग्योनाः, मानुष्य एकविधः सर्गः, ब्राह्मप्राजापत्यैन्द्रपैत्रगान्धर्वयाक्षराक्षसपैशाचभेदेनाष्टविधो देवसर्ग इति समासतः परिमाणं ज्ञेयमिति भावः। अथ द्वितीयं वीतमुपसंहरति-**तस्मादिति** व्रीहाविवेति बाह्योदाहरणम्, शुक्रशोणितेति आध्यात्मिकोदाहरणम्, कललबुद्बुदपेशीमांसगर्भ- 25 कुमारयौवनस्थाविराख्यान्यष्टविधशरीराणि यथा सूक्ष्मशरीरमाश्रित्य सिद्ध्यन्ति तथेमे भेदा इति भावः। तृतीयं वीतानुमानमाह-**इतश्चास्तीति** कारणञ्च कार्यञ्च कार्यकारणं, अल्पस्वरस्य पूर्वनिपातः तद्भावात्, अत्र कार्यकारणभावपदेन निर्वर्त्यनिर्वर्तकभावो नाभिप्रेतः, किन्तूपकार्योपकारकभावः, यदुपकरोति तत्कारणम्, यदुपक्रियते तत्कार्यम्, तत्र सत्त्वरजस्तमोगुणानां प्रकाशप्रवृत्तिनियमैर्धर्मैरितरेतरापकारेण प्रवृत्तिं दर्शयति-**शब्दात्मनेति**। एतदेव समुच्चित्योक्तं विशदयति-**सत्त्वमिति,** सत्त्वाद्यारब्धशब्दाद्यारब्धपृथिव्यादीनां परस्परोपकारमाह-**शब्दादीति,** आदिना स्पर्शरूपरसगन्धतन्मात्राणि ग्राह्याणि, यथा- 30 क्रममयं निर्देशः, तदारब्धानि पृथिव्यादीनि, अत्रादिना जलतेजोवाय्वाकाशानां ग्रहणम्, व्युत्क्रमेणायं निर्देशः, प्रजानां भूतान्त-राणाञ्च वृत्त्या पृथिव्युपकरोति, आपः सङ्ग्रहेण पिण्डीकरणेन शुद्ध्या च, तेज आहारपाचनेन वायुः सर्वपदार्थानां व्यूहनेन-अविरलीकरणेनाऽऽकाशं सर्वेषामवकाशप्रदानेनेति भावः। श्रोत्रादीन्द्रियाणामितरेतरविषयग्रहणेनोपकार इत्याह-**इन्द्रिया-णीति**। शरीर कार्यकारणयोः परस्परमुपकारमाह-**स्थानेति**। देवादीनामुपकारमाह-**दैवेति** दैवं यथाकालं शीतोष्ण-

तैर्यग्योनानां मप्रपञ्चानामन्योन्योपकारः, रक्षासंग्रहसेवनपूजनपोषणस्थितिशुश्रूषादेर्विकल्पा वर्णाश्रमादीनां योज्याः । एककर्तृका भेदाः परस्परोपकारकोपकार्यत्वात्, शयनासनादिवत्, तस्मादस्ति प्रधानम् । इतश्चास्ति [प्रधानम्,] शक्तिमदवस्थामात्रत्वात्, व्यक्तानां कार्यकारणानामधिष्ठितानाञ्च स्वकार्यसमर्थाः त्रिषु कालेषु शक्तयोऽवतिष्ठन्ते, तद्यथा—प्राक् प्रवृत्तेः शक्त्यवस्थानमनुमीयते प्रवृत्त्यु-
5 पलब्धेः, प्रवृत्तिकालेऽवस्थानम्, अपवर्गदर्शनात्, प्रवृत्त्युत्तरकालमवस्थानम्, प्रवृत्तिव्यतिरेकेणाव-स्थादर्शनात्, एवमाद्यन्तवद्व्यक्तमुपलभ्य व्यक्तशक्त्याऽवस्थाऽस्ति, अनवस्थितशक्तेराद्यवसानाभावात्, अवस्थितशक्तेरेव तद्भावात्, मृदः पिण्डादिभाववत्, तस्मात् व्यक्तशक्तिप्रवृत्त्युपलब्धेरस्ति प्रधानमिति । इतश्चास्ति प्रधानम्, वैश्वरूप्यस्याविभागप्राप्तेः, देशकालप्रमाणबलरूपप्रत्यासत्तेरवश्यम्भावोच्छेदाभ्याञ्च निवृत्तेः, जलभूम्योः पारिणामिकं रसादिवैश्वरूप्यं स्थावरेषु दृष्टम्, तथा स्थावराणां जङ्गमेषु जङ्गमानां
10 स्थावरेषु स्थावराणां स्थावरेषु जङ्गमानां जङ्गमेषु, जात्यनुच्छेदेन सर्वं सर्वात्मकम्, देशकालाकार-

वातवर्षागमैर्मानुषतैर्यग्योनानुपकरोति, मानुषं इज्यायागस्तुतिभिर्दैवं रक्षति, पोषणभैषज्यैश्च तैर्यग्योनमुपकारोतीति भावः । ब्रह्मक्षत्रविट्शूद्रभेदानां वर्णानामाश्रमाणाञ्च मानुषाणां परस्परमुपकारमाह-रक्षेति । तदेवमुपकार्योपकारकभावस्य बुद्धिकृतस्यैव दर्शनात् तद्व्यवस्थापिता कश्चित्स्यात् यतोऽय विभाग इति प्रधानसिद्धिरित्याह-एककर्तृका इति । अथ प्रवृत्तिमात्रस्य शक्तिपूर्वत्वात् व्यक्तलक्षणप्रवृत्तेरपि शक्तिपूर्वेति शक्तिमतोऽव्यक्तस्य सिद्धिरिति प्रधानसाधकं तुर्यं बीजमाह-इतश्चास्तीति । शक्तीनां
15 त्रिकालावस्थानं साधयति-तद्यथेति, नच प्रवृत्त्युपलब्धिपूर्वं नास्ति शक्तिः, तदानीं कार्याभावे तत्स्वरूपहानिप्रसङ्गादिति वाच्यम्, सत्यावरणे प्रदीपस्येव प्रतिबन्धेन कार्याभावेऽपि शक्तिस्वरूपाव्याघातात्, प्रतिबन्धापगमे प्रवृत्तिदर्शनाच्च, न च प्रवृत्तिसमकालमेव सहकारिभिः प्रधाने शक्त्युत्पत्तिरिति वाच्यम्, स्वगतशक्त्यनुगुणमेव सहकार्युपादानात् प्राक् प्रवृत्तेः शक्तिसिद्धिरिति भावः । ननु प्रवृत्तिसमकालं शक्तेर्विनाशः स्यादित्यत्राह-प्रवृत्तिकाल इति, अपवर्गदर्शनात्-कार्यनिष्पादर्शनादित्यर्थः, यदि प्रवृत्तिसमकालमेव तस्या विनाशः स्यात्, तर्हि कार्यनिष्पत्तिरेव न स्यात्, तन्निमित्तत्वात् कार्यस्येति भावः । ननु प्रवृत्त्युत्तरकाले तद्विनाशः
20 स्यादित्यत्राह-प्रवृत्त्युत्तरकालमिति, विनाशसामग्र्यभावात् क्षणिकताया अप्रामाणिकत्वात् प्रवृत्तिमन्तरेणापि शक्त्यवस्थाने बाधकाभावात् प्रवृत्त्युत्पत्तिपूर्वं तत्सद्भावाच्च प्रवृत्त्युत्तरं शक्तिविनाशः, पुनः प्रवृत्तिदर्शनाच्छक्त्यन्तरोत्पत्तौ हेत्वभावाच्चेति भावः । एवञ्च व्यक्तस्य पूर्वोत्तरकोटिदर्शनादसत्कार्यनिषेधाच्च तस्याद्यन्ते च शक्त्यात्मनाऽवस्थयाऽवस्थानमनुमीयते, शक्त्यात्मनाऽनवस्थितस्य पूर्वोत्तरावस्थाऽसम्भवादित्युपसंहरति प्रधानसाधनचतुर्थहेतुम्-एवमाद्यन्तवदिति । अथ पञ्चमं बीजमाह-इतश्चास्ति प्रधानमिति वैश्वरूप्यं नानारूपं जगदित्यर्थः, तस्याविभागः तिरोभावः, तत्प्राप्तेरित्यर्थः,
25 कार्यमात्रस्य संहारकाले क्वचिदविभागप्राप्तेरिति भावः, यद्वा वैश्वरूप्यस्य जगतः न विभागोऽस्येत्यविभागः अविभक्तः, ततः प्राप्तेः वैश्वरूप्यस्याविभक्तादुपलब्धेरित्यर्थः, वैश्वरूप्यस्याविभागकारणपूर्वकत्वादिति भावः । तत्र विश्वरूपस्य तिरोभावमाह-देशकालेति । विश्वरूपस्याविभागपूर्वकत्वमाह-जलभूम्योरिति, रसरूपस्पर्शशब्दवतो जलस्य हि गन्धरसरूपस्पर्शशब्दवत्या भूमेश्च पारिणामिकं वनस्पतिलतागुल्मादिषु मूलफलप्रसवपल्लवादिगतरसादिवैश्वरूप्यं दृष्टम्, सोऽयमनेवमात्मिका । भूमेरनीदृशस्य वा जलस्य न परिणामो भवितुमर्हति, असत्कार्यवादस्य पराकृतत्वात्, तथा स्थावराणां जङ्गमेषु मनुष्यपशुमृगा-
30 दिषु रसादिवैचित्र्यं दृष्टम्, उपभुञ्जाना हि ते फलादीनि रूपादिभेदसम्पदमासादयन्ति, एवं जङ्गमानां पारिणामिकं स्थावरेषु दृष्टम्, रुधिरावसेकात् किल दाडिमीफलानि तालफलमात्राणि भवन्तीति सर्वेषु वस्तुषु सर्वविकारजननशक्तिः सिद्ध्यति, तत्र हेतुमाह-जात्यनुच्छेदेनेति, जलत्वभूमित्वादिजातेः सर्वत्र प्रत्यभिज्ञायमानत्वेनानुच्छेदादिति भावः । ननु सर्वं सर्वात्मकञ्चेत् सर्वस्य सर्वदा सर्वथा सन्निधानात् समानकालीनानां भावानामभिव्यक्तिः प्रसज्येत, नहि सन्निहिताविकलकारणं कार्यं विलम्बितुमर्हतीत्यत्राह-देशकालेति अयोग्यदेशादप्रतिबन्धाद्भावानां नैकदाऽभिव्यक्तिः, यथा कुङ्कुमस्य पाञ्चालदेशे प्रायशो
35 निदाघे काले मृग्यां मनुष्यादेरपुण्यवतः सुखस्य नाविर्भावः, देशादेः प्रतिबन्धादिति भावः । एवञ्च विभागाः प्रतिनियता-

[illegible] न समानकालमात्माभिव्यक्तिस्तेन मन्यामहे जलभूम्योरप्येतत् पारिणामिकं रसादि- [illegible], [illegible] भूतानामन्यपरिणाम इत्येवं तदप्यन्यस्येत्यवश्यम्भाव्यविभागः, यत्र चावि- भागस्तत् प्रधानम्, वैश्व[रू]प्यस्याविभागकारणपूर्वकत्वात्, मयूरबर्हवैचित्र्यस्येव तदण्डकरसपूर्वकत्वम्, तस्मादस्ति प्रधानमित्येभिः पञ्चभिर्वीतैः सम[न्वयपरि]णामोपकारशक्तिप्रवृत्तिवैश्वरूप्यगत्याख्यैः सामान्य- संसर्गककर्तृ[illegible] विभागसंज्ञं प्रधानं सिद्धमत एवैकत्वमर्थवत्त्वं परार्थत्वं संहत्यकारिणां पारा- 5 र्थ्यात्, शयनासनादिवदतः पुरुषास्तित्वं[अकर्तृत्वं]अन्यत्वं तद्बहुत्वं पुरुषाणां प्रधानस्यापन्त- पुरुषार्थयोरुपलब्ध्यनन्तरं निवृत्तिः व्रीह्युदकगत्या रङ्गनर्तकीवद्वेति प्रधानपुरुषसंयोगविभागौ, [स्थितिः शरीरस्य च ] इत्थं इयत् परिमाणफलञ्च शास्त्रम्, तथा संव्यवहारप्रसिद्धेरित्यादि यावद्वीताना- मिति, व्याख्यातं द्रष्टव्यम् । एतेषामेव पञ्चानां वीतानां परिशुद्ध्यर्थाः पञ्चैवावीताः, एवमेभिः पञ्चभिर्वीतैः प्रधानस्य परिग्रहं कृत्वा पुनरवीतैः करिष्यामः, परपक्षप्रतिषेधेन स्वपक्षपरिग्रहक्रिया 10 अवीत इत्यपदिष्टं पुरस्तात्, तस्यास्य प्रतिपक्षाः सर्वैकान्तिनः पुरुषेश्वराणुप्रवादा विकारपुरुषा वैना- शिकाश्च तेषां वैनाशिकप्रतिषेधमग्रे वक्ष्यामः, कस्मात् ? किञ्चिद्वैनाशिका हीतर इत्यतः प्रभृत्यु- प[ल]ब्ध्या[नु]पलब्धर्नास्तीति द्वितीयस्य शिरसोऽभ्युपगतस्यासत उत्पत्त्यभावाद्व्यभिचारप्रसङ्गे गते याव-

इत्याह–तेनेति, यथा जलभूम्योरेतद्रसगन्धादिवैश्वरूप्यमविभक्तमस्ति एवं स्थावराणां जङ्गमेषु जङ्गमानां स्थावरेष्वेवमविभागो ज्ञेयः । यत्र सर्वे लोकाः प्रलयकालेऽविभागं गच्छन्ति तत्प्रधानमिति भावः । साधनमुपसंहरति–यत्र चेति । पञ्चवीतानु- 15 पसंहरति–एभिः पञ्चभिरिति, समन्वयहेतुना सामान्यलक्षणस्य परिणामहेतुना संसर्गलक्षणस्योपकारेणैककर्तृरूपस्य शक्ति- प्रवृत्त्या शा[illegible] वैश्वरूप्यगत्या चाविभागसंज्ञस्य प्रधानस्य सिद्धिरिति भावः । षष्टितन्त्रशास्त्रं षष्टिप[illegible] लोकव्यव[हा]रप्रसाधकमिति दर्शयति–अत एवेति–'अस्तित्वमेकत्वमथार्थवत्त्वं पारार्थ्यमन्यत्वमकर्तृभावः । योगो वियोगो बहवः पुमांसः स्थितिः शरीरस्य च शेषवृत्तिः' ॥ पञ्चभिर्वीतैः प्रधानस्यास्तित्वमेकत्वम्, एकं सदेव बहुपुरुषोपभोगमनुसृत्य परिणमते, अर्थवत्त्वं पुरुषस्य विषयैः संयोजनेन वियोजनेन च, पारार्थ्यमन्यार्थत्वं प्रधानस्य, लोके हि ये संघाता दृष्टास्ते 20 परार्था दृष्टाः पर्यङ्करथगृहादयः, एवं महदादीनां संघातः परार्थ एव, न स्वार्थो न परस्परार्थो वेति प्रधानगतान्येकत्वार्थ- वत्त्वपरार्थत्वानि, परत्वादेव पुरुषस्यान्यत्वं निर्गुणत्वादप्रसवधर्मित्वाच्चाकर्तृत्वं जननमरणादीनां प्रतिनियमाच्च पुरुषबहुत्वमित्य- न्यत्वाकर्तृत्वबहुत्वानि पुरुषगतानि, अस्तित्वं योगो वियोगश्चेति प्रधानपुरुषोभयमधिकृत्य । पुरुषार्था हि प्रधानस्य प्रवृत्तिः, स च पुरुषार्थो द्विविधः, शब्दाद्युपलब्धिरादिः ब्रह्मादिस्थावरान्तेषु पुरुषः शब्दादिभिर्विषयैः योजयितव्य इति, गुणपुरुषान्तरोप- लब्धिरन्तः तत्त्वाभ्यासात्सम्यग्ज्ञाने जाते पुरुषः स्वस्वरूपस्थितो भवति, प्रकृतिरपि कृतार्था निवृत्तप्रसवा भवति, यद्यपि 25 प्रकृतिपुरुषयोः सर्वगतत्वात् संयोगः सर्वदा भवत्येव तथापि निस्तुषो व्रीहिर्जलक्षेत्रादिसहितोऽपि यथा न प्ररोहति तथा प्रकृति- रपि ज्ञानबलेनाभिभूता निवृत्तप्रसवा भवति, पुरुषोऽपि रङ्गगतो ना[illegible] नर्तकीं दृष्ट्वा यथा लोके पुरुषो दृष्टेयं मया बहु- धेति तिष्ठत्यु[illegible]ति तदेवं योगो वियोगश्चोभयोः । पञ्चविंशतितत्त्वज्ञानाधिगमेऽपि पूर्वकृतयोर्धर्माधर्मयोर्बलव- त्त्वात्कुलालचक्रभ्रमणवत् झटिति न विमुच्यते किन्तु शेषवृत्तिर्धृतशरीरोऽवतिष्ठते, शरीरे च विनष्टे कैवल्यमाप्नोतीति दशैतेऽर्थाः पूर्वोक्ताः पञ्चाशत् प्रत्ययसर्गा इति मिलिताः षष्टिपदार्थास्तत्प्रतिपादकं शास्त्रम्, एभिरेव पदार्थैः लोकव्यव[हा]रप्रसिद्धेरिति 30 भावः । एवं पञ्च वीता व्याख्याता इत्युपसंहरति–तथा संव्यवहारेति, षष्टिपदार्थप्रख्यापकशास्त्रादेव व्यवहारप्रसिद्धेरिति भावः । अत्र कियद्दूरं मूलं न चाद्य सम्प्राप्तम्, अथावीतस्य परपक्षप्रतिषेधमूलस्य वीतानुग्राहकस्य प्रसङ्गं दर्शयति–एषा- मेवेति प्रधानवादस्य प्रतिपक्षानाह–तस्यास्येति, अग्र इति, प्रथममित्यर्थः, अपरेषामपि किञ्चिद्वैनाशिकत्वसाधर्म्यादि- त्याह–किञ्चिदिति । [द्वि]तीयस्य शिरस इति, किं कार्यमादौ सत् ? उतासत् ? आहोस्वित् सदसदिति

१ सि. क. °लमन्येम [illegible]ज्यक° ।

दनागतेऽपि काले न भविष्यतीति । किञ्चान्यत् यदि व्यक्तस्यासत उत्पत्तिर्भवत्यथार्यैमिस्तृणपां-
सुका [illegible] कामाणि[illegible] वर्णानि क्रियेरन्, कस्मात् ? भावक्रिया [illegible] रुकार्यमभावक्रिया लघ्विति, न त्वेवं
क्रियते तस्माद् [illegible] कमित्यादि यावदुक्तोत्तरत्वादसम्यग्विधिः । किञ्चान्यत् यदि व्य[illegible]ासत उत्पत्ति-
र्योन्यभावाद् [illegible]ः, प्रधानाभावात्, सामान्यमात्रमिदं व्यक्तं निर्विशेषमित्येतत् प्रसज्येत,
5 कस्मात् ? सामान्य[illegible]र्वकत्वाद्विशेषाणाम्, सामान्यपूर्वका हि लोके विशेषा दृष्टाः, तद्यथा क्षीरपूर्वका
[ द्रप्स ] दधिमस्तुनवनीतघृतारिष्टकिलाटकूर्चिका भावाः, न त्वसति भावः कश्चिदस्ति यत्पूर्वका
व्यक्तविशेषाः स्युः, तस्मात् सामान्यमात्रमिदं व्यक्तं निर्विशेषमित्येतत् [ प्राप्तम् ] न त्विदं
तादृक्, तस्मान्नेदं [illegible] सत उत्पद्यते, न चेदं सत उत्पद्यते, पारिशेष्यात् प्रधानादेवेदं व्यक्त[illegible]त्प-
द्यत इत्येतद्व्यक्तम्, तस्मादस्ति [illegible] एषोऽन्वयवीतस्यावीतः । किञ्चान्यदित्यादि तदेव [illegible]-
10 दनवस्थाप्रसङ्गः परिमाणस्य संसर्गपूर्वकत्वाविनाभावादित्यर्थः, प्रधानाभावान्निष्परिमाणमिदं व्यक्तम-
व्यवस्थितमि[illegible]तत्प्रसज्येत, कस्मात् ? सतां ह्यर्थानां लोके परिमाणं दृष्टं तुलामान[illegible]ङ्ख्यायामरज्ज्वात्माप-
चयैः, नन्वसति भावः कश्चिदस्ति यः प्रतिपद्यमानः परिमाणोऽवतिष्ठेत, तस्मान्निःपरिमाण[illegible]-
स्थितमित्येतत् प्रसज्येत, न त्विदं तादृक् तस्मान्नेदं [illegible] कमसत उत्पद्यते, न चेदं सत उत्पद्यते परिशेषतः
प्रधानादेवेदम्, तस्मादस्ति तत् । किञ्चान्यत् एकजातिसमन्वयाभावप्रसङ्ग इति, तदेव स्थालीघटेत्यादि,
15 दृष्टान्तविशेषः, सामान्यविशेषैस्थापनार्थमुच्यते, अत्र परो ब्रूयात् विशेषमात्रस्य [illegible] सत उत्पत्तिः,
तद्यथा—आकारो गौरवमित्यादि धर्मभेदादिति, तत्रोत्तरं ताद्रूप्येणोपकाराददोष इति, धर्मभेदपरिणत्या

---

विकल्पत्रये [illegible]तीयविकल्पस्येत्यर्थः, अस्य पक्षस्य वैनाशिकैरभ्युपगमादिति भावः । असत्कार्यवादे दोषान् वक्ति—किञ्चान्य-
दिति । सर्वस्मात् सर्वसम्भवः प्रसज्यत इति भावः । भावा[illegible]वोत्पादापेक्षयाऽभावाद्भावोत्पादे लाघवं हेतुमाह—भावक्रि-
येति, दोषान्तरमाह—किञ्चान्य[illegible]ति, हेतुमाह—योन्यभावादिति, असतो व्यक्तोत्पत्तौ व्यक्तस्य उपादानाभावाद्[illegible]
20 न विशेषरूपः, सामान्यस्य हि विशेषपरिग्रहः, असतस्तु निरात्मकत्वा[illegible]शेषपरिग्रहो दुरुपपादः, उक्तञ्च 'निरात्मकत्वादसतां सर्वे-
षामविशिष्टता' । इति, विशेषप्रयोजकरूपाभावादेकत्वमेव भवेदिति भावः । विशेषाणां हि सामान्यपूर्वकत्वमनुभवसि[illegible],
तथाविधञ्च सामान्यमनिच्छतः क्षणिकं वि[illegible]नमात्रमिच्छता वैना[illegible] क्षणे एकस्यैव धर्मस्य भावात् विशेषशून्यं सामा-
न्यमात्रमिदं व्यक्तरूपं जगद्भवेत्न चैवमस्तीति दर्शयति—सामान्यपूर्वका इति । लोके यद्वस्तु दृश्यते तत् परिच्छिन्नपरिमाणं
दृष्टम्, यथा सपरिमाणान्मृत्पिण्डात् परिच्छिन्नपरिमाणो घटो भवति, यद्ययं घटो निष्कारणः स्यात् तदा घटः परिच्छिन्नपरि-
25 माणो न स्यात्, दृश्यते च व्यक्तस्य परिमाणं [illegible], तस्मादस्ति प्रधानमस्य योनिरित्याशयेनाह—किञ्चान्य[illegible]त्य।
अनवस्थाप्रसङ्ग इति एतावद्भिरेवोत्पत्तव्यं नान्यैरिति न ह्यस्ति व्यक्तस्य नियमो योन्यभावात् तस्मात् परिमाणानवस्था[illegible]
भावः । एकजात्यनुगता ये भेदास्तेषामेकमेव तथाभूतं कारणं दृष्टम्, यथा [illegible]पिण्ड[illegible]नां मृज्जात्यनुगतत्वान्मृदेकं कारण-
मिति, अस्यैवावीतमाह [illegible]कजातीति । एकजात्यनुगत्यभावे पर्यायल[illegible]णधर्ममात्रप्रसङ्गेन वैनाशिकमतमेव प्रसज्यत इति
सामान्यविशेषात्मकत्वस्थापनाऽऽवश्यकीति तदेवाचष्टे—सामान्यविशेषेति । अस्मदादीन्द्रियैः स्थूलानामेव शब्दस्पर्श[illegible]-
30 गन्धानां ग्रहणात्तद्व्यतिरिक्तस्य सूक्ष्मस्याविशेषस्यानुपलब्धेरभावादेव शब्दादीनामुत्पाद इत्याशङ्कते—अत्र पर इति, पर
बौद्धादिः, आकार इति, 'आकारो गौरवं रौक्ष्यं वरणं स्थैर्यमेव च । स्थितिभेदः क्षमा कृष्णच्छाया सर्वोपभोग्यता ॥ इति वै
पार्थिवा धर्मा[illegible]परे । जला[illegible]पवनाकाशव्यापका[illegible] बोधत ॥ स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्दवं गौरवञ्च

---

१ सि. क. °भावा° । २ सि. क. °[illegible]° ।

[illegible]यान्तनयनादि[illegible] रभेदप्रदर्शनात् [illegible]कारणभा वीतस्य वीतत्वलेशं न स्पृशतीति तस्मादेव
ग्रन्था [illegible]गन्तव्यं यावत् पुरस्ताद्व्याख्यातं यथा तैर्यग्योनमानुषदैवानि परस्परार्थं कुर्वीरन्निति, तत्र यदुक्तं
सूतानां तत्स[illegible]हानाच्च व्यावृत्तेर्विशेषमात्रमिदं व्यक्तं, तस्मादसत उत्पद्यत इति, एतदयुक्तमिति, पुनरस-
त्समन्वयात्[illegible] निरस्य प्रपञ्चेन यावत्तस्मादुक्तमत[illegible]न्यभावाद्[illegible] इति, एषोऽन्वयवीतस्यावीतप्रसङ्गो
व्याख्यातः, आचार्येणापि तथैव व्यवस्था तुल्यजाति[illegible]मन्वयावित्युक्ता, तेनैव क्रमेण आविग्रहणा- 5
[illegible]शेषा अप्यवीताः सूचिताः, तत्र कार्यकारणवीतस्यावीतस्तावत्—किञ्चान्यत् कार्यकारणयोश्च व्यक्त-
मिदं द्विधा कृत्वा कार्यराशिं कारणराशिं च, किञ्च नोसत उत्पत्तिः, सम्भवतीति वाक्यशेषः,
[illegible]थागपद्यप्र[illegible]त्त्यसम्भवात्, परस्परार्थात्मलाभत्वात् कार्यकारणयोरन्योन्यानिरूप्यात्मलाभाभावोऽतः
क्रमेण प्रवृत्त्यभावः चक्राक्षवत्, असत्त्वादसत्त्वादेनः तथा युगपदपि, अभूतविनष्टयोरनपेक्षत्वा[illegible]
[illegible]वत्, क्रियाऽऽदिमध्यावसानेष्वसत्त्वादेव प्रवृत्त्यसम्भवः, यदारभ्यते तत् क्रियते निष्ठाञ्च 10

---

[illegible]त्। शैत्यं रक्षा पवित्रत्वं सन्धानं चौदका गुणाः ॥ ऊर्ध्वगं पावकं दग्धृ पाचकं लघु भास्वरम्। प्रध्वंस्योजस्वि च ज्योतिः
पूर्वेभ्यो भिन्नलक्षणम् ॥ तिर्यग्यानं पवित्रत्वमाक्षेपो नोदनं बलम्। चलमच्छायता रौक्ष्यं वायोर्धर्माः पृथग्विधाः ॥ सर्वतो
गतिरव्यूहोऽविष्कम्भश्चेति ते त्रयः। आकाशधर्मा व्याख्याताः पूर्वपूर्वविलक्षणाः ॥ संहतानान्तु यत्कार्यं सामान्यं ते गवादयः।
[illegible]रेतरधर्मेभ्यो विशेषात्रात्र संशयः ॥' इति कारिकोक्ता आकारादयो धर्माः। एते धर्माः पृथिव्यादेर्लोकस्य [illegible]
पकारकाः, तत्राकाराद्यथा गवादीनां घटादीनाञ्चाऽऽकारनिर्वृत्तिः, गौरवादेषामवस्थानम्, रौक्ष्यादपां सङ्ग्रहो वैशद्यञ्च भूतानाम्, 15
[illegible]रणादनभिप्रेतानां छादनम्, स्थैर्याद् धृतिः प्रजानां भूतान्तराणाञ्च, स्थितेर्मात्रादिसन्निधानाद्यनुग्रहः, भेदाद्धटादिनिष्पत्तिः,
व्यूहश्चावयवानाम्, क्षान्तेरुपभोगयोग्यता [illegible]च्छायत्वाद्रात्रिसम्पत्, छायाकार्यप्रसिद्धिश्च, सर्वोपभोग्यत्वात् सर्वभूतानु-
ग्रहः। एवं स्नेहादिभिरुपकारोऽभ्यूह्यः। एवं शब्दस्पर्शादिविशिष्टाः पृथिव्यादय आकारादिधर्मैस्सह स्थूलशब्देन परिभाषितो
न केवलं धर्ममात्रमित्याशयेनोत्तरयति—ताद्रूप्येणेति, [illegible]णेत्यर्थः, एकजातिसमन्वितानामेषां पृथिव्यादीनां
[illegible]दिधर्ममात्रेण सजातीयान्तराद्व्यावृत्तिः, तावतैव लोकव्यवहारनयनादिति। उपकार्योपकारकभावरूपकार्यकारणवीतस्यायं 20
परस्परोपकारो नोदाहरणं सम्भवति, अपि तु पूर्वव्यावर्णितोदाहरणमेव युक्तमित्याह—धर्मभेदेति, परिणामो हि त्रिविधः,
धर्मिणो धर्मैः परिणामः, धर्माणां लक्षणैः परिणामः, लक्षणानामप्यवस्थाभिः, यथा पृथिव्यादीनां नीलपीतादिर्गवादिर्घटादिर्वा
धर्मपरिणामः, नीलादयश्चातीतादिलक्षणैः परिणमन्ते, लक्षणानाञ्च नवत्वपुराणत्वाद्यवस्थापरिणामः, त्रैविध्यञ्च धर्मधर्मिणोर्भेद-
मवलम्ब्य, अभेदाश्रयेण त्वेक एव परिणाम इति बोध्यम्। आचार्येणेति, पञ्चशिखाचार्येणेत्यर्थः, एकजातिसमन्वयमात्रस्यैव
हेतुत्वेनोक्तेः, कार्यकारणवीतस्यावीतमाह—तत्र कार्यकारणेति, इदं कार्यमिदं कारणमिति विभागः बुद्ध्या द्विधाऽवस्थापनम्, 25
तथावास्थितमाव[illegible], यथा व्यक्ते शयनासनरथशरणादिः, तत्रासत्कार्यपक्षेऽनुपपत्तिमवीते शङ्कते—किञ्च नासत इति,
तत्र हेतुमाह—क्रमेति योऽयं परस्परोपकारोऽभ्युपगम्यते स किं क्रमेण? किं वा युगपत्?, तत्र न तावत् कार्यकारणयोः
क्रमेण परस्परोपकारः, इदम्प्रथमतया कस्यापि प्रथमं प्रवृत्त्यसम्भवात्, अन्यतरकृतोपकाराभावात्, उपकारमन्तरेणाप्येकस्य
[illegible]परस्यापि तथा प्रवृत्तिप्रसङ्गेन कार्यकारणयोर्दृष्टा परस्परापेक्षात्मलाभता नोपपद्येत, दृश्यते च सा, तदिदमुक्तम्—परस्प-
रेति। भावानां क्षणिकत्वादेव च युगपदपि प्रवृत्त्यसम्भव इत्याह—तथा [illegible]गपदपीति। क्रियेति भावानां क्षणिकत्वा- 30
देव क्रियाया आरम्भप्रवृत्तिनिष्ठा नैकत्र सम्भवन्ति, दृष्टञ्च लोके यदेवारभ्यते तदेव क्रियते तदेव निष्ठां गच्छतीत्येकस्यैव,
यदि तु कार्यं सत्र भवेत्तर्हि कारणकार्ययोः परस्परापेक्षासम्भवेनारम्भप्रवृत्तिनिष्ठा न स्युः, दृष्टाश्चताः, अतः कार्यकारणभाव-
[illegible]रसद्वादभङ्गाच्च प्रधानसिद्धिरिति भावः। कार्येण सम्बद्धं कारणं कार्यस्य जनकं भवति, सम्बन्धश्च कार्यस्यासतो न सम्भवति,
कारणैरसम्बद्धत्वे कार्यस्य सर्वं कार्यजातं सर्वस्माद्भवेदविशेषात्, न च शक्तिप्रतिनियमात् कार्यप्रतिनियमः, सापि हि शक्तिः
[illegible]सम्बन्धे न कारणे भवेत्, कार्यस्य चासत्त्वे कथं सम्बन्धः, तस्मात् सदेव कार्यम्, व्यक्तमपि कार्यं तदपि [illegible] व्यक्त- 35

---

१ सि. क. 'त्युक्तम्। २ सि. क. किञ्चासतः।

गच्छतीति लोके दृष्टम्, तत्परस्परापेक्षामन्तरेण न सम्भवति चकास्तवदेवम्, तस्मात् क्रमयौगपद्य-
प्रवृत्त्यसम्भवादकार्यकारणत्वप्रसङ्गः, कार्यकारणभूतश्चैतद्व्यक्तम्, तस्मान्नेदमसत् उत्पद्यते, परिशेषतः
प्रधानादेवेदमिति कार्यकारणवीतस्यावीतः। किञ्चान्यत् निर्बीजमकस्मादुत्पद्यमानं व्यक्तमनेकादसत्वात्
नामसम्बद्धं [न] उत्पद्येत, सम्बद्धञ्चोत्पद्यते तस्मान्नेदमसत् इति शक्तिवीतस्यावीतः। शेषस्तु प्रस-
5 क्तानुप्रसक्तविचारेण [अलम्]। 'संस्थानमादिमद्धर्ममात्रं शब्दादीनां विनाश्यविनाशिनामेवं लिङ्गमादि-
मद्धर्ममात्रं सत्त्वादीनां विनाश्यविनाशिनां तस्मिन् विकारसंज्ञा', [पातं० यो० पा. ३. सू० १३ भाष्ये]
तत्र यदुक्तं विकारस्य विनाशित्वात् प्रधानस्य विनाशित्वमित्येतदयुक्तम्, गुणव्यतिरिक्तगुणप्रवृत्तिकारणाभा-
वादाकस्मिक्याः प्रवृत्तेरभावाच्चेत्यादि प्रत्यभिज्ञानार्थक्रियाहेतुकार्यनियमादिभिश्च हेतुभिरत्यन्तासदुत्पत्ति
विनाशप्रतिषेधार्थः सर्वो ग्रन्थो वैश्वरूप्याविभागगतिवत्तस्यावीतो द्रष्टव्य इति, एतेषां प्रधानास्तित्वैक्या-
10 विसाधनार्थ[नां]वीतानां तत्सद्भावस्यान्यथा [illegible] चादर्शनेन त्र्यात्मकयोनिहेतुत्वमवश्यमि-
त्येवमवधारणार्थानाञ्चावीतानामतथार्थत्वमुक्तविधिना प्रतिपादितमेव पुरुषवदपरिणामित्वं वैषम्यात्मकत्वं
विपरिणामः पुनः साम्यापत्तिश्चेति तदनुपपत्तेर्जगत्सर्गसंहारकल्पना निर्मूला, प्रधानाभावात् तन्निर्मूल-
त्वात् पुरुषार्थेन हेतुना प्रयुक्ता प्रवृत्तिरित्येतदपि वितथम्, तद्वितथत्वात्तद्विषयः प्रत्ययोऽप्यज्ञानमेव, तद-
ज्ञानत्वाद् ज्ञानप्राप्यपुरुषार्थाभावोऽपीति समस्ततंत्रार्थविघटनमेवेति किमवशिष्यते वार्षगणे तंत्रे सुभाषि-
15 ताभिमतमतस्त्वयाप्योऽयमनुपपन्नः परोक्षार्थवादः, यद्युपपद्येत परोक्षार्थमपि तं गृह्णीयाम्, न तूपपन्नः।

---

पूर्वकमिति शक्तिवीतस्यावीतमाह-किञ्चान्यदिति। पञ्चमवीतस्यावीतमादर्शयति-संस्थानमिति। गुणापेक्षया गुणिनो नित्यत्वेऽपि तदात्मभूतविकाराविर्भावतिरोभावभेदेन परिणामस्वभावतया न कौटस्थ्यं गुणिगुणानाम्, यथा संस्थानं-आकाशादिभूतात्मकं शब्दादीनां-शब्दादितन्मात्राणामविनाशिनां-स्वकार्यापेक्षयाऽविनाशिनामादिमत् परोत्पन्नं धर्ममात्रं विनाशि, तथा लिङ्गं-महत्तत्त्वं स्वकारणानामविनाशिनां सत्त्वादीनामादिमद्विनाशि धर्ममात्रम्, तस्मिन्-महदादिद्रव्ये विकारसंज्ञा,
20 सत्त्वादीनान्त्वविनाशित्वं निष्कारणत्वादिति भावः। तत्र कार्यकारणयोरभेदाभ्युपगमाद्विकारनाशे तद्वतः प्रधानस्यापि विनाशः स्यादिति शङ्कते-तत्रेति समाधत्ते-गुणेति, गुणेभ्यो व्यतिरिक्तस्य गुणानां प्रवृत्तौ कारणभूतस्य कस्यचिदभावात्, कारणमन्तरेणाकस्मात् गुणानां प्रवृत्तौ सदा प्रवृत्तेरप्रवृत्तेर्वा प्रसङ्गेन ततो नियतप्रवृत्त्यसम्भवाच्चेत्यर्थः। ननु क्षणिकतैव गुणानां स्यादित्यत्राह-प्रत्यभिज्ञानेति, निरन्वयधर्ममात्राभ्युपगमे स्मृत्याद्यभावप्रसङ्गः, नह्यन्येन दृष्टस्यान्यस्य स्मरणं दृष्टम्, प्रत्यभिज्ञायते च योऽहमद्राक्षं सोऽहं स्पृशामीति, तस्मादस्त्यन्वयो धर्मी यो [illegible]तो यस्य च धर्मोऽन्यथात्वं प्राप्नो-
25 तीत्यनुभूयमानः प्रत्यभिज्ञायते तस्मान्नेदं विश्वं धर्ममात्रं निरन्वयमभावमूलकम्, एवमर्थक्रियाऽनुपपत्तिः कार्यकारणनियमानुपपत्तिश्च धर्ममात्रपक्षे भावनीया, तस्मादस्ति धर्माणामन्वयी स्थिरो धर्मी यत्र धर्मा अविभागं गच्छन्ति, तदेव प्रधानमिति भावः। तदेवं पञ्चभिर्वीतैः प्रधानतदेकत्वादिसिद्धिः, प्रधानसद्भावमन्तरेण च व्यक्तस्य सम्भवो नास्तीति व्यतिरेकमुखेनावीतैः प्रधानसिद्धिश्चादर्शितेत्याह-एतेषामिति सर्व एव प्रपञ्चोऽसत्यार्थ इत्याह-मतत्र[illegible]ति पूर्वं गुणत्रयात्मकप्रधानस्य प्रत्येकं निर्गुणत्वादेकत्वाद्वैषम्यानुपपत्तरपरिणामित्वं [illegible] पुरुषवत्तस्मात् साम्यापत्तिवैषम्यापत्त्यसम्भवात् जगतः सृष्टिः संहारश्चानुपपन्न एव,
30 अकिञ्चित्करत्वेन प्रधानस्यैवाभावादिति भावः। अत एव च पुरुषार्थो प्रधानस्य सर्गादौ प्रवृत्तिरित्येतदप्यनुपपन्नमित्याह-तन्निर्मूलत्वादिति। तस्मादेवमव्यक्तस्य [illegible] व्यक्तस्य पुरुषस्य च वि[illegible]नमज्ञानमेव, तथाविधवस्त्वभावादित्याह-तद्वितथत्वा[illegible]ति। तथा च सांख्यशास्त्रोक्तः सर्वोऽप्यर्थोऽनुपपन्नप्रमाणोऽत्यन्तपरोक्ष एवेति त्याज्य एवेत्याह-वार्षगण इति। एकस्यानेकात्मकैकस्यैव प्रधानस्य सर्वकार्यप्रवृत्तिसमर्थताभ्युपगमो नोचितः शब्दैकगुणविषयप्रवृत्तिप्रसङ्गस्यापादितत्वात्, अपि तु

तस्मात् सर्वसर्वात्मकत्वपरिग्रह एव न्याय्यो न पुनः सर्वासर्वात्मकत्वपरिग्रहः, अन्यथा भवनाद्वैतपरिग्रहाद्विध्युभयनयैकान्तोपपत्तेः, तत्र भवति भावद्वैतं भवतो भावस्य, न तु सन्निध्यापत्तिभवनद्वैतम् ।

(तस्मादिति) तस्मात् सर्वसर्वात्मकत्वपरिग्रह एव न्याय्यः, न पुनरित्यादि, न सर्वासर्वात्मकत्वपरिग्रहो न्याय्यः, अन्यथा भवनद्वैतपरिग्रहाद्विध्युभयनयैकान्तोपपत्तेः, तत्र भवति भावद्वैतं भवतो भावस्य भाव्यभवितृभ्यां भेदाभ्यां भावोपपत्तिरित्येतत् प्रतिपादयिष्यते, न त्वेवं यथानन्तरदूषितं सन्निध्यापत्तिभवनद्वैतम् । 5

तत्र तावद्यः सन्निधिर्नहि स सन्निधिमात्रवृत्तिरस्ति, अनापन्नत्वात्, अनाविर्भूतत्वात् अनाविर्भवनमप्रवर्त्तनमप्रवर्त्तनञ्चानियमः, अथवाऽऽपत्तिर्विपरिणामः, आविर्भावो व्यक्तिः प्रवृत्तिर्नियमस्वरूपत्वमतो विपर्ययेभ्यो हेतुभ्योऽनापन्नत्वादिस्वरूपेभ्यो नास्ति वन्ध्यापुत्रवत् सन्निधिः । 10

(तत्र तावदिति) तत्र तावद्यः सन्निधिर्न हि स सन्निधिमात्रवृत्तिरस्ति, कुतः? अनापन्नत्वात्, आपत्तिरनाविर्भूतस्याविर्भावः, तत आह—अनाविर्भूतत्वात्, अनाविर्भवनमप्रवर्त्तनम्, अप्रवर्त्तनञ्चानियमः, अथवाऽऽपत्तिर्विपरिणामः भावान्तरेणोपलब्धिः, आविर्भावो व्यक्तिः, प्रवृत्तिः सन्ततः परिणामप्रबन्धः, नियमस्वरूपत्वं अधिगतद्रव्यार्थभावस्थितिरतो विपर्ययोऽनापन्नत्वादिः, 15 तेभ्यो हेतुभ्योऽनापन्नत्वादिस्वरूपेभ्यो नास्ति वन्ध्यापुत्रवत् सन्निधिः, आदिग्रहणादप्रवृत्तेरव्यक्तेरनियतेरित्यादिभ्यः, अतः सन्निधेरसत्पर्यायत्वात् सन्निधिभवनाभावः ।

न चैकमास्तिभवत्यादिष्वेकार्थौ सन्निधिवाचिनौ भवतिविद्यती सामान्यभवनवा-

सर्वेषां सर्वात्मकत्वपरिग्रह एव न्याय्य इत्याह—तस्मादिति प्रधानस्यापरिणामित्वेनाप्रवृत्तित्वादेवेत्यर्थः । एकस्यैव सर्वात्मकत्वं न तु सर्वेषामिति परिग्रहो न्याय्य इति भावः । न त्विति, पुरुषस्य स्थितिरेव, प्रधानस्यैव स्थित्युत्पत्तिप्रलया इत्येवं सन्निध्यापत्तिभवनद्वैतं न युक्तम्, किन्तु प्रतिविशिष्टबुद्धिः स्वतन्त्रोऽधिष्ठाता भवितेत्येको भावः, स एव सर्वस्य प्रवर्तकः, अधिष्ठेयोऽस्वतन्त्रो भाव्य इत्यपरो भावः, स एव प्रवर्त्य इति भावद्वैतं विध्युभयनयसम्मतमिति भावः । अन्यथेति प्रकारान्तरेण न तु त्वदुक्तेन प्रकृतिरेव भवति पुरुषस्तु न भवति पुष्करपलाशवन्निर्लेपस्तिष्ठतीत्येवं प्रकारेणेत्यर्थः, परन्तु चेतनोऽचेतनश्च भवद्धर्मा भवेदिति भावः । सांख्यसम्मतस्य सन्निधिभवनरूपस्य पुरुषस्याभावं प्रदर्शयति—तत्र तावदिति, त्वदुक्तं सन्निधिमात्रं न सन्निधिरूपम्, प्रकाशप्रवृत्तिनियमानात्मकत्वाद्वन्ध्यापुत्रवदिति भावः । तमेवाभिप्रायं विवृणोति—अनापन्नत्वादिति । 25 आपत्तिरेवाविर्भाव इत्याशयेनाह—अनाविर्भूतत्वादिति, य एव प्रकाशः तदेव प्रवर्त्तनं स एव च नियम इत्युक्तं प्राक्, तदनुरोधेनाह—अनाविर्भवनमिति । आपत्त्याविर्भावादीनां कथञ्चिद्भेदमभ्युपगम्याह—अथ वेति पूर्वधर्मं तिरोभाव्य स्वरूपावस्थितो धर्मी धर्मान्तरेणाविर्भवति तथाऽवस्थानं परिणामः, प्रदीपेनेव घटस्य विद्यमानस्य तथैव प्रकटीभवनमाविर्भावः स एव व्यक्तिः प्रकाश इत्युच्यत इति भावः । अन्यान्यपरिणामपरम्परा प्रवृत्तिरित्याह—प्रवृत्तिरिति । प्राप्तेनैकेन परिणामेन धर्मिणोऽवस्थानं नियम इत्याह—नियमेति । प्रकाशप्रवृत्तिनियमानात्मकस्य खपुष्पादेरिवासत्त्वमेवेत्याह—अतो विपर्ययेभ्य 30 इति । एवञ्च त्वदिष्टस्य पुरुषादेः सन्निधिभवनस्याकर्तुरभाव एवेत्युपसंहरति—अत इति । अस्त्यादीनां चोदितविशेषमाशङ्कते—न चैकमिति । अस्त्यादयोऽप्यविशेषेण सत्तामात्राभिधायिनः, तथा चाऽऽपत्तिप्रवृत्त्यादयोऽप्यविशेषाः पर्यायभावे

१ सि. क. अन्यःपुनरित्यादि । २ सि. क. ०ाविर्भूतत्वात् । ३ सि. क. °पत्तेर्वि° । ४ सि. क. स्थितिरन्यो ।

चिनौ पद्यतिरापत्तिभवनवाचीति सत्यमुक्तं सर्वेऽप्यमी सत्तार्थमेवाविशेषेण ब्रुवते, पद्यतिवर्त्तत्यर्थप्र[वृ]त्त्वात्सत्ताया इत्युक्तम्, न हि द्रव्यादिसद्भेदोपादानव[त्] पद्यतिवर्त्त्यो[रु]भयोपादान[म्] किन्तु अस्त्यादि[तु]ल्यार्थत्वेन, सत्तार्थ इत्यविशेषेण वचनात्, एवं तावत्सन्निधिभवनं नास्त्येव निरूपणा[नु]पपत्तेः ।

5 (न[नू]क्तमिति) ननूक्तमस्तिभवत्यादिष्वस्तिवर्त्तती सन्निधिवाचिनौ, भवतिपद्यती सामान्य[भ]वन[वा]चिनौ, पद्यतिरापत्तिभवनवाचीति, सत्यमुक्तम्, अयुक्तं तूक्तमस्त्यादीनां सन्निपात[त्वे]न[स]त्तायवाचित्वा[त्], सर्वेऽप्यमी सत्तार्थमेवावि[शेषे]ण ब्रुवते, सा च सत्ता [पद्यति]वर्त्त्येकार्थैवेत्यत आह—पद्यतिवर्त्तत्यर्थप्रवृत्तत्वात् सत्तायाः, स्यान्मतं सद्विशेषद्रव्यगुणकर्मवद्वर्त्ततिपद्यत्युभयोपादानं सत्ताविशेषत्वेनत्येतवा[यु]क्तम्, यस्मान्न हि द्रव्यादिसद्भेदेत्यादि यावदुपादानमिति गतार्थम्, किन्तूभु10 पादानम्, ? उच्यते, अस्त्यादितुल्यार्थत्वेन, कुतो ज्ञायत इति चेत् सत्तार्थ इत्यविशेषेण वचनात्, अस्तिभवतिविद्यतिपद्यतिवर्त्ततयः सन्निपातषष्ठाः सत्तार्था इत्यविशेषेणोक्तत्वात् सिद्धसेनसूरिणा, एवं तावत्सन्निधिभवनं नास्त्येव, निरूपणा[नु]पपत्तेः ।

आपत्तिभवनमपि नास्ति कथमिति चेत्—

यदपि चापत्तिभवननिरूपणं प्रधानमेव भवति म[हद]ादिविकारापत्त्या, तेन किल भूयते 15 इति तदपि न, तस्यापि भाव्यमानत्वा[द्भा]वयिता[र]मन्तरेण भाव्यत्वा[नु]पपत्तेः, अनापन्नत्वा[त्] ।

(यदपि चेति) यदपि चापत्तिभवननिरूपणं सांख्यैः क्रियत इति शेषः, प्रधानमेव भवति म[हदा]दिविकारापत्त्या यस्मात्तेन किल भूयत इति, इतिशब्दस्य हेत्वर्थत्वात्-महदादिर्भावमापद्यत इत्यस्मात् कारणात् प्रधानमेव भवति तेनैव भूयते सत्त्वा[द्यु]भयत्वाद्भेश्वस्येति, किलशब्दः क्षेपे, एवं किल तेषां मतमिति, स च क्षेपोऽनुपपद्यमानत्वात्, कथमिति चेदुच्यते तदपि न, तस्यापि भाव्यमा20 नत्वा[द्भा]वयितारमन्तरेण भाव्यत्वानुपपत्तेः, स्वत एव [न] भवतीत्यर्थः, भाव्यमानत्वं वक्ष्यमाणोपपत्तिकत्वात् सिद्धम्, तथेदमावृत्तं द्वितीयेन व्यावर्त्तकेनान्तरेण विना न प्रवर्त्तितुमर्हति, अनापन्नत्वात्, अना-

---

[एत]दपि नास्तीति सन्निध्यभाव एवेत्युत्तरयति सत्य[मु]क्तमिति । तत्र स्वाकूतं[दर्श]य[ति]—अस्त्या[दी]नामिति । अस्त्या[दीनां स]र्वेऽप्यमीति, अस्त्यादिषण्णां विभिन्नभवनार्थत्वं नाङ्गीक्रियत इति भावः । ननु सतो यथा द्रव्यगुणकर्माणि विशेषास्तथा [सत्ता]या विशेषो पद्यतिवर्त्तती[त्या]शङ्कते-स्यान्मत[म]ि[ति], निरूपणेति, तत्तीयस्य सन्निधिभवननिरूपणस्यानुपपन्नत्वादित्यर्थः ।

25 [आपत्ति]भवनमपि सांख्योक्तं निरस्यति-यदपीति, भवतश्च [भाव]नात् स्वभावादपि कादाचित्कभवनाद्यसम्भवा[त्] [...] [प्रधा]नमेव प्रधानमभ्युपेयम्, तथा च सति तस्य भाव्यत्वमन्तरेण भावयितारं नोपपद्यते इत्याह-तदपि नेति । प्रधान[मे]व महदादिना तेन तेन रूपेण परिणमत इत्येतावता सांख्यैरापत्तिभवनमुक्तमिति दर्शयति-प्रधानमेवे[ति], तथा [भाव्यमान]त्वस्य प्रधानस्येत्यर्थः, भाव्यत्वं प्रवर्त्त्यमानत्वम्, तत्र शब्दादीनां प्रवर्त्त्यानां यथा प्रवर्त्तयिता[र]मन्तरेण न भाव्यता [...] भावः । इदमेवाह-तथे[द]मि[ति], प्रधानं व्यावृत्तं चेतरोऽन्येन व्यावर्तकेन विना न प्रवर्त्तितुमर्हति यतो हि

---

१ सि. क. वर्त्तते । २ सि. क. ब्रुवन्ति । ३ सि. क. पद्यतोभया० । ४ सि. क. सत्ता० । ५ सि. क. [...] । ६ सि. क. महदादिभावेना [...]भावमा० । ७ सि. क. व्य[...]न्तरेण ।

पत्तस्य च सन्निधिमात्रत्वाऽऽपादितासत्त्वा , तस्मादनापत्तस्य च स्वत एवापत्त्यभावात्तदुक्तापत्तिभवर्व नोपपद्यत इति ।

किं कारणम पपन्नमिति चेत्—

अस्वतंत्रत्वात्, श ..., स्मात्ततोऽन्यो भवति मुख्यः, कोऽसौ ? यः कर्त्ता, कः कर्त्ता ? यः स्वतंत्रः प्रवर्त्तनवृत्तत्वा , प्रवर्त्तय कारणं त वमापद्यत सत्त्वादि, तथा- भवनप्रवृत्तत्वात् तन् पटवत् । 5

(अस्वतंत्रत्वा ति) अस्वतंत्रत्वात्, अस्वतंत्रं हि तत् प्रधानाख्यमचेतनत्वा , को दृष्टान्तः ? श दिवत्, यथा शब्दादयः सत्त्व रजस्तमोमयत्वा[ द ]स्वतंत्राः तदात्मकेन प्रधानेन भाव्यतेऽन्येन व्यावृत्ता अपि व्यापारयित्रा, तस्मात्ततोऽन्यो भवति मुख्यः, कोऽसौ ? यः कर्त्ता, कः कर्त्ता ? यः स्वतंत्रः, कस्मात् ? प्रवर्त्तनवृत्तत्वात्—प्रवर्त्तयतः क्रियाप्रवर्त्तनम्, तेन प्रवर्त्तनेन वृत्तत्वात्, प्रवर्त्तयितृत्वेन वृत्त- 10 त्वादित्यर्थः, प्रवर्त्तयद्धि कारणं तद्भावमापद्यते सत्त्वादि—यथा प्रवर्त्तयत् सत्त्वरजस्तमोल णं कारणं शब्दादिभावमापद्यते त्वन्मतेन तथाभवनप्रवृत्तत्वात्—तेन प्रवर पेण भवनं तेन प्रवृत्तत्वात् प्रवर्त्तयितारमन्तरेणाभवनाद[प्र]वृत्तत्वात् तन्तुपटवत्—यथा तन्तवः पटं प्रवर्त्तयन्तः पटस्य कारणमि- त्युच्यन्ते पटश्च तन्तुकार्यं तैः प्रवर्त्त्यत्वात् ।

नन्वेते प्रधानश ादिपटादिदृष्टान्ता अद्वैतवादं समर्थय न्तीति, उच्यते प्रवर्त्तयि त्वमा- 15 त्रसाधर्म्यात्तद भ्युपगम्यते, अन्यथा विष्वुभयकान्तोत्थानाभावा , भाव्यभावकमे प्रसिद्धत्व, अप चमादयोऽपि भाव्यमाना एव ।

( नन्वेत इति ) नन्वेते प्रधानश ादिपटादिदृष्टान्ता अद्वैतवादं समर्थयन्तीति, उच्यते प्रवर्त्तयि त्वमात्रसाधर्म्यात्तदभ्युपगम्यते तेन निदर्श्यते, अन्यथा पुरुषादिवदद्वैताभ्युपगमे विष्वुभये-

---

तेन तेन रूपेण भवति तदेव प्रवर्त्तकम्, प्रधानन्तु व्यावृत्तत्वात्तथा तथा नापद्यत इति न तत्प्रवर्तितुमर्हतीति भावः । 20 भाव्यत्वं कथमनुपपन्नं प्रधानस्य भावयित्रा विनेत्यत्राह—अस्वतंत्रत्वादिति, स्वतंत्र एव प्रवर्त्तनं मुख्यं, गौणं तु प्रवर्तनमस्वतंत्रेऽपि स्यात्, अतो मुख्य इत्युक्तम् । कोऽसौ मुख्यः प्रवर्तक इत्यत्राह—कोऽसाविति । ननु क्रियानिर्वर्त्तकस्वरूपं कर्तृत्वं सर्वस्यास्तीति न तेन प्रधानादिव्यावृत्तिरित्याशङ्कते—कः कर्त्तेति । क्रियाया निर्वृत्तौ यः स्वतंत्रः स एव कर्त्तेत्याह—यः स्वतंत्र इति, ननु स्वस्वकार्येषु सर्वेषां स्वातंत्र्यात् कथं स्वातन्त्र्यं व्यतप्रयोजकमित्यत्र हेतुं पृच्छति कस्मा ति, निखिलकारणसमवधानेऽपि यो प्रवर्तयिता भवति स एव स्वतंत्रो मुख्यः कर्ता भवतीत्याशयेनाह—प्रवर्त्तन- 25 वृत्तत्वा ति इतरकारणानां तदधीनप्रवृत्तिनिवृत्तित्वात्, तस्यान्येभ्यः साधनेभ्यः प्राक् शक्तिलाभादिति भावः । यः प्रवर्त्तयिता स एव प्रवर्त्यमान पेण भवति यथा प्रधानं शब्दादीनां प्रवर्त्तयितृ, अत एव तत् प्रवर्त्यमानशब्दादिरूपेण भवति तथा प्रधानमपि प्रवर्त्यमित्याशयेना —प्र त्तयद्धीति । यच्च प्र पेण भवति तद्भावयितृपूर्वकमित्याह—तथा भव- नेति । ननु स्वस्वकार्यं प्रति कारणानां सर्वेषां प्रवर्त्तयितृत्वात् प्रवर्त्तयित्रेव सर्वमित्यद्वैतवाद एव प्रधानतन्त्वादिदृष्टान्तैर- समर्थित इत्याशङ्कते—नन्वेत इति । अपेक्षाविशेषेण तत्रेष्टापत्तिं कुर्वन् समाधत्ते—उच्यत इति । प्रधानादीनां प्रवर्त्तयि त्व- 30 मात्र चान्यैकान्तेनैकस्यैव कस्यचिद्भावयि त्वा पगमे भावान्तरोत्थानं नैव भवेत्, पुरुषादिमात्र एवान्तर्भावप्रसक्तेरित्याह—

---

१ सि. क. शब्दादि ।

कान्तात्मनामावा[त्], भाव्यभावकभेदप्रसिद्धेः, अभावितत्वासत्त्वात् वन्ध्यापुत्रवत्, अणुधर्मादयोऽपि भाव्यमाना एव स्युरित्येतत्साधर्म्यदृष्टान्ताः शब्दादयः ।

यद्येवं प्रस्तुतं धर्माधर्माणवो वा कारणमस्त्वेवेति [illegible] किमनेन [illegible] कारणेनेति चेदुच्यते—

धर्माधर्माण्वा[दी]नामपि च तन्त्वंश्वादिवत् प्रवर्तकः पूर्वपूर्वशक्ततारतम्यनेश्वरः सन्निहिततद्विधशक्तिः प्रतिविशिष्ट[बु]द्धिः स्वतंत्रः तस्याभिप्रायेणैव प्रवृत्तिमापद्यन्ते धर्माधर्माण्वा[द]यः, सोऽपि चाभिप्रायप्र[वृ]त्त्यापत्तेर्न सन्निधिमात्र[ते]ऽरतः प्रवर्तयिता, प्र[वृ]त्तिनिवृत्तिविनियोगे स्वातंत्र्या[त्], विष्णु सत्त्वादीनामधिकृत[पु]रुषाणामिव प्रवर्त्तनम्, तस्यैव प्रवर्त्तयितृत्वा[त्] ।

[धर्मा]धर्माण्वादीनामपि च तन्त्वंश्वादिवदित्या[दि] यावत् प्रतिविशिष्टबुद्धिः, यथा पटस्तन्तुपूर्वकः, तन्तवोंऽशुपूर्वकाः, अंशवस्त्रुटिपूर्वकाः, त्रुटीनामपि प्रवर्त्तने शक्तः सूतः पूर्वे पूर्वे यावच्छताणुकसूतोऽपि पूर्वे पूर्वे यावद्द्व्यणुकः परमाणुरि[त्यनु]मीयत शब्दादि यावत् प्रधानम्, तथाऽण्वादीनामप्यचेतनानां प्रवर्त्तकौ धर्माधर्मौ, आदिग्रहणात् कालस्वभावनियत्यादिवाद्यन्तरपरिकल्पिताः, एवं [पू]र्वपूर्वशक्ततारतम्यनेश्वरः सन्निहिततद्विधशक्तिः, धर्माधर्माण्वादेः प्रध[illegible]यातथा विनिवेशने सन्निहिता यस्य शक्तिः सोऽस्ति, कुतः तद्विधविनिवेशनशक्तिर्मुख्या तस्येति चेदुच्यते—प्रतिविशिष्टा बुद्धिरस्याऽसौ प्रतिविशिष्टबुद्धिः, विशिष्टबुद्धिभ्योऽपि स्थपति[कुलाला]दिभ्यः प्रतिकर्तृविनिवेशनप्रवृत्तिनिवृत्तिविनियोगेषु ज्ञत्वात् स्वातंत्र्याच्च तेषां भावानामीष्टे, न ते तस्येशते, नाप्यात्मानो न च परस्परम्, अज्ञा-

---

[न]न्यथेति । भावान्तरोत्थानं मा भूत्, किं नः छिन्नमित्यत्राह—भाव्येति, भाव्यं भावकमेति द्वयं परस्परभिन्नं वस्तुद्वयं लोके प्रसिद्धं न त्वेको भावक एव पुरुषः, न वा भाव्यमेव [illegible], प्रधानादेः केनाप्यप्रवर्त्यत्वे प्रवर्त्यमानरूपेणाभवनाद्वन्ध्यापुत्रवदसद्भवेत्, पुरुषोऽप्यप्रवर्तकत्वादसन् स्यात्, प्रवर्त्याभावात्, प्रवर्तकरूपेणाभवनादिति भावः । तथा च शब्दादयोऽस्वतंत्रत्वात्तच्छक्तिमता प्रधानेन यथा भाव्यन्ते तथाऽणुधर्मादयोऽप्यस्वतंत्रत्वाद्भाव्यमाना एवेति भाव्यमानत्वसाधने शब्दादयः साधर्म्यदृष्टान्ता इत्याह—अण्विति । ननु प्रवृत्तिः शक्तिपूर्विकेत्यनुमीयमानः शक्तिमत्प्रवर्त्तयिताऽणुधर्मादयः प्रधानं वा स्यात् किमन्येनासिद्धेन प्रवर्त्तयित्रा प्रयोजनमित्यत्राह—धर्मा[धर्माण्वादीनामपी]ति अस्ति काष्ठा प्राप्तिः प्रवर्त्तनशक्तेः, सातिशयत्वात्, यद्यत् सातिशयं तत्तत्सर्वं निरतिशयं क्वचिद्दृष्टम्, यथा तन्त्वादिकार्यकारणपरम्परा भवन्मते प्रधाने वैशेषिकमतेऽणौ निरतिशये कारणमात्रे दृष्टाः, तथा कालस्वभावादौ वा, तथैव प्रवर्त्तनशक्तितारतम्यमपि क्वचिद्विश्रान्तं स्यात्, न च तादृशशक्तिमान् मुख्योऽणुधर्मादिरित्याशयेनाह—यथेति । कुतस्तादृशशक्तिरण्वादौ न मुख्या किन्तु तादृशशक्तिमत्त्वेनान्यः कश्चिदीश्वर एव मुख्य इत्याशङ्कते—कुत इति । अण्वादीनां कुलालादीनामाज्ञत्वासर्वज्ञत्वाच्च तद्विधविनिवेशनशक्तिरेत्युत्तरयति—प्रतिविशिष्टेति बुद्धौ प्रतिविशिष्टता च साम्यातिशयविनिर्मुक्तता, तेन कुलालादीनां योगिमुक्तानां व्युदासः, कुलालादेस्सातिशयज्ञानत्वात्, योगिमुक्तानां समानसार्वज्ञ्यात्, कृतार्थत्वेन जगत्सर्जनादिकर्तृत्वयोग्यताया अप्यभावादिति भावः । इदमेवाह—विशि[ष्टबु]द्धिभ्योऽपीति । जीवानां [illegible] जगत्सृष्टिस्थितिलयव्यापारपरिज्ञानस्वातंत्र्याभावादिति भावः । तत्तत्कार्येषु तत्तत्कर्तॄणां विनिवेशने प्रवर्त्तने निवर्त्तने विनियोगे च स एव समर्थो ज्ञातेत्याह—प्रतिकर्त्रिति । नन्वीदृशं ज्ञानं सर्वज्ञानामप्यस्तीत्यत आह—स्वातंत्र्याच्चेति देशकालानवच्छिन्नप्रयोक्तृत्वं स्वातंत्र्यम्, अचेतनेषु स्वातंत्र्यस्य सृष्टिकालीनत्वात्, कुलालादिस्वातंत्र्यस्य घटपटाद्येकदेशीयत्वात्, मुक्तानामप्रयोक्तृत्वात् प्रयोक्तृत्वे वा [मु]क्तिकालावच्छिन्नत्वात्, मुक्तिकाल एव तथाविधस्वातंत्र्यप्राप्तेः, ईश्वरस्य च सर्जनेऽवस्थाने विलयने च प्रयोक्तृत्वं न देशकालावच्छिन्नमिति भावः । अत एवाह—तेषां भावानामिति, निःसमाभ्यधिकाविच्छिन्नमैश्वर्यं तस्यैवेति भावः । सन्तोऽपि नित्या अणुप्रधानादयो जीवस्य धर्माधर्मादयश्च तदुपष्टम्भव्यतिरेकेण न स्वकार्यविधान-

---

१ सि. क. [illegible]ककाभता० । २ सि. क. प्रवृत्तिविनिपाज्यते ।

स्वतंत्रत्वाभ्याम्, स तु प्रतिविशिष्ट[illegible]त्वात् स्वतंत्रः, तस्याभिप्रायेणैव प्रवृत्तिमापद्यन्ते धर्माधर्माण्वादयः, सोऽपि चाभिप्रायप्रवृत्त्यापत्तेर्न सन्निधिमात्रवृत्तिः, अतस्तेषां प्रवर्त्तयिता प्रवर्त्तयितृत्वात् कारणशक्तिवत् स एव, तेषां [illegible]क्तिमतामपि भाव्यत्वेनास्वातंत्र्यात् तस्यैव तत्–प्रवृत्तिनिवृत्तिविनियोगेषु स्वातंत्र्यात् जगत्सर्गस्थित्यन्तरालप्रलयमहाप्रलयेषु प्रवर्त्तनम्, प्रागौदासीन्येन स्थितानां धर्मादीनां सृष्टेः प्रवर्त्तनम्, प्रवृत्तानां पुनरुपसंहारान्निवर्त्तनम्, विनियोगो दैवमानुषतैर्यग्योनसरित्समुद्रादितनुकरणाद्यवयवविभागविन्यासः, विष्णुसत्त्वादीनामधिकृतपुरुषाणामपीह[1] परमेश्वराभिप्रायानुरोधेन प्रवर्त्तनम्, अधिकृतराजस्थानीयादिपुरुषाणामिव, तस्यैव प्रवर्त्तयितृत्वात् ।

इतस्ततसाधर्म्यप्रदर्शनार्थमाह—

**अधिकृतपक्तृवत् सम्भवनधारणज्वलनविक्लेदनव्यापारेषु स्थालीकाष्ठतन्दुलादीनां प्र[illegible]त्तिनिवृत्तिविनि[illegible]गेषु स्वातंत्र्यात् सूपकारस्तत्तदात्मा प्रवर्त्तयितृप्रयोजनमात्रत्वा[illegible] क्रियायाः, अथवा कर्त्तृकर्मकरणाधिकरणसम्प्रदानानि प्रतिकारकं पचादीनां क्रियाभेद[illegible]स्वशक्ति स्वातंत्र्यात् कर्त्तृणि, यथाधिकरणं स्थाली सम्भवनधारणे कुर्वती पचतीत्युच्यते तथापि उपक्रमप्रभृत्यपवर्गपर्यवसानासु क्रियासु देवदत्तस्यैव स्वातंत्र्यादुच्यते देवदत्त एव पचति तेन पच्यत इति ।**

( **अधि[illegible]दिति** ) अधिकृतपक्तृवत्, तद्व्याख्यानार्थं सम्भवनधारणेत्यादि यावत् प्रयोजनमात्रत्वात् क्रियाया इति, यथा राज्ञा नियुक्तः सूपकारः स्थालीकाष्ठतन्दुलादीनां सम्भवनधारणज्वलनविक्लेदनव्यापारेषु प्रवृत्ति[ निवृत्ति ]विनियोगेषु स्वातंत्र्यात् तत्तदा[2]त्मा भवति त[3]थेश्वरेणेति ।

---

दक्षा भवितुमर्हन्ति, किन्तु चेतनाभिप्रायानुसारेणैवेत्याह–**तस्याभिप्रायानुसारेणैवेति** । ईश्वरोऽपि स्वाभिप्रायप्रवर्त्तने वर्त्तनात् तथा भवितैव, न तु सांख्यपुरुषवदेकान्तेनापरिणामिलक्षणः सन्निधिमात्रवृत्तिरित्याशयेनाह–**सोऽपि चेति** । न च तस्यान्यः कश्चित् प्रवर्त्तयिताऽस्ति कारणशक्तिपरम्पराया अण्वादौ विश्रान्ततया यथा न तस्याप्यन्यत्कारणं किञ्चिदस्ति तथैवात्रापि स एव प्रवर्त्तयितेत्याह–**अत[illegible]ति** । नन्वेवमण्वादय एव प्रवर्त्तयितारः स्युरित्यत्राह–**तेषामिति** । तत्र हेतुमाह–**प्रवृत्तीति** । जगतः सृष्टिस्थितिप्रलयेषु प्रकृत्यादीन् प्रवर्त्तयतीत्याह–**जगदिति** । प्रलयकाले विद्यमाना अपि प्रवाहतो नित्या धर्मादयो निमित्तभूता अपि न कार्यान्तरजननाय प्रकृत्यादीन् प्रयोजयन्ति, तेषां प्रकृतिकार्यत्वेनाप्रयोजकत्वात्, न हि कार्यं कारणं प्रयोजयति, न च नास्त्येव तदानीं धर्मादय इति वाच्यम्, सत्कार्यवादभङ्गप्रसङ्गात्, मुक्तस्यापि संसारित्वापत्तेश्च, अत एवोक्तमौदासीन्येन स्थितानामिति, तस्मात् स एव प्रयोजक इत्याशयेनाह–**प्रागिति** । प्रकृत्यादेः साम्यपरिणामादिरूपाखिलावरणभङ्गेन प्रवर्त्तयितेश्वरः धर्मादयस्तु कारका इति भावः । तथाविधकालादिसमवधाने प्रवृत्तानां निवृत्त्युन्मुखानां तथाप्रवर्त्तयिता स एवेत्याह–**प्रवृत्तानामिति** । विनियोगविधातृत्वमपि तस्यैवेत्याह–**विनियोग इति** । जगतः सृष्टिस्थितिसंहारकर्त्तृत्वेन पुराणेषु प्रसिद्धा ब्रह्मविष्णुमहेश्वरादयोऽपि रजःसत्त्वतमोगुणप्रधानाः परमेश्वरस्य परब्रह्मणोऽभिप्रायादेव प्रवर्त्तन्ते, ते तस्यैव परमेश्वरस्य जीवानामुपासनार्थं परिगृहीतमूर्त्तय एवेत्याशयेनाह–**विष्णुसत्त्वादीनामिति** । राज्ञा नियुक्ताः पुरुषा यथा राज्ञोऽभिप्रायानुसारेणैव प्रवर्त्तन्ते तथैव विष्ण्वादय इति दृष्टान्तमाह–**अधिकृतेति** । दृष्टान्तान्तरमाह–**अधि[illegible]तपक्तृवदिति** । राजनियुक्तसूपकारस्य स्थाल्यादिव्यापारेषु प्रवृत्त्यादिषु स्वातंत्र्येण तत्त[illegible]पि तत्प्रकृतेः प्रवर्त्तयितृप्रयोजनकत्वं तथा धर्माधर्माणुविष्ण्वादीनां तत्तत्कार्यस्वातंत्र्यात्तत्तदात्मत्वेऽपीश्वरेणाधिकृतत्वादेव तदभिप्रायप्रवृत्तिमत्त्वं

---

1 सि. क. °पीहत्य । 2 सि. क. प्रवर्त्तमानाधिकृ० । 3 सि. क. तत्तदात्मा० । 4 सि. क. यथेश्वर० ।

अथ वा कर्तृकर्मकरणाधिकरणसम्प्रदानानि प्रतिकारकं पचादीनां क्रियाभेदाद्यथास्वशक्ति स्वातंत्र्यात् कर्तॄणि, यथाधिकरणं स्थाली निदर्शनमात्रं सम्भवनधारणे कुर्वती पचतीत्युच्यते, ज्वलनं कुर्वन्ति काष्ठानि पचन्तीत्युच्यन्ते, अधिश्रयणोदकासेचनतन्दुलावपनैधोपकर्षणादिक्रियाः कुर्वन् देवदत्तः पचतीत्युच्यते, इत्यादि प्रतिकारकं स्वातंत्र्ये सत्यप्युपक्रमप्रभृत्यपवर्गपर्यवसानासु क्रियासु तस्यैव स्वातंत्र्यात्, 5 सम्भवनादिप्रत्यक्षतायामपि पचनशक्तिमतामप्यधिकरणादीनां देवदत्तस्य प्रवर्त्तयितृत्वादेवोच्यते देवदत्त एव पचतीति, नान्योऽनीश्वरत्वात्, तां मुख्यां कर्तृशक्तिं दर्शयति—तेन पच्यते तृतीयया कर्तृविहितया, स पचतीव प्रथमया तत्र विहिततिप्प्रत्ययसमानाधिकरणया ।

पुनरपि स्फुटीकरणार्थं व्यापित्वप्रदर्शनार्थञ्च—

**साक्षाद्वा भवितृवत्, यथा च सम्भवनधारणरोहणादिसमर्थपृथिव्युदकादिकारितव्रीहि-10 भवनप्रत्यक्षतायामपि व्रीहिर्जायते, भवत्यन्तर्सन्निविष्टस्वातंत्र्यात् तस्यैवेश्वरस्य प्रयोजकत्वादुच्यते भवती च भवतीति ।**

(**साक्षाद्वेति**) साक्षाद्वा भवितृवत्, तद्वर्णनं यथा च सम्भवनेत्यादि यावद्भवती च भवतीति, न केवलं पचत्यादिबाह्यक्रियाविषयमेव प्रयोज्यत्वात्, किं तर्हि ? व्रीह्यादिभवनाद्यन्तःक्रिया-

तेषामिति भावः । प्रकारान्तरेण दृष्टान्तमाह—**अथ वेति,** पचादीनां हि प्रतिकारकं क्रिया भिद्यते, तद्भेदाच्च कर्मादीनां कर्तृभावो 15 भवति, स्वस्वव्यापारे स्वातंत्र्यात् सर्वेषामिति भावः । एतदेव निदर्शयति—**यथाऽधिकरणमिति** । स्थाली अधिकरणकारकं सदपि स्वव्यापारे कर्तृ भवति । कस्यां क्रियायामित्यत्राह—**सम्भवनेति,** सम्भवनं द्रोणाढकादिपरिमाणतण्डुलादिग्रहणम्, धारणं स्थिरत्वादा क्रियासमाप्तेस्तण्डुलानां धारणम्, तत्कुर्वती स्थाली पचतीत्युच्यते, एष एवाधिकरणस्य पाकः, ज्वलनक्रियां कुर्वन्ति काष्ठानि पचन्तीत्युच्यन्ते, ज्वलनक्रियैव करणस्य पाकः, अधिश्रयणादिक्रियाः कुर्वन्नेव देवदत्तः पचतीत्युच्यते, अधिश्रयणं चुल्ल्यां स्थाल्या निक्षेपणम्, तत्रोदकयोजनमुदकासेचनम्, तण्डुलानां तत्र वपनं तण्डुलावपनम्, चुल्ल्यामिध्मनां 20 संयोजनमेधोपकर्षणम्, एवमादिक्रियाः प्रधानस्य कर्तुः पाक इति भावः । कारकचक्रप्रयोक्तृत्वमेव कर्तुः स्वातंत्र्यं न त्वन्येषामित्याह—**उपक्रमप्रभृतीति** । ननु क्रमवतामधिश्रयणादिक्रियाणामेकफलोद्देशेन प्रवृत्तानां सङ्कलनाबुद्ध्या परिकल्पितैकत्वानां पचिक्रियात्वव्यवहारः, न त्वधिश्रयणादीनामन्यतमा क्रिया पचिः, अपरक्रियावैयर्थ्यप्रसङ्गात्, तथा चाधिश्रयणादीनां पचिक्रियात्वानापत्त्याऽधिश्रयणाद्यवस्थासु पचतीति प्रत्ययो न प्राप्नोतीत्यधिश्रयणारम्भ एव फलाभिसन्धेर्निखिलक्रियाकलापोऽधिश्रयणादावध्यसनीयः, अध्यासश्च सर्वत्र पचतीति प्रत्ययानुपपत्तेरेव ज्ञायते, एवञ्च वर्तमानस्याधिश्रयणाद्यवयवस्य प्रत्यक्षत्वाति-25 शयेन **सम्भवनादिप्रत्यक्षतायामपीत्युक्तम्,** न तूपक्रमप्रभृत्यपवर्गपर्यवसानक्रियाकलापः पच्यर्थः प्रत्यक्षः, क्रिया नामेयमत्यन्तापरिदृष्टा न शक्या पिण्डीभूता निदर्शयितुमिति महाभाष्योक्तेः, अपिशब्देन तस्य संभवनादेरपि क्रियासमुदायरूपतयाऽप्रत्यक्षत्वमिति सूचितम् । यथा क्रमिकवर्णसमुदायात्मकघटपटादिपदप्रत्यक्षवदत्र प्रत्यक्षता भाव्या, अवयवक्रियाकर्तृत्वस्य स्थाल्यादावेव भावात्, अवयवभूतक्रियाव्यतिरिक्तसमुदायक्रियाया अभावाच्च कथमुपक्रमप्रभृत्यपवर्गपर्यवसानक्रियाकर्तृत्वं देवदत्तादेरित्यत्राह—**पचनेति** । एवञ्च कारकचक्रप्रवर्तयितृत्वादेव तस्य कर्तृत्वम्, तच्च नान्यस्य, असामर्थ्यादिति भावः । 30 देवदत्तस्यैव मुख्यां कर्तृशक्तिं दर्शयति—**तामिति,** अधिकरणादिकारकैः सह भावे वा कर्मणि वा कर्मकर्तरि वा प्रयोगादर्शनादिति भावः, अन्यमपि दृष्टान्तमाह—**साक्षाद्वेति,** इतरकारणानां समवधानेऽपि प्रधानकारणस्य भवनमन्तरेण कार्यं न भवति यथा तथा परमेश्वर एव विशिष्टज्ञानशक्तियुक्तत्वादन्तः प्रविश्य प्रवर्त्तयितेति भावः । यथा बीजग्रहणधारणरोहणवर्त्तनादिरूपेण पृथिव्यादिना व्रीहेर्भवनेऽपि भवितुः बीजस्य साक्षाद्भवनमन्तरेण न व्रीहिर्जायते, तथैव भवतो बीजस्यान्तर्भवनक्रियाप्रवर्त-

१ सि. क. नान्यमीश्वरत्वात् ।

विषयमपि प्रयोजनं तथा भवत् पृथिव्युदकादिबाह्यव्रीहिर्जायते भवतीत्यन्तर्भवनम्, सम्भवनधारणसमर्था पृथिवी, रोहणसमर्थमुदकम्, आदिग्रहणाद्वर्तनसमर्था वायुकालादयः, तैः कारितस्य व्रीहिभवनस्य प्रत्यक्षतायामपि सत्यां व्रीहिर्जायते भवत्यन्तसन्निविष्टस्वातंत्र्यात् तस्यैवेश्वरस्य प्रयोजकत्वादुच्यते भवती च भवतीति—भवनमपि भवदेव भवतीति, स्वरूपमात्रलाभोऽपि तद्वशादित्यर्थः ।

अथवा प्रस्तुतप्रधानकारणवादिसिद्धमेवेदं निदर्शनम्— 5

**सत्त्वतमःप्रकाशनियमप्रवृत्ती स्त एवेत्युक्तम्, इतरयोः ख्यापयतीति वचनात्, रजस्तु प्रवृत्तिलक्षणमेव, विशेषतः सत्यपि प्रवृत्तिसामान्ये करोति प्रवर्त्तयतीति वचनात् प्रवृत्त्या रजोभवनवद्वा ।**

**सत्त्वतमःप्रकाशेत्यादि** यावद्रजोभवनवद्वा यथासंख्यं सत्त्वस्य प्रकाशप्रवृत्तिस्तमसो नियमप्रवृत्तिश्च[3] स्त एवेत्युक्तम्, सत्त्वं शब्दात्मना व्यवतिष्ठमानं प्रवर्त्तमानमित्यादिपरस्परोपकारवीते 10 प्रकाशादिलक्षणस्य सत्त्वस्य प्रवृत्तिः गुरुवरणलक्षणस्य तमसः प्रवृत्तिर्यथासंख्यमितरयोः ख्यापयतीति वचनात्, रजस्तु प्रवृत्तिलक्षणमेव प्रवृत्त्येकमिष्टं विशेषतः सत्यपि प्रवृत्तिसामान्ये करोति प्रवर्त्तयतीति वचनात्, तथाऽदृष्टाण्वादिभूतकालादिप्रवर्त्तमानसामान्येऽपि ईश्वर एव प्रवर्त्तयितृत्वात् कारणमिति ।

**दृष्टान्तबाहुल्यप्रदर्शनं प्रतिसिद्धान्तपरिदृष्टादृष्टादेः प्रवर्त्तयितृत्वख्यापनार्थमिति स एव भवति सर्वव्यक्तिप्रवृत्त्यात्मकत्वात् तासामेव चास्याष्टमूर्त्तितोच्यते स्वशक्त्या व्यासरूपत्वात् 15 तासु स एव भवति साऽसा च ।**

(**दृष्टान्तेति**) दृष्टान्तबाहुल्यप्रदर्शनं प्रतिसिद्धान्तपरिदृष्टादृष्टादेः प्रवर्त्तयितृत्वख्यापनार्थम्—सिद्धान्तं सिद्धान्तं प्रति प्रतिसिद्धान्तं तेषु तेषु वैशेषिकादिसिद्धान्तेषु कल्पितानां परितोऽनुमानैः दृष्टानामप्यदृष्टाणुप्रधानविष्णुसत्त्वादीनां प्रवर्त्तयितेश्वर इति दार्ष्टान्तिकोपनयनात्, इति स एव भवति—इत्थमीश्वर एव भवति परमार्थतः, सर्वव्यक्तिप्रवृत्त्यात्मकत्वात्—सर्वासां व्यक्तीनां प्रवृत्तय आत्माऽस्य 20 सर्वव्यक्तिप्रवृत्त्यात्मकः तद्विशिष्टबुद्धिशक्त्या व्यासरूपत्वात्तस्मादेव चास्याऽष्टमूर्तितोच्यते—क्षितिजलपवनहुताशनयजमानाकाशसोमसूर्याख्याष्टमूर्त्तिताऽस्य स्वशक्त्या व्यासरूपत्वात्तासु स एव भवति साऽसा च ।

यितेश्वर एवेत्याह—किं तर्हीति । तैः कारितस्येति पृथिव्यादिकारितत्वेन व्रीहिभवनस्य प्रत्यक्षत्वेऽपीत्यर्थः । सांख्यमतेन रजोदृष्टान्तमाह—**सत्त्वतम इति,** सत्त्वतमसोरपि प्रकाशनियमयोः प्रवृत्तिः पूर्वमुक्तैव, तथा च तत्तत्प्रवृत्तिं प्रति तेषां सामर्थ्येऽपि प्रवृत्तिमात्रे रज एव हेतुः, प्रवृत्तिलक्षणत्वात्तस्य, तथाऽदृष्टाण्वादीनां प्रवर्त्तकत्वेऽपि सर्वेषां प्रवर्त्तयितृत्वादीश्वर एव 25 कारणमिति भावः । सत्त्वं शब्दात्मना व्यवतिष्ठमानं तद्भावायेतरयोः ख्यापयतीति पूर्वोदितं स्मारयति—**स्त एवेत्युक्तमिति,** अनेकदृष्टान्तप्रदर्शनस्य प्रयोजनमाचष्टे—**दृष्टान्तेति** प्रवर्त्तयितृत्वेन तत्तद्दर्शनप्रसिद्धानामदृष्टादीनां न मुख्यं प्रवर्त्तयितृत्वमपि तु प्रवर्त्यत्वम्, तेषामपीश्वरप्रवर्त्यत्वात्, तस्मादीश्वर एव मुख्यः प्रवर्त्तयितेति भावः । प्रवर्त्तकत्वेनास्य सिद्धेः प्रवृत्तिरेवास्य स्वरूपमतोऽसौ प्रवृत्त्यात्मना परमार्थतो भवति, विशिष्टबुद्धिशक्तिमत्त्वेन सर्वत्र व्याप्तत्वादित्याशयेनाह—**इत्थमीश्वर एवेति ।** चराचरात्मकानां वस्तूनामन्तः प्रविश्य प्रवर्त्तयितृत्वादेव सर्वमस्य शरीरमुच्यत इत्याशयेनाह—**तस्मादेव चेति ।** स एव तदत- 30

**१ सि. क. °भवनमस्य । २ सि. क. द्राजभवनाद्वा । ३ सि. भ. श्चारवेत्युक्तम् । ४ सि. क. प्रवर्त्तमान० । ५ सि. क. सत्त्वस्य । ६ सि. क. °बाहुल्यप्रयद० । ७ सि. क. वृत्तीनां । ८ सि. क. °त्तृसि० । ९ सि. क. वासरूपत्वात्तासामेव चा० ।**

किञ्चान्यत् प्रवृत्तिफलप्रकर्षा[ पकर्षा ]भावप्रसङ्गादीश्वर एव कारणम्, नादृष्टादि न प्रधानादीत्यत आह—

**इतरथा यद्यदृष्टादेः प्रधानादेर्वा प्रवृत्तयः फलानि वा स्युः तर्हि तयोः स्वानुरूपकार्यकारणानुबन्धसामर्थ्याभ्युपगमादुत्कर्षापकर्षाभावप्रसङ्गः परस्परानुरूपशालिबीजाङ्कुरादिहेतुकार्यभावप्रबन्धवत्, दृष्टौ च तौ, ततो नान्यदस्ति कारणमीश्वरकामचारेरणादृते ।**

5

**इतरथेत्यादि** यावद् दृष्टौ च तौ, यद्यदृष्टादेः प्रधानादेर्वा प्रवृत्तयः फलानि वा स्युः क्रियाणां पूर्वकृतकर्मफलप्रेरितानां तदनुरूपत्वात् फलानाञ्च फलप्रेरितकर्मानुरूपत्वात् मनुष्यनिर्वर्त्तनीया एव स्वभावमार्दवादिक्रियाः कृत्वा मनुष्य एव पुनरपि स्यात्, मा भूत् सरागसंयमादिदेवगतिनिर्वर्त्तनीयक्रियासम्बन्धी तदनुरूपवैक्रियशरीरादिलब्ध्युत्कर्षभावः, तथा बह्वारम्भपरिग्रहादिनिरयायुःसंवर्त्तनीयकर्मभाक् तदनुरूपदुःखैकरसनारकत्वनिकृष्टफलानुभावी वा मा भूत्, परस्परानुरूपशालिबीजाङ्कुरादिहेतुकार्यभावप्रबन्धवत्, [1]विशिष्टबुद्धिस्वतंत्रकारणप्रेरणाभावात् स्वानुरूपकार्यकारणानुबन्धसामर्थ्याभ्युपगमाच्च नादृष्टाच्च प्रधानादेर्वैषम्यं स्यात्, दृष्टश्च वैषम्यमध्ययनविद्याऽऽगमानधिगमात्युत्कर्षापकर्षयोः ना[3]न्यदतो विमर्दक्षमं कारणमस्तीश्वरकामचारेरणादृते—तदभिप्रायस्याप्रतिघातस्य प्रवृत्तिः कामचारः, तेन प्रेरणं

10

रूपेण भवतीत्याह—**तास्विति** । ईश्वरस्य कारणत्वाभावेऽनुपपत्तिमाह—**इतरथेति** । कार्यकारणभावो हि सजातीययोरेव, यथा मृद्घटयोः प्रधानमहदाद्योर्वा, मृज्जातीयत्वात्, सुखाद्यन्वितत्वाच्च, तथैव कार्यकारणप्रवाहस्यानादितया मनुष्ययोग्यादृष्टादेः मनुष्य एव भवति मनुष्याच्च मनुष्ययोग्यादृष्टमेव भवतीति विजातीयदेवनारकादियोग्यादृष्टासम्भवात्तथाविधसुखदुःखफलानुभवस्तस्य न स्यादेव, तथा मनुष्येऽप्येकस्मिन् कदाचित् सुखं कदाचिद्दुःखं कदाचिच्छीघ्रं विद्याधिगमः कदाचित्तु बहुप्रयत्नादपि नेति वैषम्यं न भवेत्, दृश्यते च वैषम्यम्, तत्र च नान्यत् कारणं सम्भवतीश्वरव्यतिरिक्तमत ईश्वर एव सर्वस्वतंत्रः कारणमिति भावः । एतदेव स्फुटयति—**यद्यदृष्टादेरिति** । **क्रियाणामिति** प्राचीनकर्मजन्यफलवासनासम्भूतत्वेन क्रियाणां फलानुरूपता, फलानाञ्च फलप्रेरितकर्मानुरूपतेति साजात्यं दर्शितम् । तथा च किं भवतीत्यत्राह—**मनुष्येति** । मनुजायुष आस्रवरूपाः क्रियाः स्वभावमार्दवादयः, प्रकृत्यैव जातिकुलरूपबललाभबुद्धिवाल्लभ्यकश्रुतस्थानेषु गर्वराहित्यम्, आदिना प्रकृत्यैव यथावस्थितमनोवाक्कायविषयवक्रतात्यागरूपस्य स्वभावार्जवस्य, अल्पारम्भपरिग्रहत्वादेश्च ग्रहणम् । कदापि तस्य देवायुषो योग्यक्रियाया न सम्भव इत्याह—**मा भूदिति** सरागसंयमो देशविरतिः पराधीनतया दाक्षिण्यादिना वाऽकुशलेभ्य आहारादिभ्यश्च निवृत्तिः बालतप इत्यादयो देवायुर्योग्याः क्रियाः वैक्रियशरीरादिलाभश्च न भवेदिति भावः । नारकायुर्योग्यक्रिया अपि तस्य न भवेयुरित्याह—**तथा बह्वारम्भेति** बह्वारम्भता बहुपरिग्रहता च नरकस्यायुष आश्रवो भवति, तस्य स न स्याद्विजातीयत्वादिति भावः । तत्र दृष्टान्तं दर्शयति **परस्परेति** शालिबीजाङ्कुरयोः परस्परं सजातीयः कार्यकारणभावो दृष्टः, शालिबीजाच्छाल्यङ्कुर एव भवति, शाल्यङ्कुराच्च शालिबीजमिति । तत्कुत इत्यत्राह—**विशिष्टबुद्धीति,** विशिष्टा बुद्धिर्यस्य तथाविधस्य स्वतंत्रकारणस्य या प्रेरणा तस्या, अभावादित्यर्थः । तथाविधस्वतंत्रकारणव्यतिरिक्तस्य कार्यकारणभावस्य सामर्थ्यमाह—**स्वानुरूपेति** । वैषम्यं च प्रत्यक्षसिद्धमित्याह—**दृष्टश्चेति** । अध्ययनेन विद्यायाः प्राप्तिरप्राप्तिः प्राप्तावपि कस्यचिदुत्कृष्टा विद्या कस्यचित्त्वपकृष्टेत्येवं वैषम्यं दृश्यत इत्यर्थः । तत्र स्वतन्त्रेच्छाप्रवृत्तिमानीश्वर एव कारणमित्याह—**नान्यदत इति** । तेन कृताभिप्रायस्य कदाचित् क्वचिदपि प्रतिघातासम्भवात्, तन्मूला या प्रवृत्तिः सा कामचार इत्युच्यत इति कामचारपदं विवृणोति **तदभिप्रायस्येति** । एकस्यैवाचारविशेषस्य देशकालपुरुषाद्यपेक्षया स्वाचारत्वाद्दुराचारत्वाच्च, तेषां तथा तथा फलेन योजयिता स एवेत्याह—**स्वाचा-**

15

20

25

30

1 सि. क. विशिष्टमिति ०। 2 सि. क. दृष्टान्तये०। 3 सि. क. अन्यदतो०।

**भावानां प्रवर्त्तनं स्वाचाराणामप्यनिष्टफलसम्बन्धो दुराचाराणामिष्टफलसम्बन्धः, तस्मात् सर्वमीश्वरप्रवर्त्तितं प्रवर्त्तते नान्यथा ।**

**प्रयोगश्च—**

**तनुकरणभुवनसाधनायादृष्टप्रधानकालादिप्रेरितानि परमाणुसत्त्वभूतादीनि विशिष्टचेतनाधिष्ठितान्येव प्रवर्तन्ते, सम्भूयैकार्थकारित्वात्, तक्षाधिष्ठितरथदारुगणवत् तथाऽचेतनत्वात्, अथवा स्थित्वा प्रवृत्तेस्तुर्यादिवत् ।** 5

**तनुकरणभुवनसाधनायेत्यादि** यावत्तक्षाधिष्ठितरथदारुगणवदिति, यथाप्रक्रियं शरीरेन्द्रियाणि भुवनञ्च साधयितुमधितिष्ठद्भिः अदृष्टैः प्रेरिताः परमाणवो वैशेषिकाणाम्, प्रवृत्तानि सत्त्वादीनि प्रधानेन सांख्यानाम्, अन्येषाञ्च भूतानि कालस्वभावनियत्यधिष्ठितानि, इत्यभिमतानि प्रवर्त्यानि प्रवर्त्तकानि विशिष्टचेतनाधिष्ठितान्येव प्रवर्त्तन्त इति प्रतिज्ञा, सम्भूयैकार्थकारित्वादिति हेतुः, 10 सम्भूयकारिणः पूर्वपूर्वशक्ततारतम्यकारणानुमानोक्तेः परमाणुसत्त्वादयः तन्वादित्वेनावस्थिताः परस्परेण सम्भूय गमनाभ्यवहरणसुखदुःखानुभवरूपाद्युपलब्धिसत्त्वगणाधारतादिकार्यं कुर्वन्तो दृश्यन्ते तत्सिद्धमेषां सम्भूयैकार्थकारित्वम्, तक्षाधिष्ठितरथदारुगणवत्—रथार्थो दारुसंघातो [रथ] दारुगणः स तक्ष्णा विशिष्टचेतनेनाधिष्ठितस्तथैतानि, तथा तेऽचेतनत्वात्, तथेति, तस्यामेव प्रतिज्ञायामचेतनत्वादित्युपचयहेतुः, स एव रथदारुगणो दृष्टान्तः, वक्ष्यमाणो वा तुर्यादिवदिति, तनुकरणभुवनानामचेतनत्वं 15

**राणामपीति** । देशकालपुरुषाद्यपेक्षया शोभनाचाराणामपि तदन्यदेशकालपुरुषानुष्ठितानामित्यर्थः । यद्वा लोके सदाचारिणामनिष्टं दुःसहक्लेशादि फलं दुराचारिणामिष्टं सुखादिफलं दृश्यते तदीश्वरप्रदत्तमेवेति भावः । ईश्वरसाधकं तावदनुमानमादर्शयति—**तन्विति**, तनुः शरीरं करणमिन्द्रियाणि भुवनं लोकः, एतेषां सिद्ध्यर्थं अदृष्टादिभिः प्रेरितानि परमाण्वादीनि विशिष्टचेतनाधिष्ठितानि सन्ति प्रवर्त्तन्ते इति प्रतिज्ञार्थः, अत्र तन्वादीनीति कार्यमुक्तं परमाण्वादीनीति परिणामिकारणमुपादानकारणं आपत्तिभवनमुक्तम्, अदृष्टादीनीत्यपेक्षाकारणमुक्तम्, विशिष्टचेतनाधिष्ठितत्वं साध्यम्, विशिष्टचेतनश्च निमित्तकारणं 20 सन्निधिभवनं प्रवर्तकमुक्तम् । **अदृष्टैरिति** परमाणूपादानस्य जगतः पुरुषकर्मापेक्ष ईश्वरो निमित्तकारणम्, करुणया प्रवर्त्तमानोऽप्ययं वस्तुस्वभावमनुविधीयमानो धर्माधर्मसहकारी जगद्वैचित्र्यं विधत्ते तेन न स्वातंत्र्यक्षतिः, निरपेक्षस्वातंत्र्याप्रसिद्धेर्न वैषम्यनैर्घृण्यादिदोषाः, आपादकाभावादिति वैशेषिकाः । **प्रवृत्तानीति**, सांख्यमतेन प्रधानेन प्रवृत्तानि सत्त्वादीन्यपि विशिष्टचेतनाधिष्ठितान्येव प्रवर्त्तन्ते, अन्यथा साम्यावस्थानिर्गमनं भवेदिति भावः । **अन्येषाञ्चेति**, कालादिप्रेरितानि पञ्च भूतानि तन्वादीन् साधयन्तीत्यभ्युपगन्तृणामपीश्वरव्यतिरेकेण नेष्टार्थसिद्धिरिति भावः । साधनमाह—**सम्भूयेति** । परमाण्वादयो 25 मिलिताः सन्त एकमर्थं कुर्वन्ति, यत एवमत एव ते विशिष्टचेतनाधिष्ठिताः, न ह्येकं किञ्चिजनकमिति न्यायेन बहूनां कार्यारम्भकत्वम्, दृष्टञ्च तथैव रथदारुगणस्य जनकत्वम्, तदेवं सम्भूयकारिकारणमुपलभ्य तस्यापि कार्यत्वेन तत्कारणतयाऽन्यसम्भूयकारिकारणसिद्धौ तस्यापि कार्यत्वेन तथाविधकारणसिद्धिरित्येवं यावत् परमाणुसत्त्वादि सम्भूयकारिकारणं मीयत इति परमाणुसत्त्वादीनां सम्भूयकारित्वं सिद्धमित्याह—**सम्भूयकारिण इति** । तेषामर्थानाह—**गमनेति**, गमनं तन्वेकदेशकर्मेन्द्रियपादकार्यम्, अभ्यवहरणं वचनं वागिन्द्रियकार्यम्, सुखदुःखानुभवो मनसः, रूपाद्युपलब्धिश्चक्षुरादेः सत्त्वगणाधारता प्राणिवर्गाश्रयता भुव- 30 नस्य । दृष्टान्तमाह—**तक्षेति** । यथा वास्यादि रथदारुगणो वा बुद्धिमता तक्ष्णाधिष्ठितमचेतनत्वात् प्रवर्त्तते तथा परमाण्वादयोऽपीति, पूर्वप्रतिज्ञायामेव हेत्वन्तरमाह—**तथा त इति**, ते परमाणुसत्त्वादयस्तथा विशिष्टचेतनाधिष्ठिता इत्यर्थः । साधनान्तरमाह—

---

१ सि. क. सम्भूयकारित्वं । २ सि. क. सत्त्वगुणा० ।

सिद्धम् । अथवा स्थित्वा प्रवृत्तेस्तुर्यादिवत्, यथा तुरी[illegible]नलिकारज्जुवञ्जनिकासूत्रादीनि प्रागप्रवृत्तानि कञ्चित्कालं स्थित्वा [ प्र ] वर्त्तमानानि विशिष्टकुविन्दबुद्ध्यधिष्ठितानि पटनिष्पत्त्यै प्रवर्त्तन्ते तनुकरणभुवनानि तथेति ।

**चेतनानधिष्ठितक्षीरदधिमेघादिवदनेकान्त इति चेन्न, अदृष्टकर्तृ[illegible]-**
5 **तिरेकात्, शब्दानित्य[त्व]साधने प्रतिज्ञानुनीतजलधिध्वन्यनित्यत्ववत् ।**

( [illegible] ) चेतना[ न ]धिष्ठितक्षीरदधिमेघादिवदनेकान्त इति चेत्—स्यान्मतं प्रतिविशिष्टबुद्धिना केनचिदनधिष्ठितेषु क्षीरदधिमेघादिषु संभूयैकार्यकारित्वाचेतनत्वस्थित्वाप्रवृत्तिधर्माणां दर्शनादनैकान्तिकता संशयहेतुतेत्येतच्च न, अदृष्टकर्तृकविषयप्रतिज्ञार्थाव्यतिरेकात्, अदृष्टोऽस्याः कर्त्ता विषयः सेयमदृष्टकर्तृकविषया प्रतिज्ञा, तस्याः प्रतिज्ञायास्तनुकरणभुवनधर्मिकायाः प्रतिविशिष्टबुद्ध्यधिष्ठित-
10 त्वसाध्यधर्मणः क्षीरदधिमेघादिधर्मिणामपृथक्त्वात् प्रतिज्ञान्तःपातित्वाद्विपक्षाभावे हेतुव्यभिचाराभावान्नानेकान्तः, शब्दानित्यत्वसाधने प्रतिज्ञानुनीतजलधिध्वन्यनित्यत्ववत्, यथाऽनित्यः शब्द इति प्रतिज्ञाते कृतकत्वं देशकालाभ्यामनवरते जलधिध्वनौ पुरुषादिभेदेन चानवरते सादिशब्दे च दृष्टत्वादनेकान्त इति वचनं तदाभासमुदन्वत्सादिशब्दानामप्युपादानभेदभिन्नानां शब्द इति श्रोत्रग्राह्यत्वाभेदेन प्रतिज्ञातानां शब्दत्वानतिक्रमात् पक्षान्तर्नीतत्वात् तदनित्यत्वं कृतकत्वाविनाभावि, शब्दादन्यस्य नित्यस्य
15 कृतकस्यादर्शनाच्च, जायते देशकालोपादानभेदभिन्नस्याभेदेऽपि सत्युपलभ्यधर्मणोऽनुपलभ्यत्वाच्छब्दव्यक्तिधर्मित्वाच्च जात्युत्तरञ्च तस्मादनुत्तरमिति ।

**स्थित्वाप्र[वृ]त्तिचेतनानधिष्ठितेश्वरवदनेकान्तः, ईश्वरस्य वा चेतनाधिष्ठितता स्थित्वाप्र[वृ]त्तेरदृष्टाणुप्रधानादिवदतोऽनवस्था स्यादिति चेन्न, चेतनाधिष्ठितप्रवृत्तिमत्त्वसाध्यधर्मत्वात् ।**

**अथ वेति** यत् स्थित्वाऽभिमतफलसम्पादनाय प्रवर्त्तते तद्बुद्धिमत्कारणाधिष्ठितं दृष्टम्, यथा वासी द्वैधीकरणादौ, प्रवर्त्तते च स्थित्वा
20 परमाण्वादि स्वफलसाधनायेति मानार्थः । अत्र हेतोर्व्यभिचारमाशङ्कते—**चेतनेति** क्षीरस्य दधिभवनम्, परमाण्वादीनां मेघादिभवनं चेतनानधिष्ठितमेव दृष्टं तत्र साध्यशून्येषु क्षीरादिषु हेतोः सद्भावाद्व्यभिचार इति भावः । त्रिविधा भावा लोके दृश्यन्ते प्रसिद्धचेतनकर्तृकाः केचित् प्रासादघटपटादयः, केचित् प्रसिद्धचेतनकर्तृविपरीता नित्याः परमाणुगगनजीवादयः, केचिच्च संदिग्धचेतनकर्तृकाः तनुकरणगिरिसरित्पतिवारिवाहादयः, न हि कस्यचिदचेतनकर्तृकत्वं सिद्धम्, न वा कर्त्तुः प्रत्यक्षानुपलब्धिमात्रेणाभावः शक्यतेऽभ्युपगन्तुम्, तस्माद्यददृष्टकर्तृकं तन्वादिमेघादि तत्सर्वं विशिष्टचेतनाधिष्ठितमिति प्रतिज्ञार्थत्वान्नानैकान्तिकतेत्याशये-
25 नोत्तरयति—**अदृष्टेति** । अदृष्टकर्तृकत्वेन तन्वादीनामिव क्षीरादीनामपि प्रतिज्ञान्तर्गतत्वमतो न व्यभिचार इत्याह—**तस्या इति** । अत्रार्थे दृष्टान्तमाचष्टे—**शब्देति** । अनित्यः शब्दः कृतकत्वादिति प्रयोगे कश्चिद्यदि ब्रूयात् निरन्तरं श्रूयमाणे समुद्रस्य ध्वनौ पुरुषैर्निरन्तरमुच्चार्यमाणे शब्दविशेषे च कृतकत्वसत्त्वेऽपि नित्यत्वेन साध्याभावाद्व्यभिचार इति, तदिदं वचनमनुत्तरमेव, नहि शब्दविशेषस्यानित्यत्वं प्रतिज्ञायते, अपि तु श्रोत्रग्राह्यमात्रस्य शब्दत्वेन पक्षीकरणा[द]पि पक्षान्तर्गता एवेत्यनित्यत्वं कृतकत्वाविनाभाव्येवेति भावः । संशयहेतुतामाह—**देशेति** । अनेनानित्यत्वविरहे कृतकत्वं दर्शितम्, **पुरुषेति**, अनेन च नित्ये
30 कृतकत्वं दर्शितम्, ततश्च संशय इति कृतकत्वमनैकान्तिकमिति भावः । उक्तानां सर्वेषां श्रोत्रग्राह्यत्वाविशेषात् शब्दत्वमेवेति शब्दोऽनित्य इति प्रतिज्ञायामन्तर्गतत्वेनानित्यत्वं कृतकत्वाविनाभाव्येवेति भावः । तस्मात् त्वदुक्तमुत्तरं जात्युत्तरं जायत इत्याह—**जायत इति**, असदुत्तरं जातिरित्युच्यते तस्मादनुत्तरमिति भावः । प्रकारान्तरेण व्यभिचारमनवस्थां चोद्भावयति—**स्थित्वेति** चेतनाधिष्ठितत्वे साध्ये स्थित्वा प्रवृत्तेरिति हेतुरीश्वरेऽनैकान्तिकः, ईश्वरस्य स्थित्वा प्रवृत्तिमत्त्वात्, चेतनान्तरेणा-

१-२ सि. क. जलधिध्व० । ३ सि. क. सामादिश० । ४ सि. क. °मुदत्वात्स्व० । ५ सि.क. °पा[illegible]० ।

( स्थित्वेति ) स्थित्वाप्रवृत्तिचेतनानधिष्ठितेश्वरवदनेकान्त इति चेत्–स्यान्मतं यथेश्वरः स्वयं प्रागप्रवृत्तान् स्थित्वा प्रवर्त्तयन्नपि चेतनान्तरेणानधिष्ठितः प्रवृत्तश्च तथा तन्वादीनि स्थित्वा प्रवृत्तानि स्युरित्यनेकान्तः, ईश्वरस्य वा चेतनाधिष्ठि[ त ]तेत्यादि, एवमनेकान्तिकत्वानिच्छायां वा चेतनाधिष्ठितोऽसावीश्वरः प्राप्तः, स्थित्वा प्रवृत्तेः, अदृष्टाणुप्रधानादिवदतोऽन्येश्वरता, प्रहाधिष्ठितस्त्रीपुरुषादिवत्तस्यापि चाधिष्ठातुरन्याधिष्ठिततेत्यनवस्था स्यादित्येतच्च न, चेतनाधिष्ठितप्रवृत्ति[ म ]त्त्वसाध्यधर्मत्वात् 5 नैष दोषः, चेतनाधिष्ठितप्रवृत्ति[ म ]त्त्वं हि साध्यते धर्मः, स चाचेतनमेव, तद्धर्मिविषयत्वात्, चेतनानां सिद्धत्वात् प्रयोजनाभावाच्च, तनुकरणभुवनसाधनप्रवृत्तादृष्टाणुप्रधानानि ह्यचेतनानि धर्मीणि चेतनाधिष्ठित[ प्रवृत्तिमत् ]त्वधर्मेण विशिष्टानि साध्यन्त इति प्रतिज्ञाविषयज्ञानाददोष इति ।

**देवदत्तादेस्तर्हि चेतनेश्वराधिष्ठानं न प्राप्नोति, उच्यते च त्वया चेतनानामपीश्वराधिष्ठानम्, यथा पुरुषवादिप्रदर्शनाय–'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा' ॥ इति ( महाभारते वनपर्वे अ० ३० श्लो० २८ ) चेन्न, प्राग्विशिष्टबुद्धिचेतनप्रतिज्ञानात्, विशिष्टबुद्धित्वमपि चास्यार्थानामर्थक्रियायोग्यत्वेन सन्निवेशकत्वात् स्थपतिवत् ।** 10

( देवदत्तादेरिति ) देवदत्तादेस्तर्हि चेतनेश्वराधिष्ठानं न प्राप्नोति, ततो देवदत्तादिवच्चेतनानधिष्ठितानि तन्वादिसाधनार्थादृष्टाणुप्रधानादीनीत्यनेकान्तः, सोऽपि चेश्वरस्तद्वच्चेतनान्तराधिष्ठित इति 15 प्राप्तम्, उच्यते च त्वया–इष्यत एव त्वया चेतनानामपीश्वराधिष्ठानम्, यथा 'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा' ॥ ( महाभार० वन० अ० ३० श्लो० २८ ) पुरुषवादनिरसनायेति श्लोकवचनप्रयोजनमाह–मा भूत् पुरुषकारकारणवादप्रसङ्गस्तदवस्थामात्रं तन्वदृष्टप्रधानाण्वादीति, अत उक्तं भवता 'अज्ञो जन्तुरनीशोऽय'मिति, अत्रोच्यते न प्राग्वि-

नधिष्ठितत्वाच्च, यदि तस्यापि चेतनेनान्येनाधिष्ठितत्वमङ्गीक्रियते, तर्हि तस्याप्यन्यस्य चेतनस्येतरचेतनेनाधिष्ठितत्वं तुल्ययुक्तया 20 प्रसज्यते तस्याप्यपरेणेत्यनवस्थेति शङ्कितुरभिप्रायः । एवमेव व्याचष्टे–**स्यान्मतमिति** । अनवस्थां दर्शयति–**एवमिति** । समाधत्ते–**चेतनेति** । चेतनाधिष्ठितप्रवृत्तिमत्त्वं हि साध्यम्, न तु चेतनान्तराधिष्ठितप्रवृत्तिमत्त्वम्, तथा च चेतनाधिष्ठितप्रवृत्तिमत्त्वधर्मोऽचेतन एवाऽऽयाति, न तु चेतने, तत्र चेतनान्तराधिष्ठितप्रवृत्तिमत्त्वस्यैव सद्भावात्, अतश्च साध्यबलेनाचेतनगतप्रवृत्तिरेव लभ्यते, न तु चेतनगता प्रवृत्तिः तस्याचेतनाधिष्ठितत्वस्य सिद्धत्वात्तत्र तत्साधने प्रयोजनाभावात्, एवञ्च चेतनाधिष्ठितप्रवृत्तिमत्त्वविशिष्टाचेतनस्यैव प्रतिज्ञाविषयत्वादिति भावः । पूर्वोदितानुमानेनाचेतनप्रवृत्त्यधिष्ठातृतयेश्वरसिद्धावपि 25 चेतनानामधिष्ठातृतया तस्यासिद्धेश्चेतनानां प्रवृत्तिर्न केनचिदधिष्ठितेति त्वदभ्युपगमविरोधः, चेतनप्रवृत्तीनामपीश्वराधिष्ठितत्वाभ्युपगतत्वादित्याह–देवदत्तादेरिति । देवदत्तप्रवृत्तय इवाचेतनादृष्टादिप्रवृत्तयोऽपि चेतनानधिष्ठिताः स्युः, चेतनप्रवृत्तीनामपीश्वराधिष्ठितत्वे ईश्वरप्रवृत्तेरपि चेतनान्तरेणाधिष्ठितत्वं स्यादित्यनवस्थेत्याह–**तत इति** । चेतनाचेतनानामीश्वराधिष्ठितत्वे पुराणप्रमाणमादर्शयति–**अज्ञ इति,** प्राणी तथाविधादृष्टादिमानपि सुखदुःखानुभवयोग्यगतिज्ञानतत्स्थानप्राप्तिशक्तिविरहेण तत्तत्कर्मवेदिना ईश्वरेण प्रेरितः सन् निजकर्मानुगुणं स्वर्गं सुखानुभवयोग्यं नरकं वा दुःखानुभवयोग्यं गतिविशेषं प्राप्नोतीत्यर्थः । कारिकेयं पुरुषकारस्यैव 30 प्रवर्तकत्वमिति पक्षं प्रत्याचष्ट इत्याह–पुरुषवादनिरासायेति । समाधत्ते–**अत्रोच्यत इति,** विशिष्टचेतनाधिष्ठितान्येव प्रवर्त्तन्त इति हि पूर्वं प्रतिज्ञातं, न तु चेतनाधिष्ठितान्येव प्रवर्त्तन्त इति चेतने वैशिष्ट्यञ्चापराधीनं स्वातन्त्र्यमेवेति दर्शयति–**प्रागिति।**

१ सि. क. °तवमेव । २ सि. क. °दत्तायस्तर्हि° । ३ सि. क. प्रधानादीनाम° । ४–५ सि. क. अज्ञो ।

शिष्टबुद्धिचेतनप्रतिज्ञानात्—प्रागस्माभिर्विशेषितं विशिष्टबुद्ध्यधिष्ठितानि तन्वादीनीति, विशिष्टबुद्धित्व-व्यापराधीनं स्वातंत्र्यम्, कुतः सिद्धमिति चेदुच्यते—विशिष्टबुद्धित्वमपि चास्यार्थानामर्थक्रियायोग्यत्वेन सन्निवेशकत्वात् तन्वादीनि विशिष्टबुद्धिपूर्वकाणि, अर्थक्रियायोग्यत्वेन सन्निविष्टावयवत्वात्, स्थान-गमनशयनासनाहारादिप्रयोजनानि हि तन्वादिषु क्रियन्ते, तत्क्रियायोग्यावयवसन्निवेशात्, स्थपतिबुद्धि-
5 पूर्वकप्रासादवत्, तस्मादर्थक्रियायोग्यत्वेनार्थानां सन्निवेशकः स स्थपतिवत् तस्माच्च विशिष्टबुद्धिरिति ।

अनैकान्तिकतोद्भावनार्थमाह—

**तन्वादीनि स्वभावेनैव प्रवृत्तानि न तु केनचिद्विशिष्टबुद्धिना, नीलोत्पलनालकण्टकमयूर-चान्द्रकादिवदिति चेन्न, क्षीरदधिमेघादिवदुक्तोत्तरत्वात् ।**

**तन्वादीनीत्यादि** यावन्नीलोत्पलनालकण्टकमयूरचन्द्रिकादिवदिति, नहि प्रशस्तशुभवर्णगन्ध-
10 रसस्पर्शस्य लक्ष्मीनिलयस्य जलाशयालङ्करणस्य कमलस्य ग्रहणधारणोपभोगसाधनभूतस्य लोके केनचित् असूयया मा ग्रहीत् कश्चिदिति कण्टकाः कृताः, नीलोत्पलनालादिष्वतिप्रसङ्गात्, न च मयूरचन्द्रका-णामिन्द्रचापवर्णप्रतिस्पर्धिविचित्रवर्णता कृता कुड्यादिषु चित्रकारेणेव केनचिद्विशिष्टबुद्धिना, चित्रकर-चेतनदानाद्यभावप्रसङ्गादित्यत्रोच्यते, न, क्षीरदधिमेघादिवदुक्तोत्तरत्वात्, क्षीरदधिमेघादिवत् पद्मना-लकण्टकमयूरचन्द्रकादीनां तन्वादिवद्यादृष्टकर्तृकविषयप्रतिज्ञार्थाव्यतिरेकादनैकान्तिकत्वाभाव इत्युक्तो-
15 त्तरमेतत्, एवं तावत् सामान्येन विशिष्टबुद्धिपूर्वकतोक्ता ।

प्रस्तुतसाङ्ख्यमतापेक्षया चैवं प्रतिज्ञायते—

**लघुप्रकाशप्रवृत्तिगुरुवरणनियमाद्याः परस्परप्रत्यनीकाः विशिष्टबुद्धिपूर्वकाः संहत्यैकार्थ-कारित्वात् पाचकाधिष्ठितानलोदकौदनसाधनवदिति ।**

ईदृशं स्वातंत्र्यं तस्य कुतः सिद्धमित्याशङ्क्य समाधत्ते—**कुत इति** । **विशिष्टबुद्धित्वमपीति** तन्वादिष्ववयवविन्यासः—प्रति-विशिष्टस्थानेष्वर्थक्रियायोग्यत्वेनावयवानां संयोजनं स्वतंत्रविशिष्टबुद्धिमच्चेतनव्यतिरेकेण न सम्भवति, नहि स्थपतेस्तादृशबुद्ध्यभावे
20 तत्तदर्थक्रियायोग्यशयनाशनस्नानपूजाविहारसभागृहादिसमलङ्कृतमहाप्रासादविरचनं सम्भवति, तस्मादस्ति तस्य तादृशी विशिष्ट-बुद्धिरिति स एव चेतनाचेतनाधिष्ठातेश्वर इति भावः । तन्वादीनां विशिष्टबुद्धिपूर्वकत्वं साधयति—**तन्वादीनीति** । ननु कमलादेः कण्टकादिमयूरचन्द्रिकादेर्विचित्रवर्णता न केनापि कृता दृश्यते किन्तु स्वभावत एव भवति, तथा तन्वादेरपि स्वभावत एव प्रवृ-त्तेर्विशिष्टबुद्धिपूर्वत्वाभावेन प्रोक्तहेतूनामनैकान्तिकत्वमित्याशङ्कते—**तन्वादीनीति** तन्वादयः स्वभावतः प्रवर्तन्ते संस्थानवत्त्वात् कण्टकादिवदिति प्रयोगः । **न हीति,** नहि कमलस्य केनचित् कण्टकाः कृताः मा ग्रहीत् कश्चिदित्यसूययेति सम्बन्धः । यदि
25 केनचित्कृतास्तर्हि नीलोत्पलस्य कुतो न कण्टकाः कृता इत्याह—**नीलोत्पलेति** । कुड्यादिषु चित्रकारेण यथा विचित्रवर्णता क्रियते नहि तथा केनचिद्विशिष्टबुद्धिना मयूरचन्द्रिकादेर्विचित्रवर्णता कृतेत्याह—**न चेति** । यदि तासां विचित्रवर्णता केनचित् कृता तर्हि चित्रकारेण यथा चित्रे मयूरादेश्चैतन्यं न प्रदत्तं तथा तेनापि मयूरादेश्चैतन्यं न प्रदेयं स्यादित्याशयेनाह—**चित्रकरे-ति** । समाधत्ते—**क्षीरेति,** स्वभावत एव यदि भवेत् तर्हि दध्यादिसंयोगमपि नापेक्षेत तदानीमपि स्वभावस्य दुरपह्नवत्वात्, न हि तदानीं क्षीरमक्षीरं नाम, दधिसंयोगादिकारणापेक्षमेव क्षीरादेर्दधिभवनं स्वभाव इति चेत्तर्हि विशिष्टबुद्ध्यधिष्ठितमेव क्षीरादि दधिम-
30 वनस्वभावमिति कुतो नाङ्गीक्रियते विनिगमकाभावात्, कर्ता न दृश्यत इति चेन्न, दृष्टमेव कारणं कारणं भवतीत्यनियमात् तस्माददृष्टकर्तृ-कत्वेन क्षीराद्यपि प्रतिज्ञान्तर्गतमेवेति भावः । पुरुषार्थमेव प्रधानस्याधिष्ठायकमिति वर्णयतां सांख्यानामपि पुरुषार्थस्य सर्गानन्तर-भाविमानस्याप्रवर्तकत्वादीश्वर एवाधिष्ठायक इत्याशयेन तन्मतानुसारेणेश्वरसाधकमनुमानमाह—**लघुप्रकाशेति** परस्परप्रत्यनीका

१ सि. क. °तनाकांकनार्थे सथा मा० ।

लघुप्रकाशेत्यादि यावत् पाचकाधिष्ठितानलोदकौदनसाधनवदिति, यथा परस्परप्रत्यनीकयोरम्युदकयोरप्रत्यनीकत्वविधायिना विशिष्टबुद्धिना पाचकेनाधिष्ठितयोः सत्यपि मिथः प्रत्यनीकत्वे तद्बुद्धिवशवर्तिनोः संहत्यकारित्वादोदनसाधनं दृष्टम्, तथा लघुगुरुणोः प्रकाशवरणयोः प्रवृत्तिनियमयोश्च मिथो विरुद्धयोरपि संहत्य महदादिभावेनैकार्थकारित्वाद्विशिष्टबुद्धिपूर्वकतेति ।

**अन्योऽन्याभिभवमिथुनवृत्तित्वपरिणामादिति चेन्न परिणामस्यापि कार्यत्वात् धर्मान्तरैक्यादिपरिणामो हि धर्मान्तरनिषेधो धर्मान्तराविर्भवनञ्च, तद्द्वयं कार्यम्, पूर्ववत् प्रतिज्ञार्थाव्यतिरेकात्, विशिष्टबुद्धिमद्विहितम् ।** 5

**( अन्योऽन्येति )** अन्योऽन्याभिभवमिथुनवृत्तित्वपरिणामादिति चेत्—स्यान्मतं सत्त्वरजस्तमसामेवाङ्गाङ्गिभावः, पुरुषार्थमुद्दिश्य प्रवृत्तानां वैषम्यपरिणामान्महदादिसाधनम्, तेषां प्रयोक्तेत्येतच्च न, परिणामस्यापि कार्यत्वात्, तद्व्याचष्टे धर्मान्तरैक्यादिपरिणामो हि धर्मान्तरनिषेधो धर्मान्तराविर्भवनञ्च तद्द्वयभूतं कार्यं, स तु परिणामः कार्यत्वात् पूर्ववत् प्रतिज्ञार्थाव्यतिरेकात् रथादिवत्, सोऽपि विशिष्टबुद्धिमद्विहितम्, तस्मादयुक्तं स्वत एव परिणमन्ते सत्त्वादय इति । 10

**अन्वाह 'एको वशी निष्क्रियाणां बहूनामेकं बीजं बहुधा यः करोति । तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम्' ॥ ( श्वेता० ६-१२ )**

**अन्वाह एक इति,** जिनमतानुसारेण, एकोऽद्वितीयः प्रधानो वा, वशी—ज्ञत्वस्वातंत्र्याभ्यां, निष्क्रियाणां—अज्ञास्वतंत्राणाम्, परतंत्रा ज्ञा अपि निष्क्रिया एव, बहूनां—अनन्तानां प्रधानादीनां कर्मकरणसम्प्रदानापादानाधिकरणप्रधानशक्तीनामनन्तानामपि प्रवर्त्तयितृत्वात् स्ववशीकर्त्तुं शक्तत्वा[द्व]शीति, एकं बीजं—प्रधानं महदादि विपरिणत्या बहुधा-ब्रह्मादिस्तम्बान्तानन्तभेदभिन्नजगत्तया यः करोति—सृजति- 15

लघ्वादयो विशिष्टबुद्धिपूर्वकाः संहत्यैकार्थकारित्वात्, अनलोदकयोः पाचकपूर्वकत्ववदिति प्रयोगः परस्परविरुद्धयोः संहत्यैकार्थकारित्वं विशिष्टबुद्धिं कञ्चन विना न घटते परस्परप्रत्यनीकौ च लघुगुरू प्रकाशावरणौ प्रवृत्तिनियमौ च, तस्मात्तावपि विशिष्टबुद्ध्यधिष्ठितौ महदादि सृजत इति भावः । ननु सत्त्वरजस्तमस्सु प्रयोजनवशादु[द्भू]तेनान्यतमेनान्यदभिभूयते, यथा सत्त्वं रजस्तमसी अभिभूयात्मनः शान्तां वृत्तिं लभते, रजः सत्त्वतमसी अभिभूय घोरां तमश्च सत्त्वरजसी अभिभूय मूढामिति, तथा सत्त्वादयोऽन्योन्यमिथुनवृत्तयः, सर्वस्य त्रिगुणात्मकत्वेन परस्परं मिलित्वा सर्वे सर्वजनकाः, एवमन्योन्यपरिणामाः, अन्यतमोऽन्यतममपेक्ष्य परिणमते, तस्मात् सत्त्वरजस्तमसामङ्गाङ्गिभाव एव प्रयोक्तेत्याशङ्कते—**अन्योऽन्येति,** अन्योऽन्याभिभववृत्तित्वात्, अन्योऽन्यमिथुनवृत्तित्वात् अन्योऽन्यपरिणामात् महदादिसर्गः, न तु विशिष्टबुद्धिपूर्वक इति भावः । अङ्गाङ्गिभावस्य नियमाद्वैषम्यं भवतीत्याशङ्कते—**स्यान्मतमिति** । तत्र हेतुमाह—**पुरुषार्थमुद्दिश्येति,** सत्त्वादयः पुरुषार्थमुद्दिश्य वैषम्यपरिणाममङ्गाङ्गिभावमुपगम्य महदादीन् साधयति यतस्तस्मात्तेषां सत्त्वादीनां प्रयोक्ताऽङ्गाङ्गिभाव एवेति भावः । अङ्गाङ्गिभावो हि तेषां वैषम्यलक्षणः परिणाम उच्यते, तदपि कार्यमेव, साम्यावस्थानिरुद्धो हि वैषम्यपरिणामो भवति, नहि साम्येनावस्थिताः सत्त्वादयोऽधिका हीना वा भवितुमर्हन्ति, तस्मात् परिणामस्य कार्यत्वात् पक्षान्तर्गतत्वेन विशिष्टबुद्धिपूर्वकत्वमेवेति समाधत्ते—**परिणामस्यापीति** । परिणामस्य कार्यत्वं समर्थयति—**धर्मान्तरेति,** यदा शक्त्यन्तरानुग्रहात् पूर्वधर्मं तिरोभाव्य स्वरूपादप्रच्युतो धर्मी धर्मान्तरेणाविर्भवति तदवस्थानं परिणाम उच्यते, उक्तञ्च 'जहद्धर्मान्तरं पूर्वमुपादत्ते यदाऽपरम् । तत्त्वादप्रच्युतो धर्मी परिणामः स उच्यते' इति । प्रधानादितो महदादिसर्जनमपि विशिष्टबुद्धिमत्पूर्वकमेवेत्यत्रोपनिषदं प्रमाणयति—**अन्वाहेति** । अचेतनवच्चेतना जीवा अपि परतंत्रत्वान्निष्क्रिया एवेत्याह—**परतंत्रा इति** । **क्षित्यादीति,** क्षित्यादयोऽष्टौ मूर्तयः सर्वत्र 20 25 30

१ सि. क. °प्रसादे° । २ सि. क. °पावका° । ३ सि. क. °योःप्रत्यनी° । ४ सि. क. पावकेना° । ५ सि. क. तास्वः । ६ सि. क. एवं ।

अधिति [illegible] तथा तथा व्यवस्थापयति, तमीश्वरं स्वतो भिन्नस्य भाव्यमानस्य प्रधानादिसंज्ञस्य भावयितारं, आत्मस्थं—आत्मनि स्थितं क्षित्याद्यष्टमूर्त्तिसर्वगतं सर्वत्र तासां सद्भावात्, येऽनुपश्यन्ति—तत्प्रसादादेव तज्ज्ञानानुसारेण योगाभ्यासप्रसादक्रमेण येऽनुपश्यन्ति धीराः—अविचलितयोगसमाधयः, को योगः ? 'प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा । तर्कः समाधिरित्येषः षडङ्गो योग उच्यते ॥' (अमृतनादोपनिषद् ६) तत्रेन्द्रियाणां विषयेभ्यो मनसश्च प्रत्याहरणं प्रत्याहारः, प्राणायामस्त्रिविधः रेचकः कुम्भकः पूरक इति, तत्र रेचक आन्तरं वायुं बहिर्निःकासयति नासिकाद्वारेण, पूरको बाह्यमन्तःप्रवेश्य पूरयति, कुम्भकः पूर्णकुम्भवदवस्पन्दं वायुं सामीप्येनावस्थापयति, ध्यानं इष्टदेवताचिन्तनं वा धारणा यथाऽभ्यासं हृदयादिषु प्रदेशेषु मनसोऽवस्थापनम्, यथा पूर्वं नाभौ ततो हृदये कण्ठे नासिकाग्रे भ्रुवोर्मध्ये ललाटमूर्द्धनीति । तर्कः शून्यागारगिरिकन्दराद्येकान्ते शुचौ देशे शरीरं मृज्वाऽऽस्यदन्ताग्राणि जिह्वाग्रेण सन्धाय पल्यङ्कस्वस्तिकवीरासनाद्यासनं समपादादिस्थानं वाऽऽस्थाय ध्यायतो मे समाधिर्भवतीति तर्कयेत्, अनेनेत्थं कृते क्रियाविशेषेणाऽऽहारविहारस्वाध्यायादिना ध्यानसमाधिर्भवतीति तदुपायविचार ऊहस्तर्कः, ध्यानयोगादिरतिः समाधिरित्येषः षडङ्गो योगः ।

वर्त्तन्तेऽत आसु स्थितत्वादसावेको वशी आत्मस्थ उच्यत इति भावः । करणत्रयपूर्वकाद्भक्तिविशेषाद्धृदि प्रतिष्ठितमीश्वरमनुभवतः परमप्रेमास्पदे निवेदितात्मनो योगिनो भक्त्याऽभिमुखीभूतस्तं योगिनमनुगृह्णाति प्रसादादित्याह—**तत्प्रसादादेवेति**, तज्ज्ञानं हि शास्त्रं श्रुतिस्मृतीतिहासपुराणानि तदनुसारेण तत्रोक्तयोगाभ्यासादिसाधनक्रमेण ये योगिनः परमात्मानं विजानन्तीति भावः । तत्र योगमाह—**को योग इति**, योगश्चित्तवृत्तिनिरोधः, तस्याङ्गानि षट् प्रत्याहारादीनि, **चित्तस्थैर्यकरत्वात्** । तत्र प्रत्याहारमाचष्टे—**तत्रेति**, षडङ्गमध्य इत्यर्थः, इन्द्रियविषयासम्प्रयोगकाले इन्द्रियाणां चित्तस्वरूपानुकारिता प्रत्याहार इति पातञ्जले, विजितेन्द्रियस्य हि चित्तानुकारीणीन्द्रियाणि भवन्ति, अजितेन्द्रियस्य तु चित्तमेवेन्द्रियानुकारि भवति । आसनजये सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः, स च रेचकपूरककुम्भकेष्वस्तीति त्रैविध्यं प्राणायाममाह—**प्राणाया० इति** यत्र कोष्ठ्यो वायुर्विरिच्य बहिर्धार्यतेऽसौ श्वासप्रश्वासयोर्गतिविच्छेदात्मा रेचकः प्राणायामः, यत्र बाह्यो वायुराचम्यान्तर्धार्यतेऽसौ गतिविच्छेदात्मा पूरकः प्राणायामः, नासापुटे संस्थितमेव वायुं सुनिश्चलं धारयत्यसौ स्तम्भवृत्तिः कुम्भकः प्राणायाम इत्याशयेनाचष्टे—**तत्र रेचक इति** । प्रत्ययान्तरेणापरामृष्टः स्वेष्टदेवतालक्षणध्येयालम्बनप्रत्ययप्रवाहाविच्छेदो ध्यानमित्याह—**ध्यानमिति** । यत्र देशविशेषे ध्येयं चिन्तनीयं तत्र चित्तस्यैकाग्र्येण स्थापनं धारणेत्याह—**धारणेति** । देशविशेषमेवाह—**यथेति**, तदुक्तं 'प्राङ्नाभ्यां हृदये वाऽथ तृतीये च तथोरसि । कण्ठे मुखे नासिकाग्रे नेत्रभ्रूमध्यमूर्धसु । किञ्चित्तस्मात् परस्मिंश्च धारणा दश कीर्त्तिताः' ॥ इति । विचारापरपर्यायं तर्कमाह—**तर्क इति**, तर्केण वितर्कप्रतिपक्षभावनात्मकेनाहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहाणां प्रतिष्ठा भवति ततश्च समाधिसिद्धये प्रयतते, तथा ह्येकान्ते शुचौ देशे मौनी सन् पद्मवीरभद्रस्वस्तिकदण्डासनसोपाश्रयपर्यङ्कक्रौञ्चनिषदनहस्तिनिषदनोष्ट्रनिषदनसमसंस्थानस्थिरसुखयथासुखानामन्यतममासनं विधाय ध्यायतः समाधिराविर्भवतीत्येवं चिन्तयति तथा तदनुष्ठानेन ध्यानसमाधिर्भवतीति विचारस्तर्क इति भावः । ध्यानमेव यदा ध्येयज्ञानादन्यज्ञानहीनं भवति [illegible]ता तद्विषय एवास्ति नान्यद्ग्रहणादि किञ्चित् ध्येयस्वभावावेशात् तदा ध्यानं तदेव समाधिरुच्यत इत्याह—**ध्यानेति** ध्यानस्य ध्येयेन सह यो योगो विषयीकरणं तत्र रतिः सर्ववृत्तिनिरोधरूपं स्थैर्यं समाधिरित्यर्थः । समाधिर्द्विविधो भवति सम्प्रज्ञातोऽसम्प्रज्ञातश्चेति, वितर्कविचारानन्दास्मितानुगतः समाधिः सम्प्रज्ञातः, निरोधश्चित्तस्य समाधिरसम्प्रज्ञातः, आद्यः सालम्बनः, द्वितीयो निरालम्बनः, सम्प्रज्ञातश्च वितर्कादिचतुष्टयानुगतः, विचारादित्रयानुगतः, आनन्दादि-

१ सि. क. धारकः ।

अनेन योगेन सर्वत्र क्षित्यादिमूर्त्तमीश्वरं दृष्ट्वा पश्चाद्भावितात्मा तमात्मस्थमेव पश्यति—यदत्र मम शरीरे कठिनं सा पृथिवी परमेश्वरमूर्तिः, यद्द्रवं तज्जलमूष्मा तेजः चलं वायुः सुषिरमाकाशः, यश्चैतन्यं स यजमानः, चक्षुः सूर्यो जिह्वा सोमो यमो वेत्यन्येष्वप्यवयवेषु यथासम्भवं येऽनुपश्यन्ति ते धीराः शाश्वतीं शान्तिमाप्नुवन्ति तं एवेश्वरेण सायुज्यं निर्वाणं मोक्षमित्यर्थः, नेतरे प्रधानपुरुषनियत्यादिकारणिन इति।

नयस्वरूपज्ञानार्थमाह— 5

**अयं विधेरुभयभाक्, विधिर्व्याख्यातः पूर्वमनपवादप्रवृत्तिः तस्योत्सर्गाद्विधानात्मा विधिर्विधीयते सर्वसर्वात्मकत्वात्, नियमः सन्निधिप्रयोज्यसतोरप्रवृत्तेरसत्त्वम्, तयोरसत्सत्त्वात्, स्वतंत्रस्य कर्त्तुर्ज्ञस्यैव भवनात् तस्मान्नियम्यते च।**

**(अयमिति)** अयं विधेरुभयभाक्—उभयं विधिं नियमञ्च भजत इत्युभयभाक् विधिर्व्याख्यातो लोकवदिति पूर्वमिति स्मारयति, पुनः संक्षेपेण व्याचष्टे—अनपवादप्रवृत्तिः—न कश्चिदर्थमयम [प] हरति 10 किं न एतेन ? यदि सामान्यं यदि विशेष इत्यादि, तस्य विधेरुत्सर्गाद्विधानात्मा विधिर्विधीयते, कस्मात् ? सर्वसर्वात्मकत्वान्निरपवादः प्रवर्त्तन एव प्रवर्तते न कचिद् व्याहन्यते, अयं हि नयः सर्वं सर्वात्मकमितीच्छति, यथा सूचितं, क ? सन्निध्यापत्तिव्याख्याने तदेवात्रापि वक्ष्यते, नियमः सन्निधिप्रयोज्यसतोरप्रवृत्तेः—यावेतावनन्तरोक्तौ सन्निधिभव [न] व्यापत्तिभवनमहार्थौ ईश्वर [:] प्रवर्त्त्यो वा प्रयोज्यप्रधानाण्वादिर्भावः तयोर्द्वयोरप्यप्रवृत्तेरसत्त्वम, किं कारणं ? तयोरसत्सत्त्वात् तदुभयं ह्यसदेव 15 सदुच्यते, स्वतंत्रस्य कर्त्तुर्ज्ञस्यैव भवनात् तद्विलक्षणस्याभवनापन्नस्याप्रवृत्तस्यासत्त्वात् खपुष्पवत्, तस्मान्नियमश्चेति विधिर्विधीयते नियम्यते चेति, ततोऽयं विधिरुभयभागिति।

शब्दार्थोऽधुना—

**सादृश्यं सामान्यञ्च शब्दार्थः, ननु सामान्यभावेकल्यात्म पुरुषनियत्यादि, सर्वसर्वात्मकत्वादिति पूर्ववादप्रसङ्ग इति चेन्न सर्वसर्वात्मकत्वेऽपि च स्वार्थवत्त्वात्, अभिहितन्यायेन** 20 **सत्यादिशब्दादिप्रत्ययादिविकल्पप्रत्ययस्य सत्यार्थत्वात् अभिहितप्रत्ययस्य सत्यार्थत्वात्।**

द्वयानुगतः, अस्मितामात्रश्चेति चतुर्विधः, तत्र प्रथमावलम्बनेनाह—**अनेन योगेनेति**। नयस्यास्योपसंहारव्याजेनाह—**अयमिति, अयं विधेरुभयभागिति,** नयोऽयं विधिविषये विधानं नियमञ्च भजते, सर्वसर्वात्मकत्वाभ्युपगमात् कञ्चिदप्यर्थमनपोह्य प्रवर्त्तनात् विधिमुत्सर्गतो विधीयत एव, स्वतन्त्रकर्तृज्ञस्यैव भवननियमनान्नियमरूपोऽपीत्युभयभागिति भावः। अमुमेव भावं स्फुटयति—**विधिर्व्याख्यात इति,** प्रथमेऽरे इति भावः। सन्निधिभवनरूप ईश्वरः, आपत्तिभवनरूपः ईश्वर- 25 प्रवर्त्यः प्रधानोऽण्वादिर्वा, एतयोर्द्वयोरप्यभाव एव, अनापन्नस्य सन्निधिभवनस्याभावात्, तदभावादेव च प्रधानादीनामप्यभावः, भाव्यमानत्वात्, भावयितारमन्तरेण भाव्यत्वानुपपत्तेरित्याशयेनाह—**नियम इति**। कोऽसावस्य नये शब्दार्थ इत्यत्राह—**सादृश्यं सामान्यञ्चेति** सदृशपरिणतिरूपं सामान्यं शब्दस्यार्थो न व्यक्तिः, न वाऽन्यापोहः, चः पुनरर्थे, अयं नयो विधेरुभयभाक्, तथा शब्दार्थोऽपि सादृश्यभूतं सामान्यमिति भावः, सामान्यमत्र न नैयायिकाभिमतं व्यक्तिभिन्नं जातिरूपं विवक्षितम्, किन्तु वस्तुनो व्याकारतया व्यक्तिभ्यो भिन्नाभिन्नं जात्युपाधिसाधारणं सादृश्यरूपं सामान्यमिति, तच्च जात्या 30

१ सि. क. तनैवे०। २ सि. क. विशेषण। ३ सि. क. तत्कचिद्। ४ सि. क. सहार्थं।

(**सादृश्यमिति**) सादृश्यं सामान्यञ्च शब्दार्थः, वाक्यार्थस्य वक्ष्यमाणत्वात् पदार्थ इति गम्यते, सदृशैः समानमानैर्मीयत इति समानम्, समानं दृक् यत्र द्रष्टॄणां तत् सदृशं, सदृशं समानं समानभावः सामान्यं जातिलिङ्गप्रत्ययाभिधास्विति, नान्यापोहो न समानवस्त्वतिरिक्ततत्त्वादि वा, तदनुपपत्तेः, एतत्सामान्यं शब्दार्थः। ननु सामान्यमविकल्पात्म पुरुषनियत्यादि सर्वसर्वात्मकत्वादिति पूर्ववादप्रसङ्ग
5 इति चेन्नेत्युच्यते सर्वसर्वात्मकत्वेऽपि च सृष्ट्यर्थवत्त्वात्—जगत्सृष्टिलक्षणोत्सर्गव्यापित्वात् तदर्थवत्त्वादस्य नयस्य नाविकल्प इति संभत्स्यते प्रकृतशब्दार्थः, अभिहितन्यायेन सत्त्वादिशब्दादितत्त्वादिविकल्पप्रत्ययस्य सत्यार्थत्वादद्वैतप्रत्ययस्यासत्यार्थत्वादिति पदार्थ उक्तः।

वाक्यार्थोऽधुना—

**वाक्यमपि च पृथक् सर्वं पदम्, यथा देवदत्त ! गामभ्याज शुक्लामित्यत्रैकैकं पदं**
10 **वाक्यम्, तस्मादेव, देवदत्तोऽपि हि गवात्मकोऽभ्याजात्मकश्च तथाप्रवर्त्तनात्तत्तदापत्तेः, तान्यपि तथापत्तेरिति।**

(**वाक्यमपि चेति**) वाक्यमपि च पृथक् सर्वं पदमिति, वाक्येऽवधारिते तदर्थावधारणसौकर्यात्, 'आख्यातः शब्दसंघातो जातिः संघातवर्त्तिनी' [ वाक्यप० का० २ श्लो० १ ] इत्यादिषु वाक्यलक्षणविकल्पेष्वस्य नयस्य मतेन पृथक् सर्वं पदं वाक्यं, वाक्यार्थः पृथक् पृथक् सर्वपदार्थ
15 इति, यथा 'देवदत्त ! गामभ्याज शुक्लां' (**महाभा० अ० १ पा० १ सूत्रे १**) मित्यत्रैकैकं पदं वाक्यम्, किं कारणं ? तस्मात्—सर्वसर्वात्मकत्वादेव, यस्माद्देवदत्तोऽपि गवात्मकोऽभ्याजात्मकश्च तथाप्रवर्त्तनात् तत्तदापत्तेः तान्यपि तथेति तस्मात् सर्वसर्वात्मकत्वात् पृथक् पृथक् सर्वं पदं वाक्यमिति।

**एतस्य विध्युभयस्य द्रव्यार्थभेदोऽर्थः, पूर्वविरुद्धत्वान्नयानाम्, सङ्ग्रहदेशत्वा-**

20 लिङ्गेन ज्ञानेन नाम्ना च सामान्यं भवतीति तात्पर्यम्। व्यावर्त्यमाह-**नान्यापोह इति**, न तावत् गवान्यापोहोऽर्थो गोशब्दस्य, प्रथमं गोरनिश्चये गवान्यस्याज्ञानाद्गवान्यापोहो दुर्ज्ञान एवेति कथं स शब्दार्थः स्यादवस्तुत्वादन्यापोहस्य खपुष्पवदिति भावः। **न समानेति**, सदृशपरिणतवस्तुव्यतिरिक्तस्य वस्तुतत्त्वभूतस्य सामान्यस्य व्यक्तिव्यतिरेकेणादर्शनात् सम्बन्धानुपपत्तेश्च न सामान्यरूपतेति भावः। एतदभिप्रायेण हेतुमाह-**तदनुपपत्तेरिति**। ननु यदि सामान्यं शब्दार्थस्तर्हि तस्य पुरुषनियत्यादेरिव नामजात्यादिकल्पनाविषयत्वेन तथाविधसामान्याभ्युपगन्तृत्वेऽस्य नयस्य पूर्वनयाविशिष्टता स्यादित्याशङ्कते-**नन्विति**,
25 सामान्यमिदं जगत्सृष्टिं विदधाति तदपि जगत् सत्यम्, न त्वद्वैतवादवदसत्यत्वं जगत इत्यभ्युपगमात्, पूर्ववादादस्य भिन्नत्वादित्याशयेन समाधत्ते-**सर्वसर्वात्मकत्वेऽपीति** सामान्यस्य प्रधानादेः सर्वसर्वात्मकत्वेन सामान्यरूपत्वेऽपि वास्तविकेन जगत्सृष्टिरूपेणार्थवानिति भावः। यथार्थतामेव संग्राह-**सत्त्वादीति**। को वाक्यार्थ इति शङ्कायां तत्प्रतिपादनार्थं प्रथमं वाक्यमेव दर्शयति-**वाक्यमपीति**, कुतः प्रथमं वाक्यस्य निरूपणं न तु वाक्यार्थस्येत्यत्राह-**वाक्येऽवधारित इति**। **यथेति** देवदत्त ! गामभ्याज शुक्लामित्यादौ देवदत्तादिपदान्येव वाक्यम्; अन्यथाऽपरपदोच्चारणकाले पूर्वपदस्यान्तर्हितत्वात्
30 पदसमुदायासम्भवेन वाक्यमसदेव स्यात्, तस्माद्देवदत्तपदमभ्याजादिपदात्मकम्, तदपि च [illegible]कं सर्वस्य सर्वात्मकत्वात्, ननु यद्येकस्मादेव पदात् सकलवाक्यार्थप्रतीतावपरपदोपादानवैयर्थ्यं प्रसज्यत इति चेन्न, प्रतिपत्तृषु वाक्यार्थस्य व्यङ्ग्यव्यञ्जकतया सार्थक्यात्, देवदत्तपदेन देवदत्तकर्तृकगवाभ्याजनादेवात्र वक्तुरभिप्रेतो न तु देवदत्तकर्तृकभोजनादिरिति व्यञ्जकत्वात् तस्मादेकस्मादेव पदात् सर्वपदोपस्थितौ वाक्यार्थोऽपि पृथक् तत्तत्पदोपस्थापित एवेति भावः, नयस्यास्य किं द्रव्योऽर्थः पर्यायो वेत्यत्राह-**एतस्येति**। द्रव्यविशेषोऽस्य नयार्थः, पूर्वनयसम्मतपुरुषाद्यविकल्पद्रव्यापेक्षयाऽत्र विकल्पयुक्तस्य

**द्रव्यार्थः, द्रव्यमपि गुणसन्द्रावः, विध्युभयनयत्वात् सन्निहिततद्विधशक्तीश्वरापृथक्त्वादण्वादीनां तदेकैकसर्वात्मकत्वाच्च तेनापि तद्वशित्वात् ।**

(**एतस्येति**) एतस्य विध्युभयनयस्य द्रव्यार्थभेदोऽर्थः, पूर्वविरुद्धत्वान्नयानाम्, अविकल्पार्थाद्विधिविधिनयाद्विकल्पार्थद्रव्यार्थता भिद्यते, अथोक्तानां नयानां कस्मिन्नन्तर्भाव इत्यत आह सङ्ग्रहदेशत्वाद्द्रव्यार्थः, सङ्ग्रहनयस्यापि शतधा भेदात्तद्देशः तदेकदेशः द्रव्यशब्दार्थः, कतमस्मिन् 5
विग्रह इति चेदुच्यते द्रव्यमपि गुणसन्द्रावः, तद्व्याख्या सम् एकीभावे द्रु गतौ तस्माद्गुणानामेकीभावेन द्रवणम्, कारणे कार्यस्य सत्त्वात्, सतामेव सुखादीनां रूपादीनां पृथक् पृथक् सन्निहितानामैक्यगमनाज्जीवपरिणामः, सङ्क्रमनमाह—विध्युभयनयत्वात् सन्निहिततद्विधशक्तीश्वरापृथक्त्वादण्वादीनां तदेकैकसर्वात्मकत्वाच्च, तेषां भवत्वेकीभावो मा भूदीश्वरस्येति [चेत्] नेत्युच्यते तेनापि तद्वशित्वात्—सन्निहिततच्छक्तिनापि सहेश्वरेणैकीभावे तच्छक्तिव्यक्तेर्नान्यथेति, तत एव चास्य नयस्याद्वैतवादाद्भेदः । 10

आह—

**किं स्वमनीषिकया तदुच्यते ? न, उपनिबन्धनमस्य 'दुविहा पण्णवणा पण्णत्ता जीवपण्णवणा अजीवपण्णवणा चे' ति, अथवा 'किमिदं लोएत्ति पवुच्चई ? गोयमा ! जीवा चेव अजीवा चेव, एवं रयणप्पभा जाव ईसीपब्भारा समयावलियादि' ॥**

(**किमिति**) किं स्वमनीषिकया तदुच्यते ? आहोस्विदस्त्यस्य किञ्चिदुपनिबंधनमार्षमपीति ? 15
अस्तीत्युच्यते—उपनिबन्धनमस्य 'दुविहा पण्णवणा पण्णत्ता, जीवपण्णवणा अजीवपण्णवणा चे'ति, (**पण्ण० सू० १**) अथवा 'किमिदं लोएत्ति पवुच्चई ? गोयमा ! जीवा चेव अजीवा चेव, एवं रयणप्पभा जाव ईसीपब्भारा समयावलियादि' (स्था० २. उ. ४) ॥

**इति विध्युभयारस्तृतीयो नयचक्रस्य ॥**

द्रव्यस्यार्थतया विशिष्टतेति भावः । अत एवाह—**पूर्वविरुद्धत्वादिति** । द्रव्यार्थे कस्मिन्नन्तर्भाव इत्यत्राह—**सङ्ग्रहदेशत्वादिति** । केन विग्रहेण द्रव्यार्थोऽसावित्यत्राह—**द्रव्यमपीति,** सत्त्वरजस्तमांसि गुणास्तत्परिणामरूपाश्च तदात्मका एव शब्दादयः पञ्च गुणाः, तत्संघातरूपञ्च घटादिद्रव्यम्, न नु तद्व्यतिरिक्तमवयविद्रव्यमस्ति, किन्त्वेकीभावेन द्रवणमेव द्रव्यमित्याशयेनाह—**तद्व्याख्येति** । ननु ईश्वरव्यतिरिक्तस्य प्रधानाण्वादेः प्रत्येकं सर्वात्मकत्वादेकीभावेन सङ्क्रमनलक्षणं द्रव्यत्वं स्यात्, नत्वीश्वरस्य तस्यासर्वात्मकत्वादित्याशङ्कते—**तेषामिति,** ईश्वरो हि ज्ञः स्वतंत्रश्च प्रधानाण्वादीनां तथातथाविनिवेशनसन्निहितशक्तिमांस्तात एव प्रधानाण्वादिना सह यदैकीभावं गच्छति तदैव प्रधानाण्वादीनामीश्वरस्य च शक्तिः व्यक्तीभवति, नान्यथेति तस्याप्येकी- 25
भावोऽस्त्येवेत्याशयेन समाधत्ते—**तेनापीति**। उपपादितनयस्यार्षं निबन्धनमाह—**किमिति**। **दुविहा इति,** द्विविधा प्रज्ञापना प्रज्ञप्ता, जीवप्रज्ञापना अजीवप्रज्ञापना चेति, । तथा किमिदं लोक इति प्रोच्यते ? गौतम ! जीवाश्चैव अजीवाश्चैव, एवं रत्नप्रभा यावत् ईषत्प्राग्भारा समयावलिकादि, इति छाया ।

**इत्याचार्यविजयलब्धिसूरिकृते द्वादशारनयचक्रस्य विषमपदविवेचने तृतीयो विध्युभयारः ॥**

# चतुर्थो विधिनियमारः ।

नन्वेवं त्वदुक्ता एवोपपत्तयः प्रत्येकं सर्व[प्रा]णीश्वरत्वं साधयन्ति, बाह्याध्यात्मिकसुख-दुःखमो[ह]मात्रत्वाज्जगतः, सदसद्वेद्यमोहान्तरायभेदानां सुखादित्रयविपाकफल[त्वा]नतिवृत्तेस्तदात्मसंवेद्यलक्षणत्वात् कर्मणः, सुखादिसंवेदनेनैव हि लक्ष्यते, अतः कारणे कार्यस्य सत्त्वात्

5 कार्ये कारणोपचारात् सुखादयः कर्म, अन्नप्राणत्ववत् ।

**नन्वेवमित्यादि**, पूर्ववदस्मिन् दर्शने न परितुष्यतः उत्थानमित्यभिसम्बन्धः, नन्वित्यनुज्ञापने, नन्वेवं त्वदुक्ता एवोपपत्तयः प्रत्येकं सर्वप्राणीश्वरत्वं साधयन्ति, बाह्याध्यात्मिकसुखदुःखमोहमात्रत्वाज्जगतः, सदसद्वेद्यमोहान्तरायभेदानां सुखादित्रयविपाकफलत्वानतिवृत्तेस्तदात्मसंवेद्यलक्षणत्वात् कर्मणः, सुखादिसंवेदनेनैव हि—स्वकार्येण फलेन लक्ष्यते—अनुमीयते सामान्यतो दृष्टानुमानेन देशा-

10 न्तरप्राप्त्येवाऽऽदित्यादिगतिः, अतः कारणे कार्यस्य सत्त्वात् कार्ये कारणोपचारात् सुखादयः कर्म, अन्नप्राणत्ववत्, अदृष्टं धर्माधर्माख्यं परैरिष्टमेव कर्मेति ।

आत्मापि कर्म ततः सुखादि, पुनरपि सुखाद्रागादिफलं ततः पुनः कर्म ततः सुखादिफलम्, तच्च जीवपरिण[ामा]त्मसात्कृतकार्मणयोग्यपरिणामपरमाणुसमूह एवात्मस्थमेकीभूतञ्चात्मना, तच्च संवेद्यम्, कर्त्तुः संवेदनात्, प्राक् प्रतिपादितं हि द्व्यणु[कत्र्यणुकादि]संयोगः

15 पृथिव्युदकव्रीह्यङ्कुरादिपरिवृत्तिरूपेणात्मनस्तेषाञ्चैकत्वं सर्वसर्वात्मकत्वञ्च, तस्मात् कर्मकारणां जगत्प्रवृत्तिं साधयन्ति त्वदुक्ता [एवोपपत्तयः] ।

([आ]त्मापीति) आत्मापि कर्म, तच्चादृष्टमात्मनो रागादिकर्मविपाकपरिणत्यवस्थस्य प्रयोग-

एतस्यापि प्रकृतिपुरुषस्य परस्परात्मतानापत्तौ कर्मफलसम्बन्धाभावे संसारमोक्षाद्यनुपपत्तेरीश्वरस्यापि च प्रवर्त्त्यपुरुषकर्मकृतत्वादात्मनैवात्मनः कार्यकारणत्वात् एकं सर्वं सर्वमेकमिति विधिनियम्यत्वाद्विधिनियमदर्शनोत्थानमिति प्रदर्शयितुं पूर्वनयं

20 दूषयितुमारभते—**नन्वेवमिति**। चतुर्णां नयानामेतेषां द्रव्यार्थत्वादकृतकनित्यैकान्तता बोध्या । यथा पूर्वं विध्यादिनयेष्वपरितोषाद्विधिविध्यादिनयान्तरारम्भः कृतस्तथैव विध्युभयनये परितोषाभावाद्विधिनियमनयारम्भ इति सङ्गतिं दर्शयति—**पूर्ववदिति** । सर्वप्राणीश्वरत्वं साधयितुमादौ कर्मपूर्वकत्वं जगतः साधयति—**बाह्याध्यात्मिकेति**, बाह्याध्यात्मिकस्वरूपं जगत् सुखदुःखमोहमात्रम्, तच्च सुखादि सदसद्वेद्यमोहान्तरायकर्मणां फलभूतम्, सद्वेद्यात् सुखस्यासद्वेद्याद्दुःखस्य मोहान्तरायाभ्यामावरणात्मकतमोलक्षणस्य मोहस्योदयादिति भावः । ननु सदसद्वेद्यादिकर्मसद्भावे किं मानमित्यत्राह—**तदात्मेति** सुखाद्या-

25 त्मना संवेद्यत्वमेव हि कर्मणो लक्षणम्, तथा च कार्यविज्ञानात् कारणविज्ञानं भवतीति भावः । पूर्ववच्छेषवत्सामान्यतो दृष्टमिति त्रिविधेष्वनुमानेषु केनानुमीयत इत्यत्राह—**सामान्यत इति** यथा देवदत्तस्य गतिपूर्विका देशान्तरप्राप्तिर्दृष्टा तथा सूर्यादीनां सामान्येन देशान्तरप्राप्त्या गतिरनुमीयते, तत्र देशान्तरप्राप्तिः कार्यं कारणमादित्यगतिस्तथात्रापि सुखदुःखादिकार्येण कारणं कर्मानुमीयत इति भावः । अन्नं कारणं कार्यस्य प्राणस्योपचारात् अन्नं प्राणा इति यथा व्यवह्रियते तथैवात्रापि सुखादयः कर्मोच्यते कर्मसु कारणेषु सुखादीनां सद्भावात्, कार्ये सुखादौ कारणस्य कर्मण उपचाराच्चेत्याह—**अत इति** । परेषामपि

30 कर्मसद्भावोऽभिमत एवेत्याह—**अदृष्टमिति**, ततश्च बाह्याध्यात्मिकं जगत् कर्मेति सिद्धमिति भावः । न केवलमचेतनं जगदेव कर्म, अपि तु चेतनमपीत्याशयेनाह—**आत्मापीति** । रागद्वेषमोहपरिणामाभ्यञ्जनलक्षणस्यात्मनः प्रयोगपरिणामात् कर्मतामापन्नाः पुद्गलविशेषा एवादृष्टमुच्यन्ते इत्याह—**तच्चेति** तस्मात् कर्मणः सुखं सुखाद्रागः रागाच्च कर्म ततश्च सुखादिफलमित्येवं

---

१ सि. क. कर्मकत्वं । २ सि. क. °त्यवस्थ० ।

परिणामात् कर्मतामापन्नम्, [ततः सुखादि] पुनरपि सुखाद्रागादिफलं—फलादि, ततः पुनः कर्म ततः सुखादिफलं तच्च जीवपरिणामात्मसात्कृतकार्मणयोग्यपरिणामपरमाणुसमूह एवात्मस्थमेकीभूतश्चात्मना। यथोक्तम् 'योगैः सक्तन् स्वयोगान्मूर्त्तः सत्त्वाद्यमर्थमादत्ते। आत्तस्य चानुभवनं बन्धं प्रति स च ततोऽनन्यः ॥' ( ) तच्च संवेद्यम्, कर्त्तुः संवेदनात्, ततः संवेद्यलक्षणत्वात् कर्मणः 'सर्वप्राणीश्वरतेति सम्भत्स्यते, कर्म हि प्रतिप्राणि नियतकर्त्तृकञ्च विपाकसुखादित्वेन संवेद्यते, 5 नाणूनामेव कर्मपरिणामापन्नानामात्मैकीभावेन वेदनं संवेदनम्, तेन च पुरुषेण तेषां तथा प्रयोजनात् कर्तृत्वम्, अतः सुखाद्यदृष्टाणूनामपि च कर्मत्वादित्याह—प्राक् प्रतिपादितं हि द्व्यणुकत्र्यणुकादिसंयोगैः पृथिव्युदकव्रीह्यङ्कुरादिपरिवृत्तिरूपेणात्मनः तेषाञ्चैकत्वं सर्वसर्वात्मकत्वञ्च, तस्मात् कर्मकारणां जगत्प्रवृत्तिं साधयन्ति त्वदुक्ता एवोपपत्तयः।

इतश्च कर्मपूर्वकं जगत्, कर्मप्रवर्त्तनाभ्युपगमात् सर्वप्राणिनाम्, कर्त्तृत्वात् कर्त्तुरेव 10 भोक्तृत्वाभ्युपगमात् तस्यैव भवितुश्च प्रयोजनात्।

(इतश्चेति) इतश्च कर्मपूर्वकं जगत्, कर्मप्रवर्त्तनाभ्युपगमात् सर्वप्राणिनाम्—कर्मवशादेव हि प्राणिनः शुभाशुभजातिकुलरूपाद्युत्कर्षापकर्षाः, यथोक्तम् 'स्वैकर्मणा युक्त एव सर्वोऽह्युत्पद्यते जनः। स तथाऽऽकृष्यते तेन न यथा स्वयमिच्छति ॥' (सूत्रकृ० टी० पृ० २१०) 'यथाऽऽहारः काले परिणतिविशेषक्रमवशात् सुखं पथ्योऽपथ्योऽसुखमिह विधत्ते तनुभृताम्। तथा धर्माधर्माविति 15

परम्परा प्रवर्त्तते अस्थगिताऽऽस्रवद्वारस्य, स एव संसार इत्याशयेनाह—पुनरपीति। रागादिगुणयोगात् कायादिकरणयोगाच्चात्मनोऽनाभोगिकवीर्यपरिणतिर्भवति तथाविधस्यात्मनः कार्मणशरीरपरिणाम आत्मैक्यात् योगकषायपरिणतियुतोऽपि कर्मयोग्यपुद्गलग्रहणे आत्मसात्करणे एकत्वपरिणामापादने समर्थो भवति तदेवमात्मसाद्भूतकर्मयोग्यपरमाणुसमूह एव कर्मोच्यत इत्याशयेनाह—तच्चेति। तच्च सुखादिफलमित्यर्थः, सुखादीनामेषां पौद्गलिकत्वात् कार्यकारणयोरभेदाच्चेति भावः, तच्च सुखाद्यभिन्नं कर्म कर्त्रा संवेदनात् संवेद्यमतस्तस्य सर्वेश्वरत्वमित्याह—तच्चेति, सुखाद्यात्मककर्मेत्यर्थः। जगतः कर्ममात्रतया कर्मणश्चात्मसंवेद्यत्वात् सर्वेषामात्मनां सर्वज्ञता, कर्मात्मनोरैक्यपरिणामात् कर्मणो जगत्कर्त्तृत्वेनात्मनोऽपि जगत्कर्तृतयेश्वरत्वमिति सर्वप्राणिनामीश्वरत्वमित्याशयेनाह—ततः संवेद्यलक्षणत्वादिति। एतदेवोपपादयति—कर्म हीति कर्मत्वपरिणतानणूनेवासौ वेत्तीति न, अपि तु सर्वं सुखादि, तथैवाणून् प्रयोजयति सुखादीनामपि पौद्गलिकत्वात्सर्वकर्तृत्वमिति भावः। सर्वसर्वात्मकत्वं पूर्वप्रतिपादितं स्मारयति—प्रागिति तथा च कर्माणूनामेव द्व्यणुकादिक्रमेण जगद्रूपेण सुखाद्यनात्मना च प्रवृत्तेः कर्मपूर्वकं जगदिति भावः। कर्मैवेष्टानिष्टफलप्रदं जगद्वैचित्र्यकारणम्, तत्प्रवर्त्तक आत्मा, सोऽपि न सन्निधिमात्रप्रवृत्तिः किन्तु तथा तथा भविता, अन्यथा कर्मण एव कर्त्तृत्वात् फलोपभोग आत्मनो न स्यात्, अकर्तुर्भोक्तृत्वेऽकृताभ्यागमकृतविप्रणाशदोषौ भवत इत्याशयेनाह—इतश्चेति। कर्मण एव हेतोर्जीवस्य शुभाशुभादेरुत्कर्षापकर्षौ भवत इत्याह—कर्मवशादेव हीति। कर्मप्राधान्ये कर्मवादिगाथां प्रमाणयति—स्वकर्मेति। प्राग्भवोपात्तहिताहितफलप्रदकर्मयुक्त एव सन्नयं प्राणी नरादिभावेनोत्पद्यते, कर्मणैव जीवः सुखी दुःखी वा कुलीनोऽकुलीनो वा सुरूपः कुरूपो वा क्रियते, न त्वसौ जीवो यथेच्छति तथा भवितुं शक्नोतीति प्रथमकारिकार्थः। यथाऽऽहार इति यथाऽऽहारकाले आहर्ताऽऽहृतान् परिणतिविशेषक्रमवशात् रसखलतयाऽनाभोगवीर्यसामर्थ्यात् परिणतिमानयति तथा रागद्वेषस्नेहावलेपावलीढसकलात्मप्रदेशो यदा भवति तदा येष्वेवाकाशदेशेष्ववगाढस्तेष्वेवावस्थितान् कार्मणविग्रह-

20, 25, 30

१ सि. क. सर्वेश्व०। २ सि.क. °कर्त्तृकांश्च। ३ सि. पदमिदं नास्ति। ४ सि.क. स्वकर्मयुक्त एवायं सर्वोऽप्युत्पद्यते नरः। स तथा क्रियते तेन न यथा स्वयमिच्छति।

विगतशङ्कामपि कथां कथं श्रोतुं नेमे विषयविषवेगक्षतधियः ॥' ( ) किञ्चा-
न्यत्–कर्तृत्वात्, प्राणिनामिति वर्त्तते, मा भूवन्नकृताभ्यागमकृतप्रणाशकर्त्रन्तरफलसंक्रान्त्या-
दयो दोषा इति सदसदाचाराः प्राणिन एव कर्त्तारो भोक्तारश्चाभ्युपगन्तव्याः, अन्यथा हिता-
हितप्राप्तिपरिहारार्थानां शास्त्राणामानर्थक्यप्रसङ्गात्, ततः कर्त्तुरेव भवितृत्वाभ्युपगमात्, कः
5 कर्त्ता ? यः स्वतंत्रः, यः स्वतंत्रो भवितापि स एव । स्यान्मतं नन्वीश्वरः प्रयोक्तृत्वात् कर्त्तेत्युक्तम्
नेत्युच्यते–तस्यैव भवितुश्च प्रयोजनात्–सर्वः प्राणी प्रत्येकं भविता प्रयोजयत्यात्मनाऽऽत्मानं स्वकृत-
कर्मविपाकात्मकरागद्वेषभयगौरवादिधर्मचोदितः। यथोक्तम् 'प्रयत्न एवापरजन्मजोऽयं सूर्यादयः श्राद्ध-
जनप्रवादाः । उत्पश्यतामेव हि दैवसिद्धिमुत्साहिनं श्रीर्भजते मनुष्यम् ॥' ( ) इति । तस्मात्
सत्त्वादिप्रधानाण्वादिषु सत्स्वपि प्रवर्त्त्येषु तेषामेव कर्मसाद्भूतानां प्राणिनां भवितृत्वात्तत्तदापत्तेः सर्व-
10 प्राणिनां स्वातंत्र्यात् कर्मवशप्रेरितकार्यकारणभावेन सततभवनात् तथाप्रवर्त्तकस्यैकैकस्य सर्वात्मकत्वात्
सर्वेश्वरतेति साधूक्तम् ।

इदानीं त्वदिष्टेश्वरकारणत्वे तु दोषा उच्यन्ते—

**ईश्वरात्तु कर्मणः प्रवर्त्तनं किं सतः ? असतो वा ? तद्यद्यभूतस्य ततश्चाद्वैतम्, तस्यापि तदात्मकत्वात्, भूतस्य चेत् प्रागपि तत्कर्मास्ति कारणे कार्यस्य सत्त्वात्, तच्चेश्वरात्मैव,
15 तनुकरणादिभाव्यवत् तथापि सुतरामद्वैतम्, तदात्मकत्वादेव पुरुषावस्थावत्, ईश्वरो भाव्यः तदात्मकार्थादि भवनवद्वा ।**

ईश्वरादित्यादि, इदं चिन्त्यं ईश्वरात् कर्मणः प्रवर्त्तनं किं सतोऽसतो[वा], किञ्चातः ?
तद्यद्यभूतस्य कर्मण ईश्वरः प्रवर्त्तकः ततश्चाद्वैतं पुरुषादिवादवत् प्राप्तम्, तस्यापि तदात्मकत्वात्
कर्मणोऽपीश्वरात्मकत्वात् ईश्वरस्यैव कर्मत्वेनोपपत्तेः । भूतस्य चेत्–अथ भूतस्य कर्मण ईश्वरात्
20 प्रवृत्तिस्तत एतत्प्राप्तं प्रागपि तत्कर्मास्ति कारणे कार्यस्य सत्त्वात्, तच्चेश्वरात्मैव तनुकरणादि भाव्यवत्,

योग्यानेनेकान् पुद्गलान् स्कन्धीभूतानात्मनि परिणामयति ततस्तानध्यवसायविशेषात् कांश्चिज्ज्ञानावरणीयतया कांश्चिद्दर्शनाच्छा-
दकत्वेनापरान् सुखदुःखानुभवयोग्यतया परान् दर्शनचरणव्यामोहकारितयाऽन्यान्नारकतिर्यङ्मनुष्यामरायुष्केनान्यान् गतिशरीरा-
द्याकारेणापरानुच्चनीचगोत्रानुभावेनान्यान् दानाद्यन्तरायकारितया व्यवस्थापयति, तामिमां कथां निःशङ्कामपि विषयविषवेगक्षत-
धियो नरः श्रोतुं नेच्छन्तीति द्वितीयकारिकाभावार्थः, तदेवं निजकर्मवशादेव शुभाशुभफलोपभोगिन इति प्रतिपादितम्। कर्मपूर्वकत्वेऽपि
25 जगतः कर्तृत्वमात्मनोऽवश्यमभ्युपेयम्, न तु सांख्यपुरुषवदकर्तृत्वम्, अकृताभ्यागमादिदोषात् शास्त्रवैयर्थ्यप्रसङ्गाच्चेत्याह–
कर्तृत्वादिति । न चेश्वरः प्रयोक्तृत्वात् कर्त्ता भवितुमर्हति, यो हि स्वतंत्रः कर्ता भविता स एव प्रयोक्ताऽपि, न ततोऽन्य
इत्याह–स्यान्मतमिति । इदं चिन्त्यमिति, अस्मिन् असतः कर्मणो यदीश्वरः प्रवर्त्तकस्तर्हि स्वात्मानमेवेश्वरः प्रवर्त्तयतीति
पुरुषवादवदयं वादः स्यात्, कर्मण ईश्वरस्वरूपत्वात् ईश्वर एव कर्मत्वेन भवन प्रेरयतीति प्रसक्तं, तच्च तव नेष्टमिति भावः ।
सतः कर्मणः प्रवर्त्तकत्वेऽप्ययमेव दोष इत्याह–भूतस्य चेदिति कारणे ईश्वरे कार्यस्य कर्मणः सत्त्वादीश्वर एव तथाऽऽपद्यते तथा
30 प्रवर्त्तते तथा नियतो भवतीति कर्मेश्वरस्वरूपमेव, यथा तनुकरणादिभाव्यम्, तन्वादीनामपि हि प्रधानाण्वादिकारितत्वेन प्रत्यक्ष-
तायामपि भवत्यन्तस्सन्निविष्टस्वातंत्र्यात्तत्स्वरूपलाभस्य तद्धशत्वादीश्वरकारितत्वमेवेति तदात्मत्वमेवं कर्मापि, अन्यथाऽनापन्न-
त्वादिभ्यः सन्निधिभवनाभाव ईश्वरस्याभाव एव भवेत्, तथा च सर्वस्येश्वरात्मत्वादद्वैतता प्राप्ता पुरुषावस्थावत्, सुषुप्ताद्यवस्थानां

१ सि. क. कः । २ सि. क. सत्त्वा० ।

तथाभूतेस्तथाप्रवृत्तेस्तत्तदापत्तेरित्यादिभिर्युक्तिभिः, तथापि सुतरामद्वैतं तदात्मकत्वादेव पुरुषावस्थावत्, ईश्वरो भाव्यः तदात्मकार्थादिभवनवद्वा ।

**अथ यस्मै प्रवर्त्त्यते यथा तेन तत्तत्प्राण्यात्मकं तदित्यत्रोच्यते तस्मात्तर्हि तत्तथाभूतं प्रत्येकं प्राणिनः कारणात् तद्वशात्तथेश्वरप्रवृत्तेः कृतं त्वदिष्टेनेश्वराख्येन, अथ तत् कृतमपि पुरुषकारराजप्रसादवदीश्वरापेक्षं प्रवर्त्तेत इत्यत्रोच्यते कर्तृतां प्रति स्वातंत्र्यं सिद्धं तस्यैव, पुरुषकर्मजन्यप्रसादराजवदेव ईश्वरस्याप्यन्यतरपुरुषकृतकर्मप्रत्ययप्रसादोत्पादनात् कर्मस्वातंत्र्यं प्रवृत्तौ फले वा ।** 5

(**अथेति**) अथ यस्मै प्रवर्त्त्यते यथा—अथाऽऽचक्षीथा न कर्मेश्वरात्मकम्, किं तर्हि ? यस्मै प्राणिने शुभमशुभं वा नरकतिर्यगमर[नर]विचित्रभेदरूपेण येन येन प्रकारेण प्रवर्त्त्यते तेनेश्वरेण तत्तत्प्राण्यात्मकं तदित्यत्रोच्यते, तस्मात्तर्हि तत्तथाभूतं प्रत्येकं प्राणिनः कारणात्, तस्मात्तस्मात्तथा तथा 10 भूतमित्यर्थः, तद्वशात्तथेश्वरप्रवृत्तस्ततस्तस्य प्रवर्त्तने स एवेश्वरः कृतं त्वदिष्टेनेश्वराख्येन, आत्मवशेन तथाप्रवर्त्तयतस्तस्य तस्य प्राणिन ईश्वरत्वं नेश्वरस्य, तथाप्रवर्त्त्यत्वात्, कर्मकरवत् । अथ तत्कृतमपि पुरुषकारराजप्रसादेवदीश्वरापेक्षं प्रवर्त्तेते—अथ मतं प्राणिभिः कृतमपि कर्मेश्वरकृतमेव, ईश्वरवशात् प्रवर्त्तमानत्वात्, तद्यथा द्वयोः पुरुषयोस्तुल्यपुरुषकारयोरपि राजा एकस्यैव प्रसीदति नेतरस्येति फलं राजवशेन दृष्टं न पुरुषकर्मवशेन, तथेश्वरवशात्तत्कर्मप्रवृत्तिरित्यत्रोच्यते, कर्तृतां प्रति तावत् 15 स्वातंत्र्यं सिद्धं तस्यैव—प्राणितोपितेश्वरेण प्राण्यनुष्ठेयकर्मप्रत्ययप्रसादोत्पत्तेः, तत्र च राज्ञो निमित्तमात्रत्वात्, पुरुषकृतकर्मजन्यप्रसादराजवदेव ईश्वरस्याप्यन्यतरपुरुषकृतकर्मप्रत्ययप्रसादोत्पादनात् कर्मस्वातंत्र्यं तत्कृतं हि कर्मैवेश्वरप्रसादमुत्पादयति, अन्यतरेण कृतं नेश्वरेणेत्यर्थः, अन्यतरपुरुषकृतकर्मप्रत्ययस्येश्वरप्रसादस्य तेनोत्पाद्यत्वात्, तस्मात् पुरुषकर्मापेक्षत्वादीश्वरप्रवृत्तेः कर्मप्राधान्यं प्रवृत्तौ फले वेति । 20

---

हि पुरुषात्मकत्वात् पुरुष एव सर्वं तथाऽयमपीति भावः । अथवा ईश्वरात्मकाः प्रधानाण्वादितनुकरणादयो भाव्यास्तथेश्वरोऽपि भाव्यः स्यात्, तथा च भावकान्तरापेक्षायामनवस्थेत्याशयेनाह—**ईश्वर इति** । ननु कर्मभूतमेव, किन्तु न तदीश्वरात्मकम्, यस्मै प्राणिने येन येन प्रकारेणेश्वरेण कर्म प्रवर्त्त्यते तदात्मकं तदित्याशङ्कते—**अथेति** । प्राणिभिर्हि यथा कर्म कृतं तथा कर्मोद्दीक्ष्यासौ प्रवर्त्तत इति फलितमेवम् सतीश्वर एव प्रवर्त्यः प्रवर्त्तकश्च कर्मेति कर्मण एवेश्वरत्वमित्युत्तरयति—**तस्मात्तर्हीति** । **आत्मवशेनेति** कर्मवशेन स्वतो वा कर्मात्मकप्राणिन एवेश्वरं प्रवर्त्तयन्तीति सर्वे प्राणिन ईश्वरास्सञ्जाता इति भावः । यथा 25 राज्ञा प्रवर्त्यः कर्मकरो नेश्वरः पराधीनत्वात्तथेश्वरोऽपीत्याह—**कर्मकरवदिति** । ननु प्राणिभिः कृतमपि कर्म फलदानायेश्वरेण प्रवर्तित एव प्रवर्त्तत इति वस्तुतस्तत्कृतमेव तदित्याशङ्कते—**अथेति** । दृष्टान्तं घटयन्नाह—**तद्यथेति** । समाधत्ते—**कर्तृतामिति** जीव एव कर्मकरणे स्वतंत्र इति त्वदुक्तित एव सिद्धः प्राणिकृतकर्मणा सन्तुष्ट ईश्वरः प्राण्यनुष्ठितकर्मानुगुणं प्रसन्नो भवतीत्यभ्युपगमात्, कर्मकरकर्मसु राज्ञो निमित्तत्ववत् प्राणिभिः स्वातंत्र्येण कृतेषु कर्मसु निमित्तत्वमेवेश्वरस्य न स्वातंत्र्यमिति भवदुक्त्या सिद्धमिति भावः । तथा च कर्मण एव स्वातंत्र्यमीश्वरस्य प्रवर्त्तने फलप्रदाने च, यथा कर्म तथेश्वरेण फलदानात्, न 30 स्वेच्छयेत्याशयेनाह—**तत्कृतं हीति** । प्राणिकृतं हीत्यर्थः । **अन्यतरेणेति** । नहि कर्म अन्यतरेणैव पुरुषयोर्द्वयोः कृतं नेश्वरेण

---

१ सि. क. भवं त्वदिष्टमीश्वराख्यम् । २ सि. क. °प्रसादादीश्वर॰ । ३ सि. क. कृवतां । ४ सि. क. नेतरेणेत्यर्थः ।

स्यान्मतं राजवदेव कर्मणः प्रवृत्तौ तत्फलदाने वा ईश्वरापेक्षत्वात् प्रधानं का[illegible]
न, यस्मात्—

**द्रव्यादिपञ्चकापेक्षं हि कर्म प्रवृत्तौ फलदाने वा स्वतंत्रम्, [illegible]त्यक्षवत्।**

**द्रव्यादिपञ्चकेत्यादि** यावत् प्रत्यक्षवत, द्रव्यं क्षेत्रं कालं भावं भवञ्चापेक्ष्य हि कर्मणां
5 प्रवृत्तिः, कृतानाञ्च फलं प्रत्यक्षत उपलभ्यते, स एव पुरुषः कर्त्ता द्रव्यं, दाता, देयं वा द्रव्यं
वस्त्रसुवर्णादि, क्षेत्रं ग्रामनगरारण्यभूम्यादि यत्र तत्प्राप्यते फलम्, कालः कस्मिंश्चित् काले दिवा रात्रौ
पूर्वाह्णेऽपराह्णे सद्यश्चिराद्वेति, भावः प्रसन्नः कुपित इत्यादि, भवः हस्तिमहामात्रयोः शरीरानुरूपाहार-
भूषणादिदानमिति, अत्र प्रयोगः परत्रापि प्राणिकृतफलं प्रतिनियतद्रव्याद्यपेक्षम्, सुखादिक्रियायाः
फलत्वात्, द्रव्यादिपञ्चकापेक्षसेवादिफलवत्, तस्माद्द्रव्यादिपंचकापेक्षमपि कर्म फलदाने स्वतंत्रम्—
10 [प्रति]प्राणि नियतेः प्रधानम्, नेश्वरं तत्कर्माऽपेक्षते परतंत्रत्वात्तस्येति।

**त्वदभिमतेश्वरस्तु यदि स्वतन्त्रः प्रधानादि वर्त्तयति ततः प्रति[पु]रुषनियामककर्मान-
पेक्षायां प्राणिगणस्य स्थानविग्रहेन्द्रियोपभोगलक्षणाविशेषः, तद्विशेषहेतोरीश्वरस्य समान-
त्वात्, स तु विशेषो द्रव्यक्षेत्रकालभावभवापेक्षकर्मनियतेः स्यात्, तस्मात् कर्मापेक्षमीश्वरत्वं
सर्वप्राणिनाम्।**

15 **त्वदभिमतेश्वरस्त्वित्यादि,** अस्तु तावदीश्वरस्य स्वातंत्र्यं कर्मानपेक्षा च, तस्य जगदुत्पा-
दनार्थं प्रधानादि वर्तयतः प्राणिनां कर्मकारणत्वे तदनपेक्षायाञ्च दोष उच्यते तद्यथा ततः प्रतिपुरुषेत्यादि,
पुरुषं पुरुषं प्रति द्रव्यादिपञ्चकत्वेन नियामकं नियतं यदि कर्म न स्यादीश्वर एवाविशिष्टो हेतुः स्यात्,
ईश्वराख्यस्य कारणस्याविशिष्टत्वादविशेषः स्यात्, कस्य? दैवमानुषतैर्यग्योनाख्यप्राणिगणस्य, कीदृग-
विशेष इति चेदुच्यते स्थानविग्रहेन्द्रियोपभोगलक्षणो विशेषो न स्यात्, कस्मात्? तद्विशेषहेतोरी-
20 श्वराख्यस्य समानत्वात्, स तु विशेषो द्रव्यक्षेत्रकालभावभवापेक्ष[कर्म]नियतेः प्रतिपुरुषञ्च नियामके

कृतमित्यर्थः। नन्वितरानपेक्षं कारणमेव हि प्रधानमुच्यते कर्म चेश्वरमपेक्ष्य प्रवर्त्तते फलं यच्छतीति कथं प्रधानमित्याशंकायां द्रव्यादिपञ्चकापेक्षमपि कर्म स्वतंत्रमेवेत्याह–**द्रव्यादीति**। द्रव्यं प्रदर्शयति–**स एवेति** दृष्टान्ते यः सेवां करोति स एव कर्त्ता पुरुषो द्रव्यं भवति तथा यः फलं ददाति राजादिः स दाता एवं देयं यद्वस्त्रसुवर्णादि तदपि द्रव्यमिति भावः। **भाव इति,** प्रसन्नतादयो दातुर्भावः न कर्तुः सेवकस्येति। **भव इति,** गजतत्पालकयोः शरीरानुरूप्येण दात्राऽऽहारभूषणादीनां प्रदानमिति।
25 इदमेव साधयति–**अत्र प्रयोग इति**। परत्रापि परजन्मन्यपि, अपिनैतज्जन्मन्यपीति सूच्यते, अत्र फलं पक्षीकृत्य प्रतिनियत-द्रव्याद्यपेक्षत्वं साध्यते, प्रतिनियतद्रव्यादिपञ्चकापेक्षकर्मप्रभवमित्यर्थः, सुखादिक्रियाप्रयोज्यफलत्वादिति हेतुः, द्रव्यादिपञ्चकापेक्षं यत् सेवादि तज्जन्यफलवदिति दृष्टान्तः। मूलोदितस्य सेवादिक्रियाफलप्रत्यक्षवदित्यस्य सेवादिक्रियायाः द्रव्याद्यपेक्षिण्याः फलं यथा प्रत्यक्षत उपलभ्यते तथा प्रकृतेऽपीति भावः। ईश्वरस्येतरानपेक्षस्वतंत्रकारणत्वे जगद्वैचित्र्यस्य दृष्टस्यानुपपत्तिमाह–**त्वदभिमतेश्वरस्येति। यदि कर्म न स्यादिति,** द्रव्यादिपञ्चकापेक्षं हि कर्म प्रतिपुरुषं जगद्वैचित्र्यनियामकत्वेनाव-
30 स्थितम्, तद्यदि ईश्वरेण नापेक्ष्यते स्वत एव जगदुत्पादनार्थं प्रधानादीन् प्रवर्त्तयति, ततश्चाविशिष्टकारणत्वात्तस्य विचित्रा सृष्टिर्न स्यात्, अविशिष्टेन कारणेन विशिष्टकार्योत्पादायोगात् दृश्यते च प्राणिगणस्य वैचित्र्यमिति भावः। **स्थानेति,** स्थानं स्वर्गनरकपृथिव्यादि राजामात्याद्युत्कृष्टनिकृष्टस्थानानि, विग्रहः देवमनुष्यतिर्यग्योनादिशरीरं सुरूपकुरूपादि-शरीरं वा, इन्द्रियं न्यूनाधिकेन्द्रियाणि तारतम्यविषयग्राहीणि, शक्तिमदशक्तिमन्ति वा, उपभोगः सुखदुःखादि, एवंविधो विशेषो न स्यादिति भावः। कथमयं विशेष उपपद्यत इत्यत्राह–**स तु विशेष इति** विपाक उदयावलिकाप्रवेशः कर्मणां नानाप्रकारो

कर्मणि तत्पञ्चकापेक्षविपाके सति स्यात्, दृष्टश्च सोऽस्मदभीष्टप्रतिनियतद्रव्यादिविपाककर्मप्राणिगणे-श्वरत्वे सति युज्यते केषाञ्चिदभ्युदयः केषाञ्चित् प्रत्यवायः केषाञ्चिदपवर्ग इति । अत्र प्रयोगः अनुपपन्नस्थानविग्रहेन्द्रियोपभोगाभ्युदयप्रत्यवायापवर्गादिविशेषमिदं जगत् स्यात् तुल्यकारणत्वात् पटतान्तवत्ववत्, यथा पटस्तन्तुकारणत्वाविशेषात्तान्तवो न मार्त्तिकः सौवर्णो वेति जात्याकृतिवर्णा-द्यविशिष्टस्तथेदं जगत् स्यात्, न तु भवति तस्मादयुक्तम्। अथवा प्रतिनियतद्रव्याद्यपेक्षविपाक्यने-केश्वरकारणपूर्वकमेवेदं जगत् प्रतिविशिष्टजात्याकृतिवर्णादिमत्त्वात्, घटपटरथादिवत्, तस्मात् कर्मापेक्ष-मीश्वरत्वं सर्वप्राणिनामिति ।

अभ्युपेत्यापि कर्मानपेक्षां तत्र दोषं ब्रूमः—

**अनपेक्षा च कर्मणः किं सतोऽसतो वा? यद्यसत एव क्रियाविलोपः, इष्यन्ते च ताः यस्मादुक्तश्च वः शास्त्रे 'योगं साधयिष्यन्निष्यादि यावन्निद्रातन्द्राप्रमादालस्यरहितश्च स्या'दि-त्यादि, कर्माभावे च सर्वप्राणिमुक्तेः तन्विन्द्रियविषयसम्बन्धाभावेन तन्वादिसृष्टिरीश्वरस्या-नर्थिका, ततश्च भाव्यभावकभेदाभावादीश्वरकर्मप्रधानाण्वादिद्वैतकल्पनानिर्मूलता ।**

**अनपेक्षा चेत्यादि,** किमियमीश्वरस्य धर्माधर्मलक्षणस्य कर्मणोऽनपेक्षा सतोऽसतो, वा किमिति[3] प्रश्नः, किञ्चातः? यद्यसत एव धर्माधर्मयोरसतोरेवानपेक्षा[4], ततः किमिति चेदुच्यते क्रियाविलोपः—असतोर्हि तयोः खपुष्पखरविषाणयोरिव काऽपेक्षा, ततश्च हिताहितप्राप्तिपरिहारार्थाः सर्वाः क्रिया विलुप्येरन्, इष्यन्ते च ताः, यस्मादुक्तश्च वः शास्त्रे 'योगं साधयिष्यन्नित्यादि गतार्थं यावत् निद्रातंद्राप्रमादालस्यरहितश्च स्या'दित्यादि[5] (　　　　　　　　) इत्याचारविधायिग्रन्थ-स्मारणम् । किञ्चान्यत् कर्माभावे चेत्यादि यावन्निर्मूलता, अकर्मत्वात् प्राणिनः सदा मुक्ताः स्युः, ततश्च तन्विन्द्रियविषयसम्बन्धिनो न भवन्ति, ततश्च तन्वादिसृष्टिरीश्वरस्यानर्थिका, ततश्च भाव्यभावक-

वा पाकोऽनुभावो रसः, एवञ्च कर्मविपाकश्च द्रव्यादिपञ्चकापेक्षः, कर्मबन्धः विपाकं जनयति विपाकोऽपि पञ्चकापेक्षः स्थान-विग्रहादि जनयति, अतो जगतो वैचित्र्यमुभयाधीनं न तु केवलस्वतंत्रेश्वराधीनमिति भावः । उक्तार्थमनुमानेन साधयति—**अत्र प्रयोग इति,** जगत् पक्षीकृत्यानुपपन्नप्रतिविशिष्टजात्याकृतिवर्णादिमत्त्वं साध्यते तुल्यकारणत्वादिति हेतुः, मूलानुसारेणे-श्वरनिरोधकमनुमानमाह—**अथ वेति** । तत्र जगत् पक्षः प्रतिनियतद्रव्याद्यपेक्षविपाक्यनेकेश्वरकारणपूर्वकत्वं साध्यधर्मः, घटपटरथादयः प्रतिविशिष्टजात्याकृतिवर्णादिमन्तः, न ह्येषामेका जातिराकृतिर्वर्णादि वाऽतः प्रतिनियतद्रव्याद्यपेक्षविपाक्यनेकेश्वर-पूर्वकाः कुलालतन्तुवायस्थपतिभ्य एवोत्पत्तेरेवं जगदपीति भावः । तस्मात् स्वकृतकर्मविशेषादेव सर्वे प्राणिन ईश्वरा इत्युप-संहरति—**तस्मादिति** । अथेश्वरेण किं विद्यमानं कर्म नापेक्ष्यते, अथाविद्यमानं वेति विकल्प्योभयत्र दोषमाह—**अनपेक्षा चेति** । यदीश्वरोऽविद्यमानमपि कर्म नापेक्षते तर्हि क्रियाः सर्वाः हिताहितप्राप्तिपरिहारार्थास्तव शास्त्रोदिता वृथा भवेयुरित्याह—**यद्यसत एवेति** । शास्त्रमेव तावद्दर्शयति—**उक्तश्च वः शास्त्र इति** । चित्तवृत्तिनिरोधलक्षणं योगं साधयिष्यन् साधको यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधीन् अनुतिष्ठेत्, चित्तविक्षेपकांश्च निद्रादीन् परित्यजेदिति तदर्थः स्यात् । दोषान्तरमाह—**कर्माभावे चेति,** ईश्वरेणानपेक्षितत्वात् वैयर्थ्याच्च कर्मणोऽभावे प्राणिनां मुक्तत्वाज्जगत्सृष्टेर्निरर्थकतया

१ सि. क. सति विशिष्टे स्यात् । २ सि. क. विपाकोनकेश्वर० । ३ सि. क. अत्रेदं वाक्यं नास्ति । ४ सि. क. 'किमिति प्रश्नः' इति दृश्यते । ५ सि. क. °दित्यादिरित्या० ।

भेदाभावः, तस्माद्भाव्यभावकभेदाभावादीश्वरकर्मप्रधानाण्वादिद्वैतकल्पनानिर्मूलता, एवं तावदसतः कर्मणोऽनपेक्षा न युक्ता ।

**अथ तु सदपि नापेक्षते सः स्वतंत्रत्वादिति मन्यते तत आ क्षीणोदितकर्माशयबन्धमोक्षाभ्याम् अकृताभ्यागमकृतप्रणाशौ स्याताम् धर्माधर्मानपेक्षत्वात्, स्वभावपुरुषादिवादि-**
5 **मतवत् ।**

( **अथ त्विति** ) अथ तु विद्यमानावेव धर्माधर्मावभ्युदयप्रत्यवायनिःश्रेयसक्रियायां नापेक्षते स ईश्वरः, स्वतंत्रत्वात्, प्रयोजनाभावाच्च तयोः, विद्वद्व्याख्यानादिक्रियासु बलीवर्दानपेक्षणवदिति मन्यते ततोऽकृताभ्यागमकृतप्रणाशौ दोषौ स्याताम्, कथं ? यथासंख्यमा क्षीणोदितकर्माशयबन्धमोक्षाभ्यां-यावत्क्षीणकर्मणोऽपि बन्धाभ्युदयप्रत्यवायसम्बन्ध्यकृताभ्यागमः स्यात्, कुतः ? धर्माधर्म-
10 निरपेक्षत्वात्, स्वभावपुरुषादिवादिमतवत्, उदितात्यन्ताशुभकर्माशयस्य नारकादेरपि मुक्त्यभ्युदयसम्बन्धी कृतप्रणाशः स्यात्, धर्माधर्मनिरपेक्षत्वात्, स्वभावपुरुषादिवादिमतवदेव, अनिष्टञ्चैतत्, एवं तावदीश्वरस्य कर्मानपेक्षाऽनिष्टापत्तेरयुक्ता ।

**अथैवं कर्मापेक्षः प्रवर्त्तत इति मन्यसे ततस्तान्येव कर्माणि कर्तृणि भवितृणि ईश्वराणि, तेषां तस्यापि तथाभावयितृत्वात्, न स तानि तथाभावयति तथाभाव्यमानत्वात्, यथा च**
15 **पृथिव्युदकादीन् व्रीहिरेव तथाभावयति, पृथिव्याद्यपेक्षोऽपि तथापत्तेः, न पृथिव्यादयस्तथाऽनापत्तेः तेषामसत्त्वात्, असत्त्वञ्चानापन्नत्वासत्त्वात् खरविषाणवत् अस्वतंत्रत्वाच्छब्दादिवत् भवति कर्त्ता स्वतंत्रः सर्वः पुरुषः प्रवर्त्तनवृत्तत्वात्, प्रवर्त्तयद्धि कारणं तद्भावमापद्यते शब्दादि, तथाभवनप्रवृत्तत्वात् प्रवर्त्तयितृत्वादिरेणाऽत्मनादवृत्तत्वात् तन्तुपटवत् ।**

( **अथैवमिति** ) अथैवं विधानिष्टापत्तिव्यावृत्त्यर्थं कर्मापेक्षः प्रवर्त्तत इति मन्यसे ततस्तान्येव
20 कर्माणि कर्तृणि स्वतंत्राणि भवितृणीश्वराणि, कस्माद्धेतोः ? तेषां तस्यापि तथाभावयितृत्वात्-यस्मात्तमपीश्वरं तेन तेन प्रकारेण भवन्तं तान्येव कर्माणि, न स तानि कर्माणि तथाभावयति, कुतः ?

---

भाव्यपरत्वभावेन भाव्यभावकभेदाभावादीश्वरमात्रस्य सत्त्वादद्वैतवाद एवायमिति भाव्यभावकभेदद्वयसाधनं व्यर्थमेवेति भावः । विद्यमानस्यापि कर्मणोऽनपेक्षायां दोषमादर्शयति-**अथ त्विति । धर्माधर्माविति** धर्मस्य फलमभ्युदयो निःश्रेयसञ्च, अधर्मस्य
25 फलं प्रत्यवायः, फलेष्वेतेषु स्वतंत्रत्वादीश्वरो धर्माधर्माभ्यां कर्म यदि नापेक्षते तर्हि तन्निरर्थकं स्यादिति भावः । निरर्थकतैव न दोषोऽपि तु प्राणिभिर्निर्हेतुकान्येवाभ्युदयप्रत्यवायनिःश्रेयसानि प्राप्तानीति स्वकृतकर्मणो वैयर्थ्यात् कृतस्य कर्मणः फलाभावात् कृतविप्रणाशः, अभ्युदयादीनामेवमेव प्राप्तेरकृताभ्यागमश्च दोषौ स्यातामित्याह-**तत इति** । क्षीणकर्मणोऽप्यभ्युदयप्रत्यवायलक्षणबन्धसम्बन्धेनाकृताभ्यागमः, उदितात्यन्ताशुभकर्माशयस्य मुक्तेरभ्युदयस्य च सम्बन्धेन प्रत्यवायासम्बन्धात् कृतस्य विप्रणाश इति भावः । यदि त्वेतद्दोषपरिहाराय जीवकर्मापेक्षमीश्वरजगत्सर्जनमिति मन्यते तर्हि कर्मैवेश्वरं प्रवर्त्तयतीतीश्वरः प्रवर्त्त्यो भाव्यश्चेत्यस्वतंत्रः कर्म च प्रवर्त्तकं भवितृत्रिति स्वतंत्रमिति तस्यैवेश्वरत्वं न तु त्वदभ्युपेतेश्वरस्येत्याह-**अथैवमिति । तान्येव**
30 **कर्माणीति** कर्तृपदमिदं तथाभावयतीत्यप्रेतनेन तथाभावयन्तीति वचनविपरिणतेन पदेनान्वेति । **न स तानीति,**

---

१ सि. क. तथाच ।

तथाभाव्यमानत्वात्, प्रधानेन शब्दादिवदिति वक्ष्यमाणदृष्टान्तत्वात्, यथा च पृथिव्युदकादीन् व्रीहिरेव तथाभावयति, पृथिव्याद्यपेक्षोऽपि तथाऽऽपत्तेः, न पृथिव्यादयः, तथानापत्तेः, एवं कर्माण्येवेश्वराणि, तथाभावयितृत्वात्, न त्वदिष्टेश्वरः, तथाभाव्यमानत्वादिति, स्यान्मतम् पृथिव्युदकादीन्यपि भावयन्त्येव व्रीहित्वेन[व्रीहि]मनापन्नान्यपीत्येतच्चायुक्तम् तेषामसत्त्वात्, असत्त्वञ्चानापन्नस्यासत्त्वात्, खरविषाणवदिति सन्निधिभवनदूषणे प्रक्रान्तमेव न्यायं दर्शयति, अस्वतंत्रत्वाच्छब्दादिवदिति, एष दृष्टान्तः सर्वत्र प्रधानकारणत्वसाधर्म्येणोपात्तः कापिलान प्रति, यथा प्रधान[स्य]स्वातंत्र्यात्तत्कारणत्वं गमयति शब्दाद्यारातीयकारणत्वाभावञ्चास्वातंत्र्यात्तेषामिति नाव्यक्तस्य[1] व्यक्तस्येव प्रधानता भवतीति यथा त्वयैवोक्तं तथैवेश्वरोऽस्वतंत्रत्वात् कर्मापेक्षत्वादकारणं तान्येव कारणानीति गमयति[2] ताभिरेव त्वदुक्ताभिरुपपत्तिभिरतो यदुक्तं त्वदुक्ता एवोपपत्तयः सर्वप्राणीश्वरतां साधयन्तीति तत्साधु, तद्भावयन्नाह–भवति कर्त्तेत्यादि, प्राग्व्याख्यातान्येव भवत्येकार्थपदानि[3] यावत्तन्तुपटवदिति, यथा तन्तव एव पटनिष्पादनेन भवन्तः तथाप्रवर्त्तनवृत्तत्वात् पटकारणानि तथा पुरुषा एव कर्त्तार इति ।

**ईश्वरस्यापि च तन्त्वंश्वादिवत् पूर्वपूर्वशक्ततारतम्येन प्रवर्त्तकः सर्वः एव पुरुषः, कर्मणि वृत्तेः सृष्ट्यतिशयप्रकर्षस्य, सन्निहिततद्विधशक्तिः प्रतिविशिष्टबुद्धिप्रमाणीकृतक्रियः, स च स्वतंत्रः, तत्प्रवृत्त्यापत्तेः, आ ईश्वरात् प्रवर्त्तयितृत्वात् ।**

---

ईश्वरो न तानि कर्माणि तथाभावयतीत्यर्थः, **प्रधानेन शब्दादिवदिति** अनुपदमेवागो दृष्टान्त उच्यतेऽस्वतंत्रत्वाच्छब्दादिवदिति । **यथा चेति** यथा हि पृथिव्याद्यपेक्षोऽपि व्रीहिस्तेन तेन प्रकारेण भवन् पृथिव्यादीन भावयति, व्रीहिरेव हि अङ्कुरादिरूपेणापद्यते, न तु पृथिव्यादयो व्रीहिं भावयन्ति, पृथिव्यादीनामङ्कुरादित्वेनानापत्तेः, एवं कर्माण्येव तेन तेन प्रकारेण भवन्तमीश्वरं भावयन्ति ततश्च भावयितृत्वात् स्वातंत्र्यात् कर्माण्येवेश्वराणि, न त्वीश्वरः कर्माणि भावयति भाव्यमानत्वादिति नासावीश्वर इति भावः । ननु भावान्तरतामनापन्ना अपि पृथिव्यादयः सन्निधानाद्व्रीहिं भावयन्त्येवेत्याशङ्कते **स्यान्मतमिति** । एवं सति पृथिव्यादयो न सन्त्येव, अनापन्नत्वादप्रवृत्तेरानयतेश्च खपुष्पवदिति सन्निधिमात्रभवननिराकरणावसरे त्वयैवोक्तो 20 न्यायोऽत्र प्रसरतीत्युत्तरयति–**तेषामसत्त्वादिति** । कर्मणामेव कर्तृत्वभावितृत्वेश्वरत्वेषु हेत्वन्तरमाह–**अस्वतंत्रत्वादिति** । सर्वकार्येषु प्रधानमेव कारणं सर्वस्य सत्त्वरजस्तमोमयत्वात्, न तु भूतादीन् प्रति सन्निहितमपि शब्दादि कारणमस्वतंत्रत्वादिति सांख्यैर्यथोच्यते तथैव प्रधानमपि न स्वतंत्रमचेतनत्वात्, तस्माच्छब्दादयोऽन्येन प्रधानेनेव प्रधानमप्यन्येन व्यापारयित्रा स्वतंत्रेण भाव्यत इति व्यक्तस्य शब्दादेरिवाव्यक्तस्य प्रधानस्यापि यथाऽप्रधानता त्वयैवोक्ता तथैवेश्वरोऽपि कर्मापेक्षत्वेनास्वतंत्रत्वान्न प्रधानं कारणमपि तु कर्माण्येवेति भावः । तदेवं कर्मणामीश्वरत्वे कर्मापृथग्भूताः प्राणिनोऽपीश्वरा एवेत्याशयेन सर्वप्राणीश्वरत्वं पूर्वोक्तं स्मारयति–**यदुक्तमिति** । सर्वप्राणीश्वरतामेवेश्वरवाद्यभिहितसाधनैर्भावयति–**भवति कर्त्तेति** यो मुख्यः स एव भवति यश्च कर्त्ता स एव मुख्यः, योऽसौ स्वतंत्रः स एव कर्त्ता, स्वतंत्र एव हि प्रवर्त्तयितृत्वेन वर्त्तते, प्रवर्त्तयद्धि कारणं तद्भावमापद्यते, यथा प्रवर्त्तयत्कारणं प्रधानं शब्दादिभावमापद्यते सांख्यमतेन, प्रवर्त्त्यमानरूपेण पटभवनेन प्रवृत्तत्वाद्यथा तन्तवः पटकारणं पटश्च तन्तुकार्यं तन्तुभिः प्रवर्त्त्यत्वात्, न च पटभवनं प्रवर्त्तयितारमन्तरेण भवति, तथैवेश्वरोऽपि प्रवर्त्त्यमानरूपेण भवनात् प्रवर्त्तयिता कर्मात्मा सर्वः पुरुष एवेति सर्वप्राणिनामीश्वरत्वमिति भावः । ईश्वरप्राधान्ये प्रोक्ता अन्या अप्युपपत्तीः कर्मप्राधान्यपक्षेऽपि घटयति–**ईश्वरस्यापि चेति** । यथा धर्माधर्माण्वादीनामपि च तन्त्वंश्वादिवत् पूर्वपूर्वशक्ततारतम्येनेश्वरः प्रवर्त्तकस्तेषां तथातथा विनिवेशने सन्निहितशक्तिः प्रतिविशिष्टबुद्धित्वात्तथेश्वरस्यापि प्रवर्त्तकं कर्म, तदेव जगतस्तथा तथा विनिवेशने सन्निहितशक्तिमच्च, जगद्वैचित्र्यस्य कर्मनिष्ठत्वात्, पुरुषोऽपि कर्मात्मकत्वात् तथाविध इति भावः ।

---

१ सि. क. नाव्यक्तमिव व्यक्तस्येव वा० । २ सि. क. गमयन्ति । ३ सि. क. भवत्येकार्थिकार्थ० ।

ईश्वरस्यापि चेत्यादि, तामामेवोपपत्तीनामितो मुख्यतां भावयत्यनेनापि ग्रंथेन, यथा त्वया प्रागुपपादितं ब्रुवता पूर्वपूर्वशक्यतारतम्येन सन्निहिततद्विधशक्तिर्विशिष्टबुद्धिरिति तथेहापि ताभिरेवो-पपत्तिभिस्तैरेव तन्त्वश्वादिभिर्दृष्टान्तैः कर्मणि वृत्तेः—कर्मनिष्ठत्वात् सृष्ट्यतिशयप्रकर्षस्य, कर्मणां पुरुषत्वात् सर्व एव पुरुषः सन्निहिततद्विधशक्तिः प्रतिविशिष्टबुद्धिप्रमाणीकृतक्रियः—प्रतिविशिष्टबुद्धिना तेनैवे-
5 श्वरेण नान्यैश्च शास्त्रकारैर्विश्वदृश्वभिरपि प्रमाणीकृत[क्रियः]तत्क्रियाफलपरिज्ञानार्थत्वाच्छास्त्रकारप्रवृत्ती-नाम्, सिद्धशास्त्राणामनतिशंक्यत्वाच्च, स च स्वतंत्रः,तत्प्रवृत्त्यापत्तेः- तेन प्रकारेण कर्मिप्राणिप्रवृत्तिवदीश्व-रस्यापि प्रवृत्त्यापत्तेः, [आ]ईश्वरात् प्रवर्त्तयितृत्वादिति—आ ईश्वरात् यावदीश्वरस्तावत् प्रवर्त्तयितृत्वात् ईश्वरस्य प्रवर्त्त्यत्वात् कारणानि सर्वपुरुषाः ।

**शक्तिमत्प्रवृत्तीत्यादि यावत्सत्त्वादिवदिति पूर्ववत् सर्वव्यक्तिप्रवृत्त्यात्मकत्वादस्य सर्व-**
10 **मूर्तिता, एवमेव चास्य पृथिव्याद्यष्टमूर्त्तितोच्यते, तासु तस्यैव निमित्तत्वात्, प्र[वृ]त्तिफल-प्रकर्षाभावप्रसङ्गात् कर्म एव कारणं नेश्वरादि, इतरथा ईश्वरादेः प्रधानादेर्वा प्रवृत्तयः फलं वा स्युस्तर्हि [illegible]दुत्कर्षापकर्षौ न स्यातां, दृष्टौ च तौ, न निर्बीजेश्वरकामचारेरणात्, अतोऽन्यद्विमर्दक्षमं कारणमस्तीति ।**

शक्तिमत्प्रवृत्तीत्यादि, ईश्वरस्यापि तेषामेव शक्तिमतां पुरुषाणां शक्तिसाकल्य[सन्निध्य]-
15 सन्निध्योः प्रवृत्त्यप्रवृत्तिदर्शनादिति तदेवोपपत्तिजातं स्मारयति यावत्सत्त्वादिवदिति, आदिग्रहणाद्रजोवत् प्रवृत्तिवदित्यादि पूर्ववदेव ग्रन्थं चा[ति]दिशति यावदेवास्य सर्वत्वात् सर्वमूर्त्तिता, एवमेव चास्य पृथिव्याद्यष्टमूर्त्तितोच्यत इत्येतस्मादेवारातीयो ग्रन्थः सर्वो द्रष्टव्यः, ताभिरेवोपपत्तिभिः सर्वप्राणीश्वरत्वे तद्वदेवेति, पुनरपि चोत्कर्षापकर्षदर्शनादित्यादिरीश्वरसर्गसाधनार्थो ग्रन्थः प्रवृत्त्यनुभवफलेत्यादि तद्वदेव यावत् पुरुषादप्रवृत्तेरेवोत्कर्षापकर्षौ, न निर्बीजेश्वरकामचारेरणादिति कर्मकारणार्थो गतार्थः, तस्मात्
20 कर्मापेक्षत्वात् सर्वसर्वात्मकत्वात् सर्वेश्वरतेति ।

एतदेव व्यावर्णयति—**तथेहापीति** । **प्रतिविशिष्टेति** तवेश्वरेण परैरपि सर्वज्ञैः शास्त्रकारैः क्रियायाः प्रमाणीकृतत्वात्, प्रतिविशिष्टबुद्धिभिः प्रमाणीकृताः[1] क्रियाः यस्य सर्वपुरुषस्यासौ प्रतिविशिष्टबुद्धिप्रमाणीकृतक्रिय इति विग्रहः । ईश्वरापेक्षमेव सर्वं प्रवर्त्तत इति प्रख्यापनायोक्तो ग्रंथ एव कर्मापेक्ष एवेश्वरः प्रवर्त्तत इति प्रख्यापनाय योजनीय इति दर्शनायाह—**शक्तिमत्विति** तथा चेश्वरस्यापि प्रवर्त्तिका कर्मलक्षणा पुरुषशक्तिरेव, तदभावे तत्प्रवृत्त्यसम्भवात्, न हि स्वतः प्रवर्त्तकस्यान्यापेक्षा युज्यते,
25 स्वातंत्र्यक्षतेः, अपेक्षते चेश्वरः पुरुषशक्तिमतोऽसौ तया प्रवर्त्त्यः, स्वतंत्रतया पुरुषशक्तेर्भवनात् तस्या एव प्रवर्त्तकत्वम्, सत्त्वादेः प्रकाशप्रवृत्तिसामर्थ्येऽपि रजस एव यथा प्रवर्त्तकत्वं तथा कर्मण एव प्रवर्त्तकत्वं तल्लक्षणत्वात्तस्येति भावः । सर्वेषां व्यक्तीनां प्रवृत्तौ[2] कर्मण एव कारणत्वात् भवत्यन्तर्सन्निविष्टस्वातंत्र्यात् सर्वत्वेन सर्ववस्तुषु कर्मण एव निमित्तत्वात् सर्वमूर्त्तिता, अस्यैव क्षितिजलपवनाद्यष्टमूर्त्तित्वमपि, तासु तस्यैव निमित्तत्वादिति पूर्वग्रन्थमेव कर्मणि लगयति—**अस्य सर्वत्वादिति** । एवमेव पूर्वं ईश्वरकारणप्रतिपादनपरग्रन्थः कर्मकारणपरतया नेय इत्याह— **त्येतस्मादेवेति** । **तद्वदेवेति** ईश्वरकारणसमर्थन-
30 वदेव कर्मकारणसमर्थनं कार्यमिति भावः । ईश्वरस्याकारणत्वे यः प्रवृत्तिफलप्रकर्षाभावप्रसङ्ग उद्भावितः स एव कर्मणोऽकारणत्वे ईश्वरलक्षणकारणावैलक्षण्येन प्रसङ्गोऽत्राप्यापादनीय इत्याह—**पुनरपि चेति** अत्र सर्वत्र पूर्वग्रन्थसाम्येनैव मूलमनुमितम्, अत्रोपलभ्यमानप्रतीकेभ्यो विलक्षणस्यैव पूर्वटीकानुसारेण तत्र मूलस्यानुमितत्वात् । कर्मणोऽभ्युपगमेऽपीश्वरस्य कारणत्वमाव-

१ सि. क. प्रमाणीकृताः । २ सि. क. °प्रभृतीनां ।

**कर्मापेक्षत्वेऽपि न व्यर्थमीश्वरकारणत्वं तदभावे प्रवृत्त्यभावात्, दार्वपेक्षरथकारकारणत्ववदिति चेन्न, इतरत्रापि तुल्यत्वात्, ईश्वरापेक्षत्वेऽपि न कर्मवैयर्थ्यं तत एव हेतोः, रथकारापेक्षरथदारुवदिति, प्रवर्त्तयितृत्वाच्चेश्वरस्य दासस्य स्वामिवत् तच्च कर्मणः सिद्धम्, प्रवर्त्त्यत्वञ्चेश्वरस्य, तथाप्रवर्त्तकं कर्मेति पुरुष एवेश्वरः सर्व इति ।**

**कर्मापेक्षत्वे इत्यादि** यावद्रथकार[कारण]त्ववदिति चेत्—स्यान्मतं कर्मापेक्षत्वेऽपि न व्यर्थमीश्वरकारणत्वं तदभावे प्रवृत्त्यभावात्, यत्र यदभावे प्रवृत्त्यभावः प्रवर्त्तकस्य तत्रेश्वरस्यापि अवैयर्थ्यं[1] दृष्टम्, यथा रथकारप्रवृत्तौ रथार्थं दार्वाद्यपेक्षणमिति चेन्मन्यसे तन्न, इतरत्रापि तुल्यत्वात्, तत्कथमिति चेत् प्रयोगत एव दर्श्यते विपर्ययसिद्धिः, तद्यथा—ईश्वरापेक्षत्वेऽपि न कर्मवैयर्थ्यम् तत एव हेतोः, रथकारापेक्षरथदारुवदिति विरुद्धैकान्तिकः, तदुपसंहृत्याह प्रवृत्तयितृत्वाच्चेश्वरस्येत्यादि यावत् पुरुष एवेश्वर[ः सर्व] इति—प्रवर्त्तयिता हीश्वरो दासस्य स्वामिवत्, तच्च—प्रवर्त्तयितृत्वं कर्मणः सिद्धमुक्तविधिना, प्रवर्त्त्यत्वं चेश्वरस्य तथा प्रवर्त्तकं कर्म, कर्मणा पुरुषः प्रवर्त्त्यते[2] इति प्रकृतत्वाद्गम्यते, इतिशब्दो हेत्वर्थे, तस्मात् पुरुष एवेश्वरः सर्व इति, एवं कर्मेश्वरनापि तु यथैवं तथोत्तरत्र भावयिष्यते, पुरुषस्य तावत् सर्वस्येश्वरत्वमुक्तमिति ।

**एवं प्रतिघातप्रसङ्गोऽपि सापेक्षप्रवृत्तित्वाद्रथकारवत्, यथा रथकारस्योपादानोपकरणानामसामर्थ्यवैकल्ययोः प्रतिघातस्तथाऽपचितकुशलमनुजिघृक्षतः तद्विपरीतञ्चोपजिघत्सत ईश्वरस्य यद्यप्रतिघातः स्यात् स्यात् स्वातंत्र्यम्, न तु भवति पुरुषकर्मप्रत्ययेनेश्वरप्रवृत्तेः प्रतिघातदर्शनात्, अन्यथा शुभकर्माणं दुःखेनेतरञ्च सुखेन योजयेत् तच्च नेष्टमित्यनीश्वरः सः ।**

द्यकमित्याशङ्कते-**कर्मापेक्षत्वेऽपीति** । नन्वीश्वरस्य कर्मापेक्षप्रवृत्तिमत्त्वेऽपीश्वरकल्पना न व्यर्था, ईश्वराभावे कर्मणामचेतनानां प्रवृत्त्यभावात्, यथा रथकारो रथनिर्माणाय दार्वाद्यपेक्षप्रवृत्तिमानपि तदभावे दार्वादीनां प्रवृत्त्यभावान्न रथकारस्य वैयर्थ्यं प्रवर्त्तकत्वात्तथेश्वरोऽपि प्रवर्त्तक इति शङ्कते-**स्यान्मतमिति** । ईश्वर एव प्रवर्त्तयिता न कर्मेत्यत्र विनिगमकाभावात्त्वदुपन्यस्तयुक्त्यैव कर्मणः प्रवर्त्तयितृत्वमिति साम्यतां दर्शयति-**इतरत्रापीति** । त्वदुक्तो हेतुरस्मत्पक्षं साधयन् ते विरुद्धो भवतीत्याशयेनाह-**प्रयोगत एवेति,** अपिशब्देनेश्वरापेक्षा नास्त्येवेति सूच्यते, **तत एवेति** । तदभावे प्रवृत्त्यभावादिति हेतोरित्यर्थः । रथकारापेक्षत्वेऽपि न हि दारोर्वैयर्थ्यमिति दृष्टान्तमाह-**रथकारेति** । ईश्वरस्य प्रवर्त्तयितृत्वं कर्मणः पूर्वोदितविधिना सिद्धमतस्तस्यैवेश्वरत्वमिति कर्मात्मा पुरुष एवेश्वरो दासस्य स्वामिवदिति तवेश्वरो नेश्वरः कर्मणा प्रवर्त्त्यत्वादित्युपसंहरति-**प्रवर्त्तयितृत्वाच्चेति** । यो हि प्रवर्त्तयिता स एवेश्वर उच्यते दासस्य स्वामिवत् कर्म च प्रवर्त्तयितृ ततः स एवेश्वरः त्वदीश्वरस्तु प्रवर्त्त्य इति भावः । ईश्वरस्यानीश्वरत्वं प्रकारान्तरेणाह-**एवमिति** । परापेक्षप्रवृत्तीनां कदाचिदपि प्रतिघातो दृश्यते, यथा रथकारेऽसमर्थमुपादानं विकलानि चोपकरणानि परिगृह्णति प्रतिघातो दृष्टः, तथेश्वरोऽपि कर्मापेक्षप्रवृत्तः दुष्टान् शिक्षयितुं शिष्टान् परिपालयितुमिच्छन्नपि कदाचित् प्रतिहन्यत एवेति नासौ स्वतंत्रः, तदिच्छाविघातात्, तदविघाते हि तस्य स्वातंत्र्यं स्यात्, न चैवं दृश्यते सापेक्षप्रवृत्तेः प्रतिघातव्याप्यत्वात्, ईश्वरो हि पुरुषकृतकर्मापेक्षः प्रवर्त्तते, यदि तु स्वतंत्रेण प्रवर्त्तेत तर्हि शुभकर्माणं दुःखेनाशुभकर्माणं सुखेन योजयेत्, न चैवमस्ति, तस्मात् परापेक्षत्वादस्वतंत्रतयाऽनीश्वर एवेति भावः । इदमेव व्याकरोति-

१ सि. क. अवैषम्यं । २ सि. क. कर्मणः पुरुषः प्रवर्त्तते ।

एवं प्रतिघातप्रस इत्यादि, किञ्चान्यत् प्रतिहन्यते च त्वदभिमतेश्वरः सापेक्षप्रवृत्तित्वात् रथकारवत्, अस्य साधनस्य व्याख्या यथा रथकार इत्यादि, उपादानं दारु, उपकरणानि वास्यादीनि तेषामसामर्थ्यं वैगुण्यं सतामेव, वैकल्यं त्वन्यतमाभाव एव तत्र प्रतिघातः, दृष्ट इति वाक्यशेषः, तथेत्यादिदार्ष्टान्तिकं सापेक्षप्रवृत्तिसाधर्म्यानुगमेनोपनयनमीश्वरे कार्यम्, वैधर्म्येण तु दर्शयति

5 अपचितकुशलमनुजिघृक्षन् इत्यादिना, पुरुषमपचितशुभकर्माणमनुग्रहीतुमिच्छतस्तद्विपरीतञ्चोपहन्तुमिच्छतस्तेनेश्वरस्य यद्यप्रतिघातः स्यात् स्यात् स्वातंत्र्यम्, न तु भवति, अपेक्ष्यस्य कर्मणः स्वकृतकर्मणः प्रत्ययेन तद्वशेनेश्वरस्य प्रवृत्ति[प्रति]घातदर्शनात्, न चेदेवमिष्यते शुभकर्माणं दुःखेन इतरञ्च सुखेन योजयेत्, तथा चाकृताभ्यागमकृतप्रणाशौ स्यातामित्युक्तम्, तच्च नेष्टम्, तस्मात् पुरुषकर्मप्रत्ययेनेश्वरप्रवृत्तिप्रतिघातोऽस्ति, प्रवृत्तिप्रतिघाताच्च नैश्वर्यम्, तस्य प्रतिघात्यत्वात्, पृथग्

10 न[र]वदित्यनीश्वरः स इति ।

यत्तूच्यते सर्गादौ धर्माधर्मविकलानां शरीरेन्द्रियविषयोत्पादने निरपेक्षोऽप्रतिहतस्वशक्तिवशादेव शरीरादीन्युत्पाद्य बुद्धानां धर्माधर्ममर्यादामुपदिशति, तपोदानयज्ञादि कुरुत ! हिंसां मा कार्ष्टेति, मध्यकाले च तेषां प्राणिनां यथास्वं धर्माधर्ममर्यादामनुतिष्ठतामनुष्ठानानुरूपेण फलेनानुग्रहं करोति यदा तदा सापेक्षोऽप्रतिहतस्वशक्तिवशादेव, ये पुनस्तदुपदिष्ट-

15 मोक्षमार्गप्रस्थितास्तांश्च सायुज्यं गमयति, पुनरन्तकाले च शरीरेन्द्रियभूतवत् तेषां धर्माधर्मावपि संहृत्य तान् दिवससंध्यायां परिश्रमाभिभूतान् [illegible] पुत्रकानिव पिता प्रलयक्षपायां स्वापयतीत्यन्तेऽपि निरपेक्षाप्रतिहतस्वातंत्र्यः स एवेष्ट इति ।

यत्तूच्यत इत्यादि यावत् प्रलयक्षपायां स्वापयतीति, कालभेदेन सापेक्षनिरपेक्षप्रवृत्तिपक्षयोरभ्युपगमादुभयथापि प्रवृत्तिप्रतिघातासम्भवाददोषः, तद्यथा सर्गादौ धर्माधर्मविकलानां शरीरेन्द्रिय-

20 विषयोत्पादने निरपेक्षोऽप्रतिहतस्वशक्तिवशादेव शरीरादीनुत्पादयति, तांश्चोत्पाद्य बुद्धानां—सुप्तोत्थितानां धर्माधर्ममर्यादामुपदिशति—तपोदानयज्ञादि कुरुत, हिंसां मा कार्ष्ट—हिंसानृतस्तेयागमनादीनीति, तयोश्च धर्माधर्मयोः सीमाच्छेदेन व्यवस्थां मर्यादामुपदेशेन व्यवस्थापयति, मध्यकाले च तेषां प्राणिनां यथास्वं धर्माधर्ममर्यादामनुतिष्ठतामनुष्ठानानुरूपेण फलेनेष्टेनानिष्टेन वा विषयोपभोगलक्षणेनानुग्रहं

**किञ्चान्यदिति** । रथकारे यथा हेतुसाध्ये उपनीते तथेश्वरेऽप्युपनेये इत्याह—**तथेत्यादीति**, ननु जगतः सृष्टिकालेऽन्तकाले

25 चेश्वरस्य निरपेक्षा प्रवृत्तिरतस्तदा नास्ति तत्प्रवृत्तेः प्रतिघातः, मध्यकाले च पुरुषकर्मानुरूप्येण तस्य प्रवृत्तेर्नास्ति तदानीमपि प्रतिघात इत्याशङ्कते—**यत्तूच्यत इति**, सामान्येन पूर्वपक्षाशयं दर्शयति—**कालभेदेनेति** । **धर्माधर्मेति**, प्रलयकालेऽनित्यानां सर्वेषां विनाशात् सर्गादौ धर्माद्यभावेन प्राणिनां तत्तच्छरीराद्युत्पादने न किञ्चिदपेक्षतेऽयमीश्वर इति तदानीं तस्य शक्तिरप्रहतैवेति भावः । स्वेच्छयैव प्राणिनः तत्तच्छरीरेन्द्रियविषयाणि सृष्ट्वा तत्र जीवाननुप्रवेश्य तेषां धर्माधर्मौ प्रज्ञापयतीत्याह—**शरीरादीनीति** । मध्यकाले तत्कर्तव्यतामाह—**मध्यकाले चेति**, प्राप्यनुष्ठितधर्मफलयोजकत्वसम्भवेऽपीश्वर-

---

१ सि. क. विकल्पं । २ सि. क. विशेषः । ३ सि. क. कं० । ४ सि. क. रथकारे । ५ सि. क. स्वयंवरस्य । ६ सि. क. कर्मवशस्य । ७ सि. क. सावयति । ८ सि. क. विषयोपयोग० ।

करोति यदा तदा सापेक्षोऽप्रतिहतस्वशक्तिवशादेव, स्यान्मतं धर्मानुष्ठानफलोपभोगेनेष्टेनानुग्रहो युज्यते, कथमधर्मानुष्ठानफलोपभोगेनानिष्टेन युक्त इत्यत्रोच्यते अयमनुग्रह एव तेषाम्, तदृणमोक्षणादिति । ये पुनस्तदुपदिष्टमोक्षमार्गप्रस्थिताः तांश्च मोक्षमार्गोपसेविनः सायुज्यं गमयति, कोऽसौ मोक्षमार्गः? माहेश्वरो योगविधिः, तानात्मना सह युङ्क्त इति सयुक्, तद्भावः सायुज्यं तेषामीश्वरसाद्भावः, तं गमयति नयति, एवं मध्ये सापेक्षमैश्वर्यम् । पुनरप्यन्तकाले च शरीरेन्द्रियभूतवत् यथा 5 शरीरेन्द्रियाणि भूतान्यांश्च विषयानुपसंहरति तथा कुशलाकुशले तेषां धर्माधर्मावपि संहृत्य तान् पुरुषान् सर्गाहनि संसृतवतः तेन धर्माधर्मफलेनेष्टानिष्टोपभोगात्मकेन दिवससंध्यायां परिश्रमाभिभूतान् बालकान् पुत्रकानिव पिता सर्वपुरुषान् संसारहेतुभूतधर्माधर्मावुपसंहृत्य प्रलयक्षपायां स्वापयतीत्यन्तेऽपि निरपेक्षाप्रतिहतस्वातंत्र्यः स एवेष्टः, तस्मादुभयथाऽप्यपेक्ष्यानपेक्ष्य च तदैश्वर्यसिद्धेरदोष एव दोषाभिमत्या त्वयोद्भावित परपक्ष इति । 10

अत्र वयं ब्रूमः कर्मणामेव तन्निरपेक्ष्य प्रवृत्तौ तस्य प्रतिघातादपरिहृत[illegible]षत्वान्न किञ्चिदेतत्, तत्कारित्वा[illegible] यत्सर्वज्ञत्वमाकांक्ष्यते तदपि नैव, अस्यानर्थकार्यप्रवृत्तत्वात् बालादिप्र[illegible]त्तिवत् धर्माधर्ममर्यादोपदेशप्र[illegible]त्तेरनर्थकार्यविषयत्वात्, न च धर्माधर्मयोः [illegible]त्वम्, कारणलक्षणाभावात्, यस्याभावे यस्याभावो यस्य च भावे यस्य ध्रुवो भावस्तत्कारणमितर[illegible]मिति हि कारणलक्षणम्, न च धर्माद्यभावे शरीराद्यभावः, सर्गादौ 15 तदभावेऽपि प्रभुसृष्टेः शरीरादिनिर्वृत्त्यभ्युपगमात्, धर्मादिभावेऽपि [illegible]काले श[illegible]भावाभ्युपगमाच्च, तस्योपदेशसाफल्यानभिज्ञत्वञ्च निष्कारणशरीरेन्द्रियादिसर्ज[illegible]काले, अदत्तफल[illegible]शलाकुशलसंहारादन्तकाले च ।

(अत्रेति) अत्र वयं ब्रूमः, कर्मणामेव तन्निरपेक्ष्य प्रवृत्तौ तस्य प्रतिघातादनैश्वर्यम्, सृष्टप्राणिसंसारकाले सर्गाद्यन्तयोश्चाकृताभ्यागमकृतविप्रणाशादिदोषाः तदवस्था एवेत्यपरिहृतदोषत्वान्न 20 किञ्चिदेतत्, अन्योऽपि च दोषः—तत्कारित्वात्तज्ज्ञत्वमिति यत्सर्वज्ञत्वमाकांक्ष्यते तदपि नैव, यदपि

स्याधर्मफलयोजकत्वं कथं युक्तमित्याशंक्य समाधत्ते—स्यान्मतमिति, युक्त इति, अनुग्रह इत्यादिः । तेषामप्यसौ यदि शुभमेवानुगृह्णीयात्तर्हि तेऽधर्मस्य ऋणिनो भवेयुः, तत्फलालाभात्, ततस्तानृणेन मोचयितुं तत्फलदानेनानुग्रहं करोत्येवेत्याशयेनाह—अयमनुग्रह एवेति । माहेश्वरो योगविधिरिति, महेश्वरसम्बन्धियोगविधानमित्यर्थः, मनसा वाचा कायेन च भगवति सर्वकर्मार्पणपूर्वको भावनाविशेषः, स च भक्तिविशेषः, आत्मनो हृदयपुण्डरीके प्रतिष्ठिते परमप्रेमास्पदे भगवति 25 समर्पितात्मभारो निश्चिन्तो निरन्तरमात्मनि भगवत्तत्त्वमनुभवन् तत्सायुज्यमधिगच्छतीति सोऽयं भक्तिविशेषो माहेश्वरो योग उच्यत इति भावः । सायुज्यशब्दं व्याकुर्वन्नाह—तानात्मनेति, मोक्षमार्गोपसेविनस्तान् आत्मसाद्भावं गमयतीति भावः । प्रलयकाले शरीरेन्द्रियभूतानि यथोपसंहरति स्वेच्छया तथैव जीवानां धर्माधर्मावप्युपसंहरतीत्याह—[illegible]नरपीति । एवमुभयथापि परमेश्वरप्रवृत्तौ दोषाभावाददोषं दोषबुद्ध्या भवताऽऽक्षिप्यत इत्याह—तस्मादिति । सर्वासां प्रवृत्तीनां कर्मण एवेश्वरव्यतिरेकेणापि सम्भवादीश्वरस्य कर्मापेक्षया च मध्यकाले प्रवृत्तौ तदिच्छाप्रतिघातेनानैश्वर्यदोषस्य कर्मानपेक्षप्रवृत्तौ च सृष्टिकाले 30 प्रलयकाले च शुभकर्मणां दुःखेनेतरेषां सुखेन योजनादकृताभ्यागमकृतविप्रणाशादिदोषाणाञ्च पूर्वोद्भावितानामेवमप्यपरिहारादुभयथापि दोषाभावजल्पनं निरर्थकमेवेति समाधत्ते—अत्र वयं ब्रूम इति । दोषान्तरमप्याह—अन्योऽपीति तस्य कारित्वं तत्कारित्वं तस्य ज्ञत्वं तज्ज्ञत्वम्, यो यत्करोति स तज्जानातीति व्याप्तिः, सर्वमीश्वरः करोतीति सर्वज्ञोऽसाविति पूर्वपक्षाभिप्रायः ।

चाकांक्ष्यते तस्य सर्वज्ञत्वं सर्वकारित्वात्, करणस्य ज्ञानाभावात् सर्वञ्चेत् करोत्यवश्यं सर्वमसौ वेत्तीति सर्वकारित्वात् सर्वज्ञ इति तदपि नैवोपपद्यते, अस्यानर्थकार्थप्रवृत्तत्वात् बालादिप्रवृत्तिवत् अज्ञक्रियासाधर्म्यादज्ञोऽसौ, बालादिवदसमीक्षितप्रवृत्तित्वादित्येतदनया कल्पनयाऽस्माकं त्वया प्रत्यक्षी-क्रियते, किं कारणं? धर्माधर्ममर्यादोपदेशप्रवृत्तेरनर्थकार्थविषयत्वात्—अनर्थकौ धर्माधर्मावर्थौ ह्यस्य
5 धर्माधर्ममर्यादोपदेशस्य, न च तयोर्धर्माधर्मयोः शरीरादिकारणत्वम्, विनापि धर्माधर्ममर्यादया सर्गादौ प्रभुसृष्टेः शरीरादिनिर्वृत्त्यभ्युपगमात्, धर्माधर्ममर्यादायां सत्यामेव च प्रलयकाले शरीराद्यभावाभ्युपग-माच्च, ईश्वरसामर्थ्यादेव, तस्मात्तयोर्नास्ति कारणता कारणलक्षणायोगात्, कथं तदयोग इति चेदुच्यते, न च धर्माद्यभाव इत्यादिना ग्रन्थेन, तयोः कारणाभिमतयोरभावेऽपि शरीरादेः कार्यस्य भावं भावेऽपि चाभावमुपदेशसाफल्यानभिज्ञत्वञ्च दर्शयति यावददत्तफलकुशलाकुशलसंहारादन्तकाल इति गतार्थ-
10 त्वान्न विव्रियन्तेऽक्षराणि।

किञ्चान्यत्—

यथा चोपदेशानभिज्ञत्वं तस्य तथा प्राणिनामनुग्रहक्रियाया अपि, यदा तदैवं व्यामु-ह्यैव स्थितानां प्राणिनां भृतकवत् तेषां शरीरमुत्पादयामि धर्माधर्ममर्यादां स्थापयामि तत्र प्रवर्त्तयामि तत्फलैरनुबध्नामि तान् फलानुरूपमुपभोगं विद्याञ्चानुगृह्णामीत्याद्युपभोगविभाज-
15 नानुग्रहक्रियायामतिगरीयस्यां किमिति वर्त्तते इत्यत्यन्तपरवशत्वमेवैश्वर्यम्।

**यथा चोपदेश इति** यावत्क्रियाया अपि, अनभिज्ञत्वमिति वर्त्तते, न केवलमुपदेशानभि-ज्ञत्वमेव तस्य, किं तर्हि? प्राणिनामनुग्रहक्रियानभिज्ञतापीति तदतिदिशति, तत् कथं भाव्यत इति चेदुच्यते—यदा तदैवं व्यामुह्यैवेत्यादि भावनाग्रन्थः यावदुपभोगविभाजनानुग्रहक्रियाया[म]तिगरीयस्यां किमिति वर्त्तते—तस्मिन् हि काले प्राणिनां भृतकवत् प्रवृत्तेरीश्वरस्यैव, तेषां शरीरमुत्पादयामि, धर्मो-

20 तन्निराकरोति—**अस्येति** अनर्थकेषु अर्थेष्वसौ प्रवर्त्तते, तस्मादस्य प्रवृत्तिर्बालादिप्रवृत्तितुल्या, अविविच्य प्रवृत्तत्वादिति भावः। बालादिप्रवृत्तितुल्यत्वादस्य प्रवृत्तेर्नास्य सर्वकारित्वात् सर्वज्ञत्वं सेत्स्यतीत्याह—**अज्ञक्रियेति**। अनर्थकार्थप्रवृत्तत्वमस्य कथमित्य-त्राह—**धर्माधर्मेति** धर्माधर्मयोर्मर्यादाया उपदेशे याऽस्य प्रवृत्तिः साऽनर्थकार्थविषयिणी, धर्माधर्मयोरनर्थकत्वञ्च शरीरेन्द्रिया-दिकारणत्वायोगात्, कारणत्वाभावश्चान्वयव्यतिरेकव्यभिचारादिति भावः। व्यतिरेकव्यभिचारं दर्शयति—**विनापीति**। अन्वयव्यभिचारमाह—**धर्माधर्मेति**। कारणलक्षणाश्रयेण व्यभिचारं पोषयति—**कारणलक्षणेति**। स्वोपदेशस्य फलमप्यसौ
25 न जानातीत्याह—**उपदेशसाफल्येति** तपोदानयज्ञादि कुरुत, हिंसां मा कार्ष्टेत्युपदेशः तस्य साफल्यमसौ न वेत्ति सृष्टिकाले धर्माद्यभावेऽपि तत्फलप्रदानात्, अन्तकाले च फलमदत्त्वैव धर्माद्युपसंहरणादिति भावः। मध्यकाले च तेषां प्राणिनां यथास्वं धर्माधर्ममर्यादामनुतिष्ठतामनुष्ठानानुरूपेण फलेनानुग्रहं करोतीति यदुक्तं तदप्यनुपपन्नमित्याह—**यथा चेति**। अनेकजन-साधारणस्यैकस्य सेवकस्य यथाऽतिक्लेशः तत्तोषणक्रियाभिरजस्रं श्रमितत्वात् तथा तवेश्वरोऽपि, निरन्तरमतिक्लिश्यमानत्वात् प्राणिपराधीनत्वमेव तस्यैश्वर्यम्, न तु क्लेशाद्यपरामृष्टत्वलक्षणमैश्वर्यमिति तस्येश्वर इत्यभिधानमत्यन्ततापादिविधायिरोगविशेष-
30 पीतज्वरिकेत्यभिधानवदेवेति भावः। काभिः क्रियाभिरसौ क्लिश्यत इत्यत्राह—**तेषां शरीरमिति**। यदा तदैवमिति यस्मिन् काले प्राणिनः प्रलयक्षपायां स्वापयति तस्मिन् हि काल इत्यर्थः, प्राणिनामित्यस्य भृतकवदित्यनेन सम्बन्धः, यदपीश्वरस्यानुग्रह उच्यतेऽसावप्यननुग्रह एव वस्तुतः, स ह्यनुग्रहेणेष्टोपभोगमनिष्टोपभोगञ्च कारयति प्राणिनः, इष्टोपभोगस्य च क्षयित्वादि-

१–२ सि. क. [illegible]र्मोपदेश०। ३ सि. क. विधीयन्ते०। ४ सि. क. प्राणिनामत्वलकव[illegible]।

धर्ममर्यादां प्रणयामि, तत्र प्रवर्त्तयामि, तत्फलैरनुबध्नामि, तान् प्राणिनः फलानुरूपमिष्टमनिष्टं वोपभोगं विधां[च]अनुगृह्णामि, एवमादिकयाऽनुग्रहक्रियया क्लिश्यमानस्यानेकपुरुषस्त्रीनपुंसकजनसाधारणस्येव भृतकस्यापि क्लेशः, इतिः हेत्वर्थे, तस्मादतिक्लेशत्वादत्यन्तपरवशत्वमेवैश्वर्यं शीतलिकापर्यायशब्दाभिधेयं तावदुच्यत इति ।

किञ्चान्यत्— 5

अनुग्रहोऽपि विपर्ययेणोच्यते दुःखहेतुदुःखात्मकाभ्यामिष्टानिष्टोपभोगस्य, विषकृतभाजनक्लेशनवत्, यच्चोक्तं दुःखमपि तद्दणमोक्षणवदनुग्रह एवेत्येतदप्ययुक्तम्, संसारमोचकव्याधचण्डालादिमारितसत्त्वानुग्रहप्रसङ्गात्, सत्त्वनिकायकलिकलुषकृतात्मोपनिपातेनाऽऽज्ञाबाधे सत्त्वानुग्रहवदज्ञानप्रसङ्गाच्च, तत्सायुज्यगमनेऽप्येवम् ।

( अनुग्रहोऽपीति ) अनुग्रहोऽपि विपर्ययेणोच्यते—अननुग्रह एव सन्ननुग्रह इति, किं कारणं ? 10 दुःखहेतुदुःखात्मकाभ्यां दुःखहेतुत्वादिष्टोपभोगस्य हिंसाद्यात्मनोऽर्जनरक्षणक्षयसङ्गदोषे दुःखात्मकत्वाच्च, अनिष्टोपभोगस्य दुःखात्मकत्वाच्चाननुग्रह एवासौ, दृष्टान्तः—विषकृतभोजनक्लेशनवत्, यथा कश्चित् क्रूरमूर्खनृपतिः स्ववशान् भृत्यान् विषमिश्रमाहारं भोजयन्ननुगृह्णामि व इति ब्रूयात्तथा त्वदभिमतेश्वरोऽपीति । यच्चोक्तं दुःखमपि तद्दणमोक्षणवदनुग्रह एवेत्येतदप्ययुक्तम्, संसारमोचकव्याधचाण्डालादिमारितसत्त्वानुग्रहप्रसङ्गात्, सत्त्वनिकायकलिकलुषकृतात्मोपनिपातनेनाऽऽज्ञाबाधे सत्त्वानुग्रह- 15 वदज्ञानप्रसङ्गाच्च । तत्सायुज्यगमनेऽप्येवम्, ईश्वरेण किल सायुज्यं मोक्षः, स्वात्मना सायुज्यं गमयन्नप्यसौ प्राणिगणमतिक्लेशभाजनमेव करोति, क्लिष्टसंसारक्लिष्टेश्वरत्वस्योक्तलक्षणस्यामोक्षशब्दाभिधेयत्वात्, अलमैश्वर्येण मोक्षेण च तादृशा सदा सर्वपुरुषव्यापारोद्वहनाऽऽयासात्मना, तद्वरमात्माधीनयथेष्टचेष्टं दौर्गत्यमपीति ।

एवञ्च तत्त्वयाशङ्क्यते त्वयाऽऽद्यन्तवदित्यादिना ग्रन्थेन विनेश्वरेण किलैते दोषा इतीष्टास्ते 20 सहापीश्वरेण तथैव भवन्तीति तद्दर्शयन्नाह—

आद्यन्तवन्मध्येऽपि धर्माधर्मक्रियाः प्राणिनां न स्युः, फलाभावात्, ईश्वरवशादेवाऽऽद्यन्तमध्येषु फलसम्भवात्, ततश्च सर्वप्राणिनां निर्मोक्षः सर्वानिर्मोक्षो वा प्रसक्तः, तत्प्रसक्तक्रियाविलोपः, ईश्वरप्राधान्यात् ।

---

रूपतया तदर्जनादावतिक्लेशसम्भवेन च दुःखहेतुत्वम्, अनिष्टोपभोगश्च साक्षाद्दुःखरूप एव, तथाविधोपभोगप्रदाने ऽनुग्रहः 25 कथं स्यात्, वस्तुतोऽननुग्रह एवेत्याशयेनाह–**अनुग्रहोऽपीति** धनाद्यर्जनादौ हिंसादिसम्भवेन तदुपभोगो दुःखहेतुः, अर्जितस्यापि रक्षणं दुःखं रक्षितमपि क्षयित्वाद्दुःखमितीष्टोपभोगो दुःखहेतुर्दुःखात्मकश्चेत्याह–**दुःखहेत्विति** । अनिष्टोपभोगस्तु दुःखरूप एवेत्याह–**अनिष्टेति** । ऋणमोचनवद्दुःखप्रदाने योऽनुग्रह उक्तः सोऽपि न युक्त इत्याह–**यच्चोक्तमिति** । स्पष्टमन्यत् । **आद्यन्तवदिति** सृष्टेरादौ प्रलयकाले चेश्वरस्य यथा निरपेक्षा प्रवृत्तिस्तथा मध्यकालेऽपि निरपेक्षप्रवृत्तिप्रसङ्गेन प्राणिनां धर्माधर्मक्रिया न स्युः प्रयोजनाभावात्, ईश्वरवशादेवाद्यन्तमध्येषु फलप्राप्तिसम्भवात्, ततश्च सर्वप्राणिनां निर्मोक्षः प्रसज्यते, 30 ईश्वरवशादेव, अथवा कदापि कस्यापि मोक्षो न स्यादेव, यतो हि धर्माधर्मयोरनिमित्तत्वात्, सर्वत्रेश्वरस्यैव प्राधान्यादिति ।

आद्यन्तवदित्यादि उक्तानन्तरदोषाच्च गतार्थं हेतुहेतुमद्भावप्रतिपादनक्रमेण या धर्माधर्म क्रियाविलोपः, कुतः ? ईश्वरप्राधान्यात्, उक्तानन्तरदोषाच्चेति धर्माधर्मक्रियाः प्राणिनां न स्युः, फलाभावादीश्वरवशादेव आद्यन्तमध्येषु फलसङ्करात्, ततश्च सर्वप्राणिनां निर्मोक्षः–निःशेषमोक्षः तद्वशादेव सर्वानिर्मोक्षो वा प्रसक्त इति ।

5 यत्तु सर्वशास्त्रार्थनियमनायादावनुध्यानाद्धर्माधर्माद्यपेक्षः स एव स्वशक्तितो जगत्सर्जनाय व्याप्रियते ततश्च प्राणिगणं धर्माधर्ममर्यादामुपदिश्य मध्ये तत्परिपालकान् ब्रह्मादीनाधिकारिकान् विनियुङ्क्ते, अन्ते च शरीरेन्द्रियविषयानुपसंहृत्य प्राणिगणं कुशलाशयकलङ्कशुद्धं स्थापयतीति ।

यत्तु सर्वशास्त्रेत्यादि एतद्दोषपरिहारार्थं कर्मानुपसर्जनतयेश्वरप्राधान्यकारण्ये प्रोक्ते, कथ-

10 मिति ? तद्भावयत्युत्तरेण ग्रन्थेन–आदौ स एव स्वशक्तित इत्यादिना यावच्छरीरादिष[त]कुशलाशयकलङ्कशुद्धं स्थापयतीति गतार्थः पूर्वपक्षः, धर्माधर्ममर्यादायाः परिपालकान् ब्रह्मादिकानाधिकारिकान् विनियुङ्क्ते इति[वि]शेषः ।

अत्रोत्तरमाहाचार्यः—

इदमन्यथैवोद्ग्राह्यते ईश्वरकर्मणोः प्रधानोपसर्जनभावाभ्युपगमाद्द्वैतम्, भाव्यतेऽन्यथा,

15 स एव शक्तित एवान्यनिरपेक्ष इत्यवधारणादद्वैतार्थभावनात्, एवंनियमनायेयमपि भावना तदनुध्यानात् पुण्यमुत्पाद्येत्येषाऽप्यद्वैतभावनैव, प्रत्युपसंह्रियते तु द्वैताद्वैते द्वे अपि त्यक्त्वा ।

इदमन्यथैवोद्ग्राह्यत इत्यादि, अन्यथा तावत् प्रतिज्ञायते ईश्वरकर्मणोः प्रधानोपसर्जनभावाभ्युपगमाद्द्वैतम्, भाव्यते–साध्यहेतुव्याख्यानं क्रियतेऽन्यथा–कथमिति चेत् स एव शक्तित एवान्यनिरपेक्ष इत्यवधारणादद्वैतार्थभावनात्–अदृष्टादीनां तच्छक्तीनाञ्च स्वतो व्यतिरिक्तानां निरासेन

20 साक्षादेवाप्रयोजनेन कस्यचित् किञ्चिदप्यन्यमप्रयोजयता साक्षात् स्वशक्तित एवेत्यवधारयता चाद्वै-

हेतुहेतुमद्भावेनेति । धर्माधर्मक्रियाभावे निरपेक्षेश्वरप्रवृत्तिर्हेतुः फलाभावो वा, फलाभावे हेतुरीश्वरवशात् फलसङ्करः, निर्मोक्षानिर्मोक्षयोः प्रसङ्गे धर्माधर्मक्रियाभावः ईश्वरवशादेव फलसङ्करो वा हेतुरित्येवं भाव्यम् । ननु क्रियाविलोपो नास्ति, जीवस्यैव धर्माधर्मयोः कर्तृत्वात्, सुखादिकं हि फलं तेनैवानुभूयते, न च भोक्तुरन्यस्य कर्तृत्वं युज्यते, तस्मात् स एव कर्ता, अन्यथा सर्वाणि शास्त्राण्यर्थवन्ति न भवेयुः, न हि तस्याकर्तृत्वे यजेत जुहुयात् दद्यादित्येवंविधानि

25 शास्त्राणि उपपद्येरन्, ईश्वरस्तु पूर्वपूर्वजन्तुकर्मापेक्षया प्राणिनो धर्माधर्मयोः प्रवर्तयति, न तु प्रबलतरपवन इव प्रवर्तयति, तस्मात् कर्मापेक्षयैवेश्वरस्य प्रधानकारणत्वमिति पूर्वपक्षाशयो भाति, अत एवोक्तम्–एतद्दोषपरिहारार्थमित्यादि । आदौ स एव स्वशक्तित एवेत्यादिमूलमत्र सुतरामव्यक्तमिति विज्ञेयम् । सर्वशास्त्रार्थवत्त्वायेत्यादिना कर्मापेक्षेश्वरप्रवृत्तिः प्रतिज्ञाता, आदौ स एवेत्यादिना तु अद्वैतमेव भावितम्, उपसंह्रियते च प्राणिगणं कुशलाशयकलङ्कशुद्धं स्थापयतीति तस्मात् प्रतिज्ञाभावनोपसंहाराः परस्परविरुद्धार्था इत्याह–इदमन्यथैवेति प्राणिगणस्य धर्माधर्मापेक्षया जगत्सर्जनोक्त्या द्वैतं प्रतिज्ञातम्, स एव

30 स्वशक्तित इत्यादिना त्वद्वैतं भावितमित्यन्यथोद्ग्राह इत्याह–अन्यथा तावदिति । अद्वैतभावनैव प्रदर्शयति–अदृष्टादीनामिति,

१ सि. क. सायेत्यादि । २ सि. क. प्रोक्त इति ।

तमेव भाव्यते भवता, पुनरप्याह—एवंनियमनायेति—अद्वैतनियमनायेयमपि भावना, कतमा सा भावनेति चेत्तदनुध्यानात् पुण्यमुत्पाद्येत्यपाद्यद्वैतभावनैवेति, एवं तावत् प्रतिज्ञातं द्वैतमद्वैतं भावितमित्युक्तम्, प्रत्युपसंह्रियते तु द्वैताद्वैते द्वे अपि त्यक्त्वेति—प्रतिज्ञातभाविते द्वैताद्वैते अपि त्यक्त्वा।

**तत्राद्वैतस्य त्यागस्तावत् धर्माधर्ममर्यादास्थापनवचनेन, मर्यादा नामानतिक्रमस्थानं विषयतस्तु सुखदुःखप्रवृत्तिसीमा, इयति विषये सुखमियति विषये दुःखमिति धर्माधर्मयोः सीमनि स्वके स्वके व्यवस्थापनम्, ततश्च सर्गादौ स्थानाद्यात्मके अपि न स्याताम्, अनियतविषयत्वात्, प्रलयवत्, अन्ते च स्यातामनियतविषयत्वात्, मध्यकालवत्, अथवा नियतविषयत्वात्तदापि स्याताम्, मध्यकालवत् मध्ये वा न स्यातामन्तवदिति।**

(**तत्रेति**) तत्राद्वैतस्य त्यागस्तावत्—धर्माधर्ममर्यादास्थापनवचनेन, कृत इति वाक्यशेषः, का मर्यादा? उच्यते—मर्यादा नामानतिक्रमस्थानमिति मर्यादालक्षणमाह विषयतस्तु सुखदुःखप्रवृत्तिसीमा—इयति विषये सुखमियति दुःखमिति धर्माधर्मयोः सीमनि स्वके स्वके व्यवस्थापनम्—धर्मस्य दुःखप्रवृत्ति[व्यव]च्छेदेनाधर्मस्य सुखप्रवृत्ति[व्यव]च्छेदेनायमस्मादन्योऽयमितरस्मादन्य इति सीमाविभागः, ततः किमिति चेत् ततश्च सर्गादौ स्थानादीति—स्थानविग्रहेन्द्रियविषयाः स्थानादयः तदात्मके सुखदुःखे अपि न स्याताम्, कस्मात्? अनियतविषयत्वात्—अनियतौ हि विषयौ तदा, सुखदुःखयोरविद्यमानस्थानादित्वात्, अविद्यमानधर्माधर्मादित्वाच्च, दृष्टान्तः प्रलयवत्—यथा प्रलये [धर्मा]धर्माभावादेवानियतविषये सुखदुःखे ततश्चासती, तद्वत् सर्गादावपि स्यातामिति। किञ्चान्यत्—अन्ते च स्याताम्, सुखदुःखे इति वर्तते, कुतः? अनियतविषयत्वात्—विषयानियमोऽपि रूपादिपञ्चकत्वाद्यभावादुपसंहरणकाले, मध्यकालवत्, अथवा नियतविषयत्वात्—व्यवस्थापितधर्माधर्ममर्याद-

अनुध्यानशब्देनापि प्राणिगणस्य पूर्वसृष्टिकालीनधर्माधर्मानुचिन्तनस्योक्तत्वादद्वैतमेव भावितमित्याह—**एवं नियमनायेति** सृष्टिवैचित्र्यनियमनाय पूर्वसृष्टिसम्बन्धिधर्माधर्मानुचिन्तनप्रतिपादनादिदानीं ईश्वरस्यासहायत्वमावेदितमिति भावः। पूर्वं यस्य यादृशं पुण्यं पापं वाऽऽसीत्तथैवेदानीमप्युत्पाद्य इत्यर्थाभिप्रायेणाह—**पुण्यमुत्पाद्येति**। **प्रत्युपसंह्रियत इति,** अन्ते चेत्यादिना ग्रन्थेनेति शेषः। अथ भावितस्याद्वैतस्य त्यागं दर्शयति—**तत्राद्वैतस्येति,** इयत्तानियमो हि मर्यादा, अस्येयन्मात्रं स्थानं नातोऽन्यत्रास्य स्थितिरित्यनतिक्रमस्थानं मर्यादेत्याशयेनाह—**का मर्यादेति,** इयं स्थानविग्रहेन्द्रियाणां बोध्या। विषयमर्यादामाह—**विषयतस्त्विति**। स्वके स्वके व्यवस्थापनमिति व्याकरोति—**धर्मस्येति** धर्मे दुःखार्थिप्रवृत्तिव्यवच्छेदेनाधर्मे च सुखार्थिप्रवृत्तिव्यवच्छेदेन तयोः परस्परं पार्थक्येन व्यवस्थापनमित्यर्थः। एवञ्च स्थानविग्रहेन्द्रियविषयाणां सद्भाव एव व्यवस्थासम्भवात्तस्या अपि सुखदुःखयोः प्रवर्तकत्वादीश्वरस्याद्वैतत्याग इति भावः। ततश्च दोषमाह—**ततश्चेति,** सृष्टेः प्रारम्भे स्थानाद्यात्मके सुखदुःखे न स्याताम्, अनियतविषयत्वात् प्रलयकालवत्, सुखदुःखयोर्हि विषयः आश्रयः प्रलयकाल इव सर्गादावपि नास्ति, अत एव न सुखदुःखे स्त इति भावः। अनियतत्वे हेतुमाह—**सुखदुःखयोरिति** स्थानादयो हि सुखदुःखयोराश्रयः, तान् प्राप्यैव जीवेन सुखदुःखयोरनुभवनात्। कारणमपि तदानीं नास्ति धर्माधर्मयोरप्यभावाभ्युपगमादित्याह—**अविद्यमानेति**। अथानियतविषयत्वेऽपि यदि सर्गादौ सुखदुःखे अभ्युपगम्येते तर्हि सर्गान्तकालेऽपि स्यातामित्याह—**किञ्चान्यदिति, रूपादीति,** प्रथमं पञ्चभूतानां पृथिव्यादीनामुपसंहरणात् रूपरसगन्धस्पर्शशब्दानां पञ्चविषयाणामभावादिति भावः। मध्यकाले दृष्टान्ते साध्यस्यैव सत्त्वात्तदनुरूपं हेतुमाह—**अथ वेति**। ननु धर्माधर्ममर्यादा न

---

१ सि. क. सुखप्रवृत्ति०। २ सि. क. दुःखप्रवृत्ति०। ३ सि. क. स्थानादीत्यादीनि।

त्वात्, सुखदुःखे तदा नियतविषय तस्मात्तदापि स्याताम्, मध्यकालवत्—सृष्ट्युत्तरकालवदित्यर्थः, तद्विपर्ययेण वा साधनम्—मध्ये वा न स्याताम्—सुखदुःखे नियतविषयत्वादिति वर्त्तते, अन्तवदिति।

**अथोच्येत अत एव न सुखादिप्रवर्त्तनात्मिका धर्माधर्ममर्यादा, ईश्वरस्यैव सुखदुःखयोः प्रवर्त्तकत्वात्, यदि सा न प्रवर्त्तयति किमर्थमसौ तां व्यवस्थापयतीति चेदुच्यते, अयं 5 धर्मोऽयमधर्म इत्येतावदुपदेशेन स्वरूपसंज्ञाव्यवस्थापनमसौ करोतीति।**

**अथ च्येतेत्यादि,** यावद्धर्मोऽयमिति, स्यान्मतमत एवेश्वरस्यैव कारणत्वान्न सुखादिप्रवर्त्तनात्मिका धर्माधर्ममर्यादा—तत्प्रवर्त्तनासमर्थेत्यर्थः, ईश्वरस्यैव सुखदुःखयोः प्रवर्त्तकत्वात्, यदि सा न प्रवर्त्तयति सुखदुःखे धर्माधर्ममर्यादा किमर्थमसौ तां व्यवस्थापयतीति चेदुच्यते स्वरूपसंज्ञाव्यवस्थापनमसौ तयोर्लोकव्यवहारार्थं करोतीत्यत आह—किं तर्हि अयं धर्मोऽयमधर्म इत्येतावदुपदेशेन।

10 अत्राचार्य उत्तरमाह—

**एतदपि तुल्यं पूर्वेण, असत्त्वात्, धारणाद्धानाद्वा धर्म इति निरुक्तेः, एतस्यार्थस्याभावे कथमसौ धर्म उच्यते तद्विपर्ययो वा कथमधर्म इति, धर्माधर्माविष्येते सुखदुःखकारणे ह्यव्यभिचरिते, तस्मादयुक्तं संज्ञाकरणमात्रेण मर्यादेति।**

(एतदपीति) एतदपि तुल्यं पूर्वेणासत्त्वात् सर्गादावन्तवन्न स्यातामनियतविषयत्वादन्ते च 15 स्याताम्, नियतविषयत्वाद्वा मध्यवत्, मध्ये वा न स्यातामन्तवदिति, इदमेव दोषजालं प्राप्तम्, किं कारणं? धारणाद्धानाद्वा धर्म इति निरुक्तेः, यदि मर्यादां धारयति प्राणिनाम्, सुखे चैनां धत्ते ततो धर्म इति, एतस्यार्थस्याभावे कथमसौ धर्म उच्यते तद्विपर्ययो वा कथमधर्म इति तद्विपरीतार्थाभावे, तस्मात् सुखस्थानादिधारणाद्धर्मः सुखकारणं ह्यव्यभिचरितमिष्यते, यस्याभावे यस्याभावो यस्य च भावे यस्य ध्रुवोऽभावस्तत्कारणमितरत् कार्यमिति कारणस्य धर्मस्य कार्यस्य सुखस्याव्यभिचारात्, 20 एवमधर्मेऽपि व्याख्या विपरीतार्थो कार्यो, तस्मादयुक्तं संज्ञाकरणमात्रेण मर्यादेति।

**अथ तु तस्यैव रुचेः सुखं दुःखञ्च, न धारणधानप्र[illegible]स्यात्मकत्वाद्धर्मस्यातस्य वा, उच्यते**

---

सुखदुःखे प्रवर्त्तयति येनाद्यन्तकालयोस्तत्प्रसङ्गः स्यात् किन्त्वीश्वर एव प्रवर्त्तकस्तयोः, धर्माधर्मस्वरूपसंज्ञाव्यवस्थापनमेव धर्माधर्ममर्यादाव्यवस्थापनमित्याशयेन शङ्कते—**अथोच्येतेति,** धर्माधर्मौ न प्रयोजकौ, कार्यत्वात्, तयोरपीश्वराधीनोत्पत्तितया तत्परतंत्रत्वात्, स्वतंत्रस्य च प्रयोजकत्वात्, तस्मादीश्वर एव प्रवर्त्तक इति भावः। **न सुखादीति,** धर्माधर्ममर्यादा सुखदुःखयोः प्रवर्त्तने न 25 समर्थेत्यर्थः। धर्माधर्ममर्यादावैयर्थ्यमाशङ्कते—**यदि सेति।** धर्माधर्मयोरिमे स्वरूपे, एतत्स्वरूपयोर्धर्म इत्यधर्म इति च संज्ञेति व्यवस्थापनाय मर्यादोपदेश इत्युत्तरयति—**स्वरूपसंज्ञेति।** पूर्वोदितदोषाविनिर्मोक्षोऽत्रापि कल्प इत्याशयेनोत्तरयति—**एतदपीति।** असत्त्वमेव व्याचष्टे—**सर्गादाविति, धारणादिति,** 'दुर्गति प्रसृतान् जन्तून् यस्माद्धारयते पुनः। धत्ते चैतान् शुभे स्थाने तस्माद्धर्म इति स्मृतः' ॥ इति कारिकाऽत्र बोध्या। एतद्विपरीतलक्षणोऽधर्मः सुखस्थानादिधारणात् सुखस्याव्यभिचरितं कारणं धर्मः धर्मस्याव्यभिचरितं कार्यं सुखं दुर्गतेरव्यभिचारिकारणमधर्मः अधर्मस्याव्यभिचरितं कार्यं दुर्गतिः, तदेवं रूपमर्यादाया अकरणे 30 सुखदुःखयोः संज्ञाकरणमात्रेण न धर्माधर्ममर्यादाव्यवस्थापनं भवतीति भावः। अथ केवलमीश्वरेच्छयैव सुखदुःखयोर्भावे न धर्माधर्ममर्यादावचनेन किञ्चित्फलमस्तीति शंकित्वा समाधत्ते—**अथ त्विति,** अतस्य अधर्मस्य। किञ्च धर्माधर्ममर्यादाया उपदेशोऽपि

---

१ सि. क. तत्समर्थना०। २ सि. क. किमर्मधर्मसो०।

**धर्माधर्मयोर्मर्यादावचनानर्थकत्वात्, यदुक्तं प्रतिबुद्धानां प्राणिनां धर्माधर्ममर्यादामुपदिश्योत्तरकालं स्वमर्यादानुष्ठानानुरूप्येणेत्यादि तत्सर्वमनर्थकम्, सदैवेश्वरशक्तिमात्रवशादेव यथा तथा सुखस्य दुःखस्य वा यस्य कस्यचित् सिद्धेर्धर्माधर्माकारणत्वादाद्यन्तवत्तन्मर्यादावचनमनर्थकमिति।**

**अथ त्वित्यादि** स्यान्मतं तस्यैव-ईश्वरस्य रुचेरेव-इच्छातः सुखं दुःखं वा न धारणधानप्रवृत्त्यात्मकत्वात् धर्मस्य अतस्य वा कस्यचिदिति, अत्रोच्यते धर्माधर्ममर्यादावचनमनर्थकम्। यदुक्तं प्रतिबुद्धानां प्राणिनां धर्माधर्ममर्यादामुपदिश्योत्तरकालं स्वमर्यादानुष्ठानुरूप्येणेत्यादि तत्सर्वमनर्थकं संवृत्तम्, तत्साधनार्थं हेतुमाह सदृष्टान्तं-सदैवेत्यादि यावद्यस्य कस्यचित् सिद्धेराद्यन्तवदिति, सर्गस्यादौ मध्येऽवसाने च सदैव-सर्वकालमीश्वरशक्तिमात्रवशादेवान्यस्य कारणस्याभावेऽपि यथा तथा—येन वा तेन प्रकारेण सुखस्य दुःखस्य वेष्टानिष्टशरीरादेरनियमेन यस्य कस्यचित्-मारकस्य हिंसकस्य वा सिद्धेर्धर्माधर्माकारणत्वम्, तदकारणत्वादाद्यन्तवत्-प्रथमावसानकालयोरिव तन्मर्यादावचनमनर्थकमिति, एवं तावदद्वैतत्यागः।

न केवलमद्वैतत्याग एव किं तर्हि—

**तथा द्वैतमपि त्यक्तम्, साक्षाद्व्यापारवचनात् तद्व्यावृत्तेस्तस्य सर्वथा सर्वदा सर्वत्र वाऽव्याहतवृत्तित्वात् किं धर्मादिना? किं स्थानविग्रहेन्द्रियविषयैः प्राणिभिर्वा? किमाधिकारिकैः,? अथ मन्यसे तैर्विना शक्तिर्व्याहन्यते तस्य तर्ह्यस्य व्याहतशक्तित्वात् अनीश्वरता कार्यान्तरासक्तेः श्रमाद्वा, इतरवत्।**

(**तथेति**) तथा द्वैतमपि त्यक्तम्, कुतः? साक्षाद्व्यापारवचनादित्यादि यावत् किमाधिकारिकैरिति, साक्षाद्व्यापारो ह्यैश्वर्यम्, तद्व्याचष्टे तस्मात्तद्व्यावृत्तेस्तस्य सर्वैः प्रकारैः सर्वकालं सर्वदेशे वाऽव्याहता वृत्तिरस्य, अतस्तदव्याहतवृत्तित्वात् किं धर्मादिना? आदिग्रहणादधर्मेण, किं स्थानविग्रहेन्द्रियविषयैर्वा? प्राणिनां सुखदुःखाश्रयैः, प्राणिभिर्वा किं क्रियते न किंचिदित्यभिप्रायः किमधिकारिकैः? ब्रह्ममनुविष्ण्वा-

---

न्यर्थः, सर्वत्राद्यन्तकालवदीश्वरेच्छावशादेव धर्माधर्मयोः सुखदुःखकारणयोरभावेऽपीष्टानिष्टशरीरेन्द्रियादेर्धार्मिकस्याधार्मिकस्य वा प्रसङ्गेन धर्माधर्मयोरानर्थक्यादित्याह-**यदुक्तमिति** स्पष्टमन्यत्। **सिद्धेरिति** मारकस्य हिंसकस्य वा यथा तथा मध्यकालेऽपि सुखस्य दुःखस्य वेश्वरशक्तिमात्रवशादेवाद्यन्तकालवत्सिद्धेर्धर्माधर्मयोरकारणत्वात्तन्मर्यादावचनमनर्थकमिति भावः। अथ स्वरुचित एवेश्वरप्रवृत्तौ प्रतिज्ञातं द्वैतमपि त्यक्तमित्याह-**तथेति**, धर्माधर्ममर्यादायाः स्वकीयैश्वर्यविघातकत्वेन तस्त्यागात् द्वैतत्याग इति भावः। **साक्षाद्व्यापारवचनादिति**, आदौ स्वशक्तित एवेति वचनात् स्वतो व्यतिरिक्तानां कारणानां प्रयोजनस्य च निरासेन साक्षात्तस्यैव व्यापाराभ्युपगमाद्द्वैतत्यागः, 'सर्वज्ञता तृप्तिरनादिबोधः स्वतंत्रता नित्यमलुप्तशक्तिः। अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य'॥ इतीश्वरस्याप्रतिहतशक्तिमत्त्वमेवैश्वर्यमित्यभ्युपगमात् धर्मादिव्यवस्थापनस्य वैयर्थ्यमित्याह-**तद्व्यावृत्तेरिति**, तद्व्यावृत्तेः धर्मादिव्यावृत्तेः ईश्वरप्रवृत्तेरव्याहतत्वेन धर्मादिना तज्जन्यसुखाद्याश्रयस्थानविग्रहादिना प्राणिभिराधिकारिकपुरुषैर्वा किं प्रयोजनमिति भावः। यदीश्वरो धर्मादीनपेक्षते तर्हि तद्व्यतिरेकेण तच्छक्तेर-

विभिर्धर्माधर्ममर्यादापालनार्थं विनियुज्यमानैर्वेति, अथ मन्यसे तैर्विना शक्तिर्व्याहन्यते तस्येश्वरस्य ततस्तस्य व्याहतशक्तित्वात्त्वेवमनीश्वरता, कार्यान्तरासक्तः श्रमाद्वा इतरवदिति, पृथग्जनवदित्यर्थः ।

ननु प्रधानोपसर्जनद्वैतमुद्ग्राह्य तदर्थसंवादेनोपसर्जनेन विनापि प्रधानस्य प्रवृत्तिसद्भावात् । चित्राचार्यस्येव शिष्येण विनापि सर्गादौ तथाऽदृष्टाद्यभावेऽपि प्राधान्यात्, भाव्यत्वादिति

5 चेन्न, आदिकरस्य कर्तृत्वात्, अव्यज्यमानप्रकारव्यक्तिरादिः, आदानात्, आदित्योदयादित्ववत्, तत्प्रयोजनपरमार्थत्वाद्भवितृत्वस्य, यः प्रयोजयति परमार्थतः स कर्ता भविता न प्रयोज्यो भूकृञोः सर्वधात्वर्थत्वात् ।

ननु प्रधानोपसर्जनेत्यादि यावत्तथाऽदृष्टाद्यभावेऽपीश्वरस्येति, आह द्वैतमेवोद्ग्राहितं भावितं प्रत्युपसंहृतञ्च नान्यथोद्ग्राहभावनोपसंहाराः, कथं ? प्रधानमुपसर्जनञ्च द्वैतं प्रतिज्ञातं, तस्यैवार्थस्य संवा-

10 देनेश्वरः प्रधानं न कर्मेत्येनद्भावनार्थं सर्गस्यादौ स्वशक्तितः स एव साक्षाद्व्याप्रियत इत्युच्यते, कस्मात् ? उपसर्जनेन विनापि प्रधानस्य प्रवृत्तिसद्भावात्, चित्राचार्यस्येव शिष्येण विनापीति, यथा शिष्यमप्रधानं ग्राहयित्वा चित्रकर्म ग्राहयित्वा वा प्रधानोऽयं तेन विना सह वा चित्रकर्मणि चित्राचार्यः प्रवर्त्तते, एवं स्वप्राधान्यात् सान्निध्यासान्निध्ययोरपि शिष्यस्य प्रवर्त्तकत्वात्, एवमीश्वरोऽप्यदृष्टादिसान्निध्यासान्निध्ययोः प्रवर्त्तते प्रधानत्वादिति भाव्यत्वादिति भाव्यत्वादुद्ग्राहितद्वैतानुरूपभावनोपसंहारात्मकत्वान्न कश्चिद्दोषः

15 इत्येतच्च न, आदिकरस्य कर्तृत्वात् आदिकरोत्यादिकरः, स एव च कर्ता, तस्यैव कर्तृत्वात्, कोऽसावादिरिति चेदुच्यते अव्यज्यमानप्रकारव्यक्तिरादिः स्वत एवात्तस्याव्यक्तस्य केनचित् प्रकारेण व्यक्तिरादिः, कुतः ? आदानात् आदानमादिरित्यक्षरार्थनिरुक्तिमाह, हेतौ दृष्टान्तश्च आदित्योदयादित्ववदिति यथाऽऽदित्यस्योदयमध्याह्नास्तमयत्वप्रकारेण दिवसादिविभागानां विद्यमानानां व्यक्तिरेवम्, तत्र प्रयो-

---

प्रसरात् प्रतिरुद्धशक्तित्वेनानीश्वर एव स्यादित्याह–**अथ मन्यस इति**। तत्र दृष्टान्तं दर्शयति–**कार्यान्तरासक्तेरिति** अपरकार्य-

20 व्यासङ्गात् श्रमाद्वा सामान्यः कश्चित् कर्मकरस्तदानीं प्रकृतं कार्यं प्रति यथाऽनीश्वरो भवति तद्वदिति भावः। अथ कर्म उपसर्जनं प्रधानमीश्वर इति वस्तुद्वयमुद्ग्राह्येश्वरस्य प्राधान्यभावनायाऽऽदौ स्वशक्तित इत्याद्युपदर्शितम्, प्रधानं हि उपसर्जनं सदसदपि कार्यं कर्तुमुत्सहते अन्यथा प्रधानाप्रधानभेदासम्भवात्। यथोपसर्जनभूतशिष्यव्यतिरेकेणापि चित्राचार्यश्चित्रे प्रवर्त्तत इत्याशङ्कते–**ननु प्रधानेति**, उपक्रम भावनोपसंहाराणां न वैषम्यमित्यादर्शयति–**द्वैतमेवेति** । स एव स्वशक्तित इति नाद्वैतं भावितमपि तु प्रधानत्वेनेश्वरस्य भावितमित्याह–**तस्यैवार्थस्येति** प्रतिज्ञातार्थस्येत्यर्थः। **इति भाव्यत्वादिति** उद्ग्राहितार्थभावनानुरूपमुपसंहारा-

25 दित्यर्थः। तेन न द्वैतस्याद्वैतस्य वा त्याग इति भावः। य एवादौ करोति स एव कर्ता कर्मनिरपेक्षः सर्गादौ यदि करोति तर्हि स एव कर्ता स्यादित्युत्तरयति–**आदिकरस्येति** । आदिपदार्थमनभिव्यक्तप्रकारव्यक्तिरूपं दर्शयति **अव्यज्यमानेति** । आदिशब्दव्युत्पत्तिमाह–**आदानमिति** उपादानं प्रकारस्येति भावः। दृष्टान्तमाह–**आदित्येति** उदयादीनामादित्य आदिकरोऽत एव तत्कर्ताऽसाविति भावः। यश्च वस्तुतः प्रयोजयति स एव कर्ता भविता च प्रयोजनक्रियायाः विशेषक्रियात्वात्, भूकृञोश्च सामान्यक्रियात्वात् सामान्यव्यतिरेकेण विशेषस्याभावात् भूकृञोः सर्वधात्वर्थव्यापित्वं तथा च यद्यसौ प्रयोजयिता तर्ह्यवश्यमसौ

30 कर्ता भविता चेत्याह–**तत्रेति** । एवञ्च सर्वेषामादिकरत्वमित्याह–**एतदुक्तं भवतीति** सर्वाणि वस्तूनि स्वस्मिन्नन्तर्हितानां

---

१ सि. क. दृष्टाद्यभावे० । २ सि. स्याद्व्याप्रि० । ३ सि. क. विनापीति । ४ सि. क. प्राणेयं । ५ सि. क. प्रवर्तितः । ६ क. °हिताद्वैताद्यु० । ७ सि. क. हेतुदृष्टान्तंवादित्यो० ।

...त्वाद्भवितृत्वस्य, यः प्रयोजयति परमार्थतः स कर्त्ता भविता, भूकृञोः सर्वधात्वर्थत्वात्, न प्रयोज्य इत्यस्मात् कारणात् य आदिकरः स कर्त्ता यश्च कर्त्ता स भवति, भूकृञोः सर्वधात्वर्थव्यापित्वात्, एतदुक्तं भवति यतः प्रकारान्तरेणाभिव्यञ्जयन्नवान्तरस्यादिकरत्वाद्भवति वस्तु तत एवैकैकस्य सर्वत्वं सर्वस्यैकत्वं परस्परापेक्षाभिव्यञ्जनेनादिकरत्वादिति ।

अस्मिंश्चार्थे व्यापकं दृष्टान्तमाह स्फुटीकरणार्थम्— 5

**आदिकरत्वञ्च यथा व्रीहौ सम्भाव्यते, अव्रीहेर्मृदादेर्व्रीहित्वेनादिकरत्वात्, तथा प्रागप्यादिकरत्वं तथा पश्चादपि, तदादित्वाद्व्रीहेस्तेषामादिकरत्वं तथाभिव्यक्तेः तत्प्रयुक्तत्वाच्च, ते ह्यस्य प्रयोक्तारः ।**

**आदिकरत्वञ्च यथा व्रीहौ सम्भाव्यत इति,** तद्व्याख्या—अव्रीहेर्मृदादेर्व्रीहित्वेनादिकरत्वादिति—मृत्सलिलवाताकाशानामव्रीहीणां व्रीहिप्रकारेणाभिव्यक्तिं कुर्वन् व्रीहिरादिकरः, एतमर्थं 10 हेतुत्वेन व्यापारयति सिद्धं कृत्वा पञ्चम्या—[1]व्रीहित्वेनादिकरत्वादिति, तथा प्रागित्यादि—एवञ्च कृत्वा व्रीहित्वात् प्रागपि पृथिव्याद्याकाशान्तानामप्यादिकरत्वं पश्चादपि, तेन प्रकारेण तथा, व्रीहिवदेव तदादित्वाद्व्रीहेः, ते आदिः पृथिव्यादिः यस्य व्रीहेः प्राक् पश्चाच्चेति, तेपामादिकरत्वं, तेन प्रकारेणाभिव्यक्तेः, किञ्चान्यत्—तत्प्रयुक्तत्वाद्व्रीहेः, ते ह्यस्य प्रयोक्तारः, यो यस्य प्रयोक्ता स तस्य कर्त्ता, यथाऽऽदित्योदयादित्ववदित्युक्तम् । 15

आह—

**तत्प्रयुक्तो व्रीहिः, पृथिव्याद्येव न भूतो व्रीहिः, आदित्यत्वादादित्योदयादित्ववदित्यत्रोच्यते को वा ब्रवीति पृथिवी न भूतः, उदकादिश्च व्रीहिरिति तत्प्रयुक्तत्वाद्व्रीह्यादि वा पृथिव्यादि न भूतमिति, तत्प्रयुक्तत्वाद्व्रीहिरपि पृथिव्यबाद्याकाशादि भवति पृथिव्युदकवाय्वाकाशाद्यपि च व्रीहिमाषाम्रजम्ब्वादि भवति, तत्कृताहारोऽपि पृथिव्यादि व्रीह्यादि,** 20 **पृथिव्याद्यपि तत्कृताहार इतश्चेतश्चेति सर्वस्यैकैकस्य तदात्मकत्वात्तत्तदेव ।**

प्रकाराणां प्रकाशनादादिकराणि, तेषां तथाभवनात्, वस्तुमात्रस्य परस्परापेक्षया प्रकाराणामभिव्यञ्जनादेकैकस्य सर्वत्वं सर्वस्य चैकत्वमिति भावः । एतदेव दृष्टान्तेन भावयति—**आदिकरत्वञ्चेति** अव्रीह्यात्मकानां मृज्जलवाय्वाकाशानां व्रीहित्वेनादिकरत्वात् व्रीहिरादिकरः, तेषां सद्भावे हि व्रीहिर्भवतीति भावः । व्रीहिरादौ वर्त्तते स च भूम्यादीन् व्रीहित्वेनाभिव्यञ्जयतीति व्रीहेः प्रथमसद्भावमसिद्धं सिद्धत्वेन हेतूकृतं व्रीहेरादिकरत्वे इत्याह—**एतमर्थमिति** । पृथिव्यादयोऽपि व्रीहिवदेवाऽऽदिकराः, तेन 25 प्रकारेणाभिव्यक्तेरिति व्रीहेः पूर्वापरभूतपृथिव्यादीनामादिकरत्वं प्रकाशयति—**तथा प्रागित्यादीति** । **तेनेति** व्रीहिप्रकारेणाभिव्यक्तेरिति भावः । हेत्वन्तरमाह—**तत्प्रयुक्तत्वादिति** भूम्यादिभिः प्रयुक्तो व्रीहिः, यश्च प्रयोक्ता स कर्त्तेति भूम्यादय आदिकरा इति भावः । ननु पृथिव्यादयो व्रीहेः प्रयोक्तारो भवन्तु नाम किन्तु तत्प्रयुक्तत्वात् आदित्योदयादित्ववदादिकरत्वात् पृथिव्यादिरेव व्रीहिर्भवतीति न ब्रूम इत्याशङ्कते—**तत्प्रयुक्तो व्रीहिरिति** । अथवा तत्प्रयुक्तत्वादादित्योदयादित्ववत् आदिकरत्वं पृथिव्यादीनां भवतु नाम, किन्तु पृथिव्यादिरेव व्रीहिर्भूत इति तु न, न ह्यादित्य उदयमध्याह्नादिदिवसविभागरूपो भवतीत्याह— 30

[1] सि. क. व्रीहित्वेनादिति । [2] सि. क. यावेहेः ।

(तत्प्रयुक्त इति) तत्प्रयुक्तो व्रीहिः, कस्मात्? पृथिव्येव न भूतो व्रीहिः, पृथिव्येवादक-मेव वायुरेव वाऽऽकाशमेव वा तत्प्रयुक्तत्वादादिकरत्वादादित्योदयादित्ववदिति, अत्रोच्यते को वा ब्रवीति पृथिवी न भूतः उदकादिश्च व्रीहिरिति, तत्प्रयुक्तत्वाद्व्रीह्यादि वा पृथिव्यादि न भूतमिति, तत्प्रयुक्तत्वा-द्व्रीहिरपि पृथिव्यबाद्याकाशादि भवति, पृथिव्युदकवाय्वाद्याकाशाद्यपि च व्रीहिमाषाम्रजम्ब्वादि भवति, तत्कृताहारोऽपि पृथिव्यादि व्रीह्यादि, पृथिव्याद्यपि तत्कृताहारः–तत्कृताहारशरीरेन्द्रियबु-द्ध्यादि–तत्कृतमनुष्यतिर्यङ्नारकदेवादि च तत्कृताहारव्रीह्यादि, पृथिव्यादि च तत्कृताहारशरीरेन्द्रिय-बुद्धिमनुष्यादि सर्वं परस्परतः सर्वात्मकं भवति तत्प्रयुक्तत्वात् तथाऽभिव्यक्तस्तदादिकरत्वादिहेतुभिः, कियद्वोदाह्रियते, न्यायस्यास्य व्यापित्वात् सर्वं तदुदाहरणमेव दिङ्मात्रप्रदर्शनार्थश्चाह–इतश्चेतश्चेति यदि व्रीहितो व्रीहेरादिकरत्वमथ पृथिव्यादितः पृथिव्यादेरादिकरत्वमिति तान्येवोदाहरणानि, एवं तत्कृताहारशरीरेन्द्रियादिष्वपि द्रष्टव्यम्, सर्वस्यैकैकस्य सर्वात्मकत्वात्तत आह–तदात्मकत्वात्तदव्य-तिरिक्तत्वात्तत्तदेवेति तस्य तस्य प्रकारस्य हेतुत्वं दृष्टान्तत्वञ्चेति ।

एवं दृष्टान्तभूतं प्रस्तुतन्यायप्रसाधितं सर्वसर्वात्मकत्ववादं प्रथयित्वा दार्ष्टान्तिकं पुरुषकर्मवा-दमीश्वरकारणनिराकरणायाह—

**पुरुषकर्मत्वस्यैवमेव, पुरुषः कर्त्ता कर्मयोग्यानां पुद्गलानां कर्मत्वेनादिकरः, तथाविधोप-योगगतेः ।**

**पुरुषकर्मत्वस्यैवमेवेत्यादि,** पुरुषः कर्त्ता कर्मयोग्यानां पुद्गलानां कर्मत्वेनादिकरः, कर्मयोग्याः पुद्गला उच्यन्ते–समानजातीयानामेकशो बुद्ध्याऽवस्थापितानां पिण्डो वर्गणा, कुचि-कर्णकाभीरसवर्णगोपिण्डवत्, परमाणुवर्गणा, अग्रहणवर्गणाः[1]–द्विप्रदेशवर्गणा एवं दशप्रदे-

**पृथिव्येव न भूत इति** । पृथिव्याद्यपि तथा तथा भवतीत्याह–**को वा ब्रवीतीति**, पृथिवी व्रीहिर्न भूतः, उदकादिर्व्रीहिर्न भूत इति को वा ब्रवीतीति योजना, व्रीहिः पृथिव्यादि भवति तत्प्रयुक्तत्वात् पृथिव्यादिरपि व्रीह्यादिर्भवति तत्प्रयुक्तत्वादेवेत्य-न्योन्यभवनमाह–**तत्प्रयुक्तत्वादिति** । **तत्कृतेति** व्रीह्यादिकृतेत्यर्थः, एवं च तत्प्रयुक्तत्वतथाभिव्यक्तितदादिकरत्वादिहेतुभिः सर्वं सर्वात्मकं भवतीत्युपसंहरति–**तत्प्रयुक्तत्वादिति** । तत्तद्रूपत्वे हेतुमाह–**तदात्मकत्वादिति** पृथिव्यादेर्व्रीह्याद्यात्म-कत्वाद्व्रीह्याद्यव्यतिरिक्तत्वात् व्रीह्यादिरेवेत्यर्थः, अथ दार्ष्टान्तिकं पुरुषकर्मवादमुत्थापयति–**पुरुषेति,** पुरुषो हि कर्त्ता कर्मपुद्गलान् गृहीत्वा कर्मत्वेनाभिव्यञ्जयति, अतोऽसौ कर्मत्वेनाभिव्यञ्जनादादिकरः, पुरुषस्य बन्धनयोग्यपरिणामापन्नपुद्गलद्रव्यग्रहणपरिणत-कृतप्रयोगपरिणामापन्नत्वादित्यर्थः, एवं पुरुषोऽप्यादिकरः, कर्मपरिणामयोग्यपुद्गलान् कर्मत्वेन परिणमयति तस्मात्तेषां प्रयोक्तृत्वात् योयस्य प्रयोक्ता स तस्य कर्त्तत्यादिकरः स इति भावः । तत्र हेतुमाह–**तथाविधेति,** बन्धनयोग्यपरिणामापन्नपुद्गल-द्रव्यग्रहणपरिणतिकृतप्रयोगपरिणामापत्तेः पुरुषस्येत्यर्थः, **कर्मयोग्या इति** के कर्मयोग्याः पुद्गला इत्याशङ्कायां ते अधुनोच्यन्त इत्यर्थः । **समानेति,** सजातीयानां पुद्गलानामयमेको वर्गोऽयमपरो वर्ग इत्येवं निरूपणात्मिकया बुद्ध्या तीर्थकरेण व्यवस्थापि-तानां पुद्गलानां समूहो वर्गणा । **कुचिकर्णकेति** । भरतक्षेत्रेऽस्मिन् प्रभूतगोमण्डलाधिपतिः कुचिकर्णको नाम कश्चिद्गृहपति-रासीत्, स तासां गवामतिबहुत्वात् सहस्रादिसंख्यापरिमितानां पृथक् पृथक् अनुपालनार्थं प्रभूतान् गोपालांश्चक्रे, ते तासु पर-स्पर मिलितासु गोष्वात्मीया आत्मीयाः सम्यगजानन्तः सन्तो नित्यं कलहमकार्षुः, तांश्च तथाऽन्योन्यं विवदमानानुपलभ्यासौ तेषामसंमोहार्थं कलहव्यवच्छित्तये कृष्णशुक्लरक्तकर्बुरादिभेदभिन्नानां गवां प्रतिगोपालं सजातीयगोसमुदायरूपा भिन्ना भिन्ना वर्गणा व्यवस्थापितवान् तथा गोमण्डलप्रभुकल्पस्तीर्थकरो गोपतुल्येभ्यः स्वशिष्येभ्यो गोसमूहसमानं पुद्गलास्तिकायं तदसंमोहार्थं परमाण्वादिवर्गणादिविभागेन निरूपितवानिति दृष्टान्तदार्ष्टान्तिकौ विज्ञेयौ । ता एव वर्गणा आह–**परमाणुवर्गणेति,**

---

[1] सि. क. अग्रहणवर्गणा इत्यधिकं दृश्यते ।

शादि संख्येय... शवर्गणाः, अनन्तप्रदेशवर्गणा अपि काश्चिद्ग्रहणयोग्याः काश्चिदग्रहणयोग्याः, ग्रहणयोग्या-योग्यत्वञ्चातिस्थूलसूक्ष्मत्वात्, मृदं इव परमाणुशर्कराणां [अयोग्यत्वात] योग्यत्वाच्च मध्यमपरिमाणानाम्, तत्र या ग्रहणयोग्याः पुद्गलतो वर्गणातश्च मानेन सिद्धानामनन्ततमो भागः, अभव्यसिद्धानामनन्तगुणः, एवं तावदौदारिकयोग्यस्य जघन्यस्य विधिः, तदुपर्येकपरमाणौ प्रक्षिप्ते द्वितीयाऽप्यौदारिकयोग्या, एवमेकैकवृद्धावनन्तानन्तानि स्थानान्यौदारिकाकारत्वेन ग्रहणयोग्यानि, जघन्यादुत्कर्षस्थानमसंख्येयगुणम्, यस्मात् परम्परोपनिधया प्रथमस्थानादारभ्यानन्तस्थानेषु[ग]तेषु द्विगुणता भवति तस्मादसंख्येयगुणं संख्येयगुणं वा, अनन्तरोपनिधया तु रूपाधिकमेव, तस्मिन्नुत्कृष्टौदारिकयोग्यद्रव्ये रूपे प्रक्षिप्ते जघन्यं वैक्रियशरीरस्याग्रहणयोग्यम्, एवं रूपाधिकवृद्ध्या तान्यप्यनन्तानन्तानि स्थानानि पूर्ववत्, जघन्यादुत्कृष्टमसंख्येयगुणम्, को गुणकारः? श्रेण्यसंख्यतमभागः, तेषामग्रहणानामुपरि वैक्रियस्य जघन्यं ग्रहणयोग्यम्, तान्यपि स्थानानि पूर्ववदनन्तानन्तानि, पुनराहारकाग्रहण[योग्या]नि, तथा तदुपरि तद्ग्रहणयोग्यानि तथैव, औदारिकशरीरयोग्येभ्यो वैक्रियशरीरयोग्यान्यसंख्येयगुणानि, ततोऽसंख्येयगुणान्याहारकयोग्यानि तावदसंख्येयगुणानि ग्रहणाग्रहणानि, पूर्वस्मात् पूर्वस्मात्तदुपर्याहारकोत्कृष्टे रूपे प्रक्षिप्ते जघन्यमग्रहणं तैजसस्य, जघन्यादुत्कृष्टमनन्तगुणम्, को गुणकारः? अभव्येभ्योऽनन्तगुणः, सिद्धानामनन्ततमभागः, तदुपरि रूपाधिके तैजसशरीरयोग्यं जघन्यादुत्कृष्टमनन्तगुणम्, को गुणकारः? सिद्धानामनन्ततमभागः, अभव्येभ्योऽनन्तगुणः, अनेन विधिनोत्तरेषां

समस्तलोकाकाशप्रदेशवर्त्तिनामेकैकपरमाणूनां समुदायः सजातीयत्वादेका परमाणुवर्गणा ततः समस्तलोकवर्त्तिनां द्विप्रदेशिकस्कन्धानां द्वितीया वर्गणा, ततः त्रिप्रदेशिकानां समस्तानामपि स्कन्धानां तृतीया वर्गणा, एवमेकैकपरमाणुवृद्ध्या संख्येयप्रदेशिकानां स्कन्धानां संख्याता वर्गणाः, असंख्यातप्रदेशिकानां स्कन्धानामेकैकपरमाणुवृद्धानामसंख्येया वर्गणाः अनन्तपरमाणुनिष्पन्नस्कन्धानामनन्ता वर्गणाः, अनन्तानन्तप्रादेशिकानां स्कन्धानामनन्तानन्तवर्गणाः, सर्वा अप्येता अल्पपरमाणुमयत्वेन स्थूलपरिमाणतया च स्वभावाज्जीवानां ग्रहे न समागच्छन्तीत्यग्रहणवर्गणा एताः सर्वा अप्युच्यन्त इति भावः। तत्र ग्रहणयोग्यायोग्यत्वे हेतुमाह-**ग्रहणयोग्येति,** मृदः परमाणुशर्करा इव या अतिस्थूला अतिसूक्ष्माश्च ताः ग्रहणायोग्याः, मध्यमपरिमाणाश्च ग्रहणयोग्या इति भावः। **परमाण्विति** परमाणुरतिसूक्ष्मत्वात् शर्करा चातिस्थूलत्वादयोग्या इति भावः, **तत्रेति,** औदारिकशरीरादेरग्रहणयोग्या उपर्युक्ताः सर्वाः समतिक्रम्याभव्यानन्तगुणैः सिद्धानन्तभागवर्तिभिः परमाणुभिर्निष्पन्नैः स्कन्धैरारब्धा ग्रहणप्रायोग्या जघन्यौदारिकवर्गणा भवन्तीति तथा स्कन्धानामपि तदेव मानमिति भावः। **अभव्यसिद्धानामिति,** भव्यत्वेन सिद्धा ये न भवन्ति तेऽभव्यसिद्धास्तेषामित्यर्थः। पुद्गलद्रव्याणां हि यथा यथा प्रभूतपरमाणुनिचयः सम्पद्यते तथा तथा सूक्ष्मसूक्ष्मतरः परिणामः सञ्जायते, तत्रौदारिकाग्रहणवर्गणाः, औदारिकग्रहणवर्गणाः, अग्रहणवर्गणाः, वैक्रियग्रहणवर्गणाः, अग्रहणवर्गणाः, आहारकवर्गणाः, अग्रहणवर्गणाः, तैजसग्रहणवर्गणाः अग्रहणवर्गणाः, भाषावर्गणाः, अग्रहणवर्गणाः, आनपानवर्गणाः, अग्रहणवर्गणाः, मनोवर्गणाः, अग्रहणवर्गणाः, कार्मणग्रहणवर्गणा इत्येवमौदारिकाद्याः कार्मणग्रहणवर्गणान्ता वर्गणाः पूर्वपूर्वस्मादुत्तरोत्तराः सूक्ष्मा विज्ञेयाः। तत्रौदारिकस्य ग्रहणयोग्याज्जघन्यादधोगता वर्गणाः स्वल्पपरमाणुनिष्पन्नत्वात् स्थूलपरिणामत्वाच्च तस्याग्रहणप्रायोग्याः, औदारिकग्रहणयोग्योत्कृष्टादुपरितन्यो वर्गणाः प्रभूतपरमाणुनिष्पन्नत्वात् सूक्ष्मपरिणामाच्च तस्याग्रहणयोग्याः, एवं वैक्रियादीनामपि विज्ञेयाः। **अनन्तानन्तानीति,** अनन्ते राशौ भूयोऽनन्तपुद्गलप्रक्षेपेऽनन्तानन्त इति प्रोच्यते। औदारिकजघन्यस्थानात्तस्यैवोत्कर्षस्थानस्यासंख्येयगुणत्वमुपपादयति-**यस्मादिति,** परम्परया व्यवधानेन मध्ये कियन्ति स्थानानि मुक्त्वा तत ऊर्ध्वमुपनिधा-मार्गणं विचारणं परम्परोपनिधा

१ सि. क. °सूक्ष्मायोग्यत्वात। २ सि. क. स्वदोरव। ३ क. श्रेण्यसंख्यसंख्यतम०।

भाषाप्राणापानमनःकर्मयोग्यानमग्रहणान्तरितानां ग्राह्याणामुत्तरोत्तरानन्तगुण[त्व]मानेयम्, अन्तरन्तु ग्राह्याणां जघन्यादुत्कृष्टो विशेषाधिकः सर्वत्र, को विशेषः? तस्यैवानन्तभागः, अग्राह्याणान्तु जघन्यादुत्कृष्टोऽनन्तगुणः, को गुणकारः? सिद्धानामनन्ततमभागः, अभव्येभ्योऽनन्तगुणः, एवंविधैः पुद्गलैः सर्वत्र लोकेऽवगाढनिचिते कर्मतया परिणमनयोग्यान कायवाङ्मनःकर्मलक्षणानां त्रयाणां
5 योगानां काययोगेन गृह्णाति, तेनैव कर्मणा शरीरतया परिणमयति, पुरुषः स्ववीर्येण योग्यानेव वाङ्मनःप्राणापानतया परिणमय्य काययोगेनैव वाङ्मनःप्राणापानतयाऽवलम्ब्य विसृजति, यथोक्तम् 'जोगेहिं तदनुरूवं परिणमयति गेण्हिऊण पंच तणू। पाउग्गे वा लंबति भासाणमणत्तणे खंधे ॥' (कर्म प्र० श्लो० १७) तथा 'मनसा वाचा कायेन वाऽपि युक्तस्य वीर्यपरिणामः। जीवस्यात्मनियः खलु स योगसंज्ञो जिनैर्दिष्टः ॥' (**तत्त्वार्थटी० अ० ७ पृ० ७०**) 'तेजोयोगाद्यद्वद्रक्तत्वा-
10 दिर्घटस्य परिणामः। जीवकरणप्रयोगे वीर्यमपि तथाऽऽत्मपरिणामः ॥' (         ) इति। किं कारणं? तथाविधोपयोगगतेः,—बन्धनयोग्यपरिणामापन्नपुद्गलद्रव्यग्रहणपरिणतकृतप्रयोगपरिणामापत्तेः पुरुषस्येत्यर्थः, यथोक्तं 'ऊष्मगुणः सन् दीपः स्नेहं वर्त्या यथा समादत्ते। आदाय शरीरतया परिणमयति चापि तं स्नेहम् ॥ तद्वद्रागादिगुणः स्वयोगवर्त्याऽऽत्मदीप आदत्ते। स्कन्धानादाय तथा परिणमयति तांश्च कर्मतया ॥' (**तत्त्वार्थटी० अ० ८ पृ० १४३**) 'स्नेहाभ्यक्तस्याङ्गे लगदेव रजो मलीभवत्यपि
15 वा। रागद्वेषस्नेहाभ्यक्तस्य तथा लगति कर्म ॥ (         ) रूक्षयति रूप्यतो ननु वक्त्रं स्निह्यति च रज्यतः पुंसः। औदारिकोऽपि देहो भाववशात् परिणमत्येवम् ॥' (**प्रज्ञा० टी० पृ० ४५५**         )

**एवं विधैरिति** ईदृशैः पुद्गलैः सर्वो लोकोऽवगाढः आश्रितः तथा निचितो व्याप्तश्च, जीवश्च यत्राकाशेऽवगाढस्तत्रैव ये कर्मयोग्याः पुद्गलास्तान् कर्मतया परिणमय्य कायस्य वाचो मनसश्च यानि कर्माणि-क्रियाविशेषाः चेष्टाविशेषजाः तीव्रतीव्रतरतीव्रतमभेदास्त एव योगा उच्यन्ते तेषां मध्ये काययोगेन गृह्णाति, तेनैव च कर्मणा शरीरतया परिणमयति चेत्यर्थः।
20 विसर्जनप्रकारमाह–**पुरुष इति**। कायादिकरणयोगादात्मनो वीर्यपरिणतिर्भवति, तथाविधेन वीर्येणेत्यर्थः। तत्र प्रमाणमादर्शयति–**जोगेहिं इति**, योगैर्जघन्यमध्यमोत्कृष्टरूपैः योगानुरूपं पञ्चशरीरानुरूपं वा पुद्गलस्कन्धान् गृह्णाति, यतो हि परिणामालम्बनग्रहणसाधनं वीर्यं भवति तेन योगेन औदारिकादिशरीरप्रायोग्यान् पुद्गलान् प्रथमतो गृह्णाति, गृहीत्वा चौदारिकादिरूपतया परिणमयति, तथा प्राणापानभाषामनोयोग्यान् पुद्गलान् प्रथमतो गृह्णाति गृहीत्वा च प्राणापानादिरूपतया परिणमयति, परिणमय्य च तन्निसर्गहेतुसामर्थ्यविशेषसिद्धये तान् पुद्गलस्कन्धानालम्बते, ततस्तदवष्टम्भतो जातसामर्थ्य-
25 विशेषः सन् विसृजतीत्यर्थः। उक्तार्थमेव कारिकान्तरे योगलक्षणप्रदर्शकं दर्शयति–**मनसा वाचेति**, अस्य श्लोकस्य मूलभूता गाथा स्थानाङ्गस्य तृतीयस्थानटीकायामुद्धृतेत्थं दृश्यते–'मणसा वयसा कायेण वा वि जुत्तस्स वीरिय परिणामो। जीवस्स अप्पणिज्जो सजोगसंज्ञो जिणक्खाओ' ॥ तथा तेजोयोगादित्यपि तत्रैव–'तेओ जोगेण जहा रत्तत्ताई घडस्स परिणामो। जीवकरणप्पओगे वीरियमवियप्पपरिणामो ॥' इति। सोऽयं वीर्यपरिणामोर्जीवस्यैवेत्यादर्शयति–**तेजोयोगादिति**, मृन्मयघटस्याग्निसंयोगाद्रक्तत्वादिपरिणतिर्यथा घटस्यैव तथा जीवस्य कायादिकरणयोगाद्वीर्यपरिणति-
30 रात्मन एव प्रादुर्भवति न द्रव्यान्तरस्येति भावः। अत्र हेतुमाह–[illegible]ति, यथा च दीप [illegible] स्नेहस्कन्धानादायार्चीरूपेण परिणमयति तथा रागादिगुणयोगात् कायादियोगवर्त्यात्मदीपः स्कन्धानादाय कर्मतया परिणमनमापादयतीत्यर्थकं कारिकाद्वयमाह–**ऊष्मगुण इति**। यथा च स्नेहाभ्यक्ते वपुषि जलार्द्रवाससि वा परागो लगति मलीभवति च तथा रागादिस्नेहाभ्यञ्जनस्यात्मनः कार्मणशरीरपरिणामोऽपूर्वकर्मग्रहणे योग्यतामास्कन्दतीत्यर्थप्रदर्शिकां कारि-

१ सि. क. °मग्यातयोग्यान्। २ सि. क. °मनसा। ३ जीवप्रयोगजनित इति पाठान्तरम्। ४ सि. क. भवति। ५ सि. क. रूप्यते तनु०। ६ सि. क. तनुभा०। ७ सि. क. °मयतिदेहोऽपम्।

**तस्मादात्मा करणयुक्तः कर्मत्वेनादिकरः, तदपि च कर्म आदिकरम्, बाह्यमपि घटादिकं सर्वमादिकरम्।**

**( तस्मादिति )** तस्मादात्मा करणयुक्तः कर्मत्वेनादिकरः, पूर्ववत् प्रयोजनपरमार्थत्वात् भवितृत्वस्य, किमात्मैवाऽऽदिकरः ? नेत्युच्यते तदपि च कर्माऽऽदिकरम्— तदपि च ज्ञानावरणादिकर्मग्रहणयोग्यमौदारिकादिशरीरभेदादिविपाकं पुद्गलम्, किं भवति ? नरनारकदेवतिर्यग्गतिसङ्ग्रहभवनवास्यादिनैकप्रभेदसर्वात्मशरीराणां तत्सम्बद्धात्मनां वाऽऽदिकरं भवति, यथोक्तं 'जीवपरिणामहेउं कम्मत्ता पोग्गला परिणमंति । पोग्गलकम्मणिमित्तं जीवोवि तहेव परिणमइ' ॥ [ प्रज्ञा-टी-पृष्ठ. ४५५ ] इति, न केवलमाध्यात्मिकमेवादिकरम्, किं तर्हि ? बाह्यमपि घटादिकं सर्वमादिकरम्।

विपर्ययेणापि भावयितुकाम आह—

**यथा चात्माऽकर्मणां कर्मत्वेनादिकरस्तथा प्राक् पश्चादपि कर्माऽऽदिकरम्, तदादित्वादात्मनः तथाऽभिव्यक्तेस्तत्प्रयुक्तत्वाच्च, आदित्योदयादित्ववत्। तत्प्रयुक्तं कर्म, आत्मैव न कर्मभूतः, आदित्योदयादित्ववदित्यत्रोच्यते, को वा ब्रवीति न कर्मभूतोऽसौ, कर्माणि चात्मभूतानि नेति, आत्मापि कर्म भवति, कर्माण्यात्मा भवति तथाविधोपयोगगतेस्तत्प्रयुक्तत्वादित्यादिभिर्हेतुभिः, तस्मात् सर्वसर्वात्मकत्वात् कोऽन्य ईश्वरः, का वाऽन्या प्रकृतिरिति।**

**यथा चात्माऽकर्मणामित्यादि** पूर्ववत् सचोद्यपरिहारं गतार्थम् यावत् को वा ब्रवीति न कर्मभूतोऽसौ, कर्माणि चात्मभूतानि नेति, तथाविधोपयोगगतेस्तत्प्रयुक्तत्वादिभिर्हेतुभिः, तस्मात् सर्वसर्वात्मकत्वात् कोऽन्य ईश्वरः, का वाऽन्या प्रकृतिरिति।

**इतश्चान्योन्यादिकरता कर्मकर्मिणोः, अचेतनज्ञानावरणकर्मप्रयुक्तत्वादात्मनः।**

**( इतश्चेति )** इतश्चान्योन्यादिकरता, आदिकरत्वात् कर्मकर्मिणोः सर्वसर्वात्मकतेति, कारणमाह—अचेतनज्ञानावरणेत्यादि, अचेतनानि ज्ञानदर्शनावरणवेद्यमोहायुर्नामगोत्रान्तरायाख्यानि

कामाह-**स्नेहाभ्यक्तस्येति**। **तस्मादिति,** तथाविधोपयोगप्राप्तेः कायवाङ्मनःकर्मयोगात् पुद्गलानां कर्मत्वेनादिकर इत्यर्थः। तस्यैव कर्तृत्वमित्याह-**पूर्ववदिति,** यो हि प्रयोजयति परमार्थतः स कर्त्ता भविता, भूकृञोः सर्वधात्वर्थत्वात्, न प्रयोज्यः कर्त्ता भविता भवति, य आदिकरः स कर्त्ता यश्च कर्त्ता स भवतीति भावः। कर्मणोऽप्यादिकरत्वमाह-**किमात्मैवेति**। **ज्ञानेति,** ज्ञानावरणादिकर्मग्रहणयोग्यं पुद्गलमत्र कर्मपदेन ग्राह्यम्, यत् औदारिकवैक्रियादिशरीराऽऽनपानादिरूपेण भवतीति भावः। तत् केषामादिकरमित्यत्राह-**नरनारकेति** नरादिगतीनां सङ्ग्रहो येषु भवनवास्याद्यनेकप्रभेदसर्वात्मशरीरेषु तेषां तथाविधशरीराणां तदैक्यतया तत्सम्बद्धात्मनां वाऽऽदिकरमित्यर्थः। जीवकर्मणोरन्योन्यादिकरत्वे प्रमाणं दर्शयति-**जीवपरिणामहेउं इति**। न केवलमाध्यात्मिका एव कर्मपुद्गला आदिकराः, अपि तु बाह्यमपि सर्वमित्याह-**न केवलमिति**। आत्मकर्मणोरन्योन्यादिकरत्वं साधयति-**यथा चेति,** तदेव कर्मैवादिर्यस्याऽसावात्मा तद्भावात्तदादित्वादात्मनः, कर्मणैव हि आत्मा भवति, अन्यथा तस्याभिव्यक्तिर्नैव स्यात्, उदयस्याभावे आदित्यस्यानभिव्यक्तेरुदय एवादित्यस्य यथाऽऽदिकरस्तथाऽऽत्मनोऽपि कर्म, एवमपि आत्मप्रयुक्तमेव कर्म प्रसक्तं नात्मा कर्मरूप इति कथं सर्वं सर्वात्मकमित्याशङ्कते-**तत्प्रयुक्तं कर्मेति**। कर्मात्मनोरुभयोरप्यन्योऽन्यरूपतामाह-**को वा ब्रवीतीति**। पुनरन्योऽन्यादिकरत्वं साधयति-**इतश्चेति**।

१ सि. क. घटादिकं सर्वादि०। २ सि. क. °न्योऽन्यादिकारिनादिकरत्वात्। ३ सि. क. °त्यादि, अचेतनानभिज्ञानावरणेत्यादि०।

सप्रभेदानि कर्माणि पुद्गलात्मकानि उदीर्णान्यावृत्य अक्षरानन्ततमभागं पयोगस्वाभाव्यादनावृण्वन्ति शेषं केषाञ्चिदावृण्वन्ति एकेन्द्रियनिगोदसूक्ष्मापर्याप्तकादीनाम्, कर्मणां क्षयोपशमवैचित्र्यात् । 'सव्वजीवाणं पि य णं अक्खरस्स अणंततमो भागो णिच्चुग्घाडिओ तंपि जइ आवरिज्जेज्जा तेण जीवो अजीवत्तं पावइ, सुट्ठु वि मेहसमुदये होइ पभाचंदसूराणं' ( नंदी० सू० ४२ ) तथा 'स्वल्पं रजो
5 हि कलुषयत्र नभः करोति राहुर्गृणोति शशिनं बलवांश्च सोमः । पङ्कं विनाशयति वारिगुणावकृष्टि दोषा मुहूर्त्तरभसा बलवान् स्वभावः ॥' ( ) इति, तस्मात् कर्मकर्मिणोरन्योन्यादिकरत्वम्, केवलिनस्तु विगतसर्वावरणविघ्नमोहत्वाद्यद्यप्युपयोगावरणाभावात्तथाविधोपयोगगतिरसिद्धा तथापि वेद्यायुर्नामगोत्रकर्मचतुष्कतत्प्रयुक्तत्वादिहेतुसद्भावादन्योन्यादिकरत्वं सिद्धम्, सिद्धौ चातिकर्मनिर्मुक्ताव्याबाधपारिणामिकपरमसुखक्षायिकसम्यक्त्वज्ञानदर्शनवीर्यलब्ध्यादीनाञ्चादिकरत्वम् ।

10 **नन्वात्मपुद्गलैक्यापत्तिवचनादेव वा भेदप्रतीतेः स्ववचनविरोध इत्येतन्न, पालनपूरणपुरुषत्वात्, निरुक्तिभेदेऽप्यर्थैक्यात् । अथैवं नेष्यते ततो नैवात्मा बध्येत कर्मणा, ततश्च तत्फलभूतैः शुभाशुभैर्न युज्येत, विमुक्तत्वात्, मुक्तवत्, मुक्तो वा बध्येत, तत एव तद्वत् ।**

( नन्विति ) नन्वात्मपुद्गलैक्यापत्तिवचनादेव वा भेदप्रतीतेः स्ववचनविरोध इत्येतन्न, कस्मात्? पालनपूरणपुरुषत्वात्, 'पृ पालनपूरणयोः'[ पूरयति ]पालयति सुखदुःखादिविपाकांस्तांस्तान् पुद्गला-
15 नात्मभावेनेति, पाल्यते तैस्तथाविधोपभोगगत्येति वा पुरुषः पूरयति तान् तैः पूर्यत इति पुरुषः; पुमांसं गिलति पुंसा वा गिल्यत इति पुद्गलः पूरणाद्गलनाद्वा पुद्गल इति निरुक्तिभेदेऽप्यर्थैक्यात् [ पुरुष ]

उक्तार्थे प्रमाणमादर्शयति-**सव्वजीवाणं इति,** संसारिणां पृथिवीकायादीनां सर्वेषां सर्वजीवपदेन परिग्रहः, अपिः सम्भावनायां, णमिति वाक्यालङ्कारे, अक्षरस्य सामान्यविशेषरूपावबोधस्यानन्तभागः नित्योद्घाटः सर्वदा निरावरणः, सकलत्रैलोक्यान्तर्वर्तिनोऽपि हि पुद्गलाः कर्मतया परिणताः सन्तोऽपि न समावरीतुं समर्था एकस्यात्मनः सर्वात्मनाऽवबोधम्, स त्ववबोधलेशः
20 स्फुरत्येव कियानपि सर्वदा, यदि च ते पुद्गलाः सर्वात्मना तमप्यावृणुयुः ततो निर्जीवतैव स्यादात्मनः, तस्मात् सा निरावरणा सर्वजघन्योपयोगमात्रा प्रथमसमये सूक्ष्मनिगोदापर्याप्तानामेव भवति, यथा च नितान्तघनपटलपिहितेऽपि सवितृमण्डले ज्योतिर्लेशः कियानपि चकास्त्येव, न सर्वथैव प्रणश्यति, तद्वदिति भावः । स्वभावादेव सोऽवबोधलेशः निरावरणः समस्तीत्यत्र स्वभावस्य बलवत्त्वप्रकाशिकां लोकोक्तिमाह-**स्वल्पं रज इति ।** स्तोकमपि रजो गगनं मलिनयति, राहुश्चन्द्रमसं निगिरति, पूर्णश्चन्द्रमाः शारदः सलिलं निष्कर्दमं विधत्ते, रात्रिश्च वारिशैत्यमधो नयति, सर्वत्रात्र स्वभाव एव वस्तूनां निबन्धनम्, तस्माद्ब-
25 लवान् स्वभावो न पर्यनुयोज्य इति भावः । तदेवं कर्माप्यादिकरमिति जीवकर्मणोरन्योऽन्यादिकरत्वं सिद्धमित्याह-**तस्मादिति ।** केवली कथमादिकरः, आवरणादिकर्मक्षयात्तथाविधोपयोगगतेस्तत्राभावादित्याशङ्कायामाह-**केवलिनस्त्विति,** घातिकर्मणां क्षयेऽपि अघातिकर्मणां सद्भावात् तथाविधोपयोगगतिरस्ति तथाऽचेतनवेद्यादिकर्मप्रयुक्तत्वमपि केवलिनोऽस्तीत्यादिकरः सोऽपीति भावः । सिद्धस्याप्यादिकरत्वमाह-**सिद्धौ चेति** कर्माभावेऽपि सुखसम्यक्त्वज्ञानदर्शनादीनां सिद्ध आदिकर इति भावः । नन्वात्मापि कर्म भवति, कर्माप्यात्मा भवतीति आत्मपुद्गलयोरैक्यापत्तिवचनादेव तयोर्भेदः सिद्धः, भिन्नयोरे-
30 कताऽऽपद्यते, न त्वेकस्य, स्वत एवैकत्वेनापत्त्यसम्भवात्, एवञ्च तयोर्भेदे सिद्धे ऐक्यवचनं व्याहन्यते, न हि घटपटयोर्भिन्नयोरेकताऽऽपद्यत इत्याशङ्कते-**नन्विति,** पुरुषपुद्गलशब्दयोरेकार्थत्वात् शक्रपुरन्दरादिशब्दवच्छब्दभेद एव, न त्वस्त्यर्थभेद इति समाधत्ते **पालनेति,** पालयतीत्यादिव्युत्पत्त्याऽऽत्मभावेन पुद्गलानां पालकः पुरुषः, पाल्यत इत्यादिव्युत्पत्त्या पुद्गलैः पालनीय इति च लभ्यते, पूरयतीत्यादिव्युत्पत्त्या पुद्गलपूरकत्वं पुद्गलैः पूर्यत्वञ्च । पुद्गलशब्दव्युत्पत्तिमाह-**पुमांसमिति,** गॄ निगरणे, मिथ्यादर्शनादिहेतुवर्तिनं पुरुषं बध्नन्ति वेष्टयन्तीति गिरणार्थः, पुंसेत्यत्राऽऽदानार्थः पुरुषेणाऽऽदीयन्ते कषाययोगभाजा कर्म-

पुद्गलशब्दयोरिन्द्रशक्र[ शब्द ]वदेकार्थत्वाददोषः । अथैवं नेष्यते–यथा मयोक्तं कर्मकर्मिणोरन्योन्यादिकरत्वं यदि न स्यात्, ईश्वरवशात् स्वभावादेः प्रकृत्यादेर्वा कुतश्चित् संसारवैचित्र्यं स्यादितीष्यते ततो नैवात्मा बध्येत कर्मणा–संसारबीजभूतेन शुभाशुभेन, ततश्च तत्फलभूतैः शरीरेन्द्रियस्थानविषयैः शुभाशुभैर्न युज्येत, विकर्मत्वान्मुक्तवत्, मुक्तो, वा बध्येत, तत एव तद्वत् । स्यान्मतं मुक्तामुक्तविकल्पसम्भव एव परमार्थतः, सृष्टिवशव्यवस्थानादिति, तदपि नोपपद्यते प्रकृतीश्वरादिसृष्टिवशादेव 5 न बध्येत तनुकरणादिभिः, न युज्येत भुवनेन च, अमूर्तत्वादाकाशवत्, आकाशं वा बध्येत युज्येत तदतत्त्वादिभिः, तत एव त्वदभिमतपुरुष इव, अनिष्टञ्चैवमादिभव[त्वं] इति ।

किञ्चान्यत्—

**यदि त्वदृष्टाभावेऽप्यसावीश्वरः ततस्ते मुक्तानामपि तनुकरणानि भुवनानि च कुर्यात्, ईश्वरत्वात् सर्गादिवत्, प्रलयकालेऽपि सर्वेषां कुर्यात्तत एव तद्वत्, मध्ये वा न 10 कुर्यात्, ईश्वरत्वात् प्रलयकालवत्, अनिष्टञ्चैतत्, अस्मात् कर्मैक्यात् सर्वसर्वात्मकत्वात् सर्वेश्वरता, अत एव चाणुत एव सुखादयः, तस्माददृष्टादितः सृष्टिरिति वादान्तरपरिकल्पितं त्यक्त्वाऽस्मदभ्युपगमोऽवश्यम्भावी, तस्मात् सम्भूयकारित्वाचेतनत्वस्थित्वाप्रवृत्तीनामपक्षधर्मता, एकत्वात् ।**

**यदि त्वदृष्टाभावेऽपीत्यादि,** मया तावदित्थमदृष्टाख्यकर्मत्वापन्नसर्वपुरुषेश्वरत्वमुक्तम्, 15 तस्य तस्य तत्त्वस्यादिकरत्वात्, तन्न चेदित्थमादिकरत्वमिच्छसि ततोऽपि त्वदनुवृत्त्याऽभ्युपगतेऽप्यदृष्टाख्यकर्माभावेऽपि मया दोष उच्यते–असावीश्वरस्ततस्ते मुक्तानामप्यभूततथाविधहेतुकर्मणां तनुकरणानि भुवनानि चासौ कुर्यात्, ईश्वरत्वात्, सर्गादिवत्, तथा प्रलयकालेऽपि सर्वेषां कुर्यात् तत एव तद्वत्, मध्ये वा न कुर्यात्, ईश्वरत्वात्, प्रलयकालवत्, अनिष्टञ्चैतत्, अस्माच्चानिष्टात् कर्मात्मैक्यात् सर्वसर्वात्मकत्वात् सर्वेश्वरता, अत एव चेत्यादि, कर्मात्मैक्यसर्वेश्वरत्वाभ्यामणुत एव— 20 कर्मत एव सुखादयः, तस्माददृष्टात् सृष्टिः प्रधानात् सृष्टिः पृथगणुभ्योऽदृष्टचोदितेभ्यो वा सृष्टिरिति

तयेति पुद्गलाः पूरणाद्गलनाच्च, संहन्यमानत्वात्, विसंहननत्वाच्चेति निरुक्तिभेदः । अथान्योऽन्यादिकरत्वं कर्मकर्मिणोरनभ्युपगम्येश्वरादितः संसारवैचित्र्याभ्युपगमे कर्मवैयर्थ्याद्बन्धमोक्षयोरसम्भवमाचष्टे–**अथैवमिति** । अथ कर्मात्मकपुरुषानभ्युपगमेनेश्वरस्य सृष्टिसामर्थ्येऽभ्युपगम्यमाने दोषमादर्शयति–**यदि त्विति,** पूर्वं जीवस्य बन्धमोक्षानुपपत्तिरुक्ता, अधुनेश्वरो मुक्तानामपि संसारित्वं संसारिणां मुक्तत्वं कुर्यादित्युच्यत इति भेदः । **अभूतेति,** संसारित्वहेतुभूतानि कर्माणि येषां न भूतानि 25 तेषामित्यर्थः । अविशेषात्सृष्टिकाल इव प्रलयकालेऽपि कुतो न सृजति, यदि प्रलयकाले न सृजति, तर्हि मध्यकालेऽपि न सृजेत, इतरानपेक्षैश्वर्यभाक्त्वात्तस्येत्याह–**तथा प्रलयकालेऽपीति** । तस्मात् कर्मैव समर्थं तदात्मा जीवोऽपीति सर्वेश्वरत्वाभ्युपगम एव युक्त इत्याह–**अस्माच्चेति** । अदृष्टप्रधानेश्वरवादत्याग आवश्यक इत्याह–**कर्मात्मैक्येति** । एवञ्च तनुकरणादीनां कर्मैक्यात् सर्वसर्वेश्वरत्वाच्च न सम्भूयैककार्यकारित्वं कर्मात्मैक्येन द्वितीयाभावात् केन सह भावः, अचेतनत्वमपि नास्ति तेषाम् ऐक्यादेव, पूरणपालनगलनपुद्गलनादिधर्माणां निरन्तरं प्रवृत्तेश्च न स्थित्वाप्रवृत्तिरपि परमाण्वात्मनोः परस्परग्रहणपारिणमनादिषु 30

१ सि. क. भुवनेनच । २ सि. क. नादिभव । ३ सि. क. तत्त्वाद्यादि० । ४ सि. क. °मप्यभूततथाविधहेतूनांकर्मणां । ५ सि. क. °मणव ।

वादान्तरपरिकल्पितं त्यक्त्वाऽस्मदुक्तकर्मात्मैक्यसर्वसर्वात्मक[त्व]सर्वेश्वरत्वाभ्युपगमोऽवश्यम्भावी, तस्मात्त्वयोक्तसम्भूयैकार्थकारि[त्व]चेतनत्वस्थित्वाप्रवृत्तीनामपक्षधर्मता, एकत्वात्, कस्य द्वितीयस्य केन सह सम्भूयैकार्थकरिता ? किं तदचेतनं चेतनात् पृथग्भूतं ? सततसंप्रवृत्तपूरणपालनगलनपुद्गरणादिधर्मत्वाच्च का स्थित्वा प्रवृत्तिः ? इत्यसिद्धार्थत्वाद्विशिष्टचेतनाधिष्ठितत्वं तन्वादीनां न साधयितुमलमिति, यदपि 5 विशिष्योक्तं मिथः प्रत्यनीकसम्भूयैकार्थकारित्वादिति तदसत्त्वं तु पूर्वोक्तमेव, 'णिच्छयओ सव्वलहुं' इत्यादिगाथया, तस्मान्नेश्वरपूर्विका सृष्टिः, किन्त्वनेकेश्वरपूर्विकेति विज्ञेया ।

**एवञ्च कृत्वा कर्मैकान्तवाददोषप्रकाशनमपि कृतं वेदितव्यम्, असम्बद्धत्वात्तस्य, पुरुषकारं निराकुर्वन्तः कर्म समर्थयन्तस्त इत्थमाहुः यदि प्रवर्त्तयितृत्वात् पुरुषकारः कारणं न कर्मापीति चेत्तत इदमनिष्टं ते प्राप्तम्, उत्कर्षार्थिपुरुषकारकत्वात्, प्रधानमध्यमाधम-10 भेदभिन्नाः पुरुषकारा न स्युः, ततश्च तत्फलभूताः सप्रभेदास्ताः सिद्ध्योऽसिद्धयश्च नाना-जातीया न स्युरव्यतिरिक्तकारणत्वात्, तुल्यतन्तुपटवत् ।**

**एवञ्च कृत्वेत्यादि,** अनेनैकान्तेश्वरपूर्वक[त्व]वाददोषप्रकाशनेन कर्मैकान्तवाददोषप्रकाशन-मपि कृतं वेदितव्यम्, असम्बद्धत्वात्तस्य—कर्मैकान्तवादस्य, कथं पुनस्ते कर्मैकान्तवादिन आहुः कथं वा स असम्बद्ध इत्यतः तत्प्रदर्शनार्थत्वात् पुरुषकारं निराकुर्वन्तः कर्म समर्थयन्त त इत्थमाहुरिति 15 तदुपपत्तीर्दर्शयति यथा—यदि प्रवर्त्तयितृत्वात् पुरुष [कारः] कारणं स्यादिति—पुरुषकार एव कारणं न कर्मापीति चेन्मन्यसे इत्येकान्तं सूचयति—तत इदमनिष्टं ते प्राप्तं—पुरुषकारकारणैकान्तिनस्ते प्राप्तम्, कतमदनिष्टं ? उच्यते प्रधानमध्यमाधम[भेद]भिन्नाः सिद्ध्योऽसिद्ध्यो वा नाना न स्युः, ताश्च दृष्टाः, न हि दृष्टाद्वरिष्ठमन्यत् प्रमाणमस्ति, कस्मान्नाना न स्युरिति चेदुच्यते—उत्कर्षार्थिकारै-कत्वात्—आत्मोत्कर्षार्थी पुरुष एव कारणं न कर्मापि कारणमिति पुरुषकारकारणैकान्तवादमाशङ्कते—20 पुरुषकारस्यैकत्वं—उत्कर्षार्थिपुरुषकारकत्वं—उत्कर्षार्थिनः पुरुषस्य क्रिया-कारः तस्यैकत्वात् प्रधानम-ध्यमाधमभेदभिन्नाः- स्वाचारदुराचारविकल्पद्वयकृता लोकप्रसिद्धाः पुरुषकारा न सिद्ध्यन्ति, एक एवो-

---

सततं प्रवृत्तेरित्याह—त[स्मात्त्व]योक्तेति, इदञ्च पक्षधर्मतायाः साधनाङ्गत्वाभ्युपगमे विज्ञेयम् । अथ कपिलमतापेक्षया यथा परस्परप्रत्यनीकयोरभ्युदकयोरप्रत्यनीकत्वविधायिना विशिष्टबुद्धिना पाचकेनाधिष्ठितयोः सत्यपि मिथः प्रत्यनीकत्वे तद्बुद्धिवश-वर्तिनोः संहत्यकारित्वादोदनसाधनं दृष्टं तथा लघुगुरुणोः प्रकाशवरणयोः प्रवृत्तिनियमयोश्च मिथो विरुद्धयोरपि संहत्य महदादि-25 भावैर्नैकार्थकारित्वाद्विशिष्टबुद्धिपूर्वकतेति यदुक्तं तदपि निराकरोति—**यदपीति** निश्चयतः परस्परविरोधिगुणानामभावस्य निश्चयतः सर्वलघुमित्यादिगाथया प्रतिपादितत्वादेव सोऽपि हेतुरसिद्ध एवेति भावः । एवञ्च कर्मकर्मिस्वरूपानेकेश्वरपूर्विकैव सृष्टिर्नेश्वर-पूर्विकेत्याह—**त[स्मा]दिति** । एवमीश्वरवादनिराकरणादेव कर्मैकान्तवादोऽपि निराकृत एवेत्याह—**एवञ्च कृत्वेति** । पुरुषकारस्यै-कस्य कारणत्वे परिदृश्यमानं जगद्वैचित्र्यं न स्यात्, अविशिष्टकारणाद्विशिष्टकार्योदयासम्भवादिति कर्मैकान्तवादिना कृतं पुरुषकारै-कान्तवादिनं प्रति आक्षेपं प्रदर्शयति—[पु]**रुषकारमिति** । हेतुं दर्शयति—**उत्कर्षार्थीति**, उत्कर्षार्थी पुरुषस्तस्य कारः, क्रिया 30 पुरुषकारस्तस्यैकत्वादित्यर्थः, एतदेवाऽऽचष्टे—**आत्मेति** । दृष्टस्य पुरुषकारभेदस्यानुपपत्तिमाह—**प्रधानेति** । पुरुषकारसाध्ये

१ सि. क. °र्पाकल्पं । २ सि. क. तदसम्बन्ध० । ३ सि. क. °कारणक० ।

त्कृष्टः प्राप्नोति, ततश्च तत्साध्यानामपि फलभूतानां प्रधानमध्यमाधमानां शुभाशुभानां भेदा न प्राप्नुवन्ति, एकैवोत्कृष्टा सिद्धिः प्राप्नोति, न मध्यमाधमप्रभेदे सिद्धी स्याताम्, नापि च पुरुषकाराणामसिद्धयः स्युः, ताश्च दृष्टा इति तदुपसंहृत्य साधनमाह—सप्रभेदास्ताः सिद्धयोऽसिद्धयश्च नानाजातीया न स्युरव्यतिरिक्तकारणत्वात्, तुल्यतन्तुपटवदिति, पुरुषकारस्यैव कारणत्वात्तद्व्यतिरिक्तकारणाभावाद्भवतः-पुरुषकारकारणैकान्तवादिनः कर्मानपेक्षत्वादिति । 5

इत्थं परपक्षे दोषमुक्त्वा स्वपक्षसाधनमाह—

कार्यातिरेकात्तु कारणातिरेक इति कर्मैव प्रवर्त्तयितृ, द्विविधा च सिद्धिरसिद्धिः कार्यस्य कर्मणः कारणत्वे एव सम्भवति, नेतरस्य, तत्र त्वदिष्टपुरुषव्यापारस्यावतारासम्भवात्, चेतनस्य स्वशक्त्याधानासमर्थत्वात्, चेतनामात्रसारो हि पुरुषकारः शक्तिः, न च स तां स्वां चैतन्यशक्तिमिष्टे मनुष्यत्वे पशुत्वे वर्त्तमान आधातुं समर्थः, मनुष्यः सन् न पश्वादौ वा, तस्यापि कर्मलभ्यत्वात्, अपि तर्हि संभाव्यं गङ्गायाः स्रोतसः कर्मणाऽन्यथा प्रवर्त्तनमिति । 10

कार्यातिरेकात्तु कारणातिरेक इति कर्मैव प्रवर्त्तयितृ, इतिशब्दो हेत्वर्थे, कार्याणामनेकप्रभेदानां सिद्धीनामसिद्धीनाञ्च परस्परतो व्यतिरिक्तत्वात् कारणातिरेकेणावश्यं भवितव्यम्, तच्च कारणं कर्मैव, पुरुषस्य त्वदभिमतस्य प्रवर्त्तयितुः प्रवर्त्त्यमनेकभेदमिति ग्रहीतव्यम्, तस्य कार्यनानात्वानुमितस्य कारणसामान्यस्य कर्मेति संज्ञा क्रियते, पुरुषकारस्य पुरुषादीनाञ्च कारणानां निराकृतत्वात्, तस्य सिद्ध्यसिद्धिभेदकार्यलिङ्गादनुमानम्, देशान्तरप्राप्त्यनुमेयादित्यगतेरिव, द्विविधा चेत्यादिना तल्लिङ्गासिद्धिपरिहारार्थं यावदितरस्येति गतार्थम्, प्रसिद्धलिङ्गमित्यर्थः, तत्रेत्यादि, तत्र—एतस्मिन् कारणवैचित्र्यानुमानलिङ्गे कार्ये त्वदिष्टपुरुषव्यापारस्यावतार एव नास्तीत्यावयोर्लोकस्यैव प्रसिद्धं कार्यलिङ्गं त्वदभिमते कारणासम्भवोऽस्मन्मते कारणसम्भव एवेति च दर्शयति, कस्मात् ? स्वशक्त्याधानासमर्थ- 15 20

फले वैलक्षण्यानुपपत्तिमाचष्टे—ततश्चेति, उत्कृष्टा सिद्धिर्मोक्ष एव स्यात्, मध्यमाधमसिद्धी चाभ्युदयवैचित्र्यरूपे इत्यर्थः । नापि चेति । पुरुषकाराणामशुभा नारकाद्यधर्मफलभूता असिद्धयो न स्युरिति भावः । फलवैलक्षण्याभावे हेतुमाह—अव्यतिरिक्तेति, एकजातीयकारणारब्धत्वात्, विजातीयकारणानपेक्षकारणारब्धत्वादिति वार्थः । दृष्टान्तमाह—तुल्यतन्त्विति, एकजातीयैस्तन्तुसमूहैरनेकैरारब्धानि कार्याण्यनेकानि पटात्मकान्येव भवन्ति, न घटाद्यात्मकानि, तथैकजातीयपुरुषकारकारणारब्धान्यपि कार्याणि उत्कृष्टसिद्धिरूपाण्येव स्युः, न मध्यमाधमप्रभेदे सिद्धी, न वाऽसिद्धयः स्युः, विजातीयकर्मानपेक्षकारणारब्धत्वादिति भावः । अथ कर्मपक्षे दोषाभावमभिधातुं कर्म समर्थयति—कार्यातिरेकात्त्विति कार्याणामतिरेकः परस्परं वैविध्यं, तस्मात् कारणानामपि वैविध्यं भवेदेव, तादृशञ्च कर्मैव नान्यद्भवितुमर्हति, पुरुषादिवादिभिरपि प्रवर्त्तयितुः पुरुषादेः प्रवर्त्त्यं भिन्नं भिन्नमेवेष्यते तस्मात् कार्यनानात्वेनानुमीयमानस्य कर्मणोऽन्यस्यासम्भवात् कारणसामान्यस्य कर्मण एव तैः पुरुषादिसंज्ञा क्रियते, पुरुषस्य पुरुषकारादेश्चाविशिष्टतया कार्यवैचित्र्यस्यासम्भवादिति भावः । कथं कर्मानुमीयत इत्यत्राह—तस्येति आत्मत्वेनाविशिष्टानां यदिदं देवासुरमनुजतिर्यगादिरूपं नरपतिदरिद्रकोविदकुमतिप्रभृति वा वैचित्र्यं तन्न निर्हेतुकं सामान्यहेतुकं वा विचित्रकार्यत्वात् अन्यथा सदा भावाभावैकरूपत्वादिप्रसङ्ग इति कारणवैचित्र्यं सेत्स्यतीति भावः । कार्यवैचित्र्यञ्च सिद्धमस्मन्मतेनैव सम्भवति, न पुरुषादिवादिमतेनेत्याशयेनाह द्विविधा चेति । इतरस्य पुरुषादेः कारणत्वे कुतो न सम्भवतीत्यत्राह तत्रेति । स्वशक्तीति पुरुषकारो हि पुरुषस्य शक्तिविशेषः, न च सहायान्तरनिरपेक्षस्तां स्वशक्तिं पुरुषो मनुष्यत्वे वर्तमानो देवत्वे पशुत्वादौ वा नेतुं शक्यः, 25 30

त्वात्, कस्य स्वशक्तिरिति चेत्–चेतनस्य–पुरुषस्य, चेतनामात्रसारा हि पुरुषकारः शक्तिः, हिशब्दो यस्मादर्थे, यतोऽस्यैषा शक्तिः, एतांश्चाधातुमशक्तोऽसाविष्टे मनुष्यत्वे पशुत्वे वर्त्तमान इति, स्वशक्त्याधानासामर्थ्यं दर्शयति–न च स इत्यादि, सत्यपि चैतन्ये तां स्वां चैतन्यशक्तिं कर्मबलाकृष्टनिकृष्टस्वज्ञानशक्तौ वर्त्तमानो न विशिष्टेष्टमनुष्यचेतन्ये स्थापयितुं शक्त इति, विपर्ययेण मनुष्यः सन्न तज्ज्ञानं पश्वादौ, आधातुं समर्थ इति वर्त्तते, तस्यात्मनो यत्स्वतत्त्वमिति त्वया प्रतर्कितं तन्न शक्नोति कर्मवशीकृतो योनिजात्यन्तरस्थो योनिजात्यन्तरेऽन्यत्राधातुं, कुतः ? तस्यापि कर्मलभ्यत्वात्–पशोर्मनुष्यस्य वा चेतनस्य कर्मवशादेव तथाभावात्, मनुष्यः पशुर्वा स्वजातिनामकर्मोदयादेव भवतीत्यर्थः, तदुदयस्य कारणान्तरदुर्निवारत्वात्, तत्र दृष्टमान्ताह–अपि तर्हि गङ्गाया इत्यादि सम्भावनयैतदुच्यते–अपि चैतत्सम्भाव्यं देवक्रियोत्पातादिना गङ्गास्रोतसोऽन्यथा प्रवृत्तस्य कर्मणाऽन्यथा प्रवर्त्तनमिति, एवं तावदभ्युपगम्य स्वतंत्रं चेतनं पुरुषकारश्च तस्योक्तम् ।

नैव वाऽभ्युपगच्छाम एतत्सर्वं किञ्चित् कर्मव्यतिरिक्तकृतम्, तत्त्वचिन्तायां कर्मव्यतिरिक्तकारणानवस्थानादित्येतद्दर्शयति—

**यापि चेष्टानिष्टतुल्यप्रवृत्तिः पुरुषस्योपक्रमप्रभृति यावच्छरीरं जह्यात्, सा कर्मत एव वेतालाविष्टशववशरीरवत्, यथाऽऽहारविशेषग्रहणखलरसादिभावविभजनाद्यसंवेतिताव्यक्तक्रियास्वतंत्र एव गर्भादिषु सुप्तः, ताः कर्मकृताः पुरुषो मत्कृता इत्यभिमन्यते तथाभासमानत्वात्, तत्कार्यतायां हि तासां कदाचिद [illegible]वादिहैवामृतत्वप्रसङ्गः ।**

**यापि चेत्यादि** यावद्वेतालाविष्टशववशरीरवदिति, कर्मवेतालाविष्टो हि पुरुषोऽस्वतंत्र इष्टानिष्टतुल्यप्रवृत्तिः, परवशत्वात् पुरुषस्योपक्रमप्रभृतीत्यादि यावज्जह्यादिति, तत्स्वातंत्र्याभावप्रतिपादनार्थो

---

इति भावः । एनमेव भावमादर्शयति **न च स इति**, सः चेतनोऽनिष्टे पशुत्वे वर्त्तमानः स्वशक्तिं चैतन्यलक्षणामिष्टे मनुष्यत्वादौ स्थापयितुं न समर्थ इति भावः । **विपर्ययेणेति**, स चेतन इष्टे मनुष्यत्वादौ वर्त्तमानः स्वां शक्तिमनिष्टे पश्वादौ नाधातुं समर्थ इतीष्टविपर्ययेणानिष्टेनाधानासामर्थ्यं प्रदर्शितमिति भावः । पुनर्भावार्थमाह–**तस्यात्मन इति**, स्वतत्त्वं पुरुषकारश्चैतन्यशक्तिः तत् स्वतत्त्वं पुरुषकारं चैतन्यशक्तिमित्यर्थः । **तस्यापीति**, मनुष्यपश्वादेरपीत्यर्थः, नमयति प्रापयति नारकादिभावान्तराणि जीवमिति नाम, जातिः सामान्यं एकेन्द्रियादि, जातिरूपं नाम जातिनाम तदेव कर्म जातिनामकर्म, अत्र पञ्चेन्द्रियजातिनामकर्मावान्तरभेदग्रहणं मनुष्यजातिनामकर्म पशुजातिनामकर्मेति तेषामुदयः कर्मविपाकाविर्भावस्तस्मादेव मनुष्यादेर्भावादित्यर्थः । स्वजातिनामकर्मोदयस्य कारणान्तरैर्वारयितुमशक्यत्वात्र पुरुषकारादिष्टानिष्टावाप्तिरित्याशयेनाह–**तदुदयस्येति** । कर्मलभ्यतायां सम्भावनायां दृष्टान्तमुच्यते–**अपि चैतदिति** । एतत्–अग्रे वक्ष्यमाणमित्यर्थः । किं तदित्यत्राह–**देवेति**, कस्यचिद्देवस्य क्रियाविशेषेण उत्पातादिना वा केनचित्कर्मणा गङ्गाप्रवाहस्य पूर्वाभिमुखे प्रवृत्तस्य पश्चिमाभिमुखतया विपरिवर्त्तनं सम्भाव्यते, गङ्गास्रोतसो विपरिवर्त्तनं यथा कर्मणैव सम्भाव्यं नान्येन केनचित्तथा पशोः पुरुषादिभवनं कर्मणैव स्यान्न तु पुरुषकारादेरिति भावः । लोके यत् किमपि दृश्यते शुभमशुभं वा तत्सर्वं कर्मकृतमेव, न पुरुषकारादिकृतमित्याह–**यापि चेति, इष्टानिष्टेति**, इष्टेऽनिष्टे च समाना प्रवृत्तिर्दृश्यते यदि पुरुष एव कारणं स्यात् तर्हि स्वतंत्रत्वात् इष्ट एव प्रवर्त्तेत, नानिष्टे, दृश्यते च तत्रापि प्रवृत्तिरतो विज्ञायते पुरुषोऽनिच्छया परवशादेव प्रवर्त्तते तस्मात् तथाविधं कर्मैव मुख्यं प्रवर्त्तकं वेताल इव, पुरुषस्तु शवशरीरसदृश एवेति भावः । इष्टानिष्टप्रवृत्तिं दर्शयति–**पुरुषस्येति** । गर्भेऽपि तस्य प्रवृत्तिः पराधीनेत्याह–

---

१ सि. क. ॰शक्तिरेषाञ्चा॰ । २ सि. क. ॰निकृष्टवश ज्ञा॰ । ३ सि. क. ॰पश्वादावाधातु॰ । ४ सि. क. ॰व्यतिरिक्तं कृतः

निमेषोपक्रमादारभ्य मरणापवर्गपर्यवसान इति गतार्थः। पुनरप्यतो—यथाऽऽहारविशेषेत्यादि यावदिहै-वामृतत्वप्रसङ्गः, मातुरोजः पितुः शुक्रञ्च प्रथमाहारः, ततः प्रथमाहारः ततः सप्ताहं कललं भवतीत्यादिना क्रमेण शरीरेन्द्रियादिकारणाहारः प्राणनादियात्रासमर्थः, तस्य च खलरसादिभावेन विभजनमित्याद्यसञ्चेतिताव्यक्तक्रियास्वस्वतंत्र एव गर्भादिषु सुप्तश्च, तास्तु क्रियाः कर्मकृताः पुरुषो मत्कृता इत्यभिमन्यते, तथाभासमानत्वात्, तत्कार्यतायां हि—पुरुषकारकार्यतायां हि तासां क्रियाणां कदाचिदकरणाभावात्— 5 प्राणस्थितिहेत्वनुपरमात् मरणाभावः, तस्मादिहैवाऽमृतत्वाय कल्पेतेति दृष्टेष्टविरोधदोषप्रसङ्गः।

तथा—

**कायेन्द्रियनिर्वर्त्तनेऽप्यनिष्टशरीरेन्द्रियादि न स्यात्, सम्पन्नेन्द्रियजातिसंस्थानसंहनननादियुक्त एव स्यात्, तस्मात्तत्सर्वमेव तत्कर्मण एव, तदतिरेकेण क आत्मनि प्रतिपद्येत? तस्मादहेतुः पुरुषस्तत्कारश्च।** 10

(**कायेति**) कायेन्द्रियनिर्वर्त्तनेऽप्यनिष्टशरीरेन्द्रियादि न स्यात्—काणकुण्ठबधिरादि, सम्पन्नेन्द्रियजातिसंस्थानसंहनननादियुक्त एव स्यात्—पुरुषकारकार्यनिर्वर्त्तने च धर्माद्यनुष्ठानविषयोपभोगादाविष्टस्यैव करणं स्वातंत्र्यात् स्यात्, तस्मात्तत्सर्वमेव तत्कर्मण एव—हेतोर्नात्मनः, कर्मण इति पञ्चम्या हेत्वर्थे विहितत्वात्, तदतिरेकेण क आत्मनि प्रतिपद्येत—तस्मादेवंविधान क आत्मन्येतदनुपपद्यमानं कर्म[णः]व्यतिरेकेणाभ्युपगच्छेत्? नाभ्युपगच्छत्येव विद्वानित्यभिप्रायः, तस्मादहेतुः पुरुषस्तत्कारश्च। 15

**अकारणमपि कर्म सहायापेक्षम्, कवलास्यप्रक्षेपादिवत्, अतो भारोत्पाटवत् फलोपहाराय तत्स्वामिनः कर्त्तुर्नयोद्योगावान्तरावपेक्ष्यौ, बाह्या च प्रकृतिरिति न मन्तव्यम्, तान्यपि हि**

**पुनरपीति**, पुनरप्यतः-अनेन ग्रन्थेनेष्टानिष्टप्रवृत्तिषु पुरुषस्यास्वातंत्र्यं दर्शयतीति भावः, तदेवाह-**यथाऽऽहारेति**, जीवनसाधनस्याहृताहारस्य बहिः गर्भे च शरीरेन्द्रियादिनिर्वृत्तिकारणस्य तथा तथा परिणमय्य विभजनं तद्यथा गर्भे मातुरोजः पितुः शुक्रं प्रथमाहारः, ततः सप्ताहं कललं भवति ततः सप्ताहमर्बुदमर्बुदाज्जायते पेशी पेशीतो जायते घनमित्यादिना क्रमेण 20 शरीरेन्द्रियादिनिर्वृत्तिः तत्सर्वं कर्मत एव, उत्पत्त्यनन्तरमपि प्राणनादियात्रासमर्थस्याहारस्य खलरसादिभावेन परिणमय्य रुधिरमांसमेदोमज्जास्थ्यादिभावेन विभजनमित्याद्यनभिसन्धिपूर्वकक्रियाः कर्मत एव न पुरुषादिव्यापारादस्वतंत्रत्वादिति भावः। तदेतत्सर्वं कर्मकृतमपि पुरुषस्तथाविधाहारव्यायामादिना शरीरादिपोषणं मयैव कृतमित्यभिमन्यते केवलम्, न तु वस्तुतस्तत्कृतमन्यथा प्राणस्थितिहेतोरनुपरमात्ताः क्रियाः पुरुषेण सर्वदा क्रियेरन्, तथा चेहैवामृतो भवेत्, मरणाभावात् न चैवं दृश्यते इष्यते च, तस्मान्न पुरुषकारादिकृतमित्याह—**तास्तु क्रिया इति**। पुरुषकारादिकृतत्वे दोषान्तरमप्याह—**कायेन्द्रियेति**। 25 **सम्पन्नेति**, शुभा ये इन्द्रियजातिसंस्थानसंहनननादयस्तैर्युक्त एव स्यात्, तत्रेन्द्रियपदेनाङ्गोपाङ्गानि औदारिकवैक्रियाहारकशरीरसंबन्धीनि शुभानि, जातिः पञ्चेन्द्रियजातिः, संस्थानं आकारविशेषः समचतुरस्रसंस्थानञ्च शुभम्, संहननं अस्थां बन्धविशेषः, वज्रर्षभनाराचसंहननञ्च शुभम्, आदिना प्रशस्तवर्णगन्धरसस्पर्शमनुष्यदेवगत्यगुरुलघुपराघातादयो ग्राह्याः। पुरुषकारेणैव यदि कार्यनिर्वृत्तिस्तर्हि धर्माद्यनुष्ठाने इष्टविषयोपभोगादावेव तस्य प्रवृत्तिः स्यात् स्वतंत्रत्वान्नाशुभे इति भावः। तदेतत्सर्वं कर्मण एव हेतोर्भवतीत्युपसंहरति **तस्मात्तत्सर्वमेवेति**। ननु यदि पुरुषकारो न कारणं तर्हि तं कर्म कुतोऽपेक्षते 30 दृष्टा च तदपेक्षा कर्मणः तथाविधकर्मसद्भावेऽपि पुरुषेण कवलमास्ये यावता न प्रक्षिप्यते तावता कर्माकिञ्चित्करमेवेति कर्मणा पुरुषकारस्यापेक्षणात्, अतः कर्म कारणमकारणञ्च, यथा भवता भारोद्वहनसामर्थ्यलक्षणपुरुषकारसद्भावेऽपि भारस्योत्क्षेपारं निक्षेप्तारं च विना नैव शक्नोति वोढुमिति पुरुषकारः कारणमकारणञ्चोच्यते तथा कर्मापीत्याशङ्कते-**अकारणमपीति,**

१ सि. क. °हेत्वनुपरिमाणात्।

**स्वामिधर्माधर्मरज्जु[निबद्धानि] तदायत्तत्वात्तद्भोग्यत्वात्तन्तुपटवत्, यदि तान्येवं नेष्यन्ते ततः सर्वाविशेषत्वप्रसङ्गः।**

(अकारणमपीति) स्यान्मतमकारणमपि कर्म सहायापेक्षम्–पुरुषकारमकारणमपि कर्म सहायमपेक्षते, कवलास्यप्रक्षेपादिवत्, यथोक्तं 'आलस्याद्यो निरुत्साह; स किञ्चिन्नाश्नुते फलम्। स्तन-
5 क्षीरादिपानञ्च पौरुषान्न विशिष्यते' ( ) अतो भारोत्पाटवत्–यथा भारं समुद्वहन् पुरुषः सहायमुत्क्षेप्तारं निक्षेपकञ्चान्तरेण स्वयमेव न शक्नोति वोढुमिति कारण[म]कारणञ्च दृष्टस्तथा कर्म पुरुषकारमन्तरेणेति [कारणम]कारणञ्चेत्येतदपि च न मन्तव्यम्,[अ]कारणमपीत्यादिना तमेव पूर्वपक्षं व्याचष्टे, भारोत्पाटापेक्षभारोद्वाहवदत्र किं सहायं कर्मणाऽपेक्ष्यमिति चेदुच्यते–फलोपहारा-येत्यादि फलमुपहरिष्यतः कर्मणस्तत्स्वामिनः कर्तुर्नयोद्योगावान्तरावपेक्ष्यौ, बाह्या[च] स्वामात्यादि-
10 प्रकृतिः, किं पुनः कारणमेवं न मन्तव्यम्? उच्यते–यतस्तान्यपि हि स्वामिधर्माधर्मरज्जुनिबद्धानीत्यादि यावत्तन्तुपटवत्, सहेतुकदृष्टान्तेन पटवाक्येनामात्यादीनां धर्माधर्मकार्यत्वमापाद्य कर्मकारणावधारणात् पुरुषकारं निराकरोति, तदायत्तत्वात्तद्भोग्यत्वादित्यादिना हेतुसौलभ्यञ्च दर्शयति, तन्तुपटवदिति–तंत्वायत्तपटवत् पटत्वेन तन्तूनामेव भोग्यत्ववत्, यदि तानीत्यादि, एवमनभ्युपगमे सर्वाविशेषप्रसङ्ग इत्यनिष्टापादनम्।

15 **योऽपि स्वामिपुरुषकारः सोऽप्यधर्मफलत्वात् कर्मैव क्लेशत्वात्, अथैवं पुरुषकारं संक्लेशाधर्मफलं नेच्छसि ततो न तर्हि दुःखमधर्मफलमिति प्राप्तम्, शिरोरोगादिक्लेशत्वान्नयोद्योगपुरुषकारवत्। अथ प्रसिद्धिविरोधदोषभयाद्दुःखमधर्मफलमिति त्वयाऽनुज्ञायते तत्साफल्य-क्रियायाश्च हिंसादे[रि]ष्टफलप्राप्तिरिति प्राप्तम्, धर्माधर्मफलविपर्ययात्।**

**योऽपीत्यादि** यदपि चोक्तं स्वामिनयोद्योगावपेक्ष्याविति स्वामिपुरुषकारः, सोऽप्यधर्मफल-
20 त्वात् कर्मैव, न पुरुषकारो नाम कर्मातिरिक्तोऽस्तीत्यवधारणार्थं प्राक् प्रतिज्ञातं समर्थयति क्लेशत्वात्

पुरुषकारमिति शेषः, पुरुषकारस्यापेक्षणीयतामेव कारिकया दर्शयति आलस्याद्य इति। **दृष्ट इति** पुरुषकार इति शेषः। **कर्मणाऽ-पेक्ष्यं** राजादि निदर्शनतयाऽभिमत्य दर्शयति **फलमुपहरिष्यत इति,** नयो विचारः, उद्योगः प्रयत्नः प्रकृतिः–अमात्यादिः। नयोद्योगामात्यादीनामपि कर्मण एव लाभात् कर्मैव कारणं न त्वकारणं पुरुषकाराद्यनपेक्षत्वादित्याशयेन समाधत्ते **यतस्तान्यपि हीति,** नयोद्योगामात्यादीन्यपीत्यर्थः, अत्र प्रयोगः, नयोद्योगादीनि धर्माधर्मलक्षणकर्मकार्याणि, तदायत्तत्वात्, तद्भोग्यत्वाद्वा,
25 यद्यदायत्तं तत्तत्कार्यम्, यथा तन्त्वायत्तः पटस्तन्तुकार्यम्, येनात्मना च यद्भोग्यं तदात्मा तत्कार्यम्, यथा पटात्मना तन्तवो भोग्याः, अत एव पटस्तन्तुकार्यम्, एवं कर्मायत्तत्वात् नयोद्योगादेः, नयोद्योगाद्यात्मना च कर्मणामेव भोग्यत्वान्नयोद्योगादि कर्मकार्यमिति भावः। नयोद्योगादीनां कर्मकार्यत्वानभ्युपगमे स **एव** जगतोऽविशेषप्रसङ्गो वैचित्र्यनियामकाभावादित्याशयेनाह–**यदि तानीत्यादीति।** पूर्वं कर्मकृतमपि पुरुषकृतमित्यभिमन्यत इति पुरुषकार एव कर्मेति प्रतिपादितं तत्समर्थनार्थमाह–**योऽपीति** नयोद्योगादिलक्षणः पुरुषकारः कर्मैव, अधर्मफलत्वात्, नहि पुरुषकारः कश्चित् कर्मव्यतिरिक्तोऽस्तीत्याह–
30 **यदपीति।** नयोद्योगादि कथमधर्मफलमित्यत्राह–**क्लेशत्वादीति।** ननु तस्य क्लेशत्वमसिद्धमित्यत्राह–**क्लेशो हीति,** नयो

१ सि. क. सहायापेक्षत्वा०। २ सि. क. °धर्माधर्मरज्जुपति निबद्धामी त्यादि।

क्लेशो हि चिन्ताव्यायामरूपो मनःशरीराऽऽयासात्मकत्वात्, ज्वरवत्, अथेत्यादि, अथैवं 'पुरुषकारं संक्लेशाधर्मफलं नेच्छसि प्रज्ञोत्साहयुक्तस्य प्रशस्तत्वेनेष्टत्वाल्लोके ततो न तर्हि दुःखमधर्मफलमिति प्राप्तं शिरोरोगादिक्लेशत्वात्, नयोद्योगपुरुषकारवत्, यथोक्तं 'अनर्थपाण्डित्यमधीत्य यंत्रितः सुतेषु दारेषु च नित्यशङ्कितः। निशासु जागर्त्ति हिनस्ति बान्धवान्नमोऽस्तु राज्याय वरं दरिद्रता॥' इति, ( ) अथ प्रसिद्धिविरोधदोषभयाद्दुःखमधर्मफलमिति त्वयाऽनुज्ञायते तत्साचिव्यक्रियायाश्च हिंसादेर्दुःख- 5
साधनतां गतस्यास्तत्कर्मणो हेतोः प्राणातिपातादेर्धर्मफलप्राप्तिः, का सा ? वि[शि]ष्टशरीरेन्द्रियसुख-सम्यग्ज्ञानारोग्यादिप्राप्तिरित्येतत प्राप्तं शुभाशुभयोरिष्टविपर्ययफलाभ्युपगमात्, धर्मान्नयोद्योगौ दुःखं चेत्युक्तत्वात्, अत एव प्राप्तमधर्मफलाद्दुःखात सुखं धर्मफलमिति प्राप्तम्, किं तत् ? ए[तद्]दिङ्मात्रं प्रदर्शयति—इष्टप्राप्तिरिति, इष्टशरीरेन्द्रियादिप्राप्तिरित्येतत प्राप्तम्, किं कारणं ? धर्माधर्मफलविपर्ययादित्यतः पुरुषकारनैरर्थक्यञ्च यादृच्छिकत्वाविशेषात्, अतो यदुक्तं कर्मैव कारणं पुरुषकारस्यापि कर्मफलत्वा- 10
दिति श्रेयान् पक्षः, यथोक्तं 'यथा यथा पूर्वकृतस्य कर्मणः फलं निधानस्थमिवोपतिष्ठते। तथा तथा पूर्वकृतानुसारिणी प्रदीपहस्तेव मतिः प्रवर्त्तते॥' (सूत्रकृ० टी. पृ० २१०)

**अभ्युपगम्यापि पुरुषकारं दोषं ब्रूमः, स निर्हेतुकः सहेतुको वा स्यात्, यद्यहेतुकः मुक्तानामपि स्यात्, सहेतुकश्चेत् कर्मण एवाचेतनाच्छुभादप्यनर्थावाप्तेरशुभादप्यर्थावाप्तेः शुभाशुभवैचित्र्यमनुमातुं शक्यते, युक्तिक्षमहेत्वन्तराभावात्, नात्रान्यद्विमर्दक्षमं कारणमस्ति।** 15

(**अभ्युपगम्यापीति**) अभ्युपगम्यापि पुरुषकारं दोषं ब्रूमः, स निर्हेतुकः सहेतुको वा स्यात्, किञ्चातः ? स पुरुषकारो यद्यहेतुको मुक्तानामपि स्यात् नयोद्योगलक्षणो न चेष्टस्तेषाम्, अथ मा भूदेष दोष इति सहेतुरिति ब्रूयात्ततः सहेतुश्चेन कर्मण एवाचेतनाच्छुभादपि पुरुषकारात्तेवादि-

हि चिन्तालक्षणः मनआयासात्मकः, उद्योगश्च व्यायामरूपः शरीरायासात्मकः, यश्चायासात्मकः स क्लेशरूप एव, यथा ज्वरादिरोगस्तथा नयोद्योगाविति भावः। ननु प्रज्ञोत्साहलक्षणनयोद्योगशालिनो लोके श्रेष्ठपुरुषतयाऽभिमतत्वान्न नयोद्योगौ 20
क्लेशरूपावधर्मफलरूपावित्याशङ्कायामाह—**न तर्हीति**, दुःखमात्रं क्लेशात्मकमपि नयोद्योगपुरुषकारवदधर्मफलं न स्यादिति भावः। नयस्य दुःखात्मकत्वं कारिकया दर्शयति—**अनर्थेति**, निरर्थकं नीतिशास्त्रं सम्यगभ्यस्य पुत्रदारादिष्वपि स्वात्महानिभीत्या नित्यं शङ्कितो निशास्वपि जागरूकः बन्धूनपि राष्ट्रहानिभीत्या हिनस्ति, ईदृशं राज्यं धिक्, अतो दारिद्र्यमेव श्रेयः, यत्र निःशङ्को निशासु जनः स्वपितीति भावः। अथ दुःखस्याधर्मफलत्वानभ्युपगमे दुःखमधर्मफलमिति लोकप्रसिद्धिर्विरुध्येत, तस्मात्तदधर्मफलमेवेत्याशङ्क्य तत्रापि दोषमाह—**अथ प्रसिद्धीति**, दुःखमधर्मफलमिति लोकप्रसिद्धस्तथा यद्युपगम्यते तथोद्योग- 25
स्यापि धर्मफलत्वमभ्युपगम्यते तर्हि वस्तुतो दुःखसाधनभूतस्य हिंसादेरुद्योगरूपस्य धर्मफलमिष्टशरीरादि भवेत्, शुभाशुभयोरिष्टफलाद्विपर्ययफलत्वेनाभ्युपगमादिति भावः। तदेव समर्थयति—**धर्मान्नयोद्योगौ दुःखञ्चेत्युक्तत्वादिति**, वस्तुतो दुःखसाधनभूताद्दुःखरूपादुद्योगात् प्रशस्तत्वेनाभ्युपगमाद्धर्मफलं सुखादि भवतीति प्राप्तमिति भावः। इत्थं धर्माधर्मविपर्ययाभ्युपगमेन पुरुषकारो निरर्थक एव, धर्माधर्मफलयोर्यादृच्छिकत्वाविशेषादित्याह—**धर्माधर्मफलेति**। एवञ्च पुरुषकारकारणत्वाभ्यु-पगमापेक्षया कर्मकारणत्वाभ्युपगम एव न्याय्यः, पुरुषकारस्यापि कर्मफलत्वादित्याह—**अतो यदुक्तमिति**। कर्मकारणत्वे 30
प्राचां संवादमाह—**यथा यथेति**। पुरुषकारं स्वीकृत्यापि दोषमभिधत्ते—**अभ्युपगम्यापीति**। **सहेतुश्चेदिति**, तत्रायं

१ सि. क. पुरुषकारसंक्लेशधर्मफलं। २ सि. क. गतस्वात्तत्वात्। ३ सि. क. एवचेतना०।

...भादपि प्राणातिपातादेरर्थावाप्तेर्धर्माधर्मफलसंस्कारोऽकर्तुमा तु शक्यते—एतदेबुद्धिपूर्वकादचेतनकर्मवशादेवैतच्छुभाशुभवैचित्र्यम्, किं कारणं ? युक्तिक्षमहेत्वन्तराभावात्, विचारितनिषिद्धत्वात् पुरुषनियतिकालस्वभावादिहेत्वन्तराणाम्, नात्रान्यद्विमर्दक्षमं कारणमस्ति—अन्यदतो दैवाख्यात् कर्मणः ।

5 **यदा चैवं प्रवृत्तौ कर्मण एव कर्तृत्वं सिद्धं तदा द्रवतीति द्रव्यं कर्तृसाधनं न भवति, स्वतंत्रस्य कर्तुरनुपपत्तेः, कर्मपरिग्रहविशेषात्तु द्रव्यं द्रूयते गम्यते भोग्येन कर्मपुरुषेण तेन द्रव्यं क्रियते कर्मपुरुषेणैव कर्मपुरुषः क्रियत इत्युक्तं भवति, यथा व्रीहिणैव व्रीहिः क्रियते कार्येणैव बीजव्रीहिणाऽङ्कुरव्रीहिरिति ।**

**यदा चेत्यादि**, यस्मिन् काले एवञ्च कृत्वा पुरुषस्य प्रवृत्तौ साध्यायां नास्ति कर्तृत्वमिति 10 सिद्धं[1]—कर्मण एवेति सिद्धं[2] तदा—तस्मिन् काले द्रवतीति द्रव्यं कर्तृसाधनं न भवति, स्वतंत्रस्य कर्तुरनुपपत्तेः, कर्मपरिग्रहविशेषात्तु—तुशब्दो विशेषावधारणार्थः, कर्मसाधनमुपपन्नार्थं द्रव्यं द्रूयत इत्ययं विशेषोऽवधार्यते, तद्विमहं दर्शयति—द्रूयते गम्यत इत्यादि, तदिदानीं निरूप्यते—भोग्येन कर्मपुरुषेण तेन द्रव्यं क्रियते, किमुक्तं भवति ? कर्मपुरुषेणैव कर्मपुरुषः क्रियत इत्युक्तं भवति, तत्र दृष्टान्तो यथा व्रीहिणैव व्रीहिः क्रियत इति, कार्येणैव बीजव्रीहिणाङ्कुरव्रीहिरिति तद्व्याख्या, एवं तावदवधार-15 णेन कर्त्रर्थो निराकृतः, कर्मैकान्तवाद उपपादितः, चेतनाचेतनैक्यात् सर्वसर्वात्मकत्वाच, अयुक्त ईश्वरोऽन्यो हेतुरिति चेति ।

**यद्याप्येवं** वादिनं **कार्यलक्षणत्वात् कर्मणः कार्यं कर्म यत्क्रियते तत्कर्मेत्यक्षरार्थाच्चानुमेयः कर्त्ता, तस्मात् कर्मणोऽन्यं कर्त्तारमन्तरेण कर्माभावात् घटस्येव कुलालो**

---

पुरुषकारः सहेतुको यदि तर्हि स हेतुः कर्मैव शुभपुरुषकारस्यानर्थफलं प्रत्यशुभपुरुषकारस्य शुभफलं प्रति समर्थम्, नान्यत्, 20 अतोऽनुमीयते, एतच्छुभाशुभवैचित्र्यं कर्मवशादेव, युक्तिक्षमहेत्वन्तराभावादिति, हेत्वन्तराणाञ्च कारणत्वं विचारेण निषिद्धमेव, तस्मात् कर्मैव कारणं नान्यत्, पुरुषकारोऽपि न कारणमिति भावः । प्रवृत्तिं प्रति कर्मण एव स्वतंत्रहेतुत्वे पुरुषो न प्रवृत्तिं प्रति कर्तेति पुरुषस्य पर्यायगमनकर्तृत्वलक्षणद्रव्यत्वं नोपपन्नमस्वतंत्रत्वात् किन्तु द्रूयते गम्यते यत्तद्द्रव्यमिति कर्मव्युत्पत्त्या द्रव्यत्वं तस्येत्याह—**यदा चैवमिति** । कर्मण एव कर्तृत्वे पुरुषः कथं द्रव्यं भवेत्, द्रवतीति हि द्रव्यमुच्यते तत्र यत्प्रत्ययस्य कर्तरि विहितत्वात्, स्वतंत्रस्यैव च कर्तृत्वात्, अस्वतंत्रस्य पुरुषस्य न द्रव्यतेत्याशङ्कायामाह **तस्मिन् काल इति** । किन्तु द्रव्य-25 शब्दस्य कर्मव्युत्पत्त्या पुरुषो द्रव्यं भवतीत्याह—**कर्मपरिग्रहेति** । कर्मपरिग्रहविशेषादेवेत्यर्थः, तथा च द्रव्यशब्दः कर्मसाधनः, द्रूयते यत्तद्द्रव्यमिति व्युत्पत्तेरिति भावः । तात्पर्यमाह **भोग्येनेति**, ज्ञानावरणादिना भोग्यं हि कर्म, तेन द्रूयते पुरुष इति तद्द्रव्यम्, तथा च कर्मात्मा पुरुष एव कर्मात्मानं पुरुषं करोति, कर्मपुरुषयोरन्योऽन्यादिकरत्वात्, कर्म एव पुरुषो भवति पुरुष एव कर्म भवतीत्युक्तत्वात्, प्रयोजनपरमार्थत्वाद्भवितृत्वस्य कर्मणः प्रयोजकत्वेन परमार्थतः तदेव भवति, यथा बीजव्रीहिणा प्रयोजकेनाङ्कुरव्रीहिः क्रियते तथैव कर्मपुरुषेण कर्मपुरुषः क्रियत इति भावः । उपसंहरति **एवं तावदिति**, 30 कर्मपुरुषेणेत्यवधारणेन द्रवतीति द्रव्यमिति कर्त्रर्थनिराकरणात् कर्मैकान्तवाद उपपादितः, न तु पुरुषोऽपि कारणम्, कर्मैकान्तवादे दोषमाशङ्कते—**यद्याप्येवमिति**, क्रियत इति व्युत्पत्त्या कर्मणः कार्यलक्षणत्वात् तस्यापि कश्चित् कर्त्ताऽनुमेय

---

१ सि. क. °रनुमानत्रा° । २ सि. क. एतदपि बुद्धि° । ३ सि. क. सिद्धे ।

व्याप्येष्यः कर्त्तेति, तत्र, ननु कर्मणैव करिष्यते स्वत एव कर्मणा कर्म क्रियते, न तु तद्व्यतिरिक्तेन कर्त्रेत्युक्तम्, ।

**यद्यापीति**, न केवलं कर्तृसाधन एव दोषः, किं तर्हि ? कर्मैकान्तवादोऽप्ययुक्तः, तत्प्रदर्शनार्थमाह एवंवादिनः ते पुनः कार्यलक्षणत्वात् कर्मणः कार्यं कर्म यत्क्रियते तत्कर्म, 'कर्तुरीप्सिततमं कर्मे'ति (पा० १–४–४९) लक्षणादक्षरार्थाच्चानुमेयः कर्त्ता, तस्मात् कर्मणोऽन्यं कर्त्तारं कर्म- 5
व्यतिरिक्तमन्तरेण कर्माभावाद्घटस्येव कुलालो व्याप्येष्यः कर्त्ता, प्रयोगश्च स्वतो व्यतिरिक्तचेतनकर्तृकम् त्वदिष्टं कर्म, कार्यत्वात्, क्रियमाणत्वात्, घटवदिति, अत्रोत्तरं परः—ननु कर्मणैव करिष्यत इति, स्वत एव कर्मणा कर्म क्रियते न तु तद्व्यतिरिक्तेन कर्त्रेत्युक्तम्, व्रीहिणैव व्रीहिः कार्येण बीजव्रीहिणा कार्योऽङ्कुरव्रीहिः क्रियत इत्युक्तं मयेति स्मारयति ।

इतर आह— 10

ननु सुदूरमपि गत्वा त्वयाप्येतदभ्युपगन्तव्यं कर्मव्यतिरिक्तः कर्त्ता पुरुषोऽस्तीति, व्रीहेरप्यावर्त्तकत्वात्, स्वरूपभेदात्, अक्षरार्थाच्च निर्विवादकृतकत्वात् कर्मणः कर्त्तुरेव भावः सर्वस्य, एवञ्च त्वदुक्तहेतोरेव कर्मव्यतिरिक्तपुरुषसिद्धेरावर्त्तकवैधर्म्येण कर्मणः कृतकत्वं कर्त्रर्थोत्तरभूतस्यावधारणस्यायुक्तम्, तच्छक्तेः ।

**ननु सुदूरमपि गत्वेत्यादि**, विचार्य विचार्याप्यात्मव्यतिरिक्तपुरुषाविनाभावित्वात् कर्मण- 15
स्त्वयाप्येतदभ्युपगन्तव्यं कर्मवादिना कर्मव्यतिरिक्तः कर्त्ता पुरुषोऽस्तीति, कस्मात् ? व्रीहेरप्यावर्त्तकत्वात्, अस्यापि व्रीहिदृष्टान्तस्य क्षित्युदकाकाशवाताङ्कुराद्यावृत्तिरूपत्वात् तेषाञ्च स्वरूपभेदात् स्वतः पृथग्भूतकर्त्रविनाभूतं कर्म सिद्ध्यति, अतो विपर्ययसाधनत्वमिति, किञ्चान्यत्—अक्षरार्थाच्च—क्रियत

एव, यतः कर्त्राऽऽप्तुं यदिष्यमाणतमं तत्कर्म भवतीति व्याकरणेनापि कर्तृसिद्धिः, लक्षणव्युत्पत्तिभ्याञ्च कर्मणोऽपि कर्ताऽनुमेयस्तस्मान्न कर्म स्वतंत्रं कारणमिति कर्मैकान्तवादोऽपि न युक्त इत्याशयं वर्णयति—**न केवलमिति** कार्यत्वं कर्मणो लक्षणम्, 20
यत्क्रियते तत्कर्मेत्यक्षरार्थः, फलितमाह **तस्मादिति**, कर्मव्यतिरिक्तं कर्तारमन्तरेण कर्मणोऽसम्भवात् कर्ता सिद्ध्यतीति भावः । **व्याप्येष्य इति** व्याप्येन कर्मणैष्योऽभिलषणीयः कर्तेत्यर्थः । अनुमानेन तमेवार्थमाह—**प्रयोगश्चेति**, त्वदिष्टं कर्मेति साध्यधर्मी, स्वतो व्यतिरिक्तचेतनकर्तृकमिति साध्यधर्मः, कार्यत्वादिति लक्षणभूतो हेतुः, क्रियमाणत्वादित्यक्षरार्थो हेतुः, घटवदिति दृष्टान्तः, इत्थं कर्तारं प्रसाध्य कर्मणः स्वातंत्र्यं प्रतिक्षिप्तम् । समाधानमाह—**अत्रोत्तरमिति**, परः कर्मैकान्तवादीत्यर्थः, स्वतो व्यतिरिक्तकर्तृकत्वमसिद्धम्, कर्मणैव कर्म क्रियत इति पूर्वमुपपादितत्वादिति भावः । प्रभूतं विचारं विधायापि 25
कर्मव्यतिरिक्तः कर्ताऽवश्यमभ्युपेय एव, नहि पुरुषं विना कर्म किमपि कर्तुमीष्टे, व्रीहिणैव व्रीहिः क्रियत इति दृष्टान्तोऽप्यसन्नेव, व्रीहेर्भूम्यादिविकारत्वात् भूम्यादेश्च व्रीहेर्भिन्नस्वभावत्वान्न व्रीहित्वमिति सोऽपि स्वव्यतिरिक्तकर्तृलब्धात्मेत्याशयेनाह **नन्विति**, कर्मपुरुषेणैव कर्मपुरुषः क्रियत इत्येतावतैव न विचारविरमणं भवति, कर्मणोऽपि कार्यत्वात्, स्वस्य स्वापेक्षत्वे आत्माश्रयदोषात्तद्व्यतिरिक्तं कारणमवश्यमेष्टव्यमिति भावः । एतदेवाह—**विचार्य विचार्यापीति**, व्रीहिदृष्टान्तस्त्वयोक्तस्त्वदिष्टविपर्ययस्यैव साधक इति वर्णयति **अस्यापि व्रीहिदृष्टान्तस्येति** । क्रियत इति कर्मोच्यते कर्मव्युत्पत्त्या प्रयत्नकर्मत्वं 30
प्रयत्ननिष्पाद्यत्वमेव कर्मणो लभ्यते, न तु प्रवर्तकत्वम्, तथा च प्रयत्नकर्ताऽन्यो वाच्यः, यस्य प्रयत्नात् कर्माऽऽत्मलाभं लभत इति तथाविधप्रयत्नविधाता स्वतंत्रः पुरुषोऽवश्यमङ्गीकार्य इत्याह—**अक्षरार्थाच्चेति** । कर्तुरिति न षष्ठी किन्तु पञ्चमी,

१ सि. क. कर्त्तरी० । २ सि. क. वास्येष्यः ।

इति कर्म, 'कर्तुरीप्सिततमं कर्म ( पा. १–४–४९ ) इति कर्मशब्दाक्षरार्थः, ततस्तस्य कृतकत्वं निर्विवादम्, तस्माच्च निर्विवाद[कृत]कत्वात् कर्मणः कर्तुरेव भावः स्वतंत्रश्च पुरुष एव भवति, कर्तुरेव भावः सर्वस्येति पञ्चमीनिर्देशात् पुरुषादेव सर्वं भवति कारणात्, एवञ्च त्वदुक्तहेतोरेव कर्मव्यतिरिक्तपुरुषसिद्धिः–कर्मणश्च तद्व्यतिरिक्तस्य सिद्धेरावर्त्तकवैधर्म्येण कर्मणः कृतकत्वं कर्त्रर्थोत्तर-

5 भूतस्यावधारणञ्चायुक्तम्, कुतः ? तच्छक्तेः–तस्मादेव हि कर्तुः पुरुषात् कर्मणः कृतकत्वशक्तिः, कर्तुर्वा पुरुषस्य करणशक्तिः, न व्रीहिणेव व्रीहिवदावर्तकत्वेनेति ।

न हि सा क्रियमाणाऽलब्धात्मवृत्तित्वादस्वतंत्रत्वाच्च भवति, अभूतदेवदत्तवत्, अनिष्टश्चैतत्तवापि । पुरुषकारप्रत्याख्याने च सर्वशास्त्रवैयर्थ्यप्रसङ्गः, हिताहितप्राप्तिपरिहारार्थौ हि सर्वशास्त्राणाम्, ताभ्यां प्रमाणान्तरसंवादेन निरुक्तीकृतसत्यत्वानि चिकित्सितादीनि

10 शास्त्राणि पुरुषक्रिययोरभावे निराकृतानि स्युः, नैवेष्यते तन्निराकरणमेवम्, त्वदुपदेशादिक्रियाणाञ्च दृष्टार्थानाम्, कर्मप्रवृत्तिमात्रत्वात्ततः प्रतिपत्त्यप्रतिपत्त्योः ।

न हि सा क्रियमाणेत्यादि यावद्-भूतदेवदत्तवदिति, तदेव भावयति तस्याः कर्मशक्तेः [अ]स्वतंत्रत्वमलब्धात्मवृत्तित्वात्, अस्वतंत्रत्वाच्च कुतो भवनम् ? दृष्टान्तः-अभूतदेवदत्तवत्–यथा गर्भोपक्रमावस्थायां कार्यायामलब्धात्मवृत्तित्वादस्वतंत्रः, अस्वतंत्रत्वादकर्तृत्वमकर्तृकत्वाच्च न भवति

15 कार्यावस्थाव्यतिरेकेण यथा देवदत्तस्तथा कार्यावस्थायां कर्मापि क्रियमाणं न भवेत्, अनिष्टश्चैतत्तवापि तस्मात् कर्म भवति, तच्च पृथग्भूतपुरुषभवनादृते न भवतीत्यस्ति पुरुषः । किञ्चान्यत् पुरुषकारप्रत्याख्याने सर्वशास्त्रवैयर्थ्यप्रसङ्गः, कथं ? यथाक्रमं हितप्राप्त्यहितपरिहारावर्थौ सर्वशास्त्राणाम्, ताभ्यां हिताहितप्राप्तिपरिहारार्थाभ्यां निरुक्तीकृतसत्यत्वानि प्रमाणान्तरसंवादेन चिकित्सितादीनि शास्त्राणि,

तथा च सर्वं कर्तुः पुरुषादेव कारणाद्भवतीत्यर्थ इत्याह-कर्तुरेवेति । तत्प्रयुक्तत्वादित्यदुक्तहेतुत एव कर्मव्यतिरिक्तः पुरुषः

20 सिद्ध्यति, द्रव्यमित्यत्र कर्मव्युत्पत्तिवत् कर्मेत्यस्यापि कर्मव्युत्पत्त्याऽक्षरार्थानुरोधेन कर्मपुरुषयोर्भेदसिद्धेरित्याह एवञ्चेति । व्रीहिवैधर्म्येण कर्तारं विना स्वतः कर्मणैव कृतकत्वं कर्मणेवेति कर्तृतृतीयोत्तरमेवकारेणावधारणञ्चायुक्तमित्यत्र हेतुमाह तच्छक्तेरिति, तस्माच्छक्तिस्तच्छक्तिस्तस्मात्, कर्मणः कृतकत्वशक्तिः पुरुषादेव, कर्तुः पुरुषस्य च कारणशक्तिः स्वतंत्रत्वादिति भावः, कर्तुरीप्सिततमं कर्म स्वतंत्रः कर्तेति लक्षणादिति भावः । यदुक्तं तदेव तथा भवति कर्मपुरुषेणैव कर्मपुरुषः क्रियत इति तन्निराकरोति-नहि सेति कर्मणो ह्यात्मलाभः पुरुषात् न स्वतः, तस्मात्तच्छक्तिरस्वतंत्रा, अलब्धात्मनि वृत्तेः, तथा चास्वतंत्र-

25 त्वात् पुरुषमन्तरेण तत्कथं भवति तस्मात् कर्तृभूतकर्मण एवासिद्धेस्ततः कर्मभूतपुरुषः कथं क्रियत इति भावः । तत्र दृष्टान्तमाह-अभूतदेवदत्तवदिति यथा गर्भस्य प्रारम्भावस्थायां कर्तव्यायां देवदत्तो न स्वतंत्रस्तदानीमलब्धात्मवृत्तित्वात् अस्वतंत्रत्वाच्च न कर्ता, अत एव न भवति कार्यावस्थाव्यतिरेकेण सः, तथैव कर्मापि कार्यावस्थायामलब्धात्मवृत्तित्वेनास्वतंत्रत्वात् कर्मणा कर्म क्रियमाणं न भवेत्, क्रियमाणता च न तस्येष्टा कार्यत्वात्, तस्मादस्ति तद्व्यतिरिक्तः कश्चित् कर्ता येन कर्म क्रियमाणं भवतीति भावः । पुरुषक्रियाया अनभ्युपगमे दोषान्तरमाह-पुरुषकारेति, पुरुषक्रियाया निराकरणे

30 पुरुषस्य हिताहितप्राप्तिपरिहारार्थविधिनिषेधप्रकाशकशास्त्राणां निरर्थकता ध्रुवैव भवेत्, पुरुषस्यास्वातंत्र्येण तत्क्रियानुदयादिति भावः । तानि च शास्त्राणि प्रमाणभूतानि तदुक्तानुष्ठानेन तदुक्तफलप्राप्तिलक्षणप्रमाणान्तरेण तत्प्रतिपादितार्थस्य यथार्थत्वादित्याह-ताभ्यामिति । कानि तानि शास्त्राणीत्यत्राह-चिकित्सितादीनीति वैद्यशास्त्राणीत्यर्थः । तच्छास्त्रवाक्यान्याह-

---

१ सि. क. 'कर्तृत्वं । २ सि. क. स्वतंत्रस्य० । ३ सि. क. सक्रियमाण इ० । ४ सि. क. आभूत० । ५ सि. क. गर्भोपक्रमा० ।

यथा 'कटुकः कटुकः पाके वीर्योष्णश्चित्रको मतः। तद्वद्दन्ती प्रभावात्तु विरेचयति सा नरम् ॥' (चरके सू० अ. २६ श्लो० ६८) 'नागरातिविषामुस्ताक्काथः स्यादामपाचनः' (चरके चि. अ. १५ श्लो. ९८) इत्यादीनि, पुरुषक्रिययोरभावे कर्मकारणैकान्ते निराकृतानि स्युः, इत्थं नैवेष्यते तन्निराकरणम्, कस्यचित् प्रामाणान्तरसंवादिनः शास्त्रस्य प्रामाण्यदर्शनात्, त्वदुपदेशादिक्रियाणाञ्च दृष्टार्थानां, निराकरणमेवमिति वर्त्तते, कर्मकारणैकान्ते पुनः पुरुषस्य स्वतंत्रस्य तत्क्रियायाश्चाभावे परप्रतिपादनार्थं तच्छक्तियुक्तशब्दोच्चारणक्रिया न स्यात्, कर्मत एव प्रवृत्तेः, आदिग्रहणादोदनस्य मुखसंयोजनादिक्रियाश्च न स्युः कर्मप्रवृत्तिमात्रत्वात्तत्प्रतिपत्त्यप्रतिपत्त्योः- त्वदुपदेशार्थप्रतिपत्तिः कर्मत एव परस्य सा प्रतिपद्येत विनाप्युपदेशेन, न प्रतिपद्येत वा सत्यप्युपदेशे।

**कर्मप्रवृत्तिमात्रत्वात्तत्प्रतिपत्त्यप्रतिपत्त्योः कर्मत एव भवतीत्युपपद्यते, प्राज्ञपुरुषप्रतिपत्तिवत् बलीवर्दाद्यप्रतिपत्तिवच्च तस्मात् सर्वाण्येतानि कर्मण एवेति चेत्, त्वमिदमसि तावत् प्रष्टव्यः, अथ तदादिकर्म कुतः? किं तदपि कर्मण एव? उत पुरुषात्? इति, ब्रूयास्त्वं ओमिति गत्यन्तराभावात्, न, व्रीहिवैधर्म्येणाकर्तृकत्वात् कृतकत्वमपयाति, ततो वाऽतो व्रीहिरकृतकः, ततश्चाक्रियमाणत्वान्न कर्मत्वं तस्य आत्मादिवत्, उत्क्षेपणादिवदिति, एवञ्च कृत्वा तदपि सर्वमसम्बद्धं यत्कर्मकारणैकान्तिन आहुः, यच्च पुरुषकारकारणैकान्तिन आहुः।**

**कर्मप्रवृत्तिमात्रत्वादित्यादि,** यावत् कर्मण एवेति चेत्, स्यान्मतं यदुच्यते शास्त्रनिराकरणमेवं तदुपदेशादिनिराकरणञ्च कर्मणोऽस्वतंत्रत्वे सत्यलब्धात्मवृत्तित्वाद्भूतदेवदत्तवदभवनं निर्विवादकृतकत्वात् कर्तुरेव भावः, तच्छक्तेः व्रीहेरप्यावर्त्तकत्वात् स्वरूपभेदात् पुरुष एव भवतीत्यादि

---

**कटुक इति** ओषधिविशेषश्चित्रको रसे कटुकः, विपाके कटुकः, वीर्ये उष्णः सम्मतः, दन्त्यभिधानौषधिरपि रसवीर्यविपाकेषु चित्रकसमानगुणा भवति, तत्र रसेन वीर्येण विपाकेन च द्रव्यं किञ्चित् किञ्चित् कर्म कुरुते, एवं प्रभावेणापि दन्ती कटुकरसविपाकोष्णवीर्यापि प्रभावात् नरं विरेचयति, न चित्रकः, एवं रसं तुल्यबलमपि विपाकोऽपोहति, रसविपाकौ तुल्यबलावपि वीर्यमपोहति, रसवीर्यविपाकान् समबलानपि प्रभावोऽपोहति यथा दन्ती, अत्र हि प्रभावेण रसवीर्यविपाका अभिभूयन्त इति श्लोकाभिप्रायः, श्लोकान्तरमाह **नागरेति,** आभिरोषधिभिर्विरचितः क्वाथः आमं पाचयतीत्यर्थः, एतेषां वचनानां प्रोक्तविधिनाऽनुष्ठानेन तदुक्तफलावाप्तेः संवादेन सत्यार्थतेति भावः। पुरुषतत्क्रिययोरकिञ्चित्करत्वे कर्मण एव प्रधानकारणत्वे स्वतः कर्मनाशकपुरुषप्रवृत्त्यसम्भवेन शास्त्राणि वैयर्थ्यान्निराकृतानि भवेयुरित्याह-**पुरुषेति** । न चैवमिष्यते शास्त्रप्रामाण्याभ्युपगमादित्याह-**इत्थं नैवेष्यत इति** । दोषान्तरमाह **त्वदुपदेशादीति,** त्वदुपदेशादिक्रियाणाञ्च दृष्टार्थानां निराकरणमेवमिति योजना, तदर्थमाह-**कर्मकारणैकान्त इति,** यदि कर्मैव कारणं नान्यत् किञ्चित्तर्हि परं बोधयितुं समर्थशब्दोच्चारणं न स्यात्, कर्मत एव प्रवृत्तिसम्भवादित्यर्थः। त्वदुपदिष्टार्थस्य बोधः परस्य यदि कर्मत एव स्यात् न तु पुरुषकारात्तर्हि तमुपदेशमन्तरेणापि प्राप्नुयात्, नैव वा प्राप्नुयादुपदेशे सत्यपि तथाविधकर्माभावादेवञ्चोपदेशादिक्रिया व्यर्थैवेति निराकृता भवेत्, [illegible] इत्याह **कर्मप्र[illegible]त्तिमात्रत्वादिति,** । अथ कर्मैकान्तवादी पुरुषवादिनोक्तान् दोषान् साधकांश्चानूद्य दूषयति **स्यान्मतमिति** शास्त्रनिराकरणं तदुपदेशनिराकरणञ्चाधुनैवोक्तम्, कर्मणोऽस्वतंत्रेत्यादि तु न हि सेत्यादिग्रन्थेन पुरुषसाधकेनो-

---

१ सि. तत्प्रतिपत्त्योः। २ सि॰ वर्त्तकात्।

**सर्वं नोपपद्यते कर्मत एव भवतीत्युपपद्यते कर्मप्रवृत्तिमात्रत्वात् तथा शास्त्रार्थस्यास्मदुपदेशादिक्रिया-**
**णाञ्च** प्रतिपत्त्यप्रतिपत्त्योः कर्मप्रवृत्तिमात्रत्वात्, प्राज्ञपुरुषप्रतिपत्तिवत् बलीवर्दाद्यप्रतिपत्तिवच्च,
तस्मात् सर्वाण्येतानि कर्मण एव हेतोर्भवन्ति पूर्वोक्तन्यायवत् वृथा त्वायामादिशारीरमानसक्लेश-
फलत्वात्तस्येति, चेदाशङ्कायाम् एवञ्चेन्मन्यसे ततस्त्वमिदमसि तावत् प्रष्टव्यः, अथ तदादिकर्म कुत
5 इति, मम तावदभिप्रायः कृतकत्वात् कर्मणः पुरुषादेव तदिति, तन्नेच्छता त्वया वक्तव्यं कुतस्तदादि-
कर्म ? यत एतत्सर्वं प्रतिपत्त्यप्रतिपत्तिक्लेशादीनि, त्वदभिप्रायाकर्णनार्थः प्रश्नः, किं तदपि कर्मण एव ?
उत पुरुषादिति, ब्रूयास्त्वं ओं-पुरुषादेवेति,–एवं नामास्तु को दोषः गत्यन्तराभावात्, कर्मत एवेत्यभि-
प्रायः स्यादिति, अत्र ब्रूमः, न, व्रीहिवैधर्म्येणाकर्तृकत्वात् व्रीहेरस्याकर्तृकत्वात् कृतकत्वमपयाति
ततो वाऽतो व्रीहिरकृतकोऽकर्तृकत्वात्, ततश्चाक्रियमाणत्वान्नोपपद्यते कर्मणः कर्मत्वं तस्यादिकर्मणः
10 किमिव ? आत्मादिवत् यथाऽऽत्माकाशकालदिगादीनि न केनचित्क्रियन्ते इत्यकर्माणि तथाऽऽदिकर्मापि
स्यात्, उत्क्षेपणादिवदिति, वैधर्म्य[नि]दर्शनम् यथोत्क्षेपणं कर्म तद्व्यतिरेकेणोत्क्षेप्त्रा विना न भवति
[न]तथेदमिति, एवं पुरुषकारवादिना कर्मवादी दूषितः कर्मवादिना प्राक् पुरुषवादी, तस्माद्यदुक्तमे-
वञ्च कृत्वा तदपि सर्वमसम्बद्धं यत्कर्मकारणैकान्तिन आहुः यच्च पुरुषकारकारणैकान्तिन आहुस्त-
दपि सर्वमसम्बद्धं परस्परदूषितत्वादिति ।

15 कम्, निर्विवादकृतकत्वादिति ननु सुदूरमपि गत्वेत्यादि ग्रन्थेनोक्तं एवमनूद्याथ सर्वा प्रवृत्तिः कर्मत एवेत्याह **कर्मत एव भवतीत्युपपद्यते इति** तत्र हेतुमाह **कर्मप्रवृत्तिमात्रत्वादिति** पुरुषस्य सर्वाः प्रवृत्तयः कर्मत एव, न हि तद्व्यतिरेकेण स ईषदपि स्पन्दितुं क्षम इति भावः । शास्त्रोक्तविधिनिषेधयोरुपदेशस्योदनमुखसंयोजनादिक्रियायाश्च प्रतिपत्तिरप्रतिपत्तिर्वा सर्वं कर्मत एवेत्याह–**तथा शास्त्रार्थस्येति** । सत्यपि समतयोपदेशादौ प्राज्ञः पुरुषस्तदर्थमधिगच्छति, अज्ञो बलीवर्दादि-र्नाधिगच्छति कृतेऽपि प्रयत्ने तस्मात्सर्वं कर्मनिमित्तमित्याह **प्राज्ञपुरुषेति** । **पूर्वोक्तन्यायवदिति**, कार्यातिरेकात्तु कारणाति-
20 रेक इत्यादि पूर्वोदितन्यायवत् कर्मैव प्रवर्तकमिति भावः । पुरुषकारस्तु वृथैव, आयासकरत्वेन निष्फलत्वादित्याह **वृथा त्विति** । अथ पुरुषकारवादी विकल्प्य समाधत्ते–**ततस्त्वमिदमसीति**, प्राथमिकं कर्म कुत उत्पन्नम्, द्वितीयतृतीयादिकर्मणां पूर्वकर्मणा सम्भवेऽपि प्राथमिकं कर्म कथमुत्पद्यते, तत्पूर्वं कर्मणोऽभावात्, कर्मणश्च क्रियमाणत्वात् क्रियमाणस्य च कर्त्तुरावश्यकत्वादिति भावः । पुरुषवादी स्वाभिप्रायं प्रकटयति–**मम तावदिति**, मच्छन्दानुवर्ती सन् पुरुषादेव तदादिकर्म भवतीति भवान् ब्रूयात्तदा दोषं वक्तुमाह–**ब्रूयास्त्वमिति**, नैवमस्ति ममाभिप्रायः, अपि तु त्वदाशयेनैवोच्यत एवम्, कोऽत्र दोष इति
25 भावः । दोषमत्राह पुरुषवादी–**अत्र ब्रूम इति**, मच्छन्दानुवर्ती सन् नैवं वक्तुं शक्नोति, यतः कर्म अकृतकं अकर्तृकत्वात्, यद्धि कृतकं तत्सकर्तृकं यथा व्रीहिरिति व्रीहिवैधर्म्येणाकर्तृकत्वेनास्याकृतकत्वमेव सिद्ध्यति, अन्यथा व्रीहेः सकर्तृकत्वानभ्युपगमेऽकर्तृकत्वाद्व्रीहिरपि न कृतकं स्यादिति भावः । एवञ्च कर्मणोऽकृतकत्वसिद्धौ क्रियमाणत्वाभावेन क्रियत इति कर्मेति व्युत्पत्तिसिद्धं कर्मत्वमपि न स्यादित्याह–**ततश्चेति** । आदिकर्मत्वेनेष्टं न कर्म, अक्रियमाणत्वात्, आत्मादिवत्, वैधर्म्येणोत्क्षेपणादिवत्, उत्क्षेपणादि क्रियमाणत्वात् कर्म तस्मादेव चोत्क्षेप्तारमन्तरेण तन्न भवति न चैवमादिकर्मेति भावः । एवञ्च कृत्वा कर्मैकान्तवाद-
30 दोषप्रकाशनमेव कृतं वेदितव्यमसम्बद्धत्वात्तस्येति पुरुषकारवादिनोक्तं तदेव स्मारयन् तद्वाद इवायमपि वादो दुष्ट एवेति निगमयति–**तस्माद्यदुक्तमिति** हेतुमाह–**परस्परेति** परस्परेण परस्परं दूषितत्वात्, कर्मवादिना पुरुषवादस्य पुरुषवादिना च

१ सि. प्रतिपत्त्योः । २ चि° प्रायाकर्षणार्थः । ३ पुरुषादेवेति युक्तं भाति । ४ सिक° स्यावर्तकत्वाकर्तृत्वमुपयाति तमोवातो व्रीहि० । ५ सि. क. नोत्क्षेप० ।

तदुभयमिदानीमैक्येनाप्यसम्बद्धमिति प्रदर्शयितुकामः प्रश्नयति—

**कथमसम्बद्धम्? नहि शुभमशुभं वाऽत्र किञ्चिदाभ्यन्तरं बाह्यं वा इष्टस्य कारणमनिष्टस्य वा, सर्वमेतदिष्टकारणमप्यनिष्टकारणमपि शुभमप्यशुभमपीति गृहाण, यथा त्रिदोषघ्नं मोदकादि प्रमाणाप्रमाणकालाकालाऽऽहारितं तथैक एव शुभाशुभादिधर्मा ह्ययं पुद्गलकायः, पुद्गलनिरुक्तिकः कायः शरीरं चितत्वात् पुद्गलस्य पुद्गलस्यैव वा कायः इति भोक्तृभोग्यात्मकविपरिणामवृत्तित्वात्, आहारवत्, कायचैतन्ययोर्वा ऐक्यपरिणामापन्नयोरेव भोक्तृभोग्यविपरिणामवृत्तित्वं सिद्धमतो भोक्तृत्वाद्भोग्यत्वाद्वा शुभोऽशुभश्च कायः।** 5

**कथमसम्बद्धमिति,** परवचनेन स्ववचनेन चैकत्वात्तयोः पृथक् कर्म पुरुषकाराभावादेवासम्बद्धमिति तत्प्रतिपादयिष्यन्नाह यस्मान्न शुभमशुभं वेत्यादि यावत्काय इति, अयं तावद्दृश्यमानः कायः पुरुषो वास्तु यत्तेऽभिरुचितं न मे कश्चिदत्र पक्षपातः, तत्र यस्मान्न किञ्चिदत्र शुभमेवाशुभमेव वा, बाह्यमपि कायाद्भिन्नमभिमतं रूपादि इष्टस्य सुखस्य कारणं चित्रमयूरस्रक्चन्दनभ्रमरततादि, अनिष्टस्य वा दुःखस्यातिविवर्णहुण्डसंस्थानकोणकण्टकशिवारुतादि, सर्वमेतदिष्टकारणमप्यनिष्टकारणमपि शुभमप्यशुभमपीति गृहाण, द्रव्यक्षेत्रकालभावपुरुषान्तरसंयोगविशेषाश्रयपरिणामविशेषापत्तेः सुरभिमधुरसुखस्पर्शसुरूपसुशब्देतरभावमुपलभ्यते, अभक्षितभक्षितमोदकवत्, पक्वापक्वाम्रफलवत् पद्मकेसरनालवत्, जाताजातविपन्नाविपन्ननरादिवत्, स्वस्थास्वस्थस्त्रीपुरुषगीतरुदनादिवत्, यथोक्तमार्षे 'जे चेव पोग्गला सुब्भिगन्धत्ताए परिणमंति ते चेव पोग्गला दुब्भिगंधत्ताए परिणमंति' (　　　　) इत्यादि, तस्मान्न शुभमशुभं वैकान्तेन किञ्चिदस्ति भिन्नजाति, किं तर्हि? तदेव शुभं तदेवाशुभं तदेवेष्टकारणमनिष्टकारणञ्च, यथा त्रिदोषघ्नं मोदकादि प्रमाणाप्रमाणकालाकालाऽऽहारितमिति स्वस्थसर्पदष्टाहारितविषवद्वा, तथैक एव ह्ययं पुद्गलकायः पुद्गलनिरुक्तिकः कायः शरीरं चितत्वात्, रोगादिदुःखनिवासत्वाद्वा सर्वोऽपि बाह्याभ्यन्तरो मूर्तद्रव्यसंघातः कायो रूपादिसंघा- 20

कर्मवादस्य दूषितत्वादिति भावः। उभयोः समुच्चये दोषमादर्शयति-**तदुभयमिति**। कथं कर्मवायुक्तं पुरुषवायुक्तवासम्ब, द्धमित्येतद्दर्शयति-**कथमिति**। कथं कर्मपुरुषकारयोस्तद्वचनेनैकत्वात् पृथगुभयाभावादेवासम्बद्धतत्याह-**परवचनेनेति** बाह्यमाभ्यन्तरं वा वस्तु किञ्चिदेकान्तेन शुभं किञ्चिदेकान्तेनाशुभं किञ्चिदिष्टस्यैव साधनं किञ्चिच्चानिष्टस्यैवेति वर्तते किन्त्वेकमेव शुभमशुभमिष्टसाधनमनिष्टसाधनमपि द्रव्यक्षेत्रकालभावपुरुषान्तरसंयोगविशेषेण तथा तथा परिणामविशेषमापद्यत इत्याह-**अयं तावदिति**। **ततादीति** वीणादिवाद्यादीत्यर्थः। एकस्यैव सुरभीतरादिपरिणामापत्तौ दृष्टान्तानाह-**अभक्षितेति** अभक्षितं 25 मोदकं सुरभि भवति, भक्षितञ्चासुरभि, पक्वमाम्रफलं मधुररसं भवति, अपक्वञ्चामधुरम्, पद्मकेसराणि सुखस्पर्शः पद्मनालञ्च कठिनस्पर्शः, अभिजातोऽविपन्नो वा नरः सुरूपो भवति, अनभिजातो विपत्तिक्रान्तो वा नरः कुरूपो भवति, स्वस्थस्त्रीपुरुषगीतिः सुशब्दा भवति, अस्वस्थस्त्रीपुरुषरोदनं दुःशब्दं भवतीति दृष्टान्तानामर्थः। एकस्यैव शुभाशुभादित्वे निदर्शनमाह-**यथेति** त्रिदोषघ्नमपि मोदकादि प्रमाणेन काले चाहृतं शुभं सुखसाधनञ्चान्यथाऽशुभमनिष्टसाधनञ्चेति भावः। निदर्शनान्तरं स्वयमाह-**स्वस्थेति,** नीरोगेणाहृतो विषविशेषोऽनिष्टसाधनं प्राणहरत्वात्, सर्पदंष्ट्रेणाहृतो विषविशेष इष्टसाधनम्, सर्पदंशनविषदूरी- 30 करणादिति भावः। **एवमेव पुद्गलकायः शुभाशुभादिधर्मा भवति भोक्तृभोग्यात्मकविपरिणामवृत्तित्वात् आहारवदित्याह-तथैक एवेति**। पुद्गलकायशब्दं व्युत्पादयति **पुद्गलनिरुक्तिक इति**। **बाह्याभ्यन्तरमूर्तद्रव्यसंघातस्य कायत्वमुक्त्वा**

१ क. °तत्यादि। २ सि. क° कारकण्टक०। ३ सिक सुरा० ४, ५ ततए०।

तत्वात्, परमाणोरपि, पुद्गलस्य पुद्गलस्येव वा कायः, इतिः विग्रहसमासौ, अथवा पृथक् परिकल्पनयाऽनया किं ? इन्द्रियप्रत्यक्षाभिमतः शरीराख्यः पुद्गलकायः, स्वसंवेद्यज्ञानात्मकक्रियादिलिङ्गानुमित आत्मा वा सोऽयमेक एव, न ह्यत्र काचिद्भेदबुद्धिः कार्या, बन्धपरिणामैक्यापत्तेः एतत्त्रयदर्शनादेक एव शुभाशुभादिधर्मेति साध्यस्य कायस्य वक्ष्यमाणाहारदृष्टान्तसाम्यमापाद्य हेतुत्वेन तत्साधर्म्यमाह

5 भोक्तृभोग्यात्मकविपरिणामवृत्तित्वादिति, यो हि पुरुषकारवादिमतेन भोक्ता अथापि कर्मवादिमतेन भोग्यः, तस्मात् कायो भोक्तृभोग्यात्मकः, तस्य विपरिणामो वृत्तिरस्येति कायः सम्बध्यते भोग्यस्य भोक्तुर्वा विपरिणाम इति शुक्रशोणितं जनन्याहृतान्नरसादि च आद्युत्तरकारणमस्य शरीरस्य तदुभयं भोक्तृ भोग्यञ्च, अन्योऽन्यभावापत्तेः, तथा चतुर्विधोऽप्याहारोऽशनादिराहर्त्राहार्यभावाद्भोक्तृभोग्यश्च, तच्च शुभाशुभेष्टानिष्टकारणमेवेति, कायचैतन्ययोर्वा ऐक्यपरिणामापन्नयोरेव भोक्तृभोग्या[त्मकवि]परि-

10 णामवृत्तित्वं सिद्धमत आहारवच्छुभाशुभादिधर्मताऽस्येति, यथाऽऽहारः शुभश्चाशुभश्च दृश्यते संस्कृतोऽसंस्कृतः, संस्कृतोऽप्यशुभ एव संक्रियमाणान्नाद्यशुभत्वात् संस्कारकाभिमतकर्पूरादेरपि कालान्तरे दौर्गन्ध्यादिदर्शनात् सर्वपुद्गलानां प्रागुक्तविधिना शुभाशुभत्ववत्पुद्गलत्वादाहारः शुभोऽशुभश्चेति तथा काय इति, अथ वा चेतनाचेतनयोरात्मशरीरयोरैक्यपरिणामात्तदेव भोक्तृ भोग्यञ्चेत्यनेनैवाहारदृष्टान्तेन सम्बद्धं प्रत्येकमपि साधयत्येतद्धर्मद्वयमित्यत आह भोक्तृत्वाद्भोग्यत्वादिति, एवं कर्तृत्वात् कर्म-

15 रूपादिसंघातत्वादेव परमाणोरपि कायत्वमाह-**परमाणोरपीति** । मूर्तद्रव्यसंघातस्य कायत्वाभिधानेन अमूर्तस्यात्मनो भेदप्रतीतेर्भेदोऽपि न कार्य इति पक्षान्तरमाह-**अथ वेति** । **बन्धेति**, आत्मपुद्गलानां परस्पराश्लेषो नीरक्षीरवत् स बन्धः स एव परिणामस्तेनात्मशरीरयोरैक्यादित्यर्थः, तस्मादेक एव पुद्गलकायः शुभाशुभादिधर्मवान् भवतीति भावः । **भोक्तृभोग्येति**, कायो हि पुरुषवाद्यभिमतभोक्त्रात्मकः कर्मवाद्यभिमतभोग्यात्मकश्च जीवपुद्गलयोर्बन्धपरिणामेनैकत्वात् तस्यैव कायस्य विपरिणामात्मकः शुभोऽशुभश्च वृत्तिः धर्मः, तथा च भोक्तृभोग्यात्मकस्य विपरिणामः भोक्तृभोग्यात्मकविपरिणामः स एव वृत्तिर्धर्मो

20 यस्य स भोक्तृभोग्यात्मकविपरिणामवृत्तिः कायः, तद्भावस्तस्मादिति विग्रहः । स एव प्रदर्श्यते-**यो हीति** । बाह्याभ्यन्तरमूर्तद्रव्यसंघातस्यैव कायत्वपक्षे तस्य भोक्तृभोग्यात्मकत्वं घटयति-**शुक्रशोणितमिति**, स्त्रीपुंसयोः शुक्रशोणितं गर्भस्थस्य मूर्तद्रव्यसंघातात्मककायस्य भोक्तृभोग्यरूपः प्रथमाहारः, ततश्च मात्राभ्यवहृतान्नरसादि पाश्चात्यो भोग्यात्माऽऽहार इति कायोऽसौ भोक्तृभोग्यात्मकः कार्यकारणात्मकयोस्तयोरैक्यपरिणामादिति भावः । बाह्योऽप्यशनपानस्वादिमखादिमलक्षण आहारः शरीरमाहर्ता तयोरैक्यपरिणामाद्भोक्तृभोग्यात्मकत्वं कायस्य तथा शुभाशुभधर्मकत्वमपीत्याह-**तथा चतुर्विधोऽपीति** ।

25 आत्मशरीरैक्यपरिणामलक्षणकायत्वपक्षे तु हेतुः सिद्ध एवेत्याह-**कायचैतन्ययोर्वेति** । आहारे दृष्टान्ते साध्यं शुभाशुभादिधर्मकत्वं घटयति-**यथाऽऽहार इति**, संस्कृतः शुभः, असंस्कृतश्चाशुभः, संस्कृतोऽप्याहारो नैकान्तेन शुभ एव संस्काराधारस्याशुभत्वात् संस्कारकस्य कर्पूरादेरेकान्तेन शुभत्वाभावात् तस्य कालान्तरे दौर्गन्ध्योपलब्धेरित्याह-**संस्कृतोऽपीति**, कथञ्चिदिति शेषः । भोक्तृभोग्यात्मकविपरिणामवृत्तित्वादित्युक्तहेतोर्भोक्त्रात्मकविपरिणामवृत्तित्वात् भोग्यात्मकविपरिणामवृत्तित्वादिति हेतुद्वयाभिप्रायेण व्याख्यातुमाह-**अथ वेति**, तदेव भोक्तृभोग्यञ्चेत्यनेन भोक्तृत्वभोग्यत्वयोरविनाभावः प्रदर्शितः,

30 अत एव च शुभाशुभादिधर्मवत्त्वलक्षणसाध्येनाप्यविनाभावः प्रत्येकं तयोः भोक्त्रात्मकविपरिणामवृत्तित्वपदेन भोक्तृत्वमेव विवक्षितं तथा भोग्यात्मकविपरिणामवृत्तित्वपदेन भोग्यत्वम्, तथा च पुद्गलकायः शुभाशुभादिधर्मवान्, भोक्तृत्वात्, भोग्यत्वात्, आहारवदिति फलितमिति भावः । एतदेव प्रदर्शयति मूलकृत्-**भोक्तृत्वाद्भोग्यत्वादिति** । भोक्तृभोग्ययोः

---

१ सिक. विग्रहसमासौ । २ सिक °प्रत्य-क्षमभिमतः । ३ सि. क यदि । ४ सि. क.° मापन्नस्यैव । ५ सि. क. संस्कृतासं[illegible]ः । ६ सि. क. संस्कारमाभिमत० । ७ सि. क. कायेति ।

त्वादाहारवच्छुभोऽशुभश्च काय इति। अथ वा सुखोऽपि दुःखोऽपि स एव कायः, सुखत्वाद्दुःख-
त्वादाहारवत्, दुःखं सुखत्वादाहारवत्, यत् परप्रत्ययसिद्धं तदितरेण सिद्धेन धर्मान्तरेण साध्यम्,
एवमिष्टोऽप्यनिष्टत्वादनिष्टोऽपीष्टत्वादाहारवदेव।

इतर आह–

**तच्च न, उदकशुभाशुभत्वे प्रतिविशिष्टसदसद्योगकृते, तस्मादुभयधर्मता सर्वद्रव्या-** 5
**णामित्येतच्च न, एकैकस्य सर्वरूपद्रव्यभवनपरमार्थत्वात् सर्वशुभाशुभेष्टानिष्टकारणत्वादिरूपा
हि द्रव्यभवनपरमार्थः, एवं हि भावादेव भवद्द्रव्यं परमार्थतो भवति, नान्यथा, अत्रानुमानं
तदेव तत्, तत्परमार्थत्वात्, तद्वत्, एतदुक्तं भवति तत्तत्स्वरूपभवनपरमार्थत्वात्, तत्त-
त्स्वरूपवत्।**

(**तच्च नेति**) तच्च न, उदकशुभाशुभते प्रतिविशिष्टसदसद्योगकृते प्रतिविशिष्टकर्पूराद्येकान्त- 10
शुभद्रव्ययोगे सति जलादि अशुभगन्धमपि सत् सुरभीक्रियते, अधिकगुणाभिभवभावनया, एवमशु-
च्यपशदद्रव्ययोगे सति तदुत्कटगंधाभिभवात् तद्भावनया कर्पूराद्यपि तद्गन्धीभवदुपलभ्यते, अथ वा
तदेव विनष्टं शुभतडागादिगतमल्पं शुष्यच्छुष्यत् कर्पूरगन्धं भवदुपलभ्यते, नालिकेरफलानि सुरभीणि
सन्ति पूतीभवन्ति दृश्यन्ते तस्मादुभयधर्मता सर्वद्रव्याणां तथा कायोऽपीत्येतच्च न, एकैकस्य सर्वरूप-
द्रव्यभवनपरमार्थत्वात्, वीप्सया व्याप्तिं सर्वरूपद्रव्यभवनस्य भावकस्य भाव्यस्य च दर्शयत्येकैकस्येति, 15
सर्वशुभाशुभेष्टानिष्टकारणत्वादिरूपो हि द्रव्यभवनपरमार्थः, एवं हि भावादेव भवद्द्रव्यं परमार्थतो भवति
नान्यथा यथोक्तं 'एगमेगस्सणं भंते जीवस्स एगमेगे जीवे मातित्ताए' इत्यादिप्रश्नः यावत् 'आजातपुव्वे
व्याकरणं गोतम! असइं अदुवा अणंतखुत्तो एवं सव्वजीवाण वि एगजीवो एगजीवस्सवि सव्वजीवा' तथा

कर्तृकर्मरूपत्वादाह–**एवमिति**। शुभाशुभयोः सुखदुःखरूपयोरेव साध्यहेतुभावेनाह–**अथ वेति**, आहारस्य मोदकादेः
सुखदुःखात्मकत्वस्य पूर्वमुक्तत्वेन तयोरव्यभिचारात् कायस्य दुःखात्मकत्वे तेनैव हेतुना सुखात्मकत्वं सुखात्मकत्वे वा तेनैव 20
दुःखात्मकत्वमपि साध्यमिति भावः। ननु कायस्य भोक्तृभोग्यात्मकस्य शुभाशुभादिधर्माः विपरिणामरूपा इति यदुच्यते तन्न
युक्तम्, निर्गन्धे जलादौ शुभाशुभतायाः प्रतिविशिष्टसदसद्द्रव्यसंयोगेनैव दर्शनादित्याशङ्कते–**तच्च नेति** तदेव संघटयति–
**प्रतिविशिष्टेति, अशुभगन्धमपि सदिति,** अपिनाऽगन्धमपि सदिति बोध्यते, न्यूनगुणमधिकगुणोऽभिभावयतीति भावः,
तथाऽशुचिद्रव्यसंयोगे शुभगन्धमपि सत् तथाभावनयाऽसुरभीक्रियते तथा कर्पूराद्यपि स्वोत्कटगन्धाभिभवात् दुर्गन्धीभवतीति
प्राह–**एवमिति** तदेवाशुभगन्धं जलादि प्रतिविशिष्टशुभतडागादियोजितं शुष्यच्छुष्यत् कर्पूरगन्धं भवति लवणादिवदित्याह– 25
**अथ वेति**। शुभगन्धस्याशुभगन्धीभवने निदर्शनमाह–**नालिकेरेति** तदेवं द्रव्यस्य शुभाशुभते सदसद्द्रव्यसंयोगकृते एव न
वस्तुनः परिणामः तथा कायोऽपि द्रव्यान्तरसंयोगादेव शुभाशुभधर्मेति पूर्वपक्षाभिप्रायः। सर्वरूपेण द्रव्यस्य भवनं पारमार्थि-
कमेव नतु सांयोगिकमित्युत्तरयति–**एकैकस्येति** प्रत्येकं द्रव्यं तद्भाव्यं वा भवतु भावकं परमार्थतः सर्वरूपेण भवनयोग्यमेव,
भाव्यं शुभाशुभद्रव्यसम्बन्धेन शुभाशुभरूपेण भवनयोग्यत्वेनाभिमतम्, भावकं शुभाशुभभवननिमित्तं द्रव्यम्। शुभत्वेनाशुभ-
त्वेनेष्टकारणत्वेनानिष्टकारणत्वेन सर्वरूपेण भवनस्य द्रव्यस्वाभाव्यादेव द्रव्यं तथाभवितुमर्हति नान्यथेत्याह–**सर्वेति**। एकस्यैव 30
जीवस्य मातृत्वादिभवनस्वभावतां तथैकस्यैव पुद्गलस्याहारादिरूपेण भवनस्वभावतां श्रुतेन प्रमाणयति **यथोक्तमिति**।

१ सि. क. प्रतिविशिष्टायस॰ योगकृते। २ सि. क. ६ गन्धमपि

'सव्वपोग्गला एगजीवस्स सव्वजीवाणं च आहारत्ताए उस्सासत्ताए भासत्ताए सरीरत्ताए इंदियत्ताए मणत्ताए आणापाणत्ताए' (            ) इत्याद्यर्थैक्यापत्तौ ज्ञापकम्, सर्वज्ञोक्तत्वात्, अत्रानुमानं तदेव तदिति प्रतिज्ञा,—मातृत्वादिभावेन यद्भवति शरीरादिभावेन च तदेकैकं सर्वरूपमित्यर्थः तत्परमार्थत्वात् तद्वत्, एतदुक्तं भवति तत्तत्स्वरूपत्वभवनपरमार्थत्वात् तत्तत्स्वरूपवत्, एवमितरमपि 5 पक्षीकृत्य साध्यम्, यत्स्वरूपमिदं भवति कर्पूरं शरीरमन्नादि वा तत्तदेवेत्यर्थः, यच्च यदेव न भवति [न] तत् परमार्थं यथा खपुष्पं खरविषाणं वा भवन्मत्याऽन्यत् तत्तदन्यस्वरूपापत्तेः स्यादहेयस्यान्तरङ्गस्य तत्त्वं स्यात् बहिरङ्गस्य चान्यत्वमिति तदेव ह्यन्यत्वाभिमतं अस्माभिस्तस्यैव तद्रूपमिति साध्यते तस्मान्नास्त्यन्यथात्वं न चासिद्धं तत्परमार्थत्वमिति ।

अभ्युपेत्यापि—

10 **अन्यथात्वेऽपि तदनतिरेकात्, तन्तुयज्ञोपवीतवत्, यथा चात्र सर्वसर्वस्य बाह्यस्य परिणाम्यपरिणामकभावादेकत्वं परिणामश्च द्रव्यमात्रम्, यद्यद्भवति स परमार्थोऽस्य, यथा क्षीरादेर्यावच्च घटादेः तथात्मकर्मणोरपि, आत्मा परिणमयति तथाभवनसामर्थ्याद्गतिजात्यादिना पुद्गलानिति परिणामकस्ते परिणाम्याः, पुद्गलाश्चात्मानं मिथ्यादर्शनादित्वेन परिणमयन्ति तद्भावेनात्मा प[रि]णम्यते, एतस्य कर्मकर्मिद्वयस्यान्योऽन्यपरिणामकत्वादनादित्वमेकत्वम्, 15 संसारस्य कर्मक[र्मिद्वयपरिणाम]जत्वात्तस्य चानादित्वात् ।**

(**अन्यथात्वेऽपीति**) अन्यथात्वेऽपि तदनतिरेकात्मकत्वात्, तदेव तदिति वर्त्तते, तस्मात्तस्य वाऽनतिरेकः स आत्माऽस्येति तदनतिरेकात्मकत्वात्, यदनतिरेकात्मकमन्यथात्वेऽपि तदेव तद् दृश्यते किमिव ? तन्तुयज्ञोपवीतवत् तन्त्वनतिरेकात्मकत्वाद्यज्ञोपवीतस्य वलितस्यान्यथात्वेऽपि तन्त्वा-

उक्तार्थमेवानुमानेन साधयति-**अत्रानुमानमिति** । जीवाभिप्रायेण प्रतिज्ञार्थमाचष्टे-**मातृत्वादिभावेनेति** । यत् येन येन 20 रूपेण भवति तत् तत्तद्रूपमेव, सर्वं प्रत्येकं सर्वरूपं एकैकस्य सर्वात्मकत्वमिति भावः । हेतुं वक्ति-**तत्परमार्थत्वादिति**, तदेव परमोऽर्थो यस्य तद्भावस्तस्मादिति विग्रहः, एको जीव एव हि मातृत्वेन पितृत्वेन भ्रातृत्वेन भगिनीत्वादिना भवत्यतः स जीवो मात्रादिस्वरूप एव, मातृस्वरूप एव न तु पित्रादिस्वरूप इति न वाच्यम्, यथा जीवस्य जीवस्वरूपेण भवनं परमार्थ इति स जीवस्वरूपस्तथा मात्रादिस्वरूपेण भवनमपि परमार्थ इति कृत्वा स मात्रादिस्वरूपोऽपीति भावार्थः । वीप्सया भावार्थं वर्णयति सर्वरूपताव्याप्त्यर्थं सिद्धसाधनदोषव्यपोहाय च-**एतदुक्तं भवतीति** । पुद्गलमपि पक्षीकृत्येदं साधनीयमित्याह-**एवमितरम-** 25 **पीति**, पुद्गलपक्षे प्रतिज्ञार्थं दर्शयति-**यत्स्वरूपमिदमिति**, इदं पुद्गलद्रव्यम् । भवदभिप्रायेणापि यदन्यत् तदपि तत्तदन्यस्वरूपापत्त्यैव भवेत्, नान्यथा तथा च तत्तद्विशेषेष्वपरिहरणीयस्वरूपस्य सामान्याभिमतस्यान्तरङ्गभूतस्य तत्त्वं विशेषाभिमतस्य बहिरङ्गभूतस्यान्यत्वं तवेष्टं स्यात्, तदेव ह्यन्यत्वभिमतं बहिरङ्गं वस्त्वस्माभिः पक्षीकृत्यान्तरङ्गस्वरूपवत्तद्रूपत्वं साध्यतेऽतस्तस्मादन्यत् किञ्चिन्नास्त्येव, न वा तत्परमार्थत्वमसिद्धमित्याह-**भवन्मत्येति** । ततोऽन्यद्वस्त्वभ्युपगत्यापि दोषमभिधत्ते-**अन्यथा-** **त्वेऽपीति** । सामान्यरूपात् कारणात् कार्यस्यान्यस्वरूपत्वेऽपि कारणादनतिरिक्तस्वरूपत्वात्तदेव तत् न तु ततो भिन्नमित्याह- 30 **तदेव तदिति** । यज्ञोपवीतस्यान्यस्वरूपत्वेऽपि तन्त्वनतिरिक्तत्वात् तन्त्वात्मकत्वमेवेत्याह-**तन्तुयज्ञोपवीतवदिति** । एक एव पुद्गलकायस्य शुभाशुभेष्टानिष्टकारणत्वेन विपरिणामस्य मोदकादिदृष्टान्तेन व्यवस्थापितत्वात्तदनतिरेकात्मकत्वं भावितमेवेत्याह-

१ सि. क. °मनादीना ।

त्मकत्वमेव, तथा सुखादिषु भावनीयम्, तदनतिरेकात्मकत्वञ्च भावितार्थमेव 'ते चेव ते पोग्गला सुब्भिगंधत्ताएं इत्यादिना । यथा चात्रेत्यादि, एवञ्च तदेव तदिति सर्वसर्वस्य बाह्यस्य परिणाम्यस्य परिणामयितुश्च तत्त्वं, योऽधिकगुणस्य ताद्गुण्यं प्रतिपद्यते स परिणामी, योऽधिकगुणो न्यूनगुणत्वमापादयति स परिणामक इत्युच्यते व्यवहारतः, निश्चयतश्च परिणाम्यपरिणामकावाविर्भावतिरोभावमात्रभेदौ स्वत एव चेत्यस्य नयस्य दर्शनम्, परिणामश्च द्रव्यमात्रं 'द्रव्यञ्च भव्ये' यद्यद्भवति स परमार्थोऽस्येति तदप्येवं भावितं क्षीरादेर्यावच्च घटादेस्तावद्द्रोद्रव्यम्, तथाऽधिकृतस्याध्यात्मिकस्य कर्मकर्मिसंज्ञस्य शरीरशरीरिसंज्ञस्य वा भावनार्थमुपनयति—तथाऽऽत्मकर्मणोरपीति, तद्व्याचष्टे—आत्मा परिणमयतीत्यादिना यावदनादित्वमेकत्वमिति, परिणाम्यपरिणामकयोरनियतदेशकालभावादिरूपतां दर्शयति तथाभवनसामर्थ्याद्गतिजात्यादिना—पुद्गलानिति, उपयोगलक्षण आत्मा गतिजातिशरीराङ्गोपाङ्गाद्यनुभवनोपयोगात्मतया तान् पुद्गलान् परिणमय[ती]त्यात्मनः परिणामकत्वं तेषां परिणाम्यत्वम्, पुद्गलाश्चात्मानं मिथ्यादर्शनादित्वेनेति, मिथ्यादर्शनाविरतिप्रमादकषाययोगसुखदुःखोदयक्षयोपशमादिभावेन परिणमयन्ति तद्भावेनात्मा परिणम्यते स च मिथ्यादर्शनोदयादिभावो भवभ्रान्तिहेतुः, तद्वशस्य संसरणात् एतस्य कर्मकर्मिद्वयस्यान्योन्यपरिणामकत्वादनादित्वमेकत्वमेव, एकत्वशब्देन पर्यायभूतेन तत्त्वं व्याचष्टे संसारस्य कर्मकर्मिद्वयसम्बन्धजत्वात्तस्य च सम्बन्धस्यानादित्वात्, यथोक्तं 'पुव्विं भंते! कुक्कुडी पच्छा अंडए, पुव्विं अंडए पच्छा कुक्कुडी' इत्यादि प्रश्नव्याकरणं 'रोहा! पुव्विं एते पच्छावि एते दोवि एते सासता भावा आणाणुपुव्वी एसा रोहा!' इत्यादि, **( भग० श० १ उ० ६ सू० ५३ )** मिथ्यादर्शनग्रहणं सर्वकर्मबन्धाधारभूतत्वाच्छेषस्यापि सर्वस्य सूचनम् ।

**तदनतिरेकात्मकत्वञ्चेति** । एवं बाह्यानामचेतनानामेकत्वं प्रतिपाद्य चेतनाचेतनयोरप्येकत्वमाह-**यथा चात्रेत्यादीति,** सर्वमेव सर्वमिति सर्वसर्वं प्रत्येकं सर्वेषां सर्वरूपतया बाह्यमचेतनमाविर्भावतिरोभावरूपतयैकमेव, व्यवहारत एव केवलं कश्चित् परिणाम्यः कश्चित् परिणामक इति भेद इति भावः । तत्त्वं एकत्वम्, परिणाम्यपरिणामकयोर्लक्षणमाह-**य इति,** यो न्यूनगुणोऽधिकगुणस्य ताद्गुण्यं सारूप्यं प्रतिपद्यते स परिणामी, परिणामकस्तु न्यूनगुणत्वापादकोऽधिकगुण इति । परिणामोऽपि नातिरिक्तः कश्चित्, किन्तु परिणामिस्वरूप एवेत्याह-**परिणामश्चेति,** द्रव्यस्य भवनरूपत्वादिति भावः । द्रव्यस्य भवनमेव परमं रूपं न त्वभवनरूपं किञ्चिद्द्रव्यं भवितुमर्हति, तस्मादाविर्भावतिरोभावौ द्रव्यस्य स्वरूपमित्याह-**यद्यद्भवतीति** । आत्मपुद्गलयोरन्योऽन्यपरिणामकत्वादात्मना पुद्गलानां परिणमनमाह-**उपयोगलक्षणेति,** उपयोगलक्षणो जीवोऽध्यवसायविशेषाज्ज्ञानावरणादिकर्मयोग्यान् स्वप्रदेशस्थान् सूक्ष्मानन्तानन्तप्रदेशानेकक्षेत्रावगाढान् स्थितान् पुद्गलान् योगविशेषात्[1] गृहीत्वा गतिजातिशरीराङ्गोपाङ्गनिर्माणबन्धनसंघातसंस्थानसंहननस्पर्शरसगन्धवर्णप्रमृतिनामकर्मादित्वेनानुभवनयोग्यतया परिणमयतीति भावः । पुद्गलैरप्यात्मा परिणम्यत इत्याह-**पुद्गलाश्चेति,** कायादिपुद्गलसम्बन्धादात्मापि मिथ्यादर्शनादिरूपेण परिणमतीत्यर्थः । **मिथ्यादर्शनोदयेति,** मिथ्यादर्शनं विपरीततत्त्वावबोधः, अविरतिः पापस्थानेभ्यो विरतिपरिणामाभावः, इन्द्रियविकथाविकटनिद्रालक्षणः प्रमादः, क्रोधमानमायालोभाः कषायाः, योगा मनोवाक्कायव्यापारस्वभावाः, सुखदुःखे प्रसिद्धे, एतेषामुदयादिभावेन पुद्गला आत्मानं परिणमयन्ति, प्रथमोपात्तस्य मिथ्यादर्शनस्योदयभावो भवभ्रमणहेतुरिति भावः । कर्मजीवसम्बन्धस्य बीजाङ्कुरन्यायवदनादित्वेन संसारस्यानादित्वम्, सम्बन्धस्यानादित्वादेव च तयोरेकत्वपरिणामोऽप्यनादिरित्याह-**एतस्येति** । संसारस्य कुक्कुट्यण्डदृष्टान्तेनानादित्वप्रकाशकमागमं प्रदर्शयति-**यथोक्तमिति** । नन्वचेतनस्य

१ सि. क. °स्वयमात्वान् ।

आह—यदुक्तं त्वया कर्पूराद्यचेतनानां परिणाम्यपरिणामकभावात्कत्वं चेतनाचेतनयोश्च जीवकर्मणोरिति वस्तुक्तं किन्तु रूपादि उपयोगीभवत् आत्मा भवति, आत्मापि, रूपादि भवति तत्परिणामादिति, एतन्नोपपद्यते स्वभावाविनाशादित्यत्रोच्यते—

**यदपि च बहिर्भिन्नं विषयजातं रूपादि तदप्यात्मन एव तत्त्वमुपयोगात्मकत्वात्, मत्यादिवत्, कथं रूपादेर्विषयस्योपयोगः आत्मेति चेदुच्यते, तदव्यतिरेकलभ्यत्वात्।**

**यदपि चेत्यादि** यावन्मत्यादिवदिति, यदपि च बहिर्भिन्नं विषयजातमुपयोगनिमित्तभूतं रूपादि तदप्यात्मन एव तत्त्वम्, रूपादितत्त्वमात्मनश्च वक्ष्यामः कुतो रूपाद्यप्यात्मन एव तत्त्वमिति चेदुच्यते, उपयोगात्मकत्वात्, मत्यादि चक्षुर्दर्शनादिभेदप्रभेद उपयोग आत्माऽस्य रूपादेर्विषयस्य सोऽयं तदात्मकः, कथं रूपादेर्विषयस्योपयोग आत्मेति चेदुच्यते तदव्यतिरेकलभ्यरूपत्वात्, रूपं रसो गन्ध इत्यादिविषयस्वरूपाकारेणोपयोगेन अव्यतिरिक्त एकीभूत एवोपलभ्यते रूपादिविषयो नान्यथा, अन्यथा विषयस्वरूपानवधारणात्, तस्मात्तदनतिरेकलभ्यरूपत्वात् रूपादिविषय उपयोगात्मकः, यदुपयोगात्मकं तत्तदात्म[ न ] एव तत्त्वम्, यथा मत्यादिचक्षुर्दर्शनादिभेद उपयोग इति।

स्यान्मतम्—

**रूपादीनां देशभेदेन युगपदवस्थायिनां देशकालादितोऽत्यन्तभेदग्रहेऽभवनात्मकत्वात् निर्वस्तुत्वापत्तिर्वन्ध्यापुत्रवत्, ततश्च द्रव्यमेव तथातथाभवनलक्षणं सत्यं न रूपादयो नाम केचिदिति, कथं पुनस्तत् भेदेन भवतीति चेत्, चक्षुरादिप्रत्ययोपयोगापदेशेन, भागेनाद्यपदेशविशिष्टकत्वसत्यपुरुषवदिति साधूक्तमेकमेव सर्वात्मकमिति।**

( **रूपादीनामिति** ) रूपादीनां देशभेदेन युगपदवस्थायिनां रूपं रसो गन्ध इत्यादयः परस्परतो देशभिन्ना गृह्यन्ते तस्य देशस्य परमाणुशो भेदेन रूपं रसो गन्धश्चोपलभ्यते—देशसम्[illegible]

चेतनाचेतनयोश्च तदेव तदिति साधनमुचितं भवतु नाम, आत्मा तूपयोगलक्षणः पुद्गलान् गत्याद्यनुभवनोपयोगात्मतया परिणमयति परिणामश्च द्रव्यमात्रमिति रूपादिरात्मा भवति, आत्मा च रूपं भवतीति यदुच्यते तन्नोपपद्यत इत्याशङ्कते—**यदुक्तं त्वयेति**, समाधत्ते—**यदपि चेति**, जीवव्यतिरिक्तस्य द्रव्यमात्रस्य बाह्यस्य ज्ञेयत्वेन विषयविषयिणोश्चाभेदात् बाह्यं सर्वं वस्तुजातमुपयोगात्मकमेव, ग्राह्यग्राहकयोस्तादात्म्यमन्तरेण ग्राह्यग्राहकभावानुपपत्तेः, एवञ्चोपयोगात्मकत्वान्मत्यादिर्यथाऽऽत्मनस्तत्त्वं तथा रूपादिबाह्यं विषयजातमप्यात्मनस्तत्त्वम्, प्रयोगश्च रूपादिविषयजातमात्मन एव तत्त्वम्, उपयोगात्मकत्वात्, मत्यादिवदिति भावः। रूपादिविषयजातमात्मन एव तत्त्वमिति प्रतिज्ञायां हेतुं पृच्छति—**कुत इति**। रूपादेरुपयोगात्मकत्वमसिद्धमित्यत्राह—**तदव्यतिरेकलभ्यरूपत्वादिति**। रूपादिविषय उपयोगात्मकः, तदव्यतिरेकलभ्यस्वरूपत्वात्, मत्यादिभेदवत्, यथा मत्यादिभेद उपयोगव्यतिरेकेण नोपलभ्यते, [illegible] सन्नेवोपलभ्यते तथा रूपादिभेदोऽपि, अन्यथा विषयविषयिणोः प्रकारान्तरेण सम्बन्धाभावाद्ग्राह्यग्राहकभावानुपपत्त्या विषयस्वरूपनिर्णय एव न स्यादिति भावः। ननु रूपादयो युगपदवस्थायिनः परस्परं भेदेन गृह्यन्ते तत्र तेषां देशकालादितोऽत्यन्तं भेदे देशस्यापि यावत् [illegible]देन रूपादीनां भेदः स्यात्, एवं कालतोऽपि, तदेवं देशकालभेदेन भेदे रूपा[illegible] भवेत्, अचिरस्थायित्वेन रूपग्रहणाभावसम्बन्धाभावात्, एवं भावभेदेनापि रूपादिभेदे बोध्यमित्याश[ङ्क]ते—[illegible]। देशतोऽभवनमा[illegible]—रूपं रस

१ सि. क. °विकल्पः। २ सि. क. °पयोगात्मकेण वि०।

भवमाना भवन्ति, देशतोऽत्यन्तभेदग्रहे तेषामभवनम्, तथा क्षणभेदे प्रथमक्षणेऽन्यद्रूपं द्वितीयक्षणेऽन्यदिति गृह्यते चेन्न रूपं नाम किञ्चित् स्यात् तत्रेष्टस्य कालस्य रूपग्रहणाश्रयसम्बन्धाभावादित्यभवनात्मका रूपादयः स्युः, आदिग्रहणाद्भावभेदेनैकगुणद्विगुणत्रिगुणकृष्णादिभेदेनागृह्यमाणत्वात् विशिष्टस्य सामान्यस्यैव ग्रहणात्, ततः किं? अभवनात्मकत्वान्निर्वस्तुत्वापत्तिर्वन्ध्यापुत्रवत्, ततश्च निर्वस्तुत्वापत्तेरेतत्प्रतिपत्तव्यं द्रव्यमेव तथा तथा भवनलक्षणं सत्यं न रूपादयो नाम केचिदिति, तथा तथेति रूपर- 5
सप्रकारेण भवति श्यामरक्ततादितद्भेदप्रकारेण चेति, द्रव्यञ्च भव्ये भवति द्रवतीति। कथं पुनस्तद्द्रव्यमभिन्नं सत् रूपादिभेदेन भवतीति चेत् चक्षुरादिप्रत्ययोपयोगापदेशेन भवति, चक्षुरादिप्रत्यया इति अधिपत्यालम्बनहेतुसमनन्तरप्रत्ययाः, तदपदेशेन रूपादि भवति ज्ञानापदेशेन—चक्षूरूपादिप्रत्ययेनेत्यर्थः, यथोक्तं 'रूपालोकमनस्कारचक्षुर्भ्यः सम्प्रवर्त्तते। विज्ञानं मणिसूर्यांशुगोशकृद्भ्य इवानलः ॥' इति
( ) दृष्टान्तो भागिनेयाद्यपदेशविशिष्टैकत्वसत्यपुरुषवत्—यथैक एव पुरुषोऽनेकसम्बन्धे 10
स्त्रीपुरुषापेक्षापदेशविशिष्टो भागिनेयो मातुलो भ्राता पतिः पिता देवरः श्वशुरः पुत्रो भ्रात्रीय इत्यादिर्भवति देवदत्त एक इत्येव च सत्यस्तथा द्रव्यमेकमेव रूपादि भवति चक्षुराद्यपदेशादिति साधूक्तमेकमेव सर्वात्मकमिति, एवमुपयोगात्मकत्वं पुद्गलस्य रूपादिप्रभेदस्योक्तम्।

इदानीमुपयोगस्यापि पौद्गलात्म्यमुच्यते—

**उपयोगस्वतत्त्वं मत्यादि तदपि पुद्गलात्मतत्त्वं रूपाद्यात्मकत्वात् घटादिवत्, स हि** 15
**उपयोगलक्षण आत्मा परमाणुद्व्यणुकत्र्यणुकादिषु रूपाद्यात्मकेषु पुद्गलेषूपयुज्यते कृत्स्नो व्याप्रियते, तत्प्रदेशस्यापि रूपाद्यात्मकत्वमात्मनोऽभ्युपगम्यते तदुपयोगात्तत्परिणामात्तद्वत् तदिति न्यायाच्च, यद्येवं ततोऽसंख्यातप्रदेशोऽपि सर्वात्मना सर्वैः प्रदेशैर्ग्राह्ये उपयोगं यायात्, मृत्पिण्डः शिवकादिभावमिव, उपयोगमगच्छन्ननुपयुज्यमानोऽचेतन एव, पटानुपयुक्तघटादिवत्, चेतनो ह्युपयोगलक्षणस्तदभावादचेतनः स्यादिति।** 20

इति। कालतोऽभवनमाह-**तथा क्षणभेद इति**। कारणमाह-**तत्रेष्टस्येति**। भावतोऽभवनमाह-**आदिग्रहणादिति**। एवञ्च रूपादीनामभवनात्मकत्वेनावस्तुत्वाद्द्रव्यमेव रूपरसादिरूपतया गृह्यत इत्याह-**ततश्चेति** तथा तथा भवनस्वभावत्वाद्द्रव्यस्य न रूपादयो नाम केचित् सन्तीति भावः। अभिन्नं द्रव्यमेव चक्षुर्ग्रहणमासाद्य रूपमिति स्पर्शनग्रहणमासाद्य स्पर्श इति घ्राणग्रहणमासाद्य गन्ध इति रसनाग्रहणमासाद्य रस इति व्यपदिश्यत इत्याह-**चक्षुरादीति**। चक्षुरादिप्रत्ययापदेशेनोपयोगव्यपदेशेन चेत्यर्थः। आदिपदप्राप्यान् सूचयितुमाह-**चक्षुरादिप्रत्यया इति**, स्वस्वविषयाणामुपलब्धौ पञ्चेन्द्रियादीनामाधिपत्य- 25
मित्यधिपतिप्रत्ययः, संस्कृता असंस्कृताश्च सर्व एव धर्मा आलम्बनप्रत्ययाः, सहभूसभागसम्प्रयुक्तकसर्वत्रगविपाकश्चेति पञ्च हेतवो हेतुप्रत्ययाः, अचरमा उत्पन्नाश्चित्तचैत्ताः समनन्तरप्रत्यया इति बौद्धदर्शने प्रसिद्धा एते, एतेषामपदेशेन ज्ञानापदेशेन चाभिन्नं सद्द्रव्यं रूपादिभेदेन भवतीत्यर्थः, अत्रैव बौद्धकारिकां प्रमाणयति-**यथोक्तमिति**, रूपमालोकं बाह्यमान्तरं निरुद्धमनःसंज्ञितं चित्तं चित्तान्तरानवकाशदानात्मकञ्च प्रतीत्य चक्षुर्विज्ञानमुत्पद्यते, चतुर्भिश्चित्तचैत्ता इति बौद्धसिद्धान्तात्, तत्रापि चाधिपतिना चक्षुषा व्यपदिश्यते चक्षुर्विज्ञानमिति यथाऽनलः सूर्यकान्तमणिसूर्यांशुगोशकृद्भ्यो भवतीति तदर्थः। एकस्यैव 30
द्रव्यस्य निमित्तविशेषयोगेन नानाव्यपदेशभागित्वे निदर्शनमाह-**भागिनेयादीति**। एवं पुद्गलस्योपयोगात्मकत्वमुदित्वोपयोगस्यापि पुद्गलात्मतोच्यते-**यच्चोपयोगस्वतत्त्वमिति**, स्वशब्दः आत्मीयवचनः तत्त्वशब्दो भावः, उपयोगस्यात्मीयो

१ सि. क. °त्याद्विशिष्ट°।

(यद्वेति) यद्वोपयोगस्वतत्त्वं मत्यादि तदपि पुद्गलात्मतत्त्वमिति पक्षः, कस्मात्? रूपाद्यात्मकत्वात् घटादिवत्, स ह्युपयोगलक्षण आत्मा परमाणुद्व्यणुकत्र्यणुकादिषु रूपाद्यात्मकेषु पुद्गलेषूपयुज्यते कृत्स्नो व्याप्रियते-सार्वात्म्येन व्याप्त उपयुक्तः समाप्त इत्यर्थः, तत्प्रदेशस्यापि रूपाद्यात्मकत्वमात्मनोऽभ्युपगम्यते, असंख्यातप्रदेशोऽपि रूपाद्यात्मक एव प्रदेशसंख्यासंख्येयानन्तप्रदेशपुद्गलवत् तदुपयोगा-
5 त्तत्परिणामात्तदेव तदिति पूर्वोक्तन्यायात्, यद्येवं रूपादिमदेकद्रव्योपयोगतादात्म्यं प्राह्ये यातीति ततोऽसंख्यातप्रदेशोऽपि सर्वात्मना सार्वात्म्येन सर्वैः प्रदेशैर्ग्राह्ये द्रव्ये उपयोगमयात्, उपयोगमगच्छन्ननुपयुज्यमानोऽचेतन एव, पटानुपयुक्तघटादिवत्, स्यादिति सम्बध्यते, कथं पुनरुपयोगं यायात्? मृत्पिण्डः शिवकादिभावमिव, यथा मृत्पिण्डः कृत्स्नः शिवकादिभावे सार्वात्म्येन व्यापारं गच्छति तथा यदि न गच्छेदात्मा प्राह्ये ततस्तादात्म्यमप्रतिपद्यमानः सोऽचे[त]न एव स्यात् पटेऽनुपयुज्यमानघटादिव-
10 दिति, यथाक्रमं वैधर्म्येण साधर्म्येण च दृष्टान्तौ, चेतनो ह्युपयोगलक्षणस्तदभावादचेतनः स्यादिति, एष दोषो रूपाद्यात्मकत्वाभावे स्यादात्मन उपयोगलक्षणस्य, तस्मात् सिद्धं रूपाद्यात्मकत्वमात्मन उपयोगात्मकत्वात्, अतः पुद्गलस्वतत्त्वमेव मत्यादीति साधूक्तम्।

इतश्चात्मा पुद्गलस्वतत्त्व एव—

आत्मस्वतत्त्वज्ञानावरणाद्युदयप्रत्यव्याति[illegible]आत्मा पुद्गलस्वतत्त्व एव तादा-
15 त्म्यप्रतिपत्तेः।

भावो मत्यादिः स च नापरिणतो विषयान् ग्रहीतुमलमिति विषयेषु परमाणुद्व्यणुकादिरूपात्मके व्याप्रियते व्याप्रियमाणतापि कार्त्स्न्येन, उपयोगात्मनोरभेदादात्मनोऽसंख्यातप्रदेशत्वात्तावत्प्रदेशमपि व्याप्रियते इत्याह-स हीति, उपयोगः उपलम्भः ज्ञानदर्शनयोर्विषयावधानाभिमुखता तेन ह्यात्मा लक्ष्यते तस्मादुपयोगलक्षण आत्मा, स विषयग्रहणाभिमुखः क्षीरोदकवत् मृद्घटवच्च निखिलस्वप्रदेशैस्तादात्म्यं प्रतिपद्यत इति भावः। प्रदेशेति, परमनिकृष्टोंऽशः प्रदेशः, एकप्रदेशपरमाणोरारभ्य
20 संख्यातासंख्यातानन्तप्रदेशाः पुद्गला यथा सर्वप्रदेशा रूपाद्यात्मकाः, न ह्येकोऽपि प्रदेशो रूपाद्यनात्मको भवति तथाऽऽत्मप्रदेशा अपि सर्वे रूपाद्युपयुक्ताः रूपाद्यात्मका एव, शरीरमात्मा वा सर्वरूपम्, तत्तत्स्वरूपत्वभवनपरमार्थत्वात् तत्तत्स्वरूपवत्, एवं वार्थं रूपादिविषयजातमात्मन एव तत्त्वम्, उपयोगात्मकत्वात्, मत्यादिवदिति पूर्वोदितन्यायादिति भावः। यदा चात्मा स्वैकप्रदेशावच्छेदेन रूपादिमद्द्रव्यं प्राप्ते नीरक्षीरवत्तादात्म्येनोपयुक्तो भवति तदा सर्वात्मप्रदेशावच्छेदेनापि तादात्म्येनोपयुक्त एव, यथा मृत्पिण्डः शिवकादिभावं सर्वात्मनापैति, न तु द्विद्व्यादिप्रदेशेन, यदि सर्वात्मप्रदेशावच्छेदेनापि तादात्म्येनो-
25 पयुक्तो न भवेत्तर्हि तत्प्रदेशावच्छेदेनात्माऽचेतन एव भवेत् यथा पटाद्यवनुपयुज्यमानो घटादिरचेतनस्तत्र तस्योपयोगाभावात्स्वैवमिष्टम्, तस्मात् सर्वप्रदेशैरात्मा रूपाद्यात्मक एव तथाविधोपयोगाव्यतिरिक्तत्वादित्याशयेनाह-यद्येवमिति। वैधर्म्यदृष्टान्तमाह-पटेति। साधर्म्यदृष्टान्तमाह-मृत्पिण्ड इति। उपसंहरति-तस्मादिति। प्रकारान्तरेणाप्यात्मा पुद्गलस्वतत्त्व इति साधयति-आत्मस्वतत्त्वेति, कर्मणां विपाकाविर्भाव उदयः तानि च कर्माणि ज्ञानावरणाद्यष्टविधानि, उदयेन निर्वृत्तः औदयिकः, गतिचतुष्टयकषायत्रयलिङ्गत्रयमिथ्यादर्शनाज्ञानासंयतासिद्धत्वलेश्याषट्करूपा एकविंशतिरौदयिका भावाः, एते हि
30 गत्याद्याः परिणामविशेषा आत्मैव कर्मजनितपरिणामाव्यतिरेकात्, अन्योन्यानुगतौ सत्यामविभागात्तदात्मकत्वमात्मकर्मणोः क्षीरोदकयोरिव, तस्मात् स्वतत्त्वमात्मनो गत्यादयो भावा औदयिकाः, गत्यादीनामेषां पौद्गलिकत्वादात्मनश्च तदव्यतिरेकात्

१ सि. क. अन्धादिवत्। २ सि. क. पदमिदं नास्ति। ३ सि. क. नाभ्युप०। ४ सि. क. °प्रदेसत्वादि। ५ सि. क. °पयोगेता[illegible]त्म्यप्राह्ये०। ६ सि. क. संसंस्यते। ७ सि. क. यथा। ८ सि. क. त[illegible]त्मप्रा०।

[आ]त्मस्वतत्त्वत्यादि यावद्रूपाद्यव्यतिरिक्त[रू]पत्वाच, आत्मनः स्वतत्त्वमौदयिको भावः, उदयेन भव औदयिकः कस्य कर्मणः ? ज्ञानावरणीयादेरष्टविधस्यापि, स च तदुदयप्रवृत्तितोऽपृथग्भूतोऽव्यतिरिक्तो भावः स्वतत्त्वमात्मनः तदव्यतिरिक्तरूपश्चात्मा, तस्मादात्मस्वतत्त्वज्ञानावरणाद्युदयप्रवृत्त्यव्यतिरिक्तरूपत्वाच्चात्मा पुद्गलात्मस्वतत्त्व एव, तादात्म्यप्रतिपत्तेः रूपाद्यात्मकपरमाण्वा[त्मकत्वा]दित्यर्थः । 5

अत्राह—

नन्वेवं पुद्गला एवात्मा प्राप्तः, तस्योपयोगात्मनः पुद्गलत्वात्, योऽयं पुद्गलोपयोगः स चात्मोपयोगः एव, उपयो[ग]व्यतिरिक्तरूपादेरभावात्, तस्मात् कुतोऽस्य रूपाद्यात्मकतेति, एतन्न, उप[यो]गात्मकत्वादेव रूपादीनाम[प्यु]क्तवत्, अनेन सर्वमपि सर्वात्मकम्, आत्मपुद्गलयोरितरेतरात्मकत्वात्, एवञ्च कर्मैव कारणं पुरुषकार एव कारणमित्ये[का]न्तमसम्बद्धमिति 10

नन्वेवमित्यादि यावत् कुतोऽस्य रूपाद्यात्म[क]तेति, ननु भोः ? त्वदुक्तेन विधिना एतेनैव पुद्गला एवात्मा प्राप्तः तस्योपयोगात्मनः पुद्गलत्वात्, योऽयं पुद्गलोपयोगो रूपं रस इत्यादिज्ञानात्मनः स चात्मोपयोग एव, उपयोगव्यतिरिक्तरूपादेरभावात्, उपयोगस्य रूपाद्यात्मकत्वादुपयोगरूपत्वाच्च रूपादीनां, तस्मात् कुतोऽस्यात्मनो रूपाद्यात्मकतेति प्रस्तुतस्योपयोगस्य मत्यादेः पुद्गलात्मत्वमुपरुणद्धि एष विचार इत्यत्रोच्यते एतन्न, उपयोगात्मकत्वादेव रूपादीनामपि, उक्तवत् नै[ष दो]षो रूपाद्यात्मनो रूपादीनाञ्चोपयोगात्मकता, यस्मादुपयोगात्मकत्वं रूपादीनामप्यनन्तरमेवोक्तम् तस्माद्रूपादीनामप्युपयोगात्मकत्वादुक्तवत् पुद्गलोऽप्यात्मा, आत्मापि पुद्गल एवेति रूपाद्यात्मकत्वमतो न दोषाय, अनेन सर्वमपीत्यादि यावदितरेतरात्मकत्वात्, एवञ्च कृत्वा पुरुषस्य रूपादिमत्पुद्गलात्मकत्वात् पुद्गलस्यापि उपयोगात्मकपुरुषात्मकत्वात् यदुच्यते कर्मैव कारणं पुरुषकार एव कारणमित्यवधारितम्, उभयमप्येकान्तमसम्बद्धं बोद्धव्यमित्युभयोः पक्षयोः सहदोषोक्तिरेषा । 20

इदानीं तु प्रत्येकप्र[त्यु]क्ति[रा]रभ्यते, कर्मैकान्तवादप्रत्युक्तिदिक् तावत् प्रवर्तयितृत्वात् पुरुषश्च कारणमुत्कर्षार्थी, तस्यैवोक्तवत् सर्वत्वात्, असावेव पुरुषः प्राणादिमांश्चेतनः कर्मापि,

पुद्गलस्वतत्त्व एव स इति भावः । एवमेव व्याचष्टे आत्मन इति, ननु पूर्णतया सर्वात्मप्रदेशैरात्मनः पुद्गलेषु व्यापृतत्वे पुद्गलोपयोगात्मोपयोगयोरैक्येनोपयोगलक्षणात्मन एव सद्भावाद्रूपाद्यात्मकत्वमात्मनो न स्यादित्याशङ्कते-नन्वेव[मि]ति । प्रागुक्तेन प्रकारेण साकल्येन पुद्गलेष्वात्मनो व्यापृतत्वेन पुद्गला एवात्मा प्राप्तः, ज्ञानस्वरूपस्यात्मनो योऽयं पुद्गलेषूपयोगः स 25 आत्मोपयोग एव वस्तुतः, नहि रूपादि किञ्चिदुपयोगव्यतिरिक्तमस्ति, रूपादेरुपयोगस्य चान्योऽन्यमेकत्वात्तथा च रूपादेरवस्तुत्वेनात्मनस्तदात्मकत्वासम्भवादुपयोगस्वतत्त्वस्य मत्यादेः कथं पुद्गलात्मतेत्याशङ्कते-ननु भो इति । रूपादय उपयोगस्वरूपा एवेति नैकान्तः सम्भवति, उपयोगस्य रूपस्वरूपताया अपि प्रतिपादितत्वादित्याशयेनाह-उपयो[ग]ात्मकत्वा[दे]वेति । एवमात्मपुद्गलयोः परस्परात्मकत्वादेव सर्वं सर्वात्मकमित्याह-अनेनेति । अथ प्रस्तुतवादमधिकृत्याह-एवञ्च कृत्वेति । पुरुषकर्मयोरन्योन्यात्मकत्वादेकाभावेऽपराभावात् कर्मैकान्तवादः पुरुषकारैकान्तवादश्चायुक्त एवेति पक्षद्वये यौगपद्येन दोष 30 आदर्शित इति भावः । सम्प्रति प्रत्येकपक्षस्य निराकरणं भावयति लेशेन-इदानीन्त्विति । पक्षद्वययोर्लेशतो या निराकरण-

१ सि. क. तोऽप्रवृत्तितो० ।

अस्मिन् पक्षे कर्मादिसर्वसर्वत्वात् किं तदन्यत् कर्मेति, तस्यैव कर्मतापि, तस्मादेव पुरुषकाराणां तत्साध्यानाञ्च सिद्धयोऽसिद्धयश्च नाना स्युरेव उत्कर्षपरम्पराया बहुप्रभेदाया अपि आमुक्तेः पुरुषस्यैवाव्यतिरिक्तभिन्नकारणत्वात्, अहिभोगविस्तरणाकुञ्चनवत्, तथाऽनतिरेकातिरेका कर्मापि प्रवर्त्तयितृ ।

5 (इदानीमिति) इदानीं[तु]प्रत्येकप्रत्युक्तिभावनादिक्, तुशब्दो विशेषणार्थः, युगपत् प्रत्युक्तिदिक्ः प्रत्येकप्रत्युक्तिदिग्विशिष्यते, कर्मैकान्तवादप्रत्युक्तिदिक् तावत् प्रवर्त्तयितृत्वात् पुरुषश्च कारणमुत्कर्षार्थी, चशब्दात् कर्म चेत्येकान्तप्रतिषेधस्य वक्ष्यमाणत्वात्, उत्कर्षमर्थयतीत्युत्कर्षार्थी, उत्कर्ष ए[व]ार्थः सोऽस्यास्तीति 'अर्थाच्चासन्निहिते' (पा० ५-२-१३५ सूत्रे वा०) इति इनिः, स चोत्कर्षो बाह्यो धनधान्यमित्रभूम्यादिसम्पत्, आन्तरस्त्वारोग्यज्ञानादिसम्पत्, कृतार्थस्य तदर्थारम्भोपरमात्, 10 असन्निहितार्थोऽर्थीति, कस्मात् पुरुषश्च कारणमिति चेदुच्यते तस्यैवोक्तवत् सर्वत्वात् व्रीहिणैव व्रीहिः क्रियत इत्यादिन्यायोक्तवत्, असावेव पुरुषः प्राणादिमांश्चेतनः कर्मापि, अपिशब्दान्नोकर्मापि प्राणापानभाषामनोद्रव्यादि पुद्गल आध्यात्मिको बाह्योऽपि रूपादिपुद्गलश्चेतनो यस्मात्तस्मात् स एव प्रवर्त्तयिता तस्यैव, अस्मिन् पक्षे कर्मादिसर्वसर्वत्वात् किं तदन्यत् कर्मेति तस्यैव कर्मतापि, अपिशब्दात् पुरुषतापि पुद्गलतापि, तस्मादेव यदुक्तं प्रधानमध्यमाधमाः पुरुषकारास्तेषाञ्च सिद्धयोऽसिद्धयश्च प्रधानमध्यमाधमा 15 नाना न स्युरिति तदयुक्तमुक्तम्, पुरुषकाराणाञ्च तत्साध्यानाञ्च सिद्धयोऽसिद्धयश्च नाना स्युरेव[1], किं कारणम्? उत्कर्षपरम्पराया बहुप्रभेदाया अप्यामुक्तेः पुरुषस्यैवाव्यतिरिक्तभिन्नकारणत्वात्-स एवाव्यतिरिक्तो भिन्नश्च कारणं तस्यैव सर्वप्रभेदात्मकत्वात् भिन्नत्वं तेषाञ्च कर्मणां बाह्यरूपादिभेदपुद्गलानां पुरुषोपयोगात्मकत्वादव्यतिरिक्तत्वम्, तस्मात् पुरुषकारनानात्वं तत्साध्यसिद्ध्यसिद्धिनानात्वानि च स्युरेव, स चैक एव कारणम्, स्यादेवं, को दृष्टान्तः? अहिभोगविस्तरणाकुञ्चनवत्, यथाऽहिः स्फटाटोपकु- 20 ण्डलीकरणाद्ययुगपदवस्थायिधर्मैः रूपादिभिर्युगपदवस्थायिभिश्च भिन्नोऽप्यव्यतिरिक्तो[2]ऽहित्वसत्यः[3] तद-

भावना प्रदर्शिता ततः प्रत्येकपक्षनिराकरणभावना विलक्षणेति तुशब्दार्थं प्रकटयति-**युगपदिति** । कर्मैकान्तवाददोषप्रदर्शनं तावदाह-**कर्मैकान्तेति**, न कर्मैव कारणं किन्तूत्कर्षार्थी पुरुषोऽपीति समुच्चायकचशब्दार्थं दर्शयति-**चशब्दादिति**। कर्म च कारणं प्रवर्त्तयितृत्वादित्युत्तरग्रन्थेनेति भावः । यतोऽयमुत्कर्षमर्थयति, अप्राप्तत्वात् प्राप्ते चोत्कर्षे आरम्भान्निवर्त्ततेऽत एवासावुत्कर्षो न सन्निहितस्तस्मादिनिप्रत्ययेऽर्थीत्युक्तमित्याह-**स चोत्कर्ष इति** । पुरुषस्योत्कर्षार्थित्वेन प्रवर्त्तयितृत्वात् पुद्गलात्म- 25 नोरैक्येन सर्वसर्वात्मकत्वस्योपपादितत्वाच्चासावेव प्राणादिमान् चेतनः कर्मापीत्याह-**तस्यैवेति**, **नोकर्मापीति**, मनोवचनकायप्राणात्मककर्मापीत्यर्थः, कर्मात्मकतामेवादर्शयति-**प्राणापानेति**, सर्वसर्वात्मकत्वपक्षे आत्मनः कर्मादिसर्वात्मकत्वात्कर्मता पुरुषता पुद्गलतापीत्याह-**अस्मिन् पक्ष इति** । केवलपुरुषकारैकान्तवादे कर्मैकान्तवादिना प्रदर्शितं दोषमुद्धरति-**तस्मादेवेति**, पुरुषकारस्याव्यतिरिक्तैककारणत्वे कार्यवैलक्षण्यानुपपत्तिर्या पूर्वमुक्ता साऽत्राव्यतिरिक्तभिन्नपुरुषकारणत्वे नास्तीति भावः । **पुरुषकाराणाञ्चेति** । स्वाचारदुराचारलक्षणानां लोकप्रसिद्धानां तत्साध्यानाञ्च शुभाशुभानां प्रधानमध्यमाधमवैलक्षण्यं 30 सिद्ध्यत्येवेति भावः । पुरुषस्य सर्वप्रभेदात्मकत्वात् सर्वप्रभेदानाञ्च पुरुषोपयोगात्मकत्वादव्यतिरिक्तभेदात्मकः पुरुष एव कारणमिति कार्यवैलक्षण्यं भवत्येवेति दर्शयति-**उत्कर्षपरम्पराया इति** । अव्यतिरिक्तभिन्नकारणत्वे दृष्टान्तमाह-**अहिभोगेति** ।

---

१ सि. क. स्युरेव न स्युः । २ सि. क. °रिक्ताभिन्नाहित्व° । ३ क. °सत्यभेदव्यति° ।

व्यतिरिक्तभिन्नकारणत्वात् प्रवर्त्तयिता तथा पाण्यादिसंघातसहवर्तिपुरुष उपयोगात्मा गत्याद्युत्कर्षार्थी तेषु युगपद्भावेषु पुरुष एव सत्य इति । तथाऽनतिरेकातिरेकात् कर्मापि प्रवर्त्तयितृ, यथा पुरुषः पुद्गलात्मककर्मधर्मप्रभेदभिन्नोऽप्यव्यतिरिक्तः प्रवर्त्तयिता तथा कर्मापि तदनतिरिक्तातिरिक्तकारणत्वात् प्रवर्त्तयितृ ।

किञ्च—

**चेतनाचेतनपरमार्थत्वाच्च पुरुषस्य, इष्टानिष्टविधिव्याप्रियमाणत्वात्, अथैवं नेष्यते त्वया ततोऽसौ भवेत् पशुवन्मनुष्यत्वेनापि गम्यागम्यभक्ष्याभक्ष्याद्यविशेषज्ञः तद्वत् पशुरपि वा विशेषज्ञः ।** 5

(**चेतनेति**) चेतनाचेतनपरमार्थत्वाच्च पुरुषस्यैवेष्टानिष्टविधिं प्रति व्यापारः, स एव हि पुरुषश्चेतनोऽचेतनश्च, कुतः ? इष्टानिष्टविधिव्याप्रियमाणत्वात्-उत्कर्षापकर्षौ इष्टानिष्टौ तयोर्विधिः—तत्प्राप्त्युपायः प्रमादाप्रमादौ च दृश्येते, तस्मादयं पुरुषश्चेतनोऽचेतनश्च, प्रमादाप्रमादयोरिष्टानिष्टविध्योः 10 व्याप्रियमाणत्वात्, अतोऽचेतनकर्मानुभावोपलम्भात् चेतनपुरुषानुभावोपलम्भाच्चेति तद्द्वयं परमार्थः, तस्माच्च कर्मापि प्रवर्त्तयितृ । अथैवं नेष्यते त्वया यदि च पुरुषश्चेतनशक्तिरेव प्रोच्यते ततोऽसौ भवेत् पशुवन्मनुष्यत्वेनापि गम्यागम्यभक्ष्याभक्ष्याद्यविशेषज्ञः—यथा पशुर्भवत्यल्पचेतनस्तथा मनुष्यत्वेपि भवेत्, व्यक्तवर्णपदवाक्यादर्थप्रत्यायनसमर्थशब्दोच्चारणादिशक्तिश्च मनुष्यस्तद्वत् पशुरपि भवेत्, कृम्यादिवन्मनुष्योऽतिजडः स्यात्, मनुष्यवत् कृमिरपि पण्डितः स्यादित्यादि, तस्मात् कथञ्चित् चेतनः 15 पुरुषोऽपि अचेतनः, तच्चोभयमविभक्तमिति ग्राह्यम् ।

**एवञ्च कृत्वा तस्यैव तत्तदितरवदविभक्तद्व्यात्मकतायां द्विविधः प्रवृत्तिप्रबन्धः फलपरिणामप्रबन्धः प्राग्भवीयकर्माख्यपुरुषकारस्य साध्योऽसाध्यश्च, तीव्रमन्दादिहेतूपसेवनसञ्चितत्वात् साध्यासाध्यव्याधिवत्, चलनीयोऽविचल्यश्च बद्धाबद्धमूलत्वात् वृक्षहट्टवत्, निकाचितानिकाचितावयवत्वात्, अयःशलाकाकलापवत् ।** 20

पुरुषवत् कर्माप्यव्यतिरिक्तभिन्नकारणत्वात् प्रवर्त्तयितृ तद्धि स्वप्रभेदापेक्षया पुरुषापेक्षया भिन्नमपि सत् कर्मात्मैक्यापत्त्याऽव्यतिरिक्तमतस्तदपि प्रवर्त्तयित्रित्याह-**तथाऽनतिरेकातिरेकादिति** । अथ चेतनप्रयुक्तफलोपलम्भात् पुरुषस्य चेतनत्वमचेतनप्रयुक्तफलोपलम्भाच्चाचेतनत्वं वास्तविकमतः पुरुषः कर्मापि प्रवर्त्तयित्रित्याह-**चेतनाचेतनेति**, प्रमादविरहित इष्टेषु व्याप्रियते प्रमादी चानिष्टेषु, प्रमादश्च सर्वथाऽविरतिरूपो प्राग्यः तेन मिथ्यादर्शनमवश्यंभावि तत्र च प्रबलप्रदोषनिह्नवादिसम्भवेन विपरीतज्ञानदर्शनावरणादीनां सत्त्वात्तदीयं चैतन्यमचैतन्यमेवेति तस्याचेतनत्वं परमार्थः, अप्रमादस्य तु ज्ञानावरणीयादेः 25 क्षयोपशमादसम्भवेनाविपरीतज्ञानवत्त्वात्तस्य चैतन्यं परमार्थ इत्याशयेन हेतुं दर्शयति-**इष्टानिष्टेति** । शुभप्राप्तेरुपायोऽप्रमादः, अशुभप्राप्तेरुपायश्च प्रमादः, एतयोश्च चेतनत्वाचेतनत्वप्रयोजकत्वं तथाविधफलोपलब्धेरिति भावः । यदि पुरुषस्य चेतनत्वमेव परमार्थो न त्वचेतनत्वम्, तदा पशुश्चेतनोऽपि सन् भक्ष्याभक्ष्यादिविशेषं न जानाति तथा मनुष्योऽपि स्यादित्याशङ्कते-**अथैवमिति** । पशोरिदं गमनयोग्यमिदं न गमनयोग्यमिदमभ्यवहरणयोग्यं नेदं तथेति विशिष्टं विज्ञानं नास्ति तथा मनुष्यस्यापि न स्यादिति भावः । मनुष्यवद्वा पशुरपि विशेषज्ञः स्याच्चेतनत्वादित्याह-**व्यक्तेति** । एवञ्च द्वयं परमार्थः पुरुषस्यैषितव्य 30 इत्याह-**तस्मादिति** । एवं पुरुषस्याविभक्ततया चेतनाचेतनद्व्यात्मकतायां न किञ्चिदनुपपन्नत इत्यादर्शयति-**एवञ्च कृत्वेति** । प्रवृत्तिप्रबन्धः फलपरिणामप्रबन्धश्च कर्माख्यपुरुषकारस्य साध्योऽसाध्यश्चेति द्वैविध्यं पुरुषस्य चेतनाचेतनत्वैकात्मतायामेव

१ सि. क. तथाऽनतिरेकात् कर्मापि । २ सि. क. °प्रियाप्रियमाणत्वात् ।

(एवं कृत्वेति) एवं[च]कृत्वा तस्यैव तत्तदितरवदविभक्तद्व्यात्मकतायां—चेतनाचेतनैकात्मतायां सत्यां द्विविधः प्रवृत्तिप्रबन्धः फलपरिणामप्रबन्धः प्राग्भवीयकर्माख्य[पु]रुषकारस्य साध्योऽसाध्यश्च तत्सञ्चयहेतुभूतोपादानकालपरिणामद्वैविध्यात् तद्दर्शयति—तीव्रमन्दादिहेतूपसेवनसञ्चितत्वादिति[1]—तीव्रेण योगपरिणामेन सञ्चितं कर्म तीव्रानुभावस्थितिप्रदेशं बद्धस्पृष्टनिकाचितं सुखदुःखफलमुपक्रमितुमशक्य-
5 त्वादसाध्यमवश्यं विपच्यते, मन्देन तु सञ्चितं मन्दानुभावादि शक्यत्वादुपक्रम्यम्, सा[ध्या]साध्यव्या-धिवत्—यथा व्याधिर्ज्वरातिसारादिः निदानमन्दतीव्रत्वाभ्यां साध्योऽसाध्यश्च भवति, तथा कर्माख्य-पुरुषकारप्रवृत्तिप्रबन्धः, साध्यासाध्यस्वभावव्याख्यानश्च—चलनीयोऽविचल्यश्च बद्धाबद्धमूलत्वात् वृक्षहृ-ट्टवत्—यथासंख्यं साध्यश्चलितव्य इतरोऽविचल्यो न कम्पयितव्यः प्रथमो बद्धमूलो वृक्षवत्, द्वितीयो हट्टवदबद्धमूलः, दुःखविश्लेष्यः सुखविश्लेष्यश्चेत्यर्थः, निकाचितानिकाचितावयवत्वात्—निकाचिताः
10 कर्मप्रदेशास्तीव्रक्रोधाद्यशुभपरिणामेन, अनिकाचिता मन्दपरिणामेन, किमिव ? अयःशलाकाकलापवत् यथा सूत्रमात्रोपनिबद्धा अयःशलाका एकशलाकापकर्षणमात्रप्रयासेन सर्वाः प्रच्यवन्ते प्रतप्तसम्पृक्तप्रहताः संघर्षणादृते न शक्याः पृथक् कर्त्तुं तथा कर्मविधिः ।

परिणमनमपि च तस्यापि [पू]र्वकर्मणः पुरुषकारस्य विषयो न विषयः क्वचित्, अप्राप्तप्राप्तविपरिणामावस्थत्वात् पुष्प[तु]गृद्दफलवत् एवञ्च क्रियासहायश्च स फलं प्रयच्छति, क्रियास-
15 हायस्य फलप्रदाने सापेक्षानपेक्षशक्तित्वात्, भारोत्पाटवत् ।

परिणमनमपि चेत्यादि यावत् पुष्पतुग्द्दफलवत्, तस्यापि पूर्वकर्मणस्तीव्रमन्दहेतूपसेवनसञ्चितस्य फलदानमिहत्यपुरुषकारस्य कृष्यध्ययनसेवावाणिज्याद्यनुष्ठानस्य विषयो न विषयः क्वचिदिति, अप्राप्तप्राप्तविपरिणामावस्थत्वात्—यथासंख्यं स्वयमप्राप्तपरिणामावस्थं पुरुषकारविपरिणम्यं पुरुषकारेण

युज्यते नान्यथेति भावः । तत्सञ्चयेति । कर्मसञ्चये हेतुभूतस्य कर्मग्रहणकालीनपरिणामस्य तीव्रमन्दभावेन द्वैविध्यादित्यर्थः ।
20 एतदेव दर्शयति—तीव्रेणेति । कायवाङ्मनःकर्मयोगः तस्य परिणामविशेषास्तीव्रमन्दज्ञाताज्ञातभाववीर्याधिकरणविशेषाः तीव्रेण योगस्य परिणामेन तीव्रं कर्म बध्यते, तथाविधं सञ्चितं कर्म तीव्रानुभावं तीव्रस्थिति तीव्रप्रदेशं समस्तकरणायोग्यतयाऽवश्यं वेद्यतया च निबद्धं दूरस्थोदयं समीपे उदयं प्रापयितुमशक्यमसाध्यत्वादेव स्वकाल एवावश्यं विपच्यते यथाऽसाध्यो रोगो मरणेनैव नश्यति न तूपक्रमशतैरपि तथा कर्मापि बन्धकाले निकाचितावस्थमनुपक्रमे च बद्धमनेकोपक्रमतद्भावेऽपि निजपरिपूर्तिकालमन्तरेण न विपच्यत इति भावः । साध्यश्च रोगो यथोपक्रमाकरणे स्वकाल एव निजभुक्तिच्छेदेन नश्यति, कृते
25 तूपक्रमेऽर्वागपि शीघ्रं नश्यति तथा साध्यं कर्मापि बन्धकाले मन्दादिना योगपरिणामेनोपक्रमसव्यपेक्षमेव बद्धं सदुपक्रमसामग्र्यभावे निजभोगकाल एव विपच्यते, उपक्रमसामग्रीसमवधाने तु शीघ्रमन्तर्मुहूर्त्तादिकालेनैव विपाच्यत इत्याशयेनाह—मन्देन त्विति । रोगदृष्टान्तमाह—साध्येति । तथेति, दार्ष्टान्तिकोपनयः, कर्माख्या या पुरुषकारप्रवृत्तिः तत्प्रबन्धस्तत्सन्तानमित्यर्थः । चलनीय इति, यः साध्यः स विचल्यो दूरस्थस्य समीपभवनरूपोऽबद्धमूलत्वात् हट्टवत् सुखविश्लेष्यो जीवात्, अनिकाचितावयवत्वात् सूत्रमात्रोपनिबद्धलोहशलाकाकलापसम्बन्धवत्, यश्चासाध्यः सोऽविचल्यो बद्धमूलत्वात्
30 वृक्षवद्दुःखविश्लेष्यो निकाचितावयवत्वात्, प्रतप्तसम्पृक्तप्रहतायःशलाकाकलापसम्बन्धवदिति योजना विज्ञेया । एवं प्रवृत्तिप्रबन्धस्य साध्यासाध्यत्वमुपपाद्याथ फलपरिणामप्रबन्धस्य तदुपपादयति—[प]रिणमनमपि चेति, तस्यापि पूर्वकर्मणः परिणमनमपि च पुरुषकारस्य विषयः साध्यः, अविषयः असाध्यः क्वचिदिति योगः । इहत्यपुरुषकारस्य साध्यासाध्यत्वे हेतुमाह—अप्राप्तेति । यदप्राप्तपरिणामावस्थं पुरुषकारेण परिणमनयोग्यञ्च तत् [पु]रुषकारेणोदीरणाकरणेनोदीर्यते विपाच्यते विपाकविषयता-

1 सि. दिति, तीव्रेण योगपरिणामेन सञ्चितत्वा तीव्रेणत् इत्यधिकः पाठो दृश्यते ।

विपाच्यते—विषयत्वमानीयते—उदीरणाकरणेनोदीर्यते, प्राप्तपरिणामावस्थन्तु वैयर्थ्यान्न विषयीक्रियते—पुरुषकारेण न विपाच्यते—नोदीर्यते, स्वयमेव विपक्वत्वात्, किमिव ? पुष्पतुग्दढफलवत्—पुष्पतोकं दृढफलञ्च यथासंख्यं दृष्टान्तौ—यथा दृढफलं स्वयमेव विपच्यमानं न पाच्यते पुरुषकारेण, पुष्पतोकन्तु वृक्षायुर्वेदविधिना विपाच्यते, अथवा पुष्पतोकस्यैवोत्पन्नस्य दृढं फलमस्य भावीति दृढफलं तादृक् शक्त्यैवोत्पन्नमिति तस्यैव भवति, तच्छक्तिविरहितस्य न भवतीति, अप्राप्तपाककालं कदलकाम्रादिफलं कोद्रवपलालादिवेष्टितं निखातं वा पार्श्वधूमादिभिर्विपाच्यते, नेतरदवश्यं विनाशीति, अथवा अप्राप्तविपरिणामावस्थं पुष्पतोकमतिमृदुत्वादुपक्रमेणापि न पाच्यते, पाचनायोग्यत्वात्, कुथ्यति विलीयते वा, दृढफलं तु पाचनयोग्यं प्राप्तकालत्वात् पाच्यते, एवञ्च कृत्वा क्रियासहायश्च स फलं प्रयच्छति, सहायीभूतायाः क्रियाया अपि तच्छक्तिमात्रत्वात्, क्रियासहायस्य पुरुषकारस्य फलप्रदाने सापेक्षानपेक्षशक्तित्वात् भारोत्पाटवत्, यथा भारमुत्पाटयन् कश्चित् पुरुषः स्वयमेवोत्पाटयति कश्चित् पुनः सहायापेक्षः, एवं पुरुषकारोऽपि फलप्रदाने सहायां क्रियामपेक्षते कश्चिन्नेति ।

सोपक्रमस्य क्रियापेक्षा न निरुपक्रमस्य, तत्र सोपक्रमस्य कर्मात्मनः पुरुषात्मनैकीभूतस्याद[illegible]क्षयोपशमक्षया अवस्थाः सापेक्षा भवन्ति, मदनफलाद्वमनवत् भस्मपटला[illegible]भाग्निव[illegible], दरविध्यातावच्छन्नज्वलनवत्, तृणदाहवद्वा ।

( सोपक्रमस्येति ) सोपक्रमस्य क्रियापेक्षा न निरुपक्रमस्य, तत्र सोपक्रमस्य कर्मात्मन इत्यादि यावत्तृणदाहवद्वेति, तस्यैव सहैकीभूतस्यात्मनश्चेतनाचेतनत्वेन पुरुषात्मनेत्यादिना सापेक्षानुदयोपशमक्षयोपशमक्षयानवस्थाविशेषान् दर्शयति सोदाहरणान् ।

एवमनयैव दिशा पुरुषकारैकान्तवादः प्रतिषेध्यः तद्यथा—कर्म च कारणं प्रवर्त्तयितृत्वात् सुखदुःखोत्कर्षापकर्षाव[illegible]त्वावश्यंभावितस्य चैकस्यैवोक्तवत् सर्वोपयोगत्वात् [illegible]रुषतापात्यादि सर्वमनेनैव योजनीयम्, अत्रैकस्य स्वातंत्र्यं त[illegible]तस्त्वस्येतरस्यापीति भावनीयम्,

मानीयते, उदयावलिकातो बहिर्वर्तिनामनुदयप्राप्तानां कर्मदलिकानां कषायैः सहितेन वा योगसंज्ञितेन वीर्यविशेषेण समाकृष्योदये प्रवेशनरूपेण करणमेदेनोदीर्यते, प्राप्तपरिणामावस्थन्तु नोदीर्यते वैयर्थ्यात् स्वत एवोदये समागतत्वादिति भावः । दृष्टान्तमाह—[illegible]ष्पतुग्निति, पुष्पशिशुः दृढफलं नारिकेलादिफलम् स्पष्टमन्यत् । एवञ्च पुरुषकारः क्रियासहायः फलं ददाति पुरुषस्य शक्तिद्वैविध्यात्, एका सहायापेक्षफलोत्पादनशक्तिरपरा च निरपेक्षफलोत्पादनशक्तिः, भारोत्पाटने पुरुषस्य तथादर्शनादित्याशयेनाह—एवञ्च कृत्वेति । सोपक्रमस्येति, अत्र मूलं सम्भावनयैवोद्धृतं टीकायामीषदपि लिङ्गाभावात् । पुरुषकर्मणोस्तादात्म्य एवामी अवस्थाः सम्भवन्ति नान्यथा, तत्र कर्मविपाकाविर्भाव उदयः, यथा मदनफलस्य सेवनया पित्तस्य वमनोदयो भवति, कर्मणोऽनुदयावस्था उपशमः भस्मपटलाच्छादनेनाग्नेर्दाहोपशमवत्, उदयावलिकाप्रविष्टकर्मणः क्षयात् शेषस्यानुद्रेकक्षयावस्थानात् क्षयोपशमः, ईषद्विध्यातावच्छन्नाग्निवत्, कर्मणामत्यन्तं विनाशः क्षयः यथा तृणदाहः, यथा परिशेषवानपि तृणपुञ्जः संहतत्वाच्चिराय दह्यते यदा तु विरलितः अवयवशो भवति तदाऽऽशु भस्मसाद्भवति, तद्वत् कर्मणोऽप्यनुभवः, यदा कर्म दृढसंहतं बन्धनकाल एव भवति पवनश्लेषवत्तत् क्रमेण वेद्यमानं चिराय वेद्यते, यत्तु बन्धकाल एव शिथिलमाबद्धं तद्विप्रकीर्णतृणराशिदाहवदपवर्त्याशु वेद्यते इति पुरुषकारस्याप्यपेक्षणात् कर्मैकान्तवादः प्रतिक्षिप्तः । अथ पुरुषकारस्य एकान्तेन कारणत्वं प्रतिषेद्धुमाह—[illegible] दिशेति, [illegible]प्रत्युक्तिदिशेत्यर्थः । दिगुपायं सूचयति—तद्यथेति ।

१ सि. क. °वैपर्यान° । २ सि क. कर्मात्मात्मन ।

**यथा चात्र तत्त्वं कर्मात्मनोः सर्वप्रभेदे[illegible] वृत्तं भावितमस्माभिस्तथाऽवगा[illegible]दिल[illegible]णैरस्तिकायैः सह, कर्मात्मविचारोक्ता[illegible] प्रवर्त्तकप्रवर्त्त्यन्यायात् ।**

**एवमनयैवा**[illegible] भावनीयमिति, एवं तावद् क्रियात्मकतयाऽऽत्मकर्मैकान्तवाद[illegible]गियं प्रदर्शिता, अनयैव दिशा अनयैव पुरुषकार इत्याद्युक्तन्यायेन तदेव वस्तु कर्म संज्ञामात्रेण भावयित्वा

5 पुरुषकारैकान्तवादः प्रतिषेध्यः, तद्यथा—कर्म च कारणं प्रवर्त्तयितृत्वात् सुखदुःखोत्कर्षापकर्षविकल्पा[illegible]-भवावश्यंभावितस्यैकस्यैवोक्तवत् सर्वोपयोगत्वात्, पुरुषतापीत्यादि सर्वमशेषं योजनीयम्, यत् परे-णानभ्युपगतमन्यतरदितरत् तदितरस्मिन्नापाद्यम्, तत आह—अत्रैकस्य स्वातंत्र्यं तत्तत्प्रदर्शिततत्त्वस्ये-तरस्यापि भावनीयमिति भावनोपायं प्रदर्शयति सामान्येन, तथा विशेष्य भावितमेवास्माभिरिति, न केवलं कर्मात्मनोरेवाभिन्नैक्यम्, किं तर्हि? यथा चात्र तत्त्वं कर्मात्मनोः सर्वप्रभेदेषु वृत्तं भावितमस्माभिः

10 तथाऽवगाहादिलक्षणैरस्तिकायैः—अवगाहगतिस्थितिलक्षणैराकाशधर्माधर्माख्यैः सह कर्मात्मविचारो-क्तात् प्रवर्त्तकप्रवर्त्त्यन्यायात् भावनीयमिति वर्त्तते, यथा प्रवर्त्तक एव प्रवर्त्त्य इत्युक्तं तथाऽवगाहादि प्रवर्त्तकं प्रवर्त्त्यञ्चोभयमेकमेव कर्मात्मवदिति ।

पुनरपि तद्भावनार्थमाह—

**तद्द्रव्यत्वात्, पृथिव्यादिव्रीह्यादिपृथिव्यादिव[illegible], तद्द्रव्यत्वमसि[illegible]मिति चेन्न, अवगाहा-**

15 **देव द्रव्यं यथा वियदादि [illegible]वमात्माद्यपि, तस्यैव तथाभूतेः, उदकादिव्री[illegible]त्वशिवकादिघ-टत्ववत् ।**

मनु पुरुषकारस्यैव कारणत्वे तस्यैकत्वेनानुभूयमानशुभाशुभादिविकल्पा न सम्भवेयुः कार्यवैचित्र्ये कारणवैचित्र्यस्यावश्यम्भावा-त्तत्कारणं कर्मैव पुरुषकारस्यापि कर्मत्वादित्याशय सूचयति-**अनयैवेति** । प्रतिषेधोपायं दिशा दर्शयति-**तद्यथेति** । **कर्मैव** कारणं प्रवर्त्तयितृत्वादिति कर्मैकान्तिवचनं कर्म च कारणं प्रवर्त्तयितृत्वादिति विशोध्यं, चशब्देन पुरुषस्य समुच्चयः कार्यः

20 चेतनाचेतनयोरैक्यात् सर्वसर्वात्मकत्वाच, एकैकस्य सर्वरूपद्रव्यभवनपरमार्थत्वात् मानृत्वादिभावेन शरीरादिभावेन च यद्भवति तदेकैकं सर्वरूपमिति तदेव तदिति भावः । यदपि भवन्मत्या अन्यत्वेनाभिमतं तदप्यस्माभिः पक्षीकृत्य तत्स्वरूपत्वं साध्यत इत्याह-**अत्रैकस्येति** कर्मणः स्वातंत्र्यवत् पुरुषकारस्यापि स्वातंत्र्यमापादनीयं तथा पुरुषकारस्य स्वातंत्र्यवत्कर्मणोऽपि स्वातंत्र्यमापादनीयमिति भावः । यथा च कर्मात्मनोरभेदः प्रदर्शितस्तथैवान्येषामप्येकत्वं भावनीयमित्याह-**न केवलमिति** । **अवगाहादिलक्षणैरिति**, अवगाहलक्षणमाकाशम् गत्यपेक्षाकारणं धर्मः, स्थित्यपेक्षाकारणमधर्मः, अनुप्रवेशनिष्क्रमण-

25 स्वभावोऽवगाहः, अवगाहिनां धर्माधर्मपुद्गलजीवानां अवकाशदाय्याकाशमिति तदेव तस्य लक्षणम्, अवगाह्यमाकाशमवगाहो लक्षणमवगाहकं धर्माधर्मपुद्गलजीवाः । गतिमतां गतेः स्थितिमताञ्च पुद्गलादेः स्थितेरपेक्षाकारणं धर्माधर्मौ, अस्तिशब्दोऽव्ययो धर्मादेर्ध्रौव्यं प्रतिपादयति कायशब्दश्चापत्तिमुत्पादविनाशौ, अस्ति चासौ कायश्चास्तिकायः । यथा च कर्मकर्मिणोरैक्यं सर्व-सर्वात्मकत्वं प्रवर्त्तकप्रवर्त्त्ययोरैक्यापादनमुखेन प्रतिपादितं तथाऽऽवगाहकादीनामप्यैक्यं भावनीयमिति दर्शयति-**यथा प्रवर्त्तक एवेति**, तथा चावगाहः प्रवर्त्तकः, अवगाहको धर्माधर्मौ प्रवर्त्त्यौ, तयोरेवावगाहात् तस्मात्तयोरैक्यं, तथावगाह्यमाकाशमव-

30 गाहकं जीवपुद्गलादि, अयमवगाह्य एव नावगाहकोऽयमवगाहक एव नावगाह्य इत्येकान्तो नास्ति, प्रवर्त्यप्रवर्त्तकयोरिवावगा-ह्यावगाहकयोरप्येकत्वम्, एवं गम्यगमकयोः स्थेयस्थापकयोरप्येकत्वं भावनीयमिति भावः । एकत्वस्य साधनान्तरमप्याह-**तद्द्रव्यत्वादिति**, तथा रूपभवनपरमार्थत्वात्तदेव तदिति एवं हि भावादेव भवद्द्रव्यं परमार्थतो भवति, पृथिव्येव हि व्रीह्या-दिरूपेण भूत्वा पुनः पृथिव्यादिरूपा भवति तस्मादेतत्सर्वं पृथिव्येव, [illegible]मवगाहादिलक्षणाकाशाद्यप्येकमेवेति भावः । तदेवाह-

१ सि. क. भाव[illegible]नीयमिति ।

(**तद्द्रव्यत्वादिति**) तद्द्रव्यत्वात्–यद्द्रव्यं तत्तत्त्वं यथा प्राग्भावितं पृथिव्यादिव्रीह्यादि-पृथिव्यादिवत्, तद्द्रव्यत्वमसिद्धमिति चेन्नेत्युच्यते, अवगाहादेव द्रव्यं यथा वियदादि एवमात्माद्यपि, यथाऽवगाहोपकारगुणमाकाशं गतिस्थित्युपकारगुणौ[1] धर्माधर्मावेवमात्मपरमाण्वादिद्रव्यमपि, कुतो हेतोः ? तस्यैव तथाभूतेः–तदेव ह्यात्मपुद्गलद्रव्यं तथा तथाऽवगाह[गति]स्थितिरूपेण भवति, किमिव ? उदकादिव्रीहित्वशिवकादिघटत्ववत्–यथोदकपृथिव्याकाशवातबीजाङ्कुरादय एव व्रीहीभवन्ति युग- 5
पद्भाविनो भावाः, यथा च क्रमभाविनः शिवकस्थासककुसूलकादय एव घटीभवन्ति तथाऽऽत्माद्यप्य-वगाहादि, अवगाहादि वियदादि, वियदादि अवगाहादि, अवगाहादि आत्मादि च भवतीति तस्य तस्य तद्द्रव्यत्वं तद्द्रव्यत्वात् प्रवर्त्तकप्रवर्त्यैक्यन्यायोऽवस्थितः, तस्मादात्मपुद्गलाकाशधर्माधर्मास्तिकाया एकं तत्त्वं सर्वप्रभेदवृत्तमिति ।

किञ्चान्यत् — 10

अविभक्तावगाहस्यात्मादेरविभक्तमवगाह्यमप्याकाशमित्येकमेवेदं भवनम्, तत्पुनरन्यत्र [illegible]नानाभेदं विकल्पितम्, तान् प्रति सर्वगतेतराभिमतद्रव्यस्वरूपमुत्क्षेपणादि, तदव्यतिरिक्तत्वात्, घटघटभवनवत्, यथा घट एव घटभवनं न ततोऽन्यत् ततस्तदव्यतिरिक्तम्, यद्यन्यत् स्यात् घटो न भवेत् भवनादन्यत्वात्, खपुष्पवत्, भवनं वा तस्य न स्यात् ततोऽन्यत्वात् पटभवनवदिति । 15

**अविभक्तेत्यादि** यावदेकमेवेदं भवनम्, अवगाहोऽवगाहमानादात्मादेरविभक्तः, अवगाह्य-

यद्द्रव्यमिति । यथा व्रीहिः पृथिवीद्रव्यं तथाऽवगाहो धर्मादिद्रव्यमतस्तत्स्वरूपमेवमाकाशादि अवगाहादितो द्रव्यं भवति अतस्तत्स्वरूपमपीत्याह–**अवगाहादेवेति** । अवगाहो हि लक्षणमाकाशस्य तस्मादेव तदवगमात् लक्ष्यलक्षणयोश्चैकत्वात् तत्तत्त्वमेवं गतिस्थित्यादितो धर्माधर्मौ, एवमात्मपरमाण्वादितोऽपि, अवगाहोऽनुप्रवेशो नाम संयोगविशेषः, गतिः स्थितिश्च परिणामविशेषौ, एते जीवपुद्गलयोः परिणामपरिणामिनोरैक्यात्तद्रूपावेव, तत्रोपकारका आकाशधर्माधर्माः, उपकार्योपकारकयोश्चैक्यात् जीवपुद्गल- 20
योरपि आकाशादिरूपता, तथा च जीवपुद्गलौ अवगाहस्वरूपौ अवगाहश्चाकाशस्वरूप इति तेषामेकद्रव्यत्वमिति भावः । एतदेव हेतुपूर्वकमाह–**तस्यैव तथाभूतेरिति**, तस्यैव जीवादेरवगाहादिरूपेण भवनात्, तस्य चाकाशादिरूपत्वादिति भावः । दृष्टान्तमाह–**उदकादीति** । उदकपृथिव्यादेर्व्रीहिरूपेण भवनवदिति युगपद्भाविनामुदकपृथिव्यादीनां तथाभवने दृष्टान्तता, शिवकादेर्घटीभवनमिति अयुगपद्भाविनां शिवकस्थासकादीनां तथाभवने दृष्टान्ततेति दर्शयति–**यथोदकेति** । आत्मादिरवगाहरूपः, अवगाहादिराकाशरूपः, पुनश्चाकाशादिरवगाहादिरूपः अवगाहादिश्चात्मादिरूप इति तस्य तस्य तत्तद्द्रव्यत्वमित्यन्योन्यमेकत्वमिति दर्शयति– 25
**तथाऽऽत्माद्यपीति**, आदिना पुद्गलधर्माधर्माः, अवगाहादीत्यत्रादिना गतिस्थिती वियदादीत्यादिना धर्माधर्मौ प्राह्यौ । एवमात्मपुद्गलाकाशधर्माधर्माः सर्वप्रभेदेषु वृत्तत्वादेकं तत्त्वमिति दर्शयति-**तस्मादेति** । अथ स्वाभिन्नाभिन्नस्य स्वाभिन्नत्व एव भवनलक्षणद्रव्यत्वं पारमार्थिकं भवतीत्यादर्शयति–**अविभक्तेति** । तदेव घटयति–**अवगाह इति**, आत्मादीनां ह्यवगाहो भवति, अतोऽवगाहादिरात्मादेः परिणामः, परिणामपरिणामिनोरभेदात् आत्मादेरवगाहस्याविभक्तता, अवगाहस्योभयधर्मतयाऽऽकाशगमकतया चोपकारोपकारकयोरभेदादवगाहादाकाशस्याविभक्तता, एवञ्चात्मपुद्गलाकाशधर्माधर्माणां द्रव्यता भवनस्वरूपा 30
स्वनिमित्तेन परनिमित्तेन च भवति, स्वधर्मव्याप्त्या द्रव्यमेते, स्वधर्मव्याप्तिश्च तादात्म्येनावस्थानम्, तथा द्रव्यमेव हि रूपादितया गत्याद्युपग्रहकारितया व्यपदिश्यते पितापुत्रादिसम्बन्धिव[illegible]मिति न कश्चित्पर्यायोऽस्तीति द्रव्यार्थनयाभि-

1 सि. क. °गुणैर्द्व° । 2 सि. क. °दात्मार्थोद्र° ।

मप्याकाशमवगाहधर्मस्य स्वलिङ्गस्य पृथगसिद्धेरवगाहकादविभक्तम्, द्रव्यार्थविवक्षायां पर्यायस्याभावात् तस्मादेकमेवेदं भवनमिति माधूक्तम्, तत्पुनरन्यत्र प्रतिवादिमते मिथ्याग्रहोत्थापितेत्यादि यावत् सर्वगतेतराभिमतद्रव्यमिति, कार्यद्रव्यं पटादि कारणद्रव्यात्तन्त्वादेरन्यत्, तन्त्वादि च कार्यादन्यत्, एवं गुणाः पटरूपश्यामत्वादयः पटात् कारणकार्याख्याः परस्परतश्च कर्माण्युत्क्षेपणादिक्रियाः द्रव्यसमवेताः
5 सर्वगतासर्वगतद्रव्याणि गुणेभ्यः परस्परतश्च, द्रव्यगुणकर्मभ्यः, परस्परतश्चान्ये सामान्यविशेषसमवाया इतीत्थंप्रभेदं तदेवास्मदुक्तं भवनं मिथ्याग्रहोत्थापितं कैश्चित्, यैश्चेत्थं विकल्पितं तान् प्रति सर्वगतेतराभिमतद्रव्यस्वरूपमुत्क्षेपणादि, आदिग्रहणाद्रूपरसादिगुणाः सामान्यविशेषसमवायाश्च, तच सर्वगतासर्वगतद्रव्यस्वरूपमात्रमिति प्रतिज्ञार्थः, तदव्यतिरिक्तत्वादिति हेतुः, अनन्तरोक्तविधिना च तदव्यतिरिक्तत्वं सिद्धम्, तत्स्वरूपमात्रं तदव्यतिरिक्तमनयोः कोऽर्थभेद इति चेन्न कश्चिदेतन्नयदर्शनेन,
10 अपरस्तु शब्दबुद्ध्यादिभेदमिच्छतीति तन्मतापेक्षयैतदुक्तम्, दृष्टान्तो घटघटभवनवत् यथा घट एव घटभवनं न ततोऽन्यत् ततस्तदव्यतिरिक्तम्, यद्यन्यत् स्यात् घटो न भवेद्भवनादन्यत्वात्–भवनव्यतिरिक्तत्वात्, खपुष्पवत्, भवनं वा तस्य न स्यात्, ततोऽन्यत्वात् पटभवनवदित्यतो घटमात्रं घटभवनं तदव्यतिरिक्तं च, एवं सर्वगतेतरद्रव्यमात्रमुत्क्षेपणादीति ।

**एवं पचिक्रियापि क्वचिदप्यनतिक्रान्तद्रव्यस्वरूपा, उत्क्षेपणादिवदेव पृथिव्यादिकाष्ठादि**
15 **द्रव्यमात्रं भवनमेव, स च भावः गुरुत्वादिनियतचेतनाचेतनविकल्पद्भुतविशेषणविनिर्मुक्तः सर्वात्मकः, यथा घटादि पटो भवति व्रीहिरुदकं मनुष्यो नभो धर्माधर्मादि वा, पटोऽपि घटो व्रीहिरुदकादीत्यविशेषेण सर्वं भवत्येवैकैकम् ।**

**एवं पचिक्रियापीत्यादि** काष्ठादिपृथिव्यादिस्वतत्त्वा प्रतिनियता पचिक्रियाया वृत्तिः पूर्वोक्त-

प्रायेणैकत्वं द्रव्यस्य प्रतिपत्तव्यमित्याह–**द्रव्यार्थविवक्षायामिति** । तदेवमेकस्य सर्वत्वं सर्वस्य चैकत्वं प्रमाणसिद्धमनादृत्य
20 मिथ्यावादिभिरेकान्तेन द्रव्यगुणक्रियासामान्यानां कार्यकारणानां परस्परतो द्रव्याणां गुणानां कर्मणाञ्चैकान्तभेदोऽभ्युपगम्यते तान् प्रति तेषामेकस्वरूपत्वं साधनीयमित्याशयेनाह–**तत्पुनरन्यत्रेति** । तेषां मतं केवलं मिथ्याग्रहादेवोत्थितं न तु प्रमाणबलादिति सूचयति–**मिथ्याग्रहोत्थापित इति** । अन्यत्वमेव दर्शयति–**कार्यद्रव्यमिति** । एकस्वरूपत्वं साधयितुं प्रतिज्ञामारचयति–**तान् प्रतीति** । उत्क्षेपणादि धर्मित्वेनोपादाय तस्य द्रव्यस्वरूपत्वं साध्यते, अव्यतिरिक्तत्वं हेतुरिति भावः । अव्यतिरिक्तत्वमेयता ग्रन्थेनोपपादितमेवेति नासिद्धता हेतोरित्याह–**अनन्तरेति** । ननु साध्यसाधनयोर्भेदाभावात्सिद्धसाधनं
25 दोष इत्याशंक्य द्रव्यार्थिकनयेन तयोर्भेदाभावेऽपि परमते भेदाभ्युपगमान्न दोष इत्याह–**तत्स्वरूपमात्रमिति** । **शब्दबुद्ध्यादीति**, स्वरूपशब्दाव्यतिरिक्तशब्दयोर्भेदात्, तच्छब्दजन्यबुद्ध्योश्च भेदादिति भावः । घटभवनं हि घटादव्यतिरिक्तमिति घटस्वरूपमेव, यदि तद् घटस्वरूपं न स्यात्तर्हि तस्य घटव्यतिरिक्तत्वेन व्यतिरिक्तयोर्घटभवनयोस्तादात्म्यातिरिक्तसम्बन्धासंभवाद्घटस्य भवनमेव न स्यात्, भवनमिदं घटस्येत्यपि न स्यादसम्बन्धात्, यथा घटपटभवनयोर्नास्ति सम्बन्धस्तद्वदित्याशयेनाह–**यथा घट एवेति** । दृष्टान्ते साधनवैकल्योद्भावने त्वाह–**यद्यन्यदिति** । द्रव्यलक्षणं भवनमेव सर्वात्मकमिति
30 समर्थयितुमाह–**एवं पचिक्रियापीति** । पाकादिभावप्रत्ययार्थक्रियाऽपि द्रव्यस्वरूपं नातिक्रामति कदापि क्वचिदपीत्याह–**काष्ठादीति** । काष्ठादिरूपा या पृथिवी तस्याः स्वस्वरूपभूता क्रियाया वृत्तिः, तत्रैव प्रतिनियतत्वादेवासौ ततोऽव्यतिरिक्त-

१ सि. क्रियादिद्रव्यसमवेतसर्वगतद्रव्याद्गुणेभ्यः । क. क्रियादद्रव्यसमवेतसर्वगतासर्वगतद्रव्याद्गुणेभ्यः । २ सि. क. तथा ।

सर्वपरिणत्याऽव्यति[रिक्त]रूपत्वादन्योन्यस्वरूपापत्तेश्च तेषामैक्यापत्तिश्च, अनतिक्रान्तं द्रव्यस्य स्वरूपं देशे काले वा यया पचिक्रियया सा कचिदप्यनतिक्रान्तद्रव्यस्वरूपा सा चोत्क्षेपणादिवदेव पृथिव्या-विकाष्ठादिद्रव्यमात्रं भवनमेव, भवनं भावोऽस्तितेति पर्यायाः, तच्च भवनं यदसौ भवति स च स्वभावो न ततोऽन्यः 'स्वभावसम्बन्धार्थस्तु षष्ठ्यपदेशः क्रशयत्यचेतस' ? इति वचनात् ( ) स्वार्थाभिधायिन्येवाभेदे कर्तृलक्षणा षष्ठी द्रव्यस्य भवनं द्रव्यमेव भवतीति, स च भावः पुरुषादिनियं-तचेतनाचेतनविकल्पद्वैतविशेषणविनिर्मुक्तः—पुरुष एवेदं नियतिरेव काल एवेत्यादि चेतनमचेतनं भवती-त्यनेन विकल्पेन द्वैतमिदं मनुष्यादि घटादि चेति विशिष्यते, यत्पुरुषादिवादे जाग्रत्सुप्ताद्यवस्थाभेदेन क्रमयौगपद्यादिभेदेन वा, तेन विशेषणेन विनिर्मुक्तः स भावो निर्विशेषण एव सर्वात्मकः, यथा घटादि पटो भवति व्रीहिरुदकं मनुष्यो नभो धर्माधर्मादि, पटोऽपि व्रीह्युदकादि इत्यादिविशेषेण सर्वं भवत्येवैकैकमिति ।

**तदेव हि भवनं यत्सर्वात्मकमसद्व्यावृत्त्यर्थम् न ह्यसन्नाम किञ्चिदस्ति, अनेन हि प्रवर्त्तयितृत्वात् सर्वप्रभेदेन भूयते न न भूयतेऽपि तदात्मानतिरिक्तत्वात्, बालकुमारादिवत्, अन्यथाऽभावत्वापत्तेः ।**

(**तदेवेति**) तदेव हि भवनं यत्सर्वात्मकमसद्व्यावृत्त्यर्थम्, न ह्यसन्नाम किञ्चिदस्ति, किं कारणं ? यस्मादनेन प्रवृत्तयितृत्वात् सर्वप्रभेदेन—व्रीह्युदकाकाशाङ्कुरादिना भूयते न न भूयतेऽपीति—द्विः प्रतिषेधा-द्भवनमेवाभवनव्यावृत्त्या नियम्यते भवत्येव न च न भवतीति, केन पुनर्न भवति अभावेन-प्रागभावा-दिना ?, अस्मिन् हि नये न केनचित्प्रकारेण किञ्चिन्न भवतीति प्राक्प्रध्वंसान्योऽन्यात्यन्ताभावाः सन्त्येव, कुतः? तदात्मानतिरिक्तत्वात्—स स आत्मा तदात्मा, तस्यात्मा तदात्मा ततोऽनतिरिक्तत्वात्, यद्यद्यदात्मानतिरिक्तं तस्य तस्य प्रागभावाद्यभावेनाप्यात्मना भवत्येवेत्यर्थः,किमिव ? बालकुमारादिवत् ।

परिणतिरूपेति, एवञ्च यथा चक्षुर्ग्रहणादिविषयतामासाद्य तदेव द्रव्यं रूपादिव्यपदेशमासादयति तथा कर्मापि विस्रसाप्रयोगसापेक्षं द्रव्यपरिणामो द्रव्यादव्यतिरिक्तं, द्रव्यस्य भव्यत्वात्, स्वपर्यायपरिणतेर्योग्यत्वात्, तथा च द्रव्यं भवनलक्षणम्, द्रव्यं भवनं भूतिर्भावः सत्तेति पर्यायत्वादिति भावः । मयूराण्डकरसवदाश्रितसर्वभेदं देशकालापेक्षभेदावस्थं भवनमेव द्रव्यस्य स्वभावः, न तु द्रव्यभवनयोः कश्चिद्भेदोऽस्ति, द्रव्यस्य भवनमिति षष्ठ्यपि स्वभावलक्षणसम्बन्धार्थेत्याशयेनाह-**तच्च भवनमिति** । अयं भावः पुरुष एवेति नियतिरेवेति काल एवेति चेतनस्याचेतनस्य वा व्यावर्तकेन विशेषणेन विनिर्मुक्तः, पुरुष एव भवती-त्युक्तौ हि अचेतनस्य व्यावृत्तिः स्यात्, नियतिरेव काल एवेत्युक्तौ च चेतनस्य व्यावृत्तिः स्यात्, भाव एवेत्युक्तौ तु न चेतनस्या-चेतनस्य वा व्यावृत्तिरित्याशयेनाह-**स च भाव इति** । तथा च भाव एव प्रत्येकं सर्वात्मको भवतीत्याह-**यथेति** । तदिदं भवनन्तु व्यावर्तयत्यसत्, भवनस्य सर्वात्मकतया सत एव प्रवर्तयितृत्वात् न हीदं किञ्चिदपूर्वं जनयति येनासन्नाम किञ्चिद्भवेदि-त्याह-**तदेव हीति** । भवनमिदं व्रीह्यादिरूपेण भवति न पुनरतिरिक्तेन प्रागभावादिना, भवनस्य सर्वात्मकत्वात्, सर्वेषां हि भवनमेवात्मा, अत एव प्रतिषेधरूपोऽभावो नास्त्येवेत्याशयेनाह-**केन पुनरिति** । प्रागभावादीनां वस्त्वनतिरिक्तत्वेन तत्तद्व-स्तूनां भवनमेव प्रागभावादिना भवनमित्याशयेनाह-**तदात्मेति**, प्रागभावादिस्वरूपानतिरिक्तत्वाद्भावस्य, प्रागभावादेर्भावस्य चानतिरिक्तत्वादित्यर्थः, तथाचातिरिक्तेन प्रागभावादिलक्षणाभावेन वस्तु न भवतीति भावः । दृष्टान्तमाह-**बालकुमारादिव-दिति,** कुमारादीनां प्रागभावो हि देवदत्तः, कुमारादिभावोत्पादात् प्राक्कुमारादेरभावः, देवदत्त एवानाविर्भूतकुमारादिरूपः,

१ सि. क. यदसौ न भवति । २ सि. °नियम० । ३ सि. क. सतो । ४ सि. क. °भावा न स० ।

यथा बालः कुमारो युवा मध्यमः स्थविरो वेति देवदत्त एव तेन तेन प्रकारेण भवति, बालकाले कौमाराभावेन कौमारे बालाभावेन यज्ञदत्ताद्यन्योऽन्याभावेन खरविषाणाद्यत्यन्ताभावेन च सर्वं सर्वदा सर्वत्र सर्वथा च भवति स एव देवदत्तस्तत्तदात्मकः तथा सर्वद्रव्यभवनमित्यभूत्वा न भवति भूत्वा च भवतीति[1] मृत्पिण्डकाले न न भवति घट[:अ]व्यतिरिक्तात्मकत्वात्, देवदत्तबालकुमारादिवत्, कपालकाले[न] न भवति घटः, तदव्यतिरिक्तात्मकत्वात्, देवदत्तबालकुमारादिवत्, कस्मात्? अन्यथाऽभावत्वापत्तेः,—असत्त्वापत्तेः ।

**यद्येवं नेष्यते त्वया प्रागभावादिनापि भवत्येवेति, ततस्तस्य देवदत्तादेर्बालकुमारादिसर्वावस्थात्मपरित्यागे किं तद्देवदत्ताख्यं वस्तु? कास्तास्तद्व्यतिरिक्ता बालाद्यवस्थाः? इत्यभाव आपद्यते ।**

( यद्येवमिति ) यद्येवं नेष्यते त्वया प्रागभावादिनापि भवत्येवेति, ततस्तस्य देवदत्तादेर्वस्तुनो बालकुमारादिसर्वावस्थात्मपरित्यागे किं तद्देवदत्ताख्यं वस्तु ? कास्तद्व्यतिरिक्ता बालाद्यवस्थाः इत्यभाव आपद्यते, न सन्त्यवस्थाः परस्परसम्बन्धाभावात् वन्ध्यापुत्रवत्, नास्त्यवस्थावत् अवस्थाव्यतिरेकेणानवधारणात् वन्ध्यापुत्रवत् ।

अत्राह—

**न चेतनोऽचेतन इति नञा प्रतिषेधवाचिना सम्बन्धादचेतनरूपेण चेतनस्य भावाभावादभाव इत्यत्र ब्रूमः, अचेतन इति चेतनादन्य आत्मैवोक्तः स्पर्शास्पर्शादिगुणान्तरस्यैवोपयोगाद्यस्पर्शरूपादन्येन रूपेण स एव स्पर्शादिमान् ज्ञानावरणादिकर्मरूप आत्मा ।**

( नेति ) न चेतनोऽचेतन इति नञा प्रतिषेधवाचिना सम्बन्धादचेतनरूपेण चेतनस्य भावाभावा[द]भाव इत्यत्र ब्रूमः, अचेतन इति चेतनादन्य आत्मैवोक्तः, पर्युदासवाचित्वान्नञः, नात्यन्ता-

कौमाराद्यवस्थान्तरगमनमेव पूर्वावस्थातिरोभूतं पूर्वावस्थाविनाश उच्यते, न हि किञ्चिदत्र विद्यमानमभावीभूतम्, घटपटयोरिव यज्ञदत्तदेवदत्तयोः परस्परव्यतिरेकरूपत्वमन्योन्याभावः, खरविषाणाद्यत्यन्ताभावोऽपि देवदत्त एव समशिरस्कः इति भवनस्वरूपानतिरिक्तत्वात् बालाद्यात्मना देवदत्तो भवत्येव तथा भवनमपि, नहि भवनमभूत्वा भवति भूत्वा वा विनश्यति, सन्त एव घटादयो भावाः द्रव्यक्षेत्रकालभावापेक्षया कदाचिदुपलभ्यन्ते, कदाचित् पुनर्नोपलभ्यन्ते, तस्माद्भवनं सर्वप्रभेदबीजं देशकालाद्यपेक्ष्यमन्वयमेदमभिन्नमपि भिन्नवदिव भासते, तदाश्रयाच्च विशेषाणां भावता, अन्यथा ते भावा न भवेयुः भवनव्यतिरेकित्वात्, अत एवोच्यते—अन्यथा त्वभा[वत्वापत्ते]रिति । अभावत्वापत्तिमेव स्फुटयति—यद्येवमिति, बालादिभिन्नेन प्रागभावादिनापि देवदत्तादेर्भवनेऽवस्थारहितस्यावस्थावतोऽभावेन स देवदत्तः किं वस्तु स्यात्, तस्याभावात्मकत्वादेवाभावेऽवस्थावतोऽभावेन निराश्रया अवस्थाः क भवेयुरिति ता अप्यसत्य इति शून्यं जगत् प्रसज्यत इति व्याख्याति—यद्येवं नेष्यत इति । अवस्थाव्यतिरिक्तेन प्रागभावादिनापि देवदत्तो भवत्येवेति यदि स्वीक्रियत इति भावः । ननु न चेतनोऽचेतन इति व्युत्पत्तौ नञा चेतनद्रव्यनिषेधात् घटत्वादिना पटादेरसम्बन्धेन घटत्वादिना पटादेरभाववदचेतनेन चेतनस्य सम्बन्धाभावाच्चेतनो नास्त्येवेत्याशङ्कते—न चेतन इति, यथा घटो न भवतीति सन्न भवतीति घटसत्त्वयोः प्रतिषेध एव भवतीति तत्तद्वस्तूनामभाव एवेति भावः । अचेतनपदं न तावच्चेतनप्रतिषेधपरम्, सर्वप्रकारं निरुपाख्यायमानस्वरूपवस्त्वभावात्, यत्किञ्चिच्चैतन्यगुणविपर्यासरूप आत्मैवाचेतनशब्देनोच्यते, नतु सामान्येन चैतन्यगुणविपर्यासः, यथाऽब्राह्मण इत्यादौ परिपूर्णधर्मजातिश्रुतादिमतो ब्राह्मणस्यैकदेशधर्मादिनिवृत्त्या ब्राह्मण एवाब्राह्मण उच्यत इत्याशयेनोत्तरयति—अचेतन इति । अन्य आत्मैवेति यद्भवतोच्यते स कोऽन्यश्चेतनादित्या-

१ सि. क. भूत्वान भवत्यभूत्वा च भवतीति ।

भाववाचित्वात्, स कोऽन्यश्चेतनात्, अन्य आत्मैवेति चेदुच्यते स्पर्शास्पर्शादिधर्मणः तस्यैवोपयोगाद्य-स्पर्शत्वादन्येन रूपेण स एव स्पर्शादिमान् ज्ञानावरणादिकर्मरूप आत्मा, तेन चेतनादन्येनाचेतन इति चेतन एवोक्तः ।

न तु भवन्मतात्यन्तचेतनाभावरूपेण चेतनो न भवत्यचेतन इति चेतना न भवत्यचेतनेति ज्ञानादि न भवतीत्यज्ञानादि वोच्यते किन्तु चेतना[1]। अन्याऽचेतना स्पर्शादि, ज्ञानादेरन्यदज्ञानादीति, प्रसज्यप्रतिषेधस्तु नेष्यते यथा चेतनो न भवत्यचेतन इत्यादिरिष्यते 5 त्वया ततस्तथा सर्वतो व्यावृत्तेश्चेतनाचेतनयोर्व्यावृत्तिः स्यात्, निर्विशेषव्यावृत्त्यर्थत्वान्नञः स्वतोऽपि व्यावृत्तेः खपुष्पवदसत्त्वादन्यत्वाच्च तत्त्वमेव चेतना ।

(न त्विति) न तु भवन्मतात्यन्तचेतनाभावरूपेण प्रसज्यप्रतिषेधाख्यस्य विकल्पान्तरस्याभावादुच्यते[1] चेतनो न भवत्यचेतन इति, तथा चेतना न भवत्यचेतनेति नोच्यते[2], किं तर्हि ? चेतनाया 10 अन्याऽचेतना, का सा ? स्पर्शादीति, तथा ज्ञानादि-[ज्ञानदर्शनवीर्यादि] न भवत्यज्ञानादि [इति] नोच्यते किं तर्हि ज्ञानादेरन्यदज्ञानादि स्पर्शाद्येव, अचेतनाज्ञानयोर्भूय[3] उदाहरणं चेतनात्मनो द्रव्यस्य निर्देशेनापरितुष्टस्य परस्य तदभिप्रेतपर्यायनिर्देशेन प्रतिपादनार्थमज्ञानादि वेति, कियती वोदाहरणमाला क्रियते योऽप्यज्ञानसंशयविपर्ययज्ञानादिर्ज्ञानाद्भिन्न इत्यभिमतो धर्मकलापः सोऽपि ज्ञानाज्ञानात्मरूपादेरभिन्न[4] एवेति ज्ञानादिरूपेणोच्यत इति, यद्येवं को न्यायो नेष्यतेऽन्यः?, स प्रसज्यप्रतिषेध आख्यायते। चेतनो 15 न भवत्यचेतन इत्यादिरिष्यते त्वया तत एवं सति तथा—तेन प्रकारेण सर्वतो व्यावृत्तिः घटः पटो न भवति इति पटोऽपि घटो न भवतीति परस्परव्यावृत्तिवत् सर्वभावव्यावृत्तेश्चेतनाचेतनयोर्व्यावृत्तिः ततश्च सर्वतो व्यावृत्तेरयुक्तः प्रसज्यप्रतिषेधः निर्विशेषव्यावृत्त्यर्थत्वान्नञ इति । स्यान्मतं स्वतस्तु

शङ्कते-स कोऽन्य इति । किञ्चिच्चैतन्यगुणविशिष्टादात्मनोऽन्यः । किञ्चिच्चैतन्यगुणविशिष्ट आत्मैवाचेतन इति दर्शयति-स्पर्शास्पर्शादीति, आत्मा हि पूर्वोदितरीत्या पुद्गलात्मरूपोऽत एव स्पर्शास्पर्शादिधर्मा, तथा चोपयोगलक्षणास्पर्शादि- 20 गुणविशिष्टादात्मनोऽन्यः स्पर्शादिगुणविशिष्टः ज्ञानावरणादिकर्मरूप आत्मैवाचेतन उच्यत इति भावः । चेतनादन्योऽचेतन इत्येवोच्यते, न तु चेतनो न भवतीत्यचेतन इत्युच्यते, पुद्गलाकाशधर्माधर्माणामात्मना सहैकद्रव्यतायाः साधितत्वात् सर्वेषां चेतनरूपेण भवनान्न तादृशः कश्चिदस्ति यश्चेतनो न भवतीत्यचेतनः स्यादित्याशयेनाह-न त्विति । नञः प्रसज्यप्रतिषेधः पर्युदासश्चेत्यर्थद्वये प्रसज्यप्रतिषेधस्यात्यन्ताभावरूपस्यानुपाख्यायमानस्वरूपत्वेन नञर्थत्वासम्भवात्तद्बोधकानां चेतनो न भवतीत्यचेतनः, चेतना न भवतीत्यचेतना ज्ञानादि न भवतीत्यज्ञानादीति विग्रहाणामसंभवात्तथा न विगृह्यतेऽस्माभिरित्यादर्शयति-न तु भवन्मतेति । पर्युदासबोधकं स्वाभिलषितं विग्रहमादर्शयति-चेतनाया इति, नञ्युक्तमिवयुक्तमन्यस्मिन् 25 तुल्येऽधिकरणे वर्तत इत्यस्पर्शरूपोपयोगलक्षणचेतनातोऽन्यस्पर्शादिरेवाचेतनाशब्देनोच्यत इति भावः । चेतना न भवत्यचेतना, ज्ञानादि न भवत्यज्ञानादीत्युदाहरणप्रदर्शनं द्रव्यानभ्युपगन्तारं पर्यायवादिनं प्रतीत्याह-अचेतनेति । प्रसज्यप्रतिषेधपक्षे दोषमाह-चेतनो न भवतीति, अत्र यथा चेतनसामान्यप्रतिषेधे सर्वव्यावृत्तिश्चेतनाचेतनयोरैक्यात् तथा घटः पटो न भवतीत्यादिनापि पटव्यावृत्तिवत्सर्वव्यावृत्तिः स्यात् पटस्यापि सर्वात्मकत्वात् तस्मान्निर्विशेषं व्यावृत्तिः स्यादिति जगतः शून्यताप्रसक्तिरेवेति भावः । ननु घटः पटो न भवतीत्यत्र नञा घटव्यतिरिक्तसर्वनिषेधे कृते सर्वप्रकारेण पटादेर्निषेधे वा 30

१ सि. क. °भावादुच्य० । २ सि. क. नोच्यते ज्ञानादि-ज्ञानदर्शनवीर्यादि न भवतीति इत्यधिकं दृश्यते ।
३ सि. क. °तनज्ञान० । ४ सि. क. °रूपादिर्भिन्न० । ५ सि. क. °प्रतिषेधख्यात० ।

अव्यावृत्तिर्भविष्यति घटवत् [इति] चेदुच्यते, स्वतोऽपि व्यावृत्तेः—स्वतोऽपि तर्हि व्यावृत्तं तत्परपरिकल्पितं वस्तु प्राप्नोति सर्वतो व्यावृत्तत्वात् खपुष्पवत्, तस्मादवस्तुत्वं स्वपरतो व्यावृत्तत्वात् खपुष्पवदेवेति, ततः आह—असत्त्वादिति, तस्मात् स्थितमेतदसत्त्वप्रसङ्गात् प्रसज्यप्रतिषेधाभावाच्च प्रागभावादिव्यावृत्ते ... र्थो बालः कुमारो न भवतीत्यादिषु, तत उपसंह्रियते मूल एव—अन्यत्वाच्च

5 तत्त्वमेव—प्रागभावादिव्यावृत्तेर्बालकुमारादिरूपादिवत्तत्त्वमेव चेतनेति ।

सा पुनरिदानीं चेतना किं स्वरूपा वाच्या? उच्यते—

ज्ञानदर्शनादिसंवेदना सापि च निर्वृत्त्युपकरणलब्धितत्त्व उपयोगात्मा, अतो रूपादिमदप्यात्मा, चेतनत्वात् अभिमतात्मवत्, तस्यैव तथाभूतत्वात् एवञ्च कृत्वा ज्ञानमज्ञानं पुद्गलात्मकत्वात् रूपादिवत्, अज्ञानमपि च ज्ञानं तत एव तद्वत्, चेतनोऽचेतनः, अचेतन-

10 श्चेतन इत्यादि सर्वत्र सर्वसर्वात्मकत्वं भावनीयमिति ।

( ज्ञानेति ) ज्ञानदर्शनादिसंवेदना—साकारानाकारोपयोगौ सप्रभेदौ ज्ञानदर्शनग्रहणेन गृहीतौ, आदिग्रहणेन सुखदुःखरागद्वेषभयादिसंवेदना गृहीता, सापि च निर्वृत्त्युपकरणलब्धितत्त्व उपयोगात्मा—इन्द्रियाणां चक्षुरादीनां निर्वृत्तिः पक्ष्मपुटकृष्णतारादित्वेन निष्पत्तिः, उपकरणन्तु मसूरकातिमुक्तककदम्बक्षुरप्राद्यनेकाकारतया प्रदेशानां निष्पत्तिः, एतन्नयदर्शनेन वा तनुपादाभ्यङ्गप्रदीपाद्युपकारक-

15 मुपलब्धेः सर्वमुपकरणम्, लब्धिः पुनर्निर्वृत्तेः प्राक् पश्चाच्चात्मना पूर्वोपात्तं तद्योग्यनामकर्मोदयजं

---

घटस्यानिषेधान्न सर्वव्यावृत्तिरित्याशङ्क्य सर्वतो व्यावृत्तत्वस्य स्वतो व्यावृत्तत्वाविनाभावात् घटादिवस्तूनामपि खपुष्पादिवत् स्वतो व्यावृत्तत्वं भवेदिति समाधत्ते—स्वतोऽपीति । तथा च प्रसज्यप्रतिषेधाङ्गीकारे नञा स्वपरतो व्यावृत्तेः सर्वप्रतिषेधात्सर्ववस्तूनामसत्त्वं प्रसज्येत, तस्मान्नञः पर्युदासरूपोऽन्यत्वमेवार्थः, यथा च देवदत्त एव बालकुमारादिरूपेण भवति तथा भवनमेव चेतनाचेतनरूपेण भवति, एवञ्च चेतनादन्य आत्मैवाचेतनः, चेतनाया अन्यैव चेतनाऽचेतनेत्युच्यत इत्याह—

20 तस्माच्चाच ... त्वमिति । चेतनापदार्थमभिधत्ते—ज्ञानदर्शनादीति, साकारेति, उपयुज्यते वस्तुपरिच्छेदं प्रति व्यापार्यते जीवोऽनेनेत्युपयोगः, जीवस्य तत्त्वभूतो व्यापारो बोधरूपः, साकारानाकारभेदात् स द्विविधः, आकारो ग्रहणपरिणामः प्रतिनियतः, आकारेण सह वर्तत इति साकारः, स चेतनेऽचेतने वोपयुञ्जान आत्मा यदा सपर्यायमेव वस्तु परिच्छिनत्ति तदा स उपयोगः साकार उच्यते, यदा च सामान्यरूपतयैव परिच्छिनत्ति स उपयोगो निराकार उच्यते, आद्यो मतिश्रुतावधिमनःपर्यायकेवलज्ञानमत्यज्ञानश्रुताज्ञानविभङ्गज्ञानभेदो द्वितीयस्तु चक्षुर्दर्शनाचक्षुर्दर्शनावधिदर्शनकेवलदर्शनभेद इति भावः । आदिपदप्राधान्यमाह—आदिग्रहणेनेति । सर्वविषयोपभोगलक्षणपरमैश्वर्ययोगादिन्द्र आत्मा तस्याविनाभाविलिङ्गमिन्द्रियम्, तत्सत्ताप्रदर्श-

25 नात्, इन्द्रियैर्हि विषयेषूपलब्धेषु तद्द्वारेणोपयोगलक्षणस्य जीवस्य सिद्धिर्भवतीति उपयोगलक्षण आत्मा इन्द्रियतत्त्वः, तच्चेन्द्रियं निर्वृत्त्युपकरणलब्ध्युपयोगभेदम्, तत्राप्युपयोगस्य प्रधानस्य शेषा निर्वृत्त्युपकरणलब्धयोऽङ्गानीति निर्वृत्त्यादितत्त्व उपयोग इत्याशयेनाह—सापि चेति, तत्रेन्द्रियं द्विविधं द्रव्यभावभेदात्, द्रव्येन्द्रियं निर्वृत्त्युपकरणभेदम्, भावेन्द्रियन्तु लब्ध्युपयोगभेदम्, तत्र निर्वृत्तिं दर्शयति—इन्द्रियाणामिति, निर्वृत्तिर्नाम प्रतिविशिष्टः संस्थानविशेषः शारीरोऽङ्गोपाङ्गनामकर्मनिर्वर्तितपक्ष्मपुटकृष्णतारादिरूपः, उपकरणमाह—उपकरणन्त्विति, मसूरकसंस्थानं नेत्रं, अतिमुक्तकसंस्थानं घ्राणेन्द्रियम्, कदम्ब-

30 संस्थानं श्रोत्रेन्द्रियम्, क्षुरप्रसंस्थितं जिह्वेन्द्रियं नानासंस्थानञ्च स्पर्शेन्द्रियं विज्ञेयम् । इमानि आभ्यन्तरनिर्वृत्तिरूपाणि उपकरणेन्द्रियन्तु निर्वृत्तिनिष्ठा विषयग्रहणशक्तिरात्मनोऽनुग्रहोपघाताभ्यां उपकरोतीत्युपकरणेन्द्रियमिति तत्त्वार्थभाष्यादौ, ज्ञानसाधनानि बाह्यान्येतन्नये उपकरणानीति दर्शयति—एतन्नयदर्शनेन न वेति । लब्धीन्द्रियमाह—लब्धिः पुनरिति, गतिजात्यादिनामकर्मजनिता, मनुष्यत्वपञ्चेन्द्रियत्वादिलाभे प्रतिस्वं तदावरणकर्मक्षयोपशमभावात्, अपरे त्वायुष्कमपि

द्रव्यम्, ज्ञानदर्शनावरणयोर्वीर्यान्तरायस्य च क्षयक्षयोपशमौ तत्तत्त्वः उपयोगो ज्ञानदर्शनस्वतत्त्वव्यक्तिः, स एव चात्मा, ततः किमिति चेत्? अतो रूपादिमदप्यात्मा, यदेतद्रूपरसादिधर्म मूर्त्तं पौद्गलमाध्यात्मिकमिन्द्रियपाण्याद्यवयवात्मकं शरीरं तदप्यात्मैव, कुतः? चेतनत्वात्—चेतनत्वञ्चास्यानन्तरं प्रतिपादितम्, किमिव? अभिमतात्मवत्—यथा शुद्धोपयोगलक्षणः केवल्यात्मा चेतनत्वात् तथेन्द्रियाद्यपि रूपादिमदिति, तत्समर्थयति—तस्यैव तथाभूतत्वात्, आमुक्तेः स एव हि द्रव्यकेवली 5 संसारावस्थः उपयोगात्मा तथाभूतो निरावरणज्ञानदर्शनसंवृत्तोऽभिमतात्मा, तस्मादामुक्तेस्तस्यैव तथाभूतत्वादिहापि संसारे स एवेति रूपादिमतः पुरुषस्य मुक्तस्य चोपयोगात्मकत्वादविशेष एव, एवञ्च कृत्वा ज्ञानमज्ञानं पुद्गलात्मकत्वाद्रूपादिवत् पुद्गलात्मकत्वञ्च ज्ञानस्यानन्तरं प्रतिपादितम्, अज्ञानमपि च ज्ञानं तत एव तद्वत्, चेतनोऽचेतनः अचेतनश्चेतन इत्यनेकधा सर्वसर्वात्मकतां भावयति, इत्यादिग्रहणाच्च निदर्शनमात्रमेतद्भावितमनया दिशा सर्वत्र भावनीयमित्याह। 10

अथोक्तेषु नयेषु [क]तमोऽयमित्यत्रोच्यते—

**एवञ्चायं सङ्ग्रहेषु द्रष्टव्यः, तेऽपि च सङ्ग्रहाः त्रिविधा द्रव्यस्थितनयप्रकृतयः, तेषु वाऽयं द्रव्यप्रकृतिनयः स्थितप्रकृतिविरोधिनोरधिष्ठातृप्रधानयोर्विपक्षः।**

(एवञ्चेति) एवञ्चायं सङ्ग्रहेषु—सङ्ग्रहः शतविकल्पः 'एक्केक्को य सतविधो सत्तनयसता हवंति एमेव' इति (आव० भा० २२६ निर्यु० २२६४) वचनात्, तेषु सङ्ग्रहेष्वयं विधिनियमनयो 15 द्रष्टव्यः, य एवं वर्णितास्तेऽपि च सङ्ग्रहाः सङ्ग्रहेण त्रिविधा भवन्ति—द्रव्यस्थितनयप्रकृतयः, [द्रव्यप्रकृतयः] कर्मपुरुषकाराद्येकान्तवादाः स्थितप्रकृतयः पुरुषकालनियत्यादिवादाः, नयप्रकृतयः प्रकृतीश्वरादिकारणवादाः, तेषु वाऽयं नयः स्थितप्रकृतीनां पुरुषकालनियतिस्वभावनयानां विरोधिनोरीश्वरनयस्य प्रधाननयस्य चाधिष्ठातृप्रधानाख्ययोर्विपक्षो द्रव्यप्रकृतिनयो विधिनियमभङ्गो द्रष्टव्यः।

तदाश्रयत्वात् कारणमाचक्षते, प्रत्यासन्नतरन्तु ज्ञानदर्शनपरिणतेरावरणीयभूतकर्मणो मतिज्ञानदर्शनावरणादेः क्षयः क्षयोपशमश्च, 20 अन्ये तु अन्तरायकर्मक्षयोपशमापेक्षा इन्द्रियविषयोपभोगज्ञानशक्तिर्लब्धिरुच्यते। एतत्रितयनिमित्तमुपयोगमाह—**उपयोग इति,** एतत्रितयनिमित्तत्वादेवोपयोगस्तत्तत्त्व उक्तः, ज्ञानदर्शनरूपयोः स्वतत्त्वयोरात्मतत्त्वभूतयोर्वा संविज्ञानम्, उपयोगस्तु द्विविधा चेतना संविज्ञानलक्षणाऽनुभवनलक्षणा च, तत्र घटाद्युपलब्धिः संविज्ञानलक्षणा, सुखदुःखादिसंवेदनाऽनुभवनलक्षणा, एतदुभयमुपयोगग्रहणाद् गृहीतमत एवोक्तं ज्ञानदर्शनादिसंवेदनेति। एवञ्चोपयोगस्य निर्वृत्युपकरणलब्धिलक्षणपौद्गलिकद्रव्यतत्त्वत्वात् उपयोगस्यात्मलक्षणत्वाच्च रूपादिमत्पुद्गलमयेन्द्रियपाण्याद्यात्मकं शरीरमप्यात्मेति साधयति—**अतो रूपादिमदिति,** 25 रूपादिमच्छरीरं पक्षः, आत्मत्वं साध्यम्, चेतनत्वादिति हेतुः, अभिमतात्मवदिति दृष्टान्तः, अत्र दृष्टान्तोपपादनपूर्वकं निगमयति—**यदेतदिति।** एवञ्च रूपादिमतः पुरुषस्य शुद्धकेवलिनो मुक्तस्य चोपयोगात्मकतयैकत्वात् यथा रूपादिमत्पुद्गलमात्मा भवति चेतनत्वात्तथैव शुद्धं ज्ञानमप्यज्ञानं भवति, पुद्गलात्मकत्वात्, रूपादिमत्पुद्गलेषूपयोगलक्षणात्मनः सर्वप्रदेशैरुपयुक्तत्वाज्ज्ञानस्य रूपाद्यात्मपुद्गलात्मकत्वं सिद्धमेवेत्याह—**एवञ्च कृत्वेति।** प्रकृतं नयमुपसंहरति—**इत्यनेकधेति।** सङ्ग्रहनयेऽमुं नयमन्तर्भावयति—**एवञ्चायमिति।** यदा सङ्ग्रहाद्या मूलनयाः सप्त भवन्ति तदैकैकस्य प्रभेदतः शतविधत्वात् सर्वैर्नयप्रभेदैः 30 सप्त नयशतानि भवन्तीत्याह—**एक्केक्को य इति।** शतविधान् सङ्ग्रहान् त्रिधा विभज्य दर्शयति—**य एवं वर्णिता इति,** अमुं नयं द्रव्यप्रकृतिषु भावयति—**द्रव्यप्रकृतय इति,** अत्र द्रव्यपदेन सव्यापारभवनसत्ताविवक्षिता, निर्व्यापारभवनसत्तास्थितप्रकृतिः, यथा पुरुषकालादयः पर्यायाणां कल्पनामात्रत्वात्, मतिभेदेन केवलं सामान्येन निर्भासिता नयप्रकृतिः, यथा प्रधानमीश्वरश्च, एवं त्रिधा सङ्ग्रहीतेषु सङ्ग्रहेष्वयं नयो द्रव्यप्रकृतिनयः एकैकस्य चेतनस्याचेतनस्य वा चेतनाचेतनरूपत्वात्

स च सङ्ग्रहैकदेशत्वाद्द्रव्यार्थः, द्रव्यशब्दोऽपि कर्तृसाधनो द्रव्यमिति द्रवति याति न विच्छिद्यते भिन्नरूपमुपव्याप्त्येति । ननु कर्मणि कर्मसाधनत्वमुदितम् तत्कथमधुनाऽवधार्य द्रवतीति द्रव्यं कर्तृसाधनम् ?, उच्यते ननु कर्मसाधनव्याख्यानेन तेनैव कर्तृसाधनत्वमेव व्यवस्थापितं द्रव्येणैव द्रव्यं क्रियते व्रीहिवदिति, सत्यां कर्मतायामपि कर्तृत्वं द्रव्यत्वादिति ।

5 ( स चेति ) स च सङ्ग्रहैकदेशत्वाद्द्रव्यार्थः, नियमात्मकत्वात् पर्यायांशस्पर्शित्वेऽपि सङ्ग्रहैकदेशत्वाद्द्रव्यार्थ एवायमिति । द्रव्यशब्दोऽपि कर्तृसाधनो द्रव्यमिति, द्रवतीत्यादिपर्यायैस्तदर्थं व्याचष्टे द्रवति याति न विच्छिद्यते भिन्नरूपमुपव्याप्त्या—भिन्नानि रूपाणि चेतना[न्यचेतना]नि व्रीहिपृथिव्यादीनि देवमनुष्यादीनि च साकल्येन व्याप्त्येव न किञ्चिदपि त्यजतीति । चोदक आह—ननु कर्मणि कर्मसाधनत्वमुदितं—कर्मकारणव्याख्यानेऽयं द्रव्यशब्दः कर्मसाधन एवोक्तो द्रूयत इति द्रव्यमिति, कर्मवादश्च 10 विधिनियमभङ्ग इत्युक्तम्, तत्कथमधुनाऽवधार्य द्रवतीति द्रव्यं कर्तृसाधनमुच्यत इत्यत्र विधिनियमनयो ब्रूते पूर्वोक्तमेव स्मारयन् ननु कर्मसाधनव्याख्यानेन तेनै[व]कर्तृसाधनत्वमेव व्यवस्थापितमिति, तत्कथमिति चेदुच्यते द्रव्येणैव द्रव्यं क्रियते व्रीहिवदिति, कर्त्तरि तृतीया द्रव्येणेति, तया कर्तृसाधनत्वाभ्युपगमात्, प्रागस्माभिः पुरुषकर्मपृथिवीव्रीह्यादीनामात्मनैवात्मनः कर्तुः कर्मत्वस्य विस्तरेण वर्णितत्वात्, सत्यां कर्मतायामपि कर्तृत्वं द्रव्यत्वादिति सामान्यार्थस्याविच्छेदात् स्वातंत्र्यात् ।

15 एतस्मिंश्च नये द्रव्यमेव शब्दार्थः स च नित्यो विच्छेदाभावादवस्थितत्वाद्वा ।

( एतस्मिंश्चेति ) एतस्मिंश्च नये द्रव्यमेव शब्दार्थो न पर्यायार्थः, स च नित्यो विच्छेदाभावादवस्थितत्वाद्वा, सर्वात्मकैकस्य सर्वार्थरूपानुस्यूतत्वात् ।

अन्वाह च पृथिवी धातौ किं सत्यम् ? विकल्पः, विकल्पे किं सत्यम् ? ज्ञानम्, ज्ञाने किं सत्यम् ? ओम्, तदेतद्ब्रह्म ।

20 अन्वाह चेति । ज्ञापकमाह एतमेव नयमनुवर्त्तमानोऽन्योऽप्याह पृथिवीधातावित्यादि यावत्तद्ब्र-

सर्वस्य चैकरूपत्वादिति भावः । द्रव्यपर्यायार्थिकनययोर्मध्ये क्वास्यान्तर्भाव इत्यत्राह—स चेति । व्रीहिपृथिव्यादिदेवमनुष्यादि पर्यायाङ्गीकारेऽपि कर्मपुरुषयोरेव नियमनात् सङ्ग्रहरूपतया द्रव्यार्थत्वमिति भावः । इदमेवाह—नियमात्मकत्वादिति । द्रव्यशब्दमत्र व्युत्पादयति—द्रव्यशब्दोऽपीति, तदेव कर्म पुरुषद्रव्यं तथा तथा भवति घटपटादिरूपेण देवमनुष्यादिरूपेण न सर्वत्र सर्वदा विच्छिद्यते, द्रव्यत्वजीवत्वचेतनत्वमूर्तत्वादिधर्मापरित्यागेन सर्वभेदेषु व्याप्नोतीति द्रव्यमिति भावः । ननु 25 द्रव्यशब्दस्य कर्तृसाधनत्वोक्तिरनुपपन्ना, पूर्वं यदा चैवं प्रवृत्तौ कर्मण एव कर्तृत्वं सिद्धं तदा द्रवतीति द्रव्यं कर्तृसाधनं न भवति, स्वतंत्रस्य कर्तुरनुपपत्तेः कर्मपरिग्रहविशेषात्तु द्रव्यं द्रूयते गम्यते भोग्येन कर्मपुरुषेणेत्यादिग्रन्थेन कर्मव्युत्पत्तेरङ्गीकृतत्वादित्याशङ्कते—ननु कर्मणीति । तथा वदता तेनैव कर्मवादिना कर्मद्रव्येण कर्मद्रव्यं क्रियत इति वदता कर्तृसाधनत्वमपि द्रव्यशब्दस्योक्तप्रायमेव, कर्मद्रव्येणेति कर्मणः कर्तृत्वाभ्युपगमात्, व्रीहिणैव व्रीहिः क्रियत इति दृष्टान्तात् कर्मैव कर्तापीत्युक्तत्वादित्युत्तरयति—ननु कर्मसाधनेति । नन्वेकस्य कर्तृत्वं कर्मत्वञ्च कथमित्यत्राह—प्रागस्माभिरिति । स्वातंत्र्यमपि 30 कर्मणोऽस्तीत्याह—सत्यामिति, भेदव्यापनशीलतालक्षणस्य स्वतंत्रकर्तृत्वाविनाभूतस्य द्रव्यशब्दार्थस्य तत्राक्षतत्वात्स्वातंत्र्यमप्यस्तीति भावः । एतन्नये शब्दस्य किं वाच्यमित्यत्राह—एतस्मिंश्चेति । शब्दाः सर्वे द्रव्यस्यैव वाचका न पर्यायस्य, आनन्त्याद्व्यभिचाराच्च, किन्तु द्रव्यस्य नित्यत्वेन विनाशाभावात् सर्वपर्यायेष्वनुस्यूतत्वाच्च तदेव शब्दस्यार्थ इति भावः । सर्वप्रमेदेष्ववस्थितत्वं द्रव्यस्य दर्शयति— सर्वात्मकेति । आत्मकर्मलक्षणचैतन्यस्यैव परमार्थत्वे द्रव्यस्य शब्दार्थत्वे च परसम्मतिं प्रदर्शयति—अन्वाह चेति । अनुशब्दार्थमाह—एतमेवेति । पृथिवी तावन्न वस्तुभूतं तत्त्वं, अस्मादिविकल्पातिरिक्तायाः

भवति, पृथिव्येव पृथिवीधातुः, प्रवृत्त्यादिधर्मधारणात्, तत्र किं सत्यं ? विकल्प इति, स्वयमेव पृष्ट्वा व्याचष्टे न काचिदप्यत्र पृथिवी नामास्ति अश्मसिकतामृल्लोष्टवज्रादीन् विमुच्य, त एव हि विकल्पाः पृथिवी, न पृथिव्येव ते विकल्पाः, किं सत्यं ? ज्ञानम्, तेऽपि च विकल्पा ज्ञानादन्ये न सन्ति, ज्ञानमेवात्मकर्मलक्षणं चैतन्यं तथा तथा विजृम्भते, चैतन्यस्यैव व्यवहारमार्गपातित्वात्, ज्ञाने किं सत्यं ? ओम्, अवति रक्षति पाति प्रीयते तृप्यति चेतनाचेतनभेदे सति, एवमादिधात्वर्थात्मना विपरिणममानं 5 कर्मात्मतयैकं भवति येन यथा परिकल्प्यते तत्तथाऽनुवर्त्तत इत्योम्, तदेतद्ब्रह्म, स एव परमार्थः, तदेतत्तत्त्वं परमं ब्रह्म बृहदिति ।

तस्यार्थं कथयति–

एतदुक्तं भवति–अतः परं शब्दार्थव्यवहारो निवर्त्तते निर्विकल्पत्वात्, व्यवहारातीतोऽयमर्थः, कथमोमित्येषोऽन्वयव्यतिरेकरहितः शब्दार्थो भवितुमर्हतीति चेत् को ब्रूतेऽन्वयव्यतिरेकरहित इति, यस्मादत्रानुवृत्तिव्यावृत्ती अनन्तरोक्तपृथिव्यादिधातुविकल्पज्ञानसत्यत्वा[illegible]प्रबन्धसामर्थ्योपहितरूपे, एते चानुवृत्तिव्यावृत्ती यथाभागं प्रसिद्धिं गच्छतः, स च 10 शब्दार्थोऽनाद्यनुप्रबन्धसामर्थ्योपहितानुप्रवृत्तित्वान्नित्यः, अत्रोत्पादविनाशशब्द[illegible] तत्स्थितरूपावेव, नासदु[illegible], ऊर्द्ध्व[illegible]त्यर्थसर्पनिपतनवद्द्रव्यस्वतत्त्वावेवोत्पद्यते विन[illegible]यतीति चोच्यते । 15

( एतदिति ) एतदुक्तम्भवति अतः परं शब्दार्थव्यवहारो निवर्त्तते निर्विकल्पत्वादिति–इयं शब्दार्थव्यवहारगतिर्यावन्निर्विकल्पं ज्ञानमेतावदिति, अतः परं ब्रह्मेति यत्परं तत्त्वं तत्त्वज्ञानमपि निर्विकल्पं सत्र क्रमते, तद्दर्शयति व्यवहारातीतोऽयमर्थः, अयमिति व्याख्यातोऽधिगमोपायोपक्रममात्रं

तस्या अभावादित्याह–तत्र किमिति । विकल्पा अपि न वस्तुभूताः ज्ञानव्यतिरेकेण तदात्मलाभाभावात्, ज्ञानमेव तत्त्वं बुद्धिपरिकल्पितेनान्तस्थ एव च प्रमाणप्रमेयफलव्यवहारः प्रमातृव्यवहारश्च, सत्यपि बाह्येऽर्थे बुद्ध्यारोहमन्तरेण व्यवहारानव- 20 तारात्, नहि ग्राह्यग्राहकयोर्भिन्नाधिकरणत्वे प्रमाणफलव्यवहारो दृष्टः, नहि खदिरगोचरे परशौ पलाशे द्वैधीभावो भवति, तस्मादनयोरैकाधिकरण्यं वक्तव्यमिति ज्ञानमेकलक्षणं चैतन्यमेव तथा तथा विजृम्भते, तस्य तथा सामर्थ्यविशेषसद्भावादित्याशयेनाह–तेऽपि च विकल्पा इति । ननु ओमित्यक्षरात्मकम्, तथारूढः, नहि प्रसिद्ध्यतिक्रमो युक्तः, तथा च वर्णात्मनस्तस्य पृथिव्यादिधारणयोग्यताया अभावेन रूढिमुपेक्ष्याप्यवयवार्थप्रसिद्धिं दर्शयति–ओमिति, ज्ञानात् परं सत्यभूतं निर्विकल्पमोंशब्दोपलक्ष्यं ब्रह्म परमार्थ इत्यर्थः, श्रुतिरेवंविधा क्वचिन्नोपलभ्यते, ओमिति अभ्युदयसाधनमुपासनं विधीयते, 25 उपासनञ्च शास्त्रसमर्थितं किञ्चिदालम्बनमुपादाय तस्मिन् समानचित्तवृत्तिसन्तानकरणम्, ओंकारवाच्यस्य ब्रह्मत्वाभिधानमपि सविशेषस्यैव कर्मब्रह्मात्मन उक्तम्, अत एवोच्यतेऽन्वयव्यतिरेकवानेवायं शब्दार्थ इति । पूर्वोदितश्रुतितात्पर्यमाह–एतदुक्तं भवतीति, परमार्थतोऽरूपस्य निर्विकल्पस्य ब्रह्मणो हि द्वे रूपे मूर्तञ्चामूर्तञ्चेत्यध्यारोपिते व्यावहारिकसत्यभूते, तत्र भूतापेक्षया पृथिवी सारभूता तदपेक्षयौषधिपुरुषवागृक्सामानि उत्तरोत्तरं सारभूतानि तेषां सर्वेषां सारतम ओङ्कारः उपास्यत्वेनोक्तः, तत्र मूर्तामूर्ते आध्यात्मिकाधिदैविकस्वरूपे कार्यकारणात्मके सवासनसत्यरूपे, व्यवहारविषयत्वात्, एतस्य सत्यस्यापि 30 यत्सत्यं तत्परं ब्रह्म वाङ्मनसातीतं नित्यशुद्धबुद्धमुक्तस्वभावमिति भावः । तादृक् परतत्त्वं ब्रह्म शास्त्रजन्यं तत्त्वज्ञानमपि बोधयितुं न समर्थम्, शब्देन सविकल्पस्यैव बोधादित्याशयेनाह–अतः परं ब्रह्मेति । व्यवहारातीतोऽयमर्थ इति । ननु व्यवहा-

१ सि. क. वद्वृत्त्यादि । २ सि. क. विकल्प्ये । ३ सि. क. व्याख्यातमधिगमो ।

दर्शयति, कथमोमित्येषोऽन्वयव्यतिरेकरहितः शब्दार्थो भवितुमर्हतीति चेत् को ब्रूतेऽन्वयव्यतिरेकरहित इति, यस्मादत्रानुवृत्तिव्यावृत्ती अनन्तरोक्तपृथिव्यादिधातुविकल्पज्ञानसत्यत्वानुप्रबन्धसामर्थ्योपहितरूपे-पृथिव्यादिधातूनामचेतनाभिमतानां विकल्पसत्यानां चेतनकर्मात्मनोः कर्माभिमतानाञ्च ज्ञानसत्यस्वरूपपुरुषत्वेनान्वितव्यतिरिक्तानामोमिति कर्मात्मैक्यापत्त्या तत्सत्यत्वानुप्रबन्धेन शक्त्युपधानं नित्यमेवेत्यन्वयव्यतिरेकवानेवायं शब्दार्थः, एते चानुवृत्तिव्यावृत्ती यो यो भागो यथाभागं प्रसिद्धिं अभिधानाभिधेयव्यवहारात्मिकां कर्मेति पुरुष इति कर्मपुरुषकार इति एकमेवेति वा प्रसिद्धिं गच्छतः इति, स च शब्दार्थोऽनाद्य[नु]प्रबन्धसामर्थ्योपहितानुप्रवृत्तित्वान्नित्यः, अत्रोत्पादविनाशशब्दावपि तत्स्थितरूपावेव, नासदुद्भवात्यन्तविनाशरूपाविति, तद्व्याचष्टे ऊर्द्ध्वपतनेत्यादि गनार्थम्, यथासंख्यमाविर्भावतिरोभावस्वरूपयोरपि भावाभिधायित्वादवस्थित एवार्थः उत्पद्यते विनश्यतीति चोच्यते तथा तथा परिणममानः ।

अनित्यघटादिशब्दा अपि नात्यन्तमुत्पन्नमभूतञ्चार्थं ब्रुवते, स्वतत्त्वबीजं द्रव्यमेवाविच्छिन्नमाहुः ।

अनित्यघटादिशब्दा अपीति-अनित्यः प्रध्वस्त इत्यादयो घटः पट इत्यादयश्च शब्दाः पृथिव्याविलक्षणा अपि नात्यन्तमुत्पन्नमभूतञ्चार्थं ब्रुवते, किन्तर्हि ? स्वतत्त्वबीजं द्रव्यमेवाविच्छिन्नमाहुः- स्वतत्त्वं यदभूत्वा भवति भूत्वा च न भवति तदनित्यम्, 'समानकर्तृकयोः पूर्वकाले' ( पा०

रातीत उच्यते, पुनरयमिति व्यवह्रियते चेति विरोध इत्याशङ्कायामाह-अयमिति, व्याख्यातः- अविद्यापरिकल्पितभेदनिरसनेन ब्रह्मविज्ञानोपायक्रमदिदर्शयिषयोपक्रम्यतेऽतोऽयमिति पदेन ब्रह्मणोऽध्यस्तस्य ग्रहणमिति प्रतिभाति । ननु तस्य व्यवहारातीतत्वे कथमोमिति पदस्य तत्र शक्तिग्रहः, अन्वयव्यतिरेकरहितत्वात् सामान्यविशेषभूत एव हि शब्दार्थ इत्याशङ्कते-कथमोमित्येष इति । तत्र पृथिव्यादिधातूनां पूर्वपूर्वस्यासत्यत्वप्रतिपादनेन व्यावृत्तिरूपता, उत्तरोत्तरस्य पूर्वपूर्वापेक्षया ज्ञानसत्यत्वोक्त्या च सामान्यरूपताऽभिमतैव, तयोरैक्यमभिमत्यासत्यस्वरूपताभ्युपगमात्तत्र चोमित्यस्य शक्तिग्रहसम्भव इत्याशयेनोत्तरयति-यस्मादनुवृत्तीति । विकल्पसत्यानां-व्यावहारिकसत्यानाम्, पृथिव्यादिधातवश्चेतनकर्मात्मनोर्मध्ये कर्माभिमता इत्याह-पृथिव्यादिधा. .नामिति । अन्वितव्यतिरिक्तानां-समनुगतव्यावृत्तानाम् । अनयोरनुवृत्तिव्यावृत्त्योर्यथेच्छमेकमुभयं वाऽभ्युपेत्य कर्मेति वा पुरुष इति वा कर्मपुरुषकार इति वा प्रसिद्धिं लोके शब्दार्थतया गत इत्याह-एते चेति । इयञ्च कर्मात्मैकताऽनादिना कालेन वृत्तत्वान्नित्येत्याह-स चेति । इत्थं कर्मात्मैक्यभूतवस्तुनो नित्यत्वमुपपाद्योत्पादविनाशावपि स्थितस्यैवाविर्भावतिरोभावरूपाविति दर्शयति-अत्रेति । उत्पादव्ययावपि द्रव्यस्वतत्त्वभूतावेव, न ह्युत्पादो नाम कश्चिद्धर्मोऽस्ति अभूतभवनात्मकः, न वा कश्चिद्विद्यमानोऽभावतां प्रतिपद्यते, किन्तु यथोर्ध्वपतननिपतनादिरूपेण सर्पस्यैव परिणाम उत्पादविनाशौ, उत्पादलक्षणावस्थान्तराभिव्यक्तिकारणं तिरोभूतं समवस्थानान्तरमेव विनाश उच्यते, उत्पतनव्यक्तये हि सर्पस्य निपतनमेव विनाशः तथा द्रव्यस्वतत्त्वावुत्पादविनाशौ, तथा च नित्यं द्रव्यमेव तथा तथा परिणममानमुत्पद्यते विनश्यतीतिशब्दाभ्यामुच्यत इति भावः। अथानित्यादिशब्दानां प्रसिद्धघटाद्यर्थवाचकानामपि घटादिशब्दानां परिणामविशेषविशिष्टद्रव्यस्यैव बोधकत्वमित्याह-अनित्येति । तदेव व्याचष्टे-अनित्यः प्रध्वस्त इत्यादय इति, अनित्यशब्दोऽत्यन्तमुत्पन्नं-एकान्तेन पूर्वमसन्तं पश्चात्सन्तं पर्यायं प्रध्वस्तशब्दश्चात्यन्तमभूतं विद्यमानस्यैकान्तेनाभावीभवनं न ब्रूत इत्यर्थः । तर्हि किं ब्रुवते तेऽनित्यप्रध्वस्तघटादिशब्दा इत्यत्राह-स्वतत्त्वबीज..ति, उत्पादव्ययौ द्रव्यस्य स्वतत्त्वभूतावेव पर्यायविशेषौ द्रव्यमेव हि तेन तेनाकारेण वर्तते यथाऽऽकाशादेरा-

१ सि. क. कर्मात्मनकर्मा. । २ सि. क. ऊर्ध्ववदनमित्यादि ।

३-४-२१ ) [इति] क्त्वाप्रत्ययविधानात् ' 'तदेव तु दृश्या[दृश्य]परिणामाभ्यां भवति न भवतीति स्वतत्त्वस्यानित्यत्वस्य बीजं द्रव्यमेवार्थः, घटादित्वावस्थदनित्यः तस्य[3] बीजमवस्थितं द्रव्यं सामान्यमेव, अङ्कुरादिव्रीहिवत्, तदेवाविच्छिन्नं महापृथिवीवदनुत्पादव्ययोग्यमृदमविचालि कूटस्थं ध्रुवं नान्यदिति पदार्थः ।

वाक्यार्थोऽपि च पृथक् सर्वं पदम् । 5

( वाक्यार्थोऽपि चेति ) वाक्यार्थोऽपि पृथक् सर्वं पदम्, प्रत्येकं पदं वाक्यम्, देवदत्त ! गामभ्याज शुक्लामित्यत्र देवदत्त एवेतरपदार्थपरिसमाप्ते[ः]कर्मविभक्त्यन्ते गोशब्दे च तथा परिसमाप्ते-रितरपदार्थानाम्, तच्च सर्वसर्वात्मकत्वादुक्तन्यायादुपपन्नम् ।

न चैताः स्वमनीषिका उच्यन्ते किन्तु—

निबन्धनमप्यस्य ' जे एगणामे से बहुणामे' इति । 10

( निबन्धनमपीति ) निबन्धनमप्यस्य दर्शनस्यार्थमस्ति यतोऽस्य दर्शनस्य विनिर्गम इति तद्दर्शयति 'जे एगणामे[से]बहुणामे' ( आचा० १ श्रु० ३ अ० ४ उ० सू० १२४ ) यदेकस्य[4] भावः तत्सर्वस्यापि, यत्सर्वस्य तदेकस्यापीति ॥

चतुर्थोऽरो नयचक्रस्य समाप्तः प्रथमश्च मार्गो नेमिरित्यर्थः

अर्धमेतत् पुस्तकं समाप्तम् ॥ 15

काशत्वम्, अवगाहादिरवगाह्यावगाहकसमुदायात्मकत्वादेकाभावेऽवगाहव्यक्त्यभावादनित्य उच्यते प्रध्वस्त इति चोच्यते, समुदायसद्भावे दृश्यत्वादन्यतराभावे चादृश्यत्वात् तस्माद्व्यस्यैव तथा तथा भावात् उत्पादो व्ययश्च तस्य तत्त्वं द्रव्यञ्च तद्बीजमिति सर्वे शब्दाः पर्यायमुखेन नित्यभूतं द्रव्यमेवाहुरिति भावः । द्रव्यात्मना च तस्याकाशादेर्द्रव्यस्योत्पादविनाशाभावादविच्छिन्न-मित्याह—अवस्थितं द्रव्यमिति । वाक्यार्थमाह—वाक्यार्थोऽपि चेति, एकैकस्य पदस्य सर्वार्थबोधकत्वेनैकैकं पदमेव वाक्यं तदर्थश्च वाक्यार्थ इति भावः । तदेव दृष्टान्तेन दर्शयति—देवदत्तेति । कथमेकस्य सर्वपदार्थबोधकत्वमित्यत्राह—तच्चेति, 20 इतरपदार्थबोधकत्वञ्चेत्यर्थः । आगममूलत्वमस्य नयस्य दर्शयति—निबन्धनमपीति ।

इत्याचार्यविजयलब्धिसूरिकृते द्वादशारनयचक्रस्य विषमपदविवेचने चतुर्थो विधिनियमारः ॥



१ सि. क. स एव । २ सि. क. 'नित्यत्वं । ३ सि. क. तस्या बी° । ४ सि. क. भावात० ।

# अथ उभयनयः



एवमनन्तरनयेनाभिहिते ब्रवीत्युत्तरः—

सत्यमेतद्यदुच्यते त्वया भवतीति भाव इति किन्त्विदं द्रव्यमेवार्थ इति विरुध्यते अभ्युपगमेन स्ववचनेन वा तदवयवेन वा, भवतीति द्रव्यमिति वैकस्मिन्नेव पदे प्रकृतिप्रत्ययार्थभेदोपादानात् ।

(**सत्यमिति**) सत्यमेतत् यदुच्यते त्वया भवतीति भाव इति, किन्त्विदं द्रव्यमेवार्थ इति विरुध्यते—द्रव्यञ्च भव्ये द्रवतीति द्रव्यं द्रूयत इति वा द्रव्यमिति कर्तृकर्मसाधनव्युत्पत्तिमात्रभेदे सत्य[प्य]र्थभेदाभावात् सर्वसर्वात्मकत्वा[त्] द्रव्यमेव पृथिव्यादिव्रीह्यादिभावेन भवति, नान्यः कश्चिद्भावोऽस्तीत्येतदवधारणं विरुध्यते, केन सह विरुध्यते? अभ्युपगमेन, यस्मात्त्वयैवाभ्युपगतं विशेषणं द्रव्यं भवतीति भाव इति भवनलक्षणस्य प्रकृत्यर्थस्य साध्यस्य द्रव्यलक्षणेन प्रत्ययार्थेन साधनेन कर्त्रा विशेषणात् तद्भूयर्थताऽभ्युपगतेति विशेष्यविशेषणयोश्च भेदाद्द्रव्यमेवार्थ इति पूर्वोऽभ्युपगमो विरुध्यते, इतरथा वैयर्थ्यं पौनरुक्त्यं वा स्यात् द्रव्यं भवतीति, अथवा प्रकृष्टकालेनाभ्युपगमेन विरुध्यत इति किञ्चिन्मात्रम्, किन्तु स्ववचनेन वा, विरुध्यत इति वर्त्तते, वाशब्दस्य विकल्पार्थत्वात् समुच्चयार्थत्वाद्वा, अभ्युपगमेन स्ववचनेन च विरुध्यत इति, अत आह—तदवयवेन वा, भवतीति द्रव्यमितीति वा विशेष्यविशेषणभेदानुपादानेऽप्येकस्मिन्नेव पदे प्रकृतिप्रत्ययार्थभेदोपादानात्—भूसत्तायां प्रकृतिः, लट्प्रत्ययः कर्त्तरि, तौ प्रत्ययार्थं सह ब्रूतः प्रधानोपसर्जनभावेन, यथा राजपुरुषौ पुरुषार्थमिति तथा द्रव्यमित्यत्रापि द्रु गतौ '**कृत्यल्युटो बहुलं**' (**पा० ३-३-११३**) इति कर्तृकर्माद्यन्यतमसाधने यत्प्रत्यये प्रकृतिप्रत्यया[र्थ]भेदो[३]पगमात् ।

अथ भवितृभवनयोर्द्रव्यक्रिययोरन्यतरप्रधानोपसर्जनभावो नोपपद्यते, अभावापत्तेरतो विधिनियमौ प्रधानावेव द्रव्यभावपरिग्रहात्मकावित्युभयनयदर्शनमुत्थापयितुकाम आह—**एवमनन्तरेति**, उत्तरः—नय इति शेषः । पूर्वनयोक्तावभ्युपगतांशमादर्शयति—**सत्यमेतदिति** । अनभ्युपगतांशमाह—**किन्त्विदमिति** । द्रव्यशब्दस्य कर्तृकर्मव्युत्पत्तिभेदं प्रदर्श्याप्यर्थभेदमनङ्गीकृत्य द्रव्यमेकमेव सर्वात्मकं भवतीत्यभिधानं विरुद्धं भवतीति प्रदर्शयति—**द्रव्यञ्चेति** । केन सह विरोधोऽवधारणस्येत्यत्राह—**अभ्युपगमेनेति** । भवद्भिः भवतीति भावो द्रव्यमित्युच्यते तत्र भूधातोर्भवनमुच्यते तिप्रत्ययार्थः कर्त्ता तथा च द्रव्यकर्तृकं भवनमिति तदर्थः, भवनं विशेष्यं विशेषणं च द्रव्यं कर्तृ भवनन्तु कर्मेति कर्तृकर्मणोर्भेदाभ्युपगमात् द्रवति द्रूयत इति कर्तृकर्मसाधनव्युत्पत्तिमंगीकृत्यापि अर्थभेदाभावाभ्युपगमो विरुध्यते, विशेषणविशेष्ययोर्भेदादिति भावः । तयोरभेदे तु भवतिशब्देन द्रव्यस्योक्ते द्रव्यशब्दस्य पुनरुपादानं व्यर्थं स्यात्, पुनरुक्तं वा स्यादित्याह—**इतरथेति** । द्रव्यं भवतीति सुदूरपूर्वमभ्युपगतः, तेन किं? अधुना भवतीति भाव इति यदुच्यते तेन वचनेन विरोधो भवतीत्याशयेनाह—**अथ वेति** । पदद्वयाश्रितविशेष्यविशेषणभावापेक्षार्थभेदोपादानव्यतिरेकेणापि एकस्मिन्नेव पदेऽवयवार्थाश्रितविशेष्यविशेषणभावापेक्षार्थभेदो दुर्वार इत्याशयेनाह—**तदवयवेन वेति**, प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, प्रधानोपसर्जनभावेनेति नियममपेक्ष्याह **भूसत्तायामिति**, भूधातुः सत्तामाह, तदुत्तरं वर्तमानकालवाच्यस्य लट् प्रत्ययस्य कर्ताऽर्थः, लः कर्मणि च भावे चेत्यनेन तस्य कर्तरि विधानात्, तावुभौ प्रकृत्यर्थेन सह प्रत्ययार्थं ब्रूतः, प्रकृत्यर्थेन सहेत्युक्तत्वात्

१ क. °गतेन । २ सि. °समायत्तं । ३ सि. क. °भेदाद्गमात् ।

किं कारणम् ?

यत्तदिति तस्य भावत्वादपि यत्तदिष्टं द्रव्यं तद्भावोऽपीति भवनस्य द्रव्याद्भिन्नत्वात्, अतोऽन्यथाऽसत्त्वात्, यदि द्रव्यं भावोऽपि न स्यात्ततस्तदसत् स्यात्, अभावत्वात् खपुष्पवदिति न द्रव्यमात्रमुत्क्षेपणादि, तस्माच्च नैकं सर्वमनन्तरनयदर्शनम्, न सर्वमेकं पुरुषनियत्यादिनयदर्शनम्, नापि विध्युभयदर्शनम्, किं तर्हि ? उभयं द्रव्यं भावश्च, अस्य 5 प्रधानत्वञ्च तुल्यबलत्वात्।

(यत्तदिति) यत्तद्भवति तस्य भावत्वादपि यत्तत्तदिष्टं द्रव्यं तद्भावोऽपि क्रियापि, क्रिया भावः प्रवृत्तिरिति पर्यायाः, भावस्यापि भावात्, भवतीति भाव इति व्युत्पत्तेः, द्रव्यमिति भवतीति च वचनात्, भवनस्य द्रव्याद्भिन्नत्वात्, अतोऽन्यथाऽसत्त्वात् यदि द्रव्यं भावोऽपि न स्यात्—क्रियापि न स्यात् ततस्तदसत् स्यात् अभावत्वात्—अक्रियात्वात् खपुष्पवत् इति, तस्माद्द्रव्यक्रिययोः सत्त्वात् यदुक्तं 10 त्वया द्रव्यमात्रमुत्क्षेपणादीति तदसत्, तस्माच्च नैकं सर्वमनन्तरनयदर्शनम्, न सर्वमेकं पुरुषनियत्यादिविकल्पविधिविधिनयदर्शनम्, नापि विध्युभयदर्शनम्, कर्तृकर्तृभूतप्रकृतिपुरुषभेदमधिष्ठात्रधिष्ठेयभेदमीश्वरकारणं प्रधानोपसर्जनभूतं प्राक् निर्दिष्टम्, किं तर्हि ? उभयं कर्तृ भवनस्य, प्रधानञ्च, तुल्यबलत्वादस्य भावो भवतीति सामान्येन, किं पुनस्तदुभयमित्यत आह द्रव्यं भावश्च, अत्र भावशब्दः क्रियावचनः, क्रिया भावो धातुरिति लक्षणात् तस्माद्द्वयं सर्वं घटपटादि भवतिपचत्यादि च। 15

प्रकृत्यर्थो विशेषणं प्रत्ययार्थो विशेष्यम्, यथा राज्ञः पुरुषो राजपुरुष इत्यत्र राजशब्दः पुरुषशब्दश्च प्रधानोपसर्जनभावेन राजपुरुषो भूतः, पुरुषश्च प्रधानं तथात्रापि भाव इत्यनेन भवनाश्रयस्य द्रव्यमित्यनेन च गत्याश्रयस्य योधान प्रकृत्यर्थप्रत्ययार्थयोर्भेदोऽभ्युपगत इति भावः। प्रकृतिप्रत्ययार्थयोर्भेदेऽपि द्रव्यभवनयोर्भेदः कथमिति पृच्छति—**किं कारणमिति**। यो हि भवति स भाव उच्यते भवनधर्मा च द्रव्यमपि क्रियापि, भवतीति भाव इति वचनात् क्रियालक्षणस्य भावस्य भावत्वं द्रवति भवतीति वचनात् द्रव्यस्यापि भावत्वम्, भवनलक्षणधर्मस्योभयत्रापि सत्त्वात् तस्माद्भवनं द्रव्याद्भिन्नं प्रकृत्यर्थत्वात् प्रत्ययार्थत्वाच्च द्रव्यक्रिययोरित्याशयेनाह—**यत्तद्भवतीति**। अनेन भावस्य लक्षणं प्रोक्तम्, यत्तदिष्टमित्यनेन द्रव्यस्य भावस्य च भावत्वमुक्तम्, तस्माद्भवनं द्रव्याद्भिन्नं न तु द्रव्यमेव भवनमिति भावः। द्रव्यभावयोर्भावत्वं तावद्दर्शयति—**भावस्यापीति**। द्रव्यस्य भावत्वमाह—**द्रव्यमितीति**। द्रव्यस्य भावत्वानङ्गीकारे दोषमाह—**यदीति**। भावव्यतिरिक्तस्य कस्याप्यभावात् खपुष्पवदसत्तत्स्यादित्याह—**अभावत्वादिति**। एवञ्च सर्वगतेतराभिमतद्रव्यस्वरूपमुत्क्षेपणादि, तदव्यतिरिक्तत्वात्, घटघटभवनवत् इति द्रव्यस्वरूपत्वमुत्क्षेपणादेर्यत्साध्यते तदसत्, तदव्यतिरिक्तत्वस्यासिद्धेः, घटघटभवनयोरव्यतिरिक्तत्वाभावादविनाभावासिद्धेश्च, घटघटभवनयोरव्यतिरिक्तत्वे घटघटवदित्यत्रैव पौनरुक्त्यानर्थक्यप्रसङ्गात्, तस्मात्तयोरपि व्यतिरिक्तत्वेनाव्यतिरिक्तत्वसाधनमसदेवेत्याशयेनाह—**तस्माद्द्रव्यक्रिययोरिति**। पूर्वोदितनयानामसङ्गतार्थत्वमाह—**तस्माच्चेति**, अनन्तरनयदर्शनं विधिनियमनयदर्शनम्, सर्वस्यैकताऽत्र नये प्रतिपादिता, विधिविधिनये चैकस्य पुरुषादेः सर्वात्मकतोक्ता, विध्युभयनयदर्शने तु पुरुषादिवादनिरासकतया प्रकृतिपुरुषवादमुपन्यस्य तन्निराकरणेनेश्वरजगतोरधिष्ठात्रधिष्ठेयरूपयोः प्रधानोपसर्जनभूतयोर्निरूपणं कृतम्, तदेतत्सर्वमसदेवेति भावः। किं तर्हि सदित्यत्र स्वप्रतिपाद्यमादर्शयति—**उभयमिति**, भवनस्य कर्तृभूतं प्रधानञ्च द्रव्यक्रियात्मकमुभयं सदिति भावः। उभयस्य प्राधान्ये हेतुमाह— 30 **तुल्यबलत्वादिति**, भवतीति भावलक्षणस्योभयत्र समानत्वादिति भावः। द्रव्यं भावश्चेत्यत्र भावशब्दो न भवनपरः किन्तु क्रियापर इत्याह—**अत्रेति**। एवञ्च घटपटादयो द्रव्यरूपा भवतिपचत्यादिक्रियारूपा इति प्रधानं राशिद्वयं तत्त्वमित्युपसं-

१ सि. क. कर्तृकर्तृभूतं। २ सि. क. °पुरुषभेदं माधिष्ठात्रधिष्ठेयमिदमीश्वर°। ३ सि. द्वयं द्रव्यं।

तत्र सम्मूर्च्छितसर्वप्रभेदनिर्भेदं बीजं द्रव्यमित्येतद्द्रव्यलक्षणम्, तथाभवनाविनाभूतसन्निधिवस्तुत्वव्यक्तिः क्रिया प्रवृत्तिः भावः ।

(तत्रेति) तत्र सम्मूर्च्छितसर्वप्रभेदनिर्भेदं—सम्मूर्च्छिताः संसृष्टा अविनिर्भागेन सर्वप्रभेदाः पचिपठिभुजिगम्यशिशुषादयः कृष्णगौरदन्तुरह्रस्वदीर्घतादयश्च यस्मिंस्तत्सम्मूर्च्छितसर्वप्रभेदं तत् सर्वत्र स्वरूपसमवस्थानात् निर्भेदञ्च तथागृहीततरङ्गादिप्रभेदसरःसलिलवत्, तेषां बीजमाश्रयो द्रव्यमित्येतद्द्रव्यलक्षणम्, तथाभवन[ा]विनाभूतसन्निधिवस्तुत्वव्यक्तिः क्रिया, तेन प्रकारेण पचिपठि[भुजि] गम्यादिना भवनं तथाभवनं, तेन भवनेन[ा]विनाभूतः सन्निधिः सत्तामात्रावस्था ×शक्त्यनभिव्यक्तिः यस्य वस्तुनः तत् तथाभवन[ा]विनाभूतसन्निधिवस्तु तस्य भावो वस्तुत्वं तद्व्यक्तिः—वस्तुशक्त्यभिव्यक्तिः× क्रियते तत् क्रियालक्षणम् प्रवृत्तिः क्रिया भाव इति पर्यायकथनम् ।

तस्य द्वयस्य स्वतंत्रस्य भावस्य निदर्शनम्—

वदनगतक्रमपताकिकासन्ताननिष्कासवत्, यथा मायाकारकवद्द्रव्यादनुत्पादव्ययात्मकात् पृथिव्यादेर्मूलादयो यथास्वं पताकिकामालावत्क्रियात्मानो नियता एव क्रमेण निष्कसन्ति, तथा पचतिगच्छत्यादिक्रिया द्रव्याद्देवदत्तादेः, एवं तस्मिन्नेव वस्तुनि गुणप्रधानभावात् पदार्थान्तरकल्पनावैयर्थ्यम् ।

वदनगतेत्यादि यावन्निष्कासवदिति, मायाकारकवदने व्यवस्थितः क्रमो यासां आकाररूपाणि परिमाणानि च ता मायाकारक[वदनगतक्रम]पताकिकास्तासां सन्तानस्य निष्कासवत्, पृथक् तयोः स्वरूपव्याख्यानार्थमाह मायाकारकवद्द्रव्यादनुत्पादव्ययात्मकात् पृथिव्यादेर्मूलादय इति जगत् दार्ष्टान्तिकं दृष्टान्तेन मायाकारकेण समीकुर्वन् द्रव्यं व्याचष्टे, क्रियाश्च यथास्वं पताकिकामालावत् क्रियात्मान इति च—यथा स्वं यथास्वं पताकिकामाला अव्यवच्छेदेन नीलपीतादिवर्णा ह्रस्वदीर्घादितनुस्थूलादिसंस्थानप्रमाणा नियता एव क्रमेण निष्कसन्ति तथा पचतिगच्छत्यादिक्रिया द्रव्याद्देवदत्ता-

हरति—तस्माद्द्वयमिति । अथ द्रव्यक्रिययोर्लक्षणमाचष्टे—तत्रेति । द्रव्यलक्षणं प्रकाशयति—सम्मूर्च्छिता इति । अन्तर्निलीननिखिलक्रियमविच्छिन्नमाश्रयरूपं द्रव्यमिति लक्षणार्थः । तत्रानुगुणं निदर्शनमाह—तथागृहीतेति, तरङ्गकल्पाः क्रियाः, सलिलसदृशं द्रव्यमिति साधर्म्यम् । क्रियालक्षणमाह—तथाभवनेति । सत्ता क्रियासामान्यं, सामान्यञ्चाशेषविशेषान्तर्भावभाजि, इति पचिपठिभुजिगम्यादिभवनाविनाभाविनी सत्तामात्रावस्था अनभिव्यक्तिरूपेणावस्थानं यत्र तथाभूतद्रव्यवस्तुनः शक्तेर्यथाक्रममभिव्यक्तिः पचादिरूपेण सा क्रियेति, पचिपठ्याद्यशेषविशेषान्तर्भाव्यनभिव्यक्तशक्तिरूपसत्तामात्रस्य यथाक्रममभिव्यक्तिः क्रियेति लक्षणं फलितम् । तत्र स्वतंत्रभूतयोर्द्वयोर्द्रव्यक्रिययोर्भावरूपयोर्यथालक्षणं निदर्शनमाह—वदनगतेति । मायाकारकवदनेऽन्तर्लीनं प्रतिनियताकाररूपपरिमाणं पताकिकासन्तानं प्रतिनियतक्रमेणैव निष्कामति यथा तथैव नित्यात् पृथिव्यादेर्द्रव्यान्मूलाङ्कुरादिरूपं सकलं जगदन्तःशक्तिरूपेणावस्थितं बहिः क्रमेण निर्गच्छति तथैव च देवदत्तादेर्द्रव्यात् पचतिपठतिभुनक्तिगच्छत्यादयः क्रिया अपि यथास्वं निर्गच्छन्तीति द्रव्यक्रिययोरेव भावत्वं नाधिकस्य न न्यूनस्येति भावः । दृष्टान्तेन सहैव दार्ष्टान्तिकं प्रकाशयति—मायाकारकवदिति । अनेन द्रव्याद्द्रव्यविशेषाणां निष्कासनं प्रदर्शितं, ततो द्रव्यादेव क्रियानिष्कासनमाह—

१, २ सि. पचिपदं नास्ति । ३ सि. क. शक्तिसन्मात्रावस्था, ×× एतच्चिह्नान्तर्गतः पाठः सि. पुस्तके नास्ति. एवमग्रेऽपि चिह्नेनानेनैवमेव बोध्यम् । ४, ५ सि. क. निष्कासवत् ।

देरिति, ततोऽन्या अपि च तास्तेन विना न भवन्ति, सोऽपि ताभिर्विना न भवति, अथ च नियताकाररूपपरिमाणास्ताः, स च तत्परिणतिव्यक्तिरिति द्वयमपि भवतीति, एवं तस्मिन्नेव द्रव्यक्रियात्मनि वस्तुनि [ गुणादीनां ] अन्तर्भावात् पदार्थान्तरकल्पनावैयर्थ्यम् [ गुणादीनां ] क्रियामात्रत्वाद्गुणाद्याश्रितपदार्थानां द्रव्यजातिभेदपरिकल्पनावैयर्थ्यञ्च, सर्वद्रव्याणां क्रियावत्त्वादिति ।

तत्प्रदर्शनार्थमाह— 5

**अद्रव्यद्रव्यद्रव्यसंयोजनवियोजनरूपरसगन्धस्पर्शशब्दोत्क्षेपणापक्षेपणभवनविशेषसमवयनाद[1] भवनमेव, न गुणादयः सन्ति, द्रवति जानाति इच्छति द्वेष्टि नियतते संयुनक्ति वियुनक्ति श्वेतते इत्याद्याकारकलकारेण कर्तृवाचिना क्रियाविशेषाणां सकर्तृकाणामभिधानात् ।**

( **अद्रव्येति** ) अद्रव्यद्रव्यवद्द्रव्यसंयोजनेत्यादयः, गुणादयस्तावत्क्रियैवेति प्रागुक्तमधुनाप्युच्यते तद्द्वारेण जात्यभेदश्च, द्विविधं हि द्रव्यमद्रव्यमनेकद्रव्यञ्च, नास्य द्रव्यं समवायिकारणमित्यद्रव्यम्, 10 आत्माकाशकालदिक्परमाण्वाख्यम्, द्रव्यवद्द्रव्यन्तु द्व्यणुकादिमहापृथिवीपर्यन्तम्, तस्य द्विविधस्यापि द्रव्यस्य जातिभेदाभावः, यस्मात् संयोजनं प्राप्तिः क्रियापरिणतिलक्षणा सैव संयोगो गुणोऽण्वाकाशादीनाम्, आत्माकाशादेरपि परिणमनक्रियावत्त्वात्, उक्तवदक्रियस्यासत्त्वात्, एवं वियोजनं-विभागः क्रियामात्रं, न गुणः, तथा रूप्यतेऽक्षिभ्यामिति रूपम्, रस्यते जिह्वयेति रसः, एवं गन्धस्पर्शशब्दाः, अन्ये च संख्यादयो नेयाः बुद्ध्या संख्यायमानत्वात्, उत्क्षेपणापक्षेपणादि[1] ऊर्द्ध्वक्षेपणादिक्रिया द्रव्य- 15 धर्मो द्रव्यप्रभेदः, तथा भवनमिति सत्तासामान्यं, द्रव्यस्यैव समानस्य भवनं, यत्समानेन भूयते, विशेषणमिति विशेषः क्रियैव, येन नीलादिना गमनादिना क्रियामात्रेण द्रव्यस्य विशेषणभवनं स विशेषः, समवयनं सम्बन्धः, सोऽपि संयोग एव, समित्येकीभावेनावयवानामवस्थानम्, तन्त्वादीनां

यथास्वमिति । द्रव्यक्रिययोर्भेदेऽप्यविनाभावं प्रदर्शयति-**ततोऽन्या अपि चेति,** द्रव्यात् क्रियाया अन्यत्वेऽपि द्रव्येण विना क्रिया न भवति क्रियया च विना द्रव्यं न भवतीत्यविनाभावस्तयोरिति भावः । तेन विना-द्रव्यस्वरूपपृथिव्यादिदेवदत्तादिना 20 विना, द्वयाधिक्यं निराकरोति-**एवं तस्मिन्नेवेति** । शब्दस्पर्शरूपरसगन्धलक्षणगुणभेदेनाऽऽकाशवायुतेजोजलपृथिवीनां विभिन्नजातिमत्त्वकल्पनापि व्यर्थेत्याह-**गुणादीनां क्रियामात्रत्वादिति** । अयं हि शब्दनयः जातिगुणक्रियाद्रव्यशब्दानां घटशुक्लपाचकदण्डयादीनां क्रियैवैका प्रवृत्तिनिमित्तमित्यभ्युपगच्छति एतन्मतेन घटत्वादिसामान्यादीनि न सन्ति, तस्माद्द्रव्यं क्रिया चेत्युभयमेव मुख्यमिति भावः । एतदेव प्रदर्शयति-**अद्रव्यद्रव्यवदिति** । अथ नित्यानामाकाशकालदिगात्ममनःपरमाणूनां द्रव्याणां पृथिव्यप्तेजोवायूनामनित्यद्रव्याणां तद्गुणकर्मणां सामान्यविशेषसमवायानाञ्च द्रव्यक्रिययोरेवान्तर्भावं विधत्ते-**द्विविध-** 25 **मिति,** नित्यानित्यद्रव्ययोर्जातिभेदाभावे हेतुमाह-**यस्मादिति,** अनित्यं हि द्रव्यं अवयवानां संयोजनवियोजनाभ्यामुत्पादविनाशव्यपदेशमश्नुते नित्यद्रव्यस्याकाशादौ संयोजनवियोजनासम्भवान्न तद्व्यवहारविषयतेति वक्तव्यं परेण यदा च संयोजनवियोजनौ क्रियारूपावेव, क्रिया च द्रव्यमात्रसाधारणा तदा किं कृतस्तयोर्जातिभेदः, नास्त्येवेति भावः । भूतानां पञ्चानामसाधारणगुणापेक्षयाऽपि न जातिभेद इत्याशयेनाह-**तथा रूप्यत इति,** रूपादीनामपि क्रियाविशेषत्वात् क्रियायाश्च सर्वद्रव्यसाधारणत्वादिति भावः । उत्क्षेपणादि च क्रिया प्रसिद्धैवेत्याह-**उत्क्षेपणेति** । सामान्यमपि समानभवनरूपक्रिया विशेषश्च व्यावर्तनक्रियै- 30 वेत्याह- **भवनमितीति** । एकीभावेनावयवानामवस्थितिरूपः समवायोऽपि क्रियैवेत्याह-**समवयनमिति** । तदेवं द्रव्यगुणक्रियासामान्यविशेषसमवायानां क्रियामात्रत्वे ततो भिन्नस्य कस्यचिदभावाद्भवनलक्षणक्रियैवैका वस्तुतस्तत्त्वभूता प्रसक्ता, न

---

1 सि. क. °पणादीम् पूर्वके° ।

पटादिना समवायः इहेति कार्यकारणयोरेकीभवनम्, आदिग्रहणात् यावत् समवायिद्रव्यभेदात् समवायानन्त्यं दर्शयति षट्पदार्थपरिमाणाभावश्च परिणामधर्मानन्त्यात् क्रियागुणादिपदार्थानन्त्याच, भवनमेव- भाव एव क्रियैव न गुणादयः सन्तीति भवनशब्देन क्रियां दर्शयति, इदानीं द्रव्यं दर्शयितुकाम आह–द्रवतीत्यादि यावच्छ्वतता इत्याद्याकारकल्कारेण कर्तृवाचिना द्रुज्ञेषिद्विषिनियतिसंयु-
5 जिवियुजिश्वितीनां साध्यानां क्रियाविशेषाणां सकर्तृकाणामभिधानात् ।

उभयोरन्यरहितयोर्द्रव्यक्रिययोरभावप्रदर्शनार्थो ग्रन्थः—

**पृथिव्यादिसंयोजनावियोजनादीनामभावे न मूलादि, भावो वेति द्रव्यभावपरिग्रहो युक्तः ।**

पृथिव्यादिसंयोजनेत्यादि यावत् मूलादिभावो वेति, उक्तानामेव द्रव्यभेदानामभावे संयोजनादयः क्रियाभेदाः[न]सन्तीत्यादि तेनानिष्टापादनम्, तस्माद्द्रव्यभावपरिग्रहो युक्त इत्युपनयति,
10 इतिशब्दस्य हेत्वर्थत्वात् ।

**एवञ्च कृत्वा नहीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्त्तमप्यवतिष्ठते वर्द्धते वा यावदनेन वर्द्धितव्यमपायेन वा युज्यत इति ग्रन्थः, नहि कश्चिदर्थो द्रव्यं स्वस्मिन्नात्मनि निर्भेदनिरूपाख्ये मुहूर्त्तमपि अवतिष्ठते, अपिशब्दाद्यावत्समयमपि नावतिष्ठते. एतेन वृद्धिहानिसततसम्प्रवृत्तिरूपं सर्वं वस्त्विति द्रव्याऽऽख्यानमेव कृतम्, वर्द्धते यावदनेन वर्द्धितव्यमिति तु पुनः**

15 द्रव्यं नाम किञ्चिदस्तीति द्रव्यभावयोरुभयोस्तत्त्वतोऽविरुद्धा भवेदिति द्रव्यमपि वस्तुभूतमस्तीति दर्शयति–**इदानीमिति** । द्रवतीति हि द्रव्यमुच्यते, द्रुगताविति धातोः कर्त्तरि कर्मणि वा यत्प्रत्यये कृते गतिक्रियाकर्त्ता गतिक्रियाकर्म वा तदर्थः, नामपदेन च क्रियाकारकसम्बन्धोपसर्जनः साधनाश्रयः प्राधान्येनाभिधीयते, धात्वर्थस्यात्र प्रत्ययार्थविशेषणत्वात्, तथा क्रिया गुणभूतापि भेदेनाध्यवसीयते, तस्माद्द्रव्यादिशब्दानां क्रियाविशिष्टद्रव्यस्यैव वाचकत्वात् न क्रियामात्रं तत्त्वं किन्तूभयमिति भावः । **द्रुज्ञेति,** द्रु गतौ, ज्ञा अवबोधने, इष इच्छायाम्, द्विष अप्रीतौ, निपूर्वो यती प्रयत्ने, समुविपूर्वः युजिर् योगे, श्विता वर्णे इति धातवः,
20 द्रवतीत्यादिना तत्तत्क्रियाविशिष्टस्यैकरूपस्य द्रव्यस्याभिधानादस्ति द्रव्यमिति भावः । आविर्भावतिरोभावस्थितिरूपक्रियाया द्रव्यस्य चानभ्युपगमे पृथिव्यादिद्रव्यात् मृत्तादेः गमनादिक्रियाया वा आविर्भावः सम्भवतीति द्रव्यमवश्यमभ्युपेयमतो द्रव्यं भावश्चेत्युभयं युक्तमित्याह–**पृथिव्यादीति** । अत्रार्थे पातञ्जलभाष्यगतं वचनमुद्धरति–**एवञ्च कृत्वेति,** तथा च भाष्ये 'स्त्रियाम्' (४–१–३) इति सूत्रे लिङ्गस्वरूपं संस्त्यानप्रसवौ लिङ्गमिति प्रदर्श्य संस्त्यानं स्त्री प्रवृत्तिः पुमानित्युक्त्वा कस्य पुनः संस्त्यानं स्त्री प्रवृत्तिर्वा पुमानित्याशङ्क्य गुणानामिति प्रदर्श्य ते च गुणाः शब्दस्पर्शरूपरसगन्धाः, सर्वाश्च पुनर्मूर्त्तयः संस्त्यानप्रसवगुणा
25 इत्युक्त्वा प्रवृत्तिः खल्वपि नित्या. न हि कश्चिदपि स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते वर्द्धते वा यावदनेन वर्द्धितव्यम्, अपायेन वा युज्यते, तच्चोभयं सर्वत्रेति स्वसिद्धान्तः प्रदर्शितः, अस्य तात्पर्यं हरिणा प्रदर्शितं यथा 'आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः । धर्मा मूर्तिषु सर्वासु लिङ्गत्वेनानुदर्शिताः,' इति । एतद्वाक्यमाचार्यो व्याचष्टे–**न हि कश्चिदर्थ इति,** मूर्त्तयो हि पच्यमानोदकसदृक्षाः परिणामं विना स्वस्वरूपे क्षणमपि नावतिष्ठन्ते, प्रतिकलं परिणामाभावे तु सूर्यादीनां स्थलविशेषासादनं फलादीनां पूर्वपूर्वरूपरसाद्यपगमेन नूतनरूपरसादिप्रादुर्भावश्च न स्यात् तस्मादनुक्षणाविर्भावतिरोभावस्वरूपं द्रव्यमिति भावः ।
30 तदेवोक्तम्–**एतेनेति** । संस्त्यानप्रसवगुणाः सर्वा मूर्तयः, एवंरूपा प्रवृत्तिः प्रतिक्षणं भवति, त एव च पदार्थाः शब्दैरनुगम्यन्ते, न हि वाचो लिङ्गविरहितवस्तुबोधकत्वं क्वचिद्दृष्टम्, आकारोपग्रहेणैव वस्तुनः शब्दवाच्यत्वात, एवञ्च संस्त्यानप्रसवविशिष्टशब्दस्पर्शरूपरसगन्धसमुदायस्यैव घटपटादिरूपस्य वचोविषयत्वात् शुद्धं परिणामिभूतं द्रव्यं प्रत्याख्यातमेव भवति, वचोऽविषयत्वात, उक्तं हि 'गुणानां परमं रूपं न दृष्टिपथमृच्छति' इतीति भावः । ननु संस्त्यानं तिरोभावः, प्रसव आविर्भावः, एतौ प्रवृत्तिरूपौ परिणामौ सदा यदि भवेत् तर्हि स्थितिरूपस्य नपुंसकलिङ्गस्यावसर एव नास्तीत्याशङ्कायामाह–**वर्द्धत इति** ।

१ सि. क. पटादित्वेन । २ सि. क. इत्यादिकारकं तल्ककारेण ।

त्परिमाणस्य यावदिति नियतपरिमाणां वृद्धिं दर्शयता तस्यैव द्रव्यस्यावस्थितस्यावस्थाविशेष एव वृद्धिरिति दर्शितं भवति, तथाऽपायोऽपि, यावदपैतव्यं तावदेवापायेन वा युज्यत इति ।

एवञ्च कृत्वेत्यादि यावदपायेन वा युज्यत इति भाष्यकारेण सांख्यादाहृत्योक्तो ज्ञापकग्रन्थः, सोऽयमस्मिन्नेव द्रव्यक्रियात्मकवस्तुवादे घटते, न परमतैकान्तद्रव्यापरिणामवादे, नापि सततप्रवृत्त-क्षणिकवादे, तद्व्याचष्टे—नहि कश्चिदर्थो द्रव्यं, नहि किञ्चिदिति प्राप्तस्य सामान्यनपुंसकनिर्देशस्यार्थ 5 इति पुल्लिंगेन विशेष्य व्याख्यानम्, यथोक्तं 'अव्यक्ते गुणसन्देहे [च]नपुंसकलिङ्गं प्रयोक्तव्यम्, जायमानं हि द्वयमेव जायते पुमान् स्त्री वा, तथापि वक्तारो भवन्ति किमस्य जातम्? इति (एतत्स-मानार्थकः पाठो महाभाष्ये अ. १ पा. २ आ. ३) पुनरपि चार्थपर्यायमाह-द्रव्यमिति, भाष्यकार-मतेनैव, स्वस्मिन्नात्मनि—द्रव्यात्मनीत्यर्थः, निर्भेदनिरुपाख्ये—गमनस्पन्दननिमेषोन्मेषादिभेदविरहिते तस्य भेदविरहितस्य निरुपाख्यत्वात्, तद्धि द्रव्यं धर्मरहितमुपाख्यातुमशक्यम्, अनुपाख्यत्वाच्चासदेव 10 स्यात्, अतस्तन्मुहूर्त्तमपि नावतिष्ठते परिणतिक्रियाविरहितम्, तद्व्याचष्टे—अपिशब्दाद्यावत् समयमपि नावतिष्ठते, नालिकालवस्तोकप्राणोच्छ्वासनिःश्वासक्रमहान्या, ततः परं सूक्ष्मकालाभावात्, एतेन—स्वात्मानवस्थानवचनेन वृद्धिहानिसततसं[प्र]वृत्तिरूपं सर्वं वस्त्विति द्रव्याऽऽख्यानमेव[1] कृतम्, वर्द्धते

आविर्भावस्य या निरन्तरा प्रवृत्तिस्तया स्थितिरवकल्पते, अभेदाध्यवसायादिति भावः। तथाऽपचयस्य निरन्तरप्रवृत्तिष्वभेदाध्यव-सायात् स्थितिर्व्यवस्थाप्यत इत्याशयेनाह-**तथापायोऽपीति**। **सांख्यादाहृत्येति**, सांख्या हि सत्त्वरजस्तमसां गुणानां 15 सततपरिणामिनामुपचयापचयमाध्यस्थ्यलक्षणा अवस्थाविशेषा यथायोगं पुंस्त्वादिलिङ्गमातिष्ठन्ते तदेतद्भाष्यकाराभिमतं लिङ्गं न तु लोकप्रसिद्धमिति ग्रन्थोऽयं सांख्यानुसारीति भावः। एतादृशलिङ्गव्यवस्थाया अन्यदर्शनेष्वसम्भवं दर्शयति-**सोऽयमस्मि-न्नेवेति**, एकान्तद्रव्यपक्षे एकान्तक्रियापक्षेऽस्य लिङ्गस्य व्यवस्था न सम्भवतीति भावः। न हीह कश्चिदिति सामान्येनोक्तत्वात् किञ्चिदिति नपुंसकशब्दे प्रयोक्तव्ये कश्चिदिति अर्थशब्दाभिप्रायेणोक्तमिति व्याख्यातमित्याह-**न हि किञ्चिदिति**। नपुंसकलिङ्ग-स्यावश्यकत्वे प्रमाणमाह-**यथोक्तमिति**। **अव्यक्त इति**। 'नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्यामि'ति सूत्रे (पा० १-२-६९) 20 भाष्ये 'कथं पुनर्ज्ञायते नपुंसकं प्रधानमिति? एवं हि दृश्यते लोके अनिर्ज्ञातेऽर्थे गुणसन्देहे च नपुंसकलिङ्गं प्रयुज्यते, किं जात-मित्युच्यते, द्वयं चैव हि जायते, स्त्री वा पुमान् वे'ति पाठो दृश्यते, नपुंसकस्य प्राधान्यप्रदर्शनपरं भाष्यम्-सत्त्वरजस्तमसां साम्यावस्थारूपा स्थितिर्नपुंसकमुच्यते, सा च सर्वत्र व्यापिनी, स्थितिरूपत्वेन स्त्रीपुंसयोरपि विवक्षायां नपुंसकशब्दप्रयोगोऽत एव सिद्ध्यति, स्त्रीत्वादीनां गुणानां सन्देहे सामान्यरूपेण ज्ञाते स्त्रीत्वादिना पुनरज्ञाते नपुंसकलिङ्गं प्रयुज्यते-किं जातमित्यनि-र्ज्ञातेऽर्थे निदर्शनम्, द्वयं चैव हि जायते स्त्री वा पुमान्वेति गुणसन्देहे निदर्शनमिति, अयं भावः, सत्त्वादयो गुणा वैश्वरूप्य- 25 मापद्यमानाः स्वजात्यनतिक्रमेणैव प्रवर्त्तन्ते तथापि प्रतिक्षणं प्रकाशप्रवृत्तिनियमानां सत्त्वादिधर्माणामनुवृत्तिः, तदेवं गुणसामा-न्यानुवृत्तेः सर्वावस्थास्वेते गुणा इत्यनुवृत्तिप्रत्ययस्य हेतवो भवन्तो गुणाः सत्त्वादयः स्थितिलिङ्गतामासादयन्ति, सामान्यं हि गुण-रूपं स्थितिः। तत्र च सामान्ये सर्वविशेषान्तर्भावादाविर्भावतिरोभावयोरपि तदनुगमात् स्त्रीत्वादिलिङ्गभेदस्य नपुंसकलिङ्गं स्थिति-शब्दवाच्यं सर्वनामैव सर्वनाम व्यवह्रियते, अनिर्ज्ञाते गुणसन्देहे तस्यैव प्रयोगार्हत्वादिति हरिणोक्तम्। सामान्यस्य द्रव्यस्य नित्यै-कतालक्षणे स्वस्वरूपेऽवस्थितौ केनापि शब्देन तस्योपाख्यातुमशक्यतयाऽसत्त्वप्रसङ्गेन न स्वस्वरूपेऽवतिष्ठत इत्यादर्शयति- 30 **स्वस्मिन्नात्मनीति**। उपाख्या-शब्दः, तेन चाऽऽकारविशिष्टस्यैव बोधनादिति भावः। स्थितिलक्षणं द्रव्यं यदि स्थित्यैव वर्त्तमानं भवेत् तर्हि आविर्भावतिरोभावलक्षणभेदाकरणात् द्रवति तांस्तान् भेदानिति व्युत्पत्त्यर्थाभावादद्रव्यमेव स्यात्, यद्याविर्भावतिरो-भावमात्रे स्यात्तर्हि आविर्भावतिरोभावावेव न स्याताम्, मूलाभावादिति तदापि द्रव्यं न स्यादिति आविर्भावतिरोभावयोर्निरन्तरं प्रवृत्तिलक्षणस्थितिद्रव्यमुक्तम्भवतीत्याशयेनाह-**स्वात्मानवस्थानवचनेनेति**। उपचयप्रवृत्तिप्रवाहे प्रवृत्तिलक्षणस्थित्यात्मद्रव्यं

1 सि. क. द्रव्यप्रत्याख्यानमेव ।

यावदनेन वर्द्धितव्यमिति तु पुनर्यत्परिमाणस्य यावदिति नियतपरिमाणां वृद्धिं पद्मादीनामिव साधिक-
सहस्रयोजनात् परतो न भूतां कदाचिदिति दर्शयता तस्यैव द्रव्यस्यावस्थितस्यावस्थाविशेष एव वृद्धि-
रिति दर्शितं भवति, तथाऽपायोऽपि—यावदनेनापेतव्यं तावदेवापायेन युज्यत इति यावच्छब्दार्थमधि-
कृतं भावयति—यथा सूक्ष्मनिगोदापर्याप्तजीवस्यावरणान्तरायक्षयोपशमकृतयोगोपयोगस्वरूपस्त्व[क्ष]रान-
5 न्ततमभागोपलम्भमात्रोऽवश्यमवतिष्ठते, ज्ञानदृष्ट्यावरणवीर्यान्तरायोदयजनितोपयोगयोगहानिर्न ततः
परं हीयते, अन्यथा तस्याजीवत्वप्रसङ्गादिति, तस्माद्यावद्वचनाद्द्रव्यमेवावस्थितं वर्द्धते [हीयते]चेति
चानव[रत]वृद्ध्यपायराहितसमवस्थिततत्त्वमसदित्येषोऽस्य ग्रन्थस्यार्थः।

तस्मादयमपि ग्रन्थो द्व्यात्मकदर्शनेनैव नेतुं शक्यते, सन्निहितव्यक्ति[यु]क्तत्वात्, तत्र
द्रव्यमेवेति तावन्न युज्यते, यदि तु द्रव्यमित्येवाक्रियमभवनमभविष्यत् ततो नाभविष्यत्,
10 यदि न प्रवर्त्तेत न क्रियापि स्याद्द्रव्यं प्राक् केनचिद्गमनादिप्रकारेणावृत्तं तदेवेदानीं पश्चादपि
अप्रवृत्तत्वात्, भवदेव हि भवति न निरुपाख्य[म्], यदि निरुपाख्यमपि स्यात् ख[पु]ष्पमपि
स्यात्, खपुष्पमपि वाऽभविष्यत् त्वदभिमतद्रव्यव[त्], अभवद्भवना[त्]।

(तस्मादिति) तस्मादयमपि ग्रन्थो द्व्यात्मकदर्शनेनैव नेतुं शक्यते, नान्यथेति प्रतिपत्तव्य[म्],
किं कारणं? सन्निहितव्यक्तियुक्तत्वात्—सन्निहितस्यावस्थितशक्तेरेव व्यक्तिराविर्भावः सलिलसेकेन
15 [इव]भूमिगन्धस्य, तस्या व्यक्तेर्युक्तत्वात् द्रव्यञ्च क्रिया च भवतीति ग्राह्यम्, अन्यथा तदयुक्तेरसत्कार्य-
वादप्रसङ्गादसम्भवाच्च, द्रव्यमेव क्रियैवेत्येतयोर्वादयोरवृत्तिरुच्यते—तत्र द्रव्यमेवेति तावन्न युज्यते,
कथं? यदि तु द्रव्यमित्येवाक्रियमभवनमभविष्यत्—वृद्धिव्ययरहितमपरिणामैकान्तरूपं यद्यभविष्यत्

दर्शयति-वर्द्धते य[थ]... [इति]। वरीवृध्यमानस्य वनस्पतिकायस्य पद्मादेः प्रकृष्टवृद्धीयत्तामुदाहरति-पद्मादीनामिवेति सहस्र-
योजनगभीरपरिमाणजलाशये प्रवर्धमानस्य जलाशयात् किञ्चिदधिकस्य पङ्कजादेर्वनस्पतिकायस्योत्कृष्टं वृद्धिपरिमाणमिदमतःपरं
20 वनस्पतिकायशरीरस्य न वृद्धिरिति भावः। अपचयप्रवृत्तिप्रवाहे प्रवृत्तिलक्षणस्थित्यात्मद्रव्यं दर्शयति-तथाऽपायोऽपीति।
सूक्ष्मनिगोदापर्याप्तजीवे योगोपयोगयोः प्रकृष्टापचयमादर्शयति-यथेति, ज्ञानदर्शनावरणयोः क्षयोपशमकृत उपयोगः, वीर्यान्त-
रायक्षयोपशमकृतो योगः कायवाङ्मनःकर्मरूपः, प्रकृते तु काययोगो विवक्षितः। अक्षरेति, न क्षरतीत्यक्षरं केवलज्ञानं तस्यान-
न्ततमो भागो नित्यमुद्घाटित एवास्ते, तथा वीर्यस्यापि अनन्ततमो भाग उद्घाटित इत्युपलक्षणत्वाद्विज्ञेयम्। ज्ञानदर्शनावरणवी-
र्यान्तराययोरुदयेन योगोपयोगयोः ततः परं न हानिरन्यथाऽचेतनत्वनिर्वीर्यत्वप्रसङ्ग इत्याह-ज्ञानदृष्टयेति। उपसंहरति-तस्मा-
25 द्याव[दि]ति। एतस्य भाष्यग्रन्थस्य द्रव्यक्रियोभयवस्त्वभ्युपगम एव सङ्गतिरित्याह-तस्मादयमपीति। द्व्यात्मकदर्शनेनैव
वृद्धिह्राससम्भवः, द्रव्य एव हि विद्यमानं द्रव्यं क्रिया च व्यक्तीभवति नाविद्यमानं शशशृङ्गादीनामपि भवनप्रसङ्गात्, तस्मात्
भूमौ विद्यमानस्यैव गन्धस्य सलिलसेकेनाभिव्यक्तिवत् पृथिव्यादितो मूलादेः देवदत्तादितो गमनादेराविर्भावः सम्भवतीति हेतुं
प्रदर्शयति-सन्निहितेति, क्रियाप्रपञ्चस्य द्रव्यप्रपञ्चस्य च बीजरूपतयाऽवस्थितौ द्रव्यभावौ निमित्तविशेषावष्टम्भेन विशेषरूपेण
व्यक्तीभवतः भूमेर्गन्धस्य विद्यमान[स्यै]व जलावसेकलक्षणनिमित्तावष्टम्भेनेति द्रव्यं क्रिया च भवतीति भावः। द्रव्यमात्रस्यैव
30 स्थितिरूपस्याभ्युपगमे क्रियाया गगनकुसुमायमानतया निर्व्यापारस्य द्रव्यस्याकिञ्चित्करत्वेनासत्त्वमेव स्यादित्याह-तत्र द्रव्य-
मेवेतीति निष्परिणामं हि वस्तु न काञ्चिदर्थक्रियां कर्तुमर्हतीति [illegible] व्यवहारमार्गव्यतिक्रान्तमसदेवेति भावः।

सि. ×× १ क. °पद्मातयो° । २ सि. क. °स्थितत्वे सत्यपीत्येषो° ।

ततो नाभविष्यदिति क्रियातिपत्तौ लृङ्, अभवनमेवापद्यते न भवत्येवेत्यर्थः, क्रिया भवनं प्रवृत्तिरित्यर्थः, यदि न प्रवर्त्तेत—परिणमेत न क्रियापि स्यात्, द्रव्यं प्राक् केनचिद्गमनादिप्रकारेणावृत्तं तदेवेति—सामान्यकालवाचिना शब्देनेदानीमपि निर्देशकाले तदप्रवर्त्तमानं पश्चाद्भविष्यत्कालेऽप्रवर्तिष्यमाणं तत्स्यादित्यर्थः, अप्रवृत्तत्वात् किमुक्तं भवति? प्राक् नासीत्, इदानीमप्रवृत्तत्वात् खपुष्पवत्, इदानीं न स्यात्, प्रागप्रवृत्तत्वात्, खपुष्पवत्, पश्चान्न भविष्यति, इदानीमप्रवृत्तत्वात्, खपुष्पवदेवेत्यभूतं तत्स्यात् 5 द्रव्यं क्रियाशून्यत्वात् परिणामशून्यत्वात् अप्रवृत्तत्वादित्यर्थः, भवदेव हि भवति—प्रवर्त्तमानमेव हि केनचिद्धर्मेण मृदिव शिवकादिना भवति, न निरुपाख्यम्, यदि निरुपाख्यमपि स्यात् खपुष्पमपि स्यात्, खपुष्पमपि वाऽभविष्यत् भवति भविष्यति, त्वदभिमतद्रव्यवत्, अभवद्भवनादिति, अक्रियभवनादित्यर्थः।

स्यान्मतम्— 10

अनैकान्तिकमेव तत्, आकाशादीनामप्रवृत्तिभवनानां सत्त्वदर्शनादित्येतच्चायुक्तम्, तद्विपक्षत्वासिद्धेः आत्माद्यपि च प्रवृत्तमेव द्रव्यत्वात्, तन्तुवद्बीजवदिति, तस्मात्तेन तेन प्रकारेण परिणममानं प्रवर्त्तमानं वस्तु भवतीत्युच्यते।

(अनैकान्तिकमेवेति) अनैकान्तिकमेव तत्—अभवद्भवनात् खपुष्पमपि भवेत् द्रव्यवत्, द्रव्यमपि मा भूत्, अप्रवृत्तत्वात् खपुष्पवदिति, कस्मात्? आकाशादीनामप्रवृत्तिभवनानां सत्त्वदर्शनात्, 15 अपरिणामित्वादित्यर्थः, इत्येतच्चायुक्तम्, तद्विपक्षत्वासिद्धेः, यस्मात् आत्माद्यपि च प्रवृत्तमेव द्रव्यत्वात्तन्तुवद्बीजवदिति, यथा तन्तवः तन्त्ववस्थायां पटावस्थायाञ्च प्रवृत्तत्वाद्भवन्त्येव तथाऽऽत्मादयः, बीजमेव चाङ्कुरादिभावेषु प्रवृत्तमेव तथाऽऽत्मादय इति दृष्टान्तद्वयोपादानात् न्यायव्यापिता

क्रियातिपत्ताविति कुतश्चिन्निमित्तात् क्रियाया अनिष्पत्तिः क्रियातिपत्तिः, एकान्तापरिणामित्वलक्षणसाधनेन भवनक्रियानिवृत्तिरापाद्यत इति, तत्र अक्रियत्वेऽभवनत्वे द्रव्यमेव हेतुरिति द्रव्यमित्येवोक्तं, यतो हि तद्द्रव्यमत एव तदक्रियमभवनमेत्या- 20 पादककोटिः, क्रियाभवनप्रवृत्तीनां पर्यायत्वस्योक्तत्वादक्रियमभवनमिति पर्यायानुसारेणोक्तम्, प्रवृत्तिशब्देन पुनराह—यदि न प्रवर्त्तेतेति, क्रियायां प्रवृत्तेर्हेतुत्वात्, प्रवृत्तौ सत्यां हि क्रिया स्यात् तस्यां च सत्यां भवनं स्यात्, प्रवृत्तिः—परिणामः तत्र यदि द्रव्यं न परिणाममियात्—यदि पूर्वं गमनादिना न परिणतं तर्हीदानीमपि न परिणामं प्राप्नोति भविष्यत्कालेऽपि न परिणंस्यते, भवत एव भावात् न त्वभवत इति द्रव्यं क्रियापि न स्यादिति भावः। अमुमेव भावमादर्शयति—द्रव्यं प्रागिति। अप्रवृत्तत्वादिति, अनेन प्रयोगः सूचितः, एतदेव प्रश्नमुखेन व्याचष्टे—किमुक्तं भवतीति। भवदेव भवति नाभव- 25 द्भवति निरुपाख्यमित्याह—भवदेवेति। ननु सततप्रवृत्तिशून्यानामप्याकाशादीनां सद्भावात् कथमभवद्भवनात् खपुष्पस्य द्रव्यवद्भवनप्रसङ्गप्रदर्शनमुखेनाप्रवृत्तत्वादिति हेतुनाऽसत्त्वं साध्यते, अनैकान्तिकत्वादित्याशङ्कते—अनैकान्तिकमेवेति। आकाशात्मादीनामपि प्रवृत्तत्वान्न व्यभिचारित्वं हेतोरसत्साधकस्याप्रवृत्तत्वस्येत्याह तद्विपक्षत्वासिद्धेरिति, अप्रवृत्तस्य सतो द्रव्यस्याप्रसिद्धेरित्यर्थः, इदन्तु भाष्यकारस्य पतञ्जलेर्न सम्मतं तन्मते पुरुषस्य निर्गुणत्वाभ्युपगमात्, उक्तञ्च हरिणा 'यथाप्रवृत्तिधर्मोऽस्य स्थितिरूपेण गृह्यते। अनुयातीव सोऽन्येषां प्रवृत्तीर्विष्वगाश्रयः॥' इति भोग्यगतसत्त्वादिलक्षणलिङ्गोपचारः प्रदर्शितः। 30 परन्त्वेतन्मते सर्वं प्रवृत्तिशीलमेवेति ध्येयम्। यद्यद्द्रव्यं तत्तत्प्रवृत्तिमदिति न्यायस्य दृष्टान्तद्वयप्रदर्शनमुखेन व्यापित्वं सूचयति तन्तुवद्बीजवदिति आत्मीयेन तत्तत्पारिणामिकेन स्वभावेन नित्यावस्थानलक्षणं द्रव्यत्वं सर्वेषां चेतनाचेतनद्रव्याणां

१ क. नाभविष्यद्भवति भविष्यति त्वदभिमतद्रव्यवत्, अभवद्भवनादिति।

प्रदर्श्यते, यथोक्तं **अस्तिभवतिविद्यति पद्यतिवर्त्तनयः सन्निपातषष्ठाः सत्तार्थाः'** (

) । इति, तस्मात्तेन तेन प्रकारेण परिणममानं प्रवर्त्तमानं वस्तु भवतीत्युच्यते स्वेन स्वेन च पारिणामिकेन प्रकारेण भवति परिणमतीति ।

अत्रोपचयहेतुमाह—

5 **तथा च चैतन्यादिलक्षणताऽऽत्मादेरुपपद्यते तथाभवनप्र[illegible]त्तिसामर्थ्यात् द्रव्यत्वतुल्यत्वे सत्यपि ।**

**तथा च चैतन्यादिलक्षणतेत्यादि** यावत्तुल्यत्वे सत्यपि, तुल्ये द्रव्यत्वे--अस्त्येव जीवद्रव्याणामजीवद्रव्याणाञ्च भवनविशेषः, तद्यथा–जीवद्रव्यस्य चैतन्यवीर्यामूर्त्त्यसंख्यातप्रदेशावगाहादिः तथाभवनप्रवृत्तिसामर्थ्यम्, अ[illegible]पि पुद्गलानां रूपरसादिकर्मादि तथाभवनसामर्थ्यम्,
10 यथासंख्यञ्च धर्माधर्माकाशकालानां गतिस्थित्यवगाहवर्त्तनास्तथाभवनसामर्थ्यानि, त[illegible]द्रव्यत्वतुल्यत्वे सत्यपि तथाभवनप्रवृत्तिसामर्थ्याच्चैतन्यादिप्रतिविशिष्टलक्षणतोपपद्यते, एवं तावद्द्रव्यस्य क्रियाविरहितस्याभाव उक्तः ।

तथैव युक्त्या क्रियाया अपि विना द्रव्येणासत्त्वमित्यत आह–

**अथ तु प्रवृत्तिर्भूतिरित्येवाद्रव्या ततो नैव स्यादात्मा पूर्ववत्, भवदेव हि भवति
15 द्रव्यार्थतः, एतदनिच्छतोऽस्थितभवनसाधर्म्यात् खपुष्पमपि वा स्यादद्रव्यत्वा[illegible], भूतार्थसामर्थ्यादेव हि प्रवृत्तिः, गुणाद्यपि च द्रव्यमेव प्रवृत्तत्वात्तन्त्वादिवत् ।**

(**अथेति**) अथ तु प्रवृत्तिर्भूतिरित्येवाद्रव्या प्रतिक्षणप्रवृत्त्युपरमलक्षणा भूतिरित्येव, एवेत्यव-

समानमिति न किमपि द्रव्यं पारिणामिकं रूपमनापन्नं सद्भवतीति भावः। नित्यावस्थानमेव दर्शयति–**यथोक्तमिति** योऽसौ भवति तद् द्रव्यम् तद्भवनलक्षणात् स्वरूपान्न कदाचिदपि वियुज्यतेऽन्यथाऽसद्रूपमेव भवेदिति भावः। एवमेव जीवधर्मा-
20 धर्माकाशकालपुद्गलानां द्रव्याणां द्रव्यत्वेन यथा नित्यावस्थानं तथाऽऽत्मीयात्मीयवैशेषिकलक्षणेभ्योऽपि परस्परमिश्रीभावमनापन्नानां नित्यावस्थानमिति दर्शयितुमुपचयहेतुमाह **तथा चेति** । सर्वेषां द्रव्यत्वतुल्यतां दर्शयति–**तुल्ये द्रव्यत्व इति** । विशेषलक्षणानि दर्शयति **जीवद्रव्यस्येति**, स्वपरप्रकाशचैतन्यपरिणामो वीर्यपरिणामः असंख्येयप्रदेशादिपरिणामः अमूर्तस्वभावता जीवानाम्, धर्माधर्मयोर्गतिस्थित्युपग्रहकारिस्वभावताऽसंख्यातप्रदेशपरिणामस्वभावताऽमूर्त्तस्वभावता च, नभसोऽवगाहदानस्वभावता अनन्तप्रदेशपरिणामस्वभावताऽमूर्त्तता च कालस्य वर्त्तनपरिणामस्वभावता द्रव्यपर्यायापेक्षयाऽनन्तसंख्यापरि-
25 णामताऽमूर्त्तता च, अचैतन्यशरीरवाङ्मनःप्राणापानसुखदुःखजीवितमरणोपग्रहस्वभावता मूर्त्तस्वभावताऽप्रदेशसंख्येयासंख्येयानन्तप्रदेशपरिणामस्वभावता च पुद्गलानामिति मर्यादामेतामनादिकालप्रसिद्धिवशोपनीतां तथाभवनप्रवृत्तिसामर्थ्यादात्मादयो न कदाचिदप्यतिक्रामन्ति तुल्ये द्रव्यत्वे सत्यपि, स्वस्वलक्षणातिक्रमे हि पदार्थानामेषां भेदो न स्यात्, न ह्येते स्वगुणमपहायान्यदीयगुणपरिग्रहं कुर्वन्तीति स्वात्मनि नित्यावस्थितस्वरूपा एवेति भावः। एवञ्च न किञ्चित् क्रियाविरहितं द्रव्यमस्तीत्युपसंहरति–**एवं तावदिति** । अथ क्रियामात्रपक्षे दोषं वक्तुमाह–**अथ त्विति** तुशब्दो द्रव्यपक्षव्यावृत्त्यर्थः । प्रतिक्षणं विभिन्नक्रियामात्राभ्यु-
30 पगमेऽपि आत्मादि न भवेदित्याह–**प्रतिक्षणेति** एकस्य पर्यायस्य प्रवृत्तिरपरस्य च विनाश इति प्रतिसमयमुदयव्ययात्मकं स्वयं भवनमेव भावाख्यमस्ति न तु स्रजः सूत्रमिव भवनबहिर्भूतं द्रव्यमुपलभ्यमानमस्ति, नाप्यदृश्यं द्रव्यमस्ति षष्ठभूतवत्तत्साधक-

---

१. सि. क. तुल्यात्वे ।

धारणात्, अद्रव्या—द्रव्यविरहिता क्रियैवेत्यर्थः, ततो नैव स्यादात्मा पूर्ववत्—प्राक् पश्चात्तदा वाऽद्रव्यत्वादभूतत्वात् खपुष्पवदिति व्याख्येयम्, निर्बीजत्वादस्थितत्वादित्यादिपर्यायैः त्रिष्वपि कालेषु साधनानि योजयद्भिरिति विशेषः, भवदेव हि भवति द्रव्यार्थत इति स्थितिरूपं द्रव्यार्थभवनमाचष्टे, एतदनिच्छतोऽस्थितभवनसाधर्म्यात् खपुष्पमपि वा स्याददव्यत्वात् भाववत् क्रियावत् अनिष्टापादनमेतत्, भूतार्थसामर्थ्यादेव हि प्रवृत्तिः—द्रव्यार्थसामर्थ्यादेव हि प्रवृत्तिः—द्रव्यार्थसामर्थ्यादेव यस्मात् प्रवृत्तिः क्रिया न 5 निर्बीजेत्यर्थः, अत्रापि पूर्ववदनैकान्तिकशङ्का—ननु निर्बीजगुणादिप्रवृत्तिर्दृष्टेति, अत्रोत्तरमाह—गुणाद्यपि च द्रव्यमेव, प्रवृत्तत्वात् तन्त्वादिवत्—तन्तुबीजमृदादिवदिति प्राग्वत्, इह तु द्रव्यभवनमन्तरेण प्रवृत्त्यभाव इति प्रदर्श्योपनेयमिति विशेषः।

एवं क्रियापि द्रव्येण विना नास्तीत्युक्तन्यायवदेवेति द्रव्यक्रियालक्षणं द्वैतमुक्त्वाऽक्षरार्थन्यायेनापि प्रतिपादयिष्यन्नाह— 10

**भवतीति भावः स च कर्त्ताऽकर्त्ता च द्रव्यम्, यतोऽसौ भवतीति भावः तद्द्रव्यं स भावो, भवनसम्बन्धाद्भवतीति भवति तस्मात्तद्भवनं भावः सा क्रिया।**

भवतीति भाव इति, अत्र 'भुवश्च' (          ) इति कर्त्तरि णप्रत्ययं केचिदाहुः, इह तु भूयत इति भावे घञ् प्रत्ययः, तथा च येन भूयते स भाव इत्यर्थः सामर्थ्याद्यो भवति स एव सम्बद्ध्यत इति भवतीति भाव इत्युक्तम्, स च कर्त्ताऽकर्त्ता च द्रव्यं तस्माद्भावशब्दो द्रव्य- 15 वाची क्रियावाची च यतोऽसौ भव[ती]ति भावः—यस्माद्धेतोर्येन प्रकारेण यतो धर्मेण धर्मोद्वा भवति तद्द्रव्यं स भाव इति, इतिशब्दस्य हेत्वर्थत्वाद्भवतीत्येतद्यतो भवति स भावः सा च क्रिया,

प्रमाणाभावादिति भावः। आत्मादि कालत्रयेऽपि न स्याददव्यत्वात्, अभूतत्वाद्वा, खपुष्पवदिति मानार्थः। **निर्बीजत्वादिति,** क्षणिकत्वेन क्रियाया उपादानकारणस्य स्थिरभूतस्य कस्याप्यभावेन मूलरहितत्वादिति भावः। कथं निर्बीजत्वमित्यत्राह **अस्थितत्वादिति** क्षणिकत्वादित्यर्थः, प्राक् नासीत्, इदानीं निर्बीजत्वात्, खपुष्पवत्, इदानीं न स्यात् प्राक् निर्बीजत्वात्, पश्चान्न 20 भविष्यति, इदानीं निर्बीजत्वात् खपुष्पवदेवेत्यभूतं तत्स्यात् आत्मादि, अस्थितत्वादिति भावः। स्थितस्यैव भवनं सम्भवति न तु निर्बीजस्येत्याह—**भवदेव हीति**। विपर्यये दोषमाह—**एतदनिच्छत इति**। ननु सत्त्वादिगुणानां सामान्यशून्यानामपि प्रवृत्तिदर्शनान्निर्बीजा क्रिया सम्भवत्यतोऽनैकान्तिको निर्बीजत्वहेतुरसत्त्वसाधन इत्याशंकते **नन्विति**। गुणादीनामपि तन्त्वादिवद्द्रव्यत्वमेव तेन तेन प्रकारेण प्रवर्त्तमानत्वात्, न हि द्रव्यस्य तथाभवनमन्तरेण प्रवृत्तिः सम्भवतीत्युत्तरयति—**गुणाद्यपि चेति**। तदेवं द्रव्यक्रिययोरन्यतराभावेऽपराभावादुभयमावश्यकमिति प्रसाध्य भावपदादपि द्वैविध्यं दर्शयति—**भवतीति भाव इति**। 25 भावशब्दनिष्पत्तौ विवादं दर्शयति—**अत्रेति,** भवतीति भाव इति केषाञ्चिन्मतेन कर्त्तरि णप्रत्ययं भवति, पाणिनीयमते तु भवतीति भव इत्यच्प्रत्ययेन भवति, भाष्यमते तु प्राद्यर्थाच्चरादिण्यन्तादच्प्रत्यये भाव इति भवति, काशिकाकृन्मतेन तु भवतेर्विभाषया कर्त्तरि णप्रत्यये भावः भव इति रूपद्वयं भवति। इह कथं भावशब्दनिष्पत्तिरित्यत्राह—**इह त्विति** येन येन रूपेण पृथिव्यादिना गमनादिना वा भूयते स भावः। केन तथा भूयते? सामर्थ्याद्यो भवति स एवेति मूले भवतीति भाव इत्युक्तं न तु भावशब्दव्युत्पत्तिः प्रदर्शितेत्याशयेनाह—**तथा चेति**। स च भावः कर्तृभूतमकर्तृभूतञ्च द्रव्यं भवति, अकर्तृभूतायाः क्रियाया अपि द्रव्य- 30 त्वेष्टेरुक्तत्वात् तथा च द्रव्यं क्रिया च भाव इत्युक्तं भवतीत्याह—**स चेति**। द्रव्यस्य भावत्वमाह **यतोऽसाविति**। यस्माद्धे-

१ क. सर्वदेव। २ सि. क. स च।

कुतः पुनर्भवतीति ? भवनसम्बन्धाद्भवतीति भवति तस्य द्रव्यस्य, तस्मात्तद्भवनं भावः सा क्रिया प्रवृत्तिर्भवनमित्यर्थः ।

अत एव तदर्थगतः प्रकृतिपर एव प्रत्ययः प्रयोक्तव्यः प्रत्ययपरैव च प्रकृतिरिति [पातं० महाभाष्ये० अ० ३ पा० १ सूत्रे २]व्युत्पत्तिः, उभयार्थवत्त्वप्रदर्शनाय च कोऽसौ 5 भावो नामेति प्रश्नोपक्रमं व्युत्पाद्यते क्रिया, यत्तद्भूयत इति, नोच्यते योऽसौ भवति कोऽपीति, अस्वशब्दोपादानसाध्यभावत्वात् भावस्यास्मदुक्तानुकारात्, तद्विपर्ययेण तु द्रव्यभावस्य प्रश्नप्रतिवचने दृष्टे व्युत्पादनकाले, तद्यथा कस्य भाव इति प्रश्नः, प्रतिवचनमपि योऽसौ भवतीति उच्यते नोच्यते यत्तद्भूयते तद्भवनमेव, किं भूयते न भूयते केनापीति, स्वशब्दोपादानसिद्धभावत्वात् सत्त्वस्य ।

10 अत एवेत्यादि, तस्योभयार्थत्वदर्शनस्य दृढीकरणार्थं यावत् प्रत्ययपरैव प्रकृतिरिति, उत्थानार्थम्, क्विप्प्रत्यये चिदादीनां प्रथमैकवचने प्रकृतिमात्रप्रयोगदर्शनात् अधुनेत्यादिषु च प्रत्ययमात्रश्रवणात् व्यभिचरतीति चेत्? अत एव तदर्थगतेरन्यत्र चोभयप्रयोगदर्शनादनुमीयते द्व्यर्थतेति, व्युत्पादनकालेऽपि प्रकृत्यर्थव्युत्पत्तिरन्यथा, अन्यथा प्रत्ययार्थव्युत्पत्तिः शास्त्रेऽन्वयव्यतिरेकाभ्यां क्रियते, तत्किमर्थमिति चेत्? उभयार्थवत्त्वप्रदर्शनाय चेत्यादि यावत् कोऽपीति, कोऽसौ भावो नामेति प्रश्नोपक्रमं

15 तोर्द्रव्यं भावो भवति तद्भवनं क्रियेत्युच्यते, भवनाद्धि द्रव्यं भाव इत्याशयेनाह–इतिशब्दस्येति, तस्य द्रव्यस्य भवनसम्बन्धात् तद्द्रव्यं भवतीति भवति भाव इति भावः । अत एवेति, यत एव भावशब्दो द्रव्यं क्रियाञ्चाह अत एवेत्यर्थः, तथा हि द्रव्यं सिद्धरूपं क्रिया च साध्यरूपा, भाव इत्येकशब्दोपात्त एकस्मिन्नर्थे युगपत् सिद्धत्वसाध्यत्वलक्षणविरुद्धधर्मद्वययोगस्यासम्भवेन सिद्धसाध्योभयार्थप्रतिपादनं भावशब्दस्यैकस्यानुपपन्नमिति अन्वयव्यतिरेकवशेन शास्त्रे प्रकृतिप्रत्ययविभागकल्पनयाऽर्थविभागः कृतः, एतावत्साध्यमेतावत्साधनमिति यथा पचतीत्यादौ धातुभागः साध्यभूतायां क्रियायां, प्रत्ययभागः सिद्धरूपे कारकादा-
20 विति, एवञ्च धातुना साध्यत्वेनाभिहितायां क्रियायां प्रत्ययेन सिद्धताभिधानात् द्रव्यक्रियावगतेः प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्रधानमिति न्यायाच्च प्रकृतेः पर एव प्रत्ययः प्रयोक्तव्यः प्रत्ययपरैव च प्रकृतिरिति व्युत्पत्तिरपि सिध्यतीति भावः । न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्यय इति प्रकृतिपर एव प्रत्ययः प्रत्ययपरैव प्रकृतिरिति नियमयोर्व्यभिचारं शङ्कते–क्विप्प्रत्यय इति चिनोतीति चित् चिधातोः क्विप्प्रत्यये तुकि प्रत्ययलोपे च चिदिति प्रकृतिमात्रं प्रयुज्यते, इदम्शब्दादधुनाप्रत्यये इदमो लोपे प्रत्ययमात्रं प्रयुज्यत इति प्रोक्तनियमव्यभिचार इति भावः । अन्यत्र केवलानां धातूनां प्रत्ययानां वाऽप्रयोगात् प्रकृ-
25 तिप्रत्ययसंघातस्यैवार्थवत्त्वदर्शनेन चिदादिस्थलेऽपि प्रत्ययादेरनुमानेनोभयार्थावगतिरस्त्येवेत्याशयेन समाधत्ते अत एवेति । समुदायेनैवार्थवत्त्वप्रतीत्या समुदाय एवार्थवान् स्यात् न तु प्रकृतिः प्रत्ययो वाऽर्थवानित्यत्राह व्युत्पादनकालेऽपीति प्रकृतिषु विभिन्नेष्वपि प्रत्ययार्थस्याभेदात् प्रकृत्यर्थोऽन्यः प्रत्ययार्थस्तु स एवेत्यवगम्यते, अन्वयाद्व्यतिरेकाच्च, तथाहि पचतीत्युक्ते पच्शब्दः श्रूयते, अतिशब्दश्च प्रत्ययः, अर्थोऽपि विक्लित्तिः कर्तृत्वमेकत्वञ्च, पठतीत्युक्ते तु पच्छब्दो हीयते पठ्शब्द उपजायते अतिशब्दश्चान्वयी, अर्थोऽपि विक्लित्तिर्हीयते पठिक्रियोपजायते कर्तृत्वमेकत्वञ्चान्वेति, तेन मन्यामहे यः शब्दो हीयते तस्यासा-
30 वर्थो योऽर्थो हीयते, यः शब्द उपजायते तस्यासावर्थो योऽर्थ उपजायते, यः शब्दोऽन्वयी तस्यासावर्थो योऽर्थोऽन्वयीति प्रकृतिप्रत्ययार्थव्युत्पादनं कृतमिति भावः । तत्किमर्थं क्रियत इत्यत्राह–उभयार्थवत्त्वेति प्रकृतेः प्रत्ययस्य चार्थं प्रदर्शयितुमित्यर्थः, तत्र प्रथमं प्रकृत्यर्थं प्रदर्शयितुं भाववचनो धातुरिति धातुलक्षणान्तर्गतभावशब्दमधिकृत्यास्तिभवतिविद्यतीनां [illegible]वाच्यत्वविरहिणां धातुत्वं समर्थयितुं कः पुनर्भाव इति प्रश्नः कृतः, भवतेः स्वपदार्थो भवनं भाव इति च समाधानं कृतम्. यत्तद्भूयत इति

१ सि. क. प्रयोजन° ।

[उ]त्पाद्यत क्रिया, यत्तद्भूयत इति, भावे लकारविधानात्, यत्तदिति च भवनमेव प्रकृत्यर्थो नि[र्दि]श्यते, नोच्यते योऽसौ भवति कोऽपीति, येन येन भूयते योऽसौ भवति कर्त्ता प्रत्ययार्थः, स नोच्यते तस्मिन् प्रश्ने, तस्मात् प्रकृत्यर्थपरा [व्यु]त्पत्ति[ः] एवं प्रकारा, किं कारणं ? अस्वशब्दोपादानसाध्यभावत्वाद्भावस्यास्मदु-क्तानुकारात, यथोक्तमन्यैः 'द्रव्यभावयोरुक्तिक्रियालक्षणो भेदोऽयं प्रदर्श्यते स्वशब्दोपादानसिद्धभावः सत्त्वम्, अस्वशब्दोपादानसाध्यभावो भाव इत्येतदुक्तिक्रियाश्रयं सत्त्वभावयोः पृथक्त्वमिति'( 5
) प्रसिद्धं हि लोके शास्त्रेषु च 'क्रियावाचकमाख्यातं द्रव्याभिधायकं नामेति'( )
'स्वभावसिद्धं द्रव्यं क्रिया चैव हि भाव्यते' (महाभा० अ० १. पा. ३ आ. १) तथा 'पूर्वापरीभूतं भावमाख्यातेनाचष्टे, उपक्रमप्रभृत्यपवर्गपर्यवसानम्, परिनिष्पन्नं नाम्ना मूर्त्तं सत्त्वम्, यथासंख्यं व्रजति पचति व्रज्या पक्तिरिति' ( )तस्माद्धटपटादिशब्दा द्रव्यस्य स्वशब्दाः पचतिगच्छ-त्यादयः क्रियायाः, भावशब्दश्च द्वयोरपि दृष्टः, तत्रास्वशब्दस्य द्रव्यवाचिनो घटपटदेवदत्तादेरुपादानेन 10

---

भावव्युत्पत्त्यभिप्रायेण भवनं भाव इत्युक्तम्, अत्र भवनशब्देन सपरिस्पन्दापरिस्पन्दसाधनसाध्यक्रियाविशेषो विवक्षितस्तेन अस्त्यादीनामात्मभरणवचनानां धातुत्वं सिद्धम्, भवनं भाव इति कर्तृसाधननिवृत्त्यर्थः, एतदेव दर्शयति-यत्तदिति चेति। भवतीति भाव इति कर्तृव्युत्पत्तिं निरस्यति-नोच्यत इति, वृक्षादिनाम्नामपि धातुसंज्ञा प्रसज्यते तान्यपि हि भवन्ति तस्मान्नो-च्यते तथेति भावः। कर्तृव्युत्पत्तिसिद्धो भावस्तु प्रत्ययार्थः, प्रकृत्यर्थस्यैवेदानीं व्युत्पाद्यमानत्वात् भाववचनो धातुरिति भावशब्दो न कर्तृसाधन इत्याशयेनाह-स नोच्यत इति। यो भाव्यते स भाव इति साध्यमानावस्थापन्नार्थस्य भावत्वात्तद्वाचित्वं 15
प्रकृतेरित्याह त[स्मा]दिति। द्रव्यक्रियाभिधायित्वे प्राचां संवादानाह-यथोक्तमिति, भावो यथा द्रव्य एवात्मलाभं लभते द्रव्यात् साधनात् यथा पृथग्भूतो दर्शयितुं न शक्यते तथैव वचनेऽपि स न स्वशब्दाभिधेयः किन्तु स्वशब्दोपादानसिद्धभावो द्रव्यमस्वशब्दोपादानसाध्यभावो भाव इति, तदेतदग्रे व्यक्तीभविष्यति। क्रियेति, क्रियाप्रधानमाख्यातं भवति द्रव्यप्रधानं नामेति महाभाष्ये ५-३-६६ सूत्रे पाठो दृश्यते, अन्यत्र तु भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानीति दृश्यते, तत्राख्यात-पदेन तिङन्तो गृह्यते, तथैव लोके व्यवहारात्, कथमाख्यातं क्रियाप्रधानं भवतीति चेत् क्रियाप्रश्ने तिङन्तेन प्रतिवचनात्, यथा 20
किं करोति देवदत्त इति पृष्टः पचतीति तिङन्तेनाऽऽचष्टे, प्रश्नवाक्येन क्रियाया एवावगमात् तत्राख्यातेनैवोत्तरोपादानात् काल-संख्यासाधनोपग्रहाभिधानेऽपि आख्यातस्य क्रियाप्रधानत्वमवगम्यत इति। केचित्तु नामपदवाच्यार्थाश्रयक्रियाव्यङ्ग्यो भावः, पाकरागत्यागादिः स यत्र प्रधानं गुणभूता च क्रिया तदिदं भावप्रधानमाख्यातम्, आख्यायतेऽनेन गुणभावेन वर्त्तमानाऽनेककार-कप्रविभक्ता प्रधानद्रव्यभावाभिव्यक्त्युन्मुखीभूता क्रियेत्याख्यातमिति व्युत्पत्तिरिति वदन्ति। स्वभावसिद्धमिति स्वभावेन शब्द-शक्तिस्वभावेन सिद्धं सूक्ष्मरूपेण सिद्धावस्थमेव द्रव्यं शब्दवाच्यम्, यद्यपि क्रियापि सूक्ष्मरूपेण सिद्धावस्था तथापि शब्दशक्ति- 25
स्वाभाव्यात् सा साध्यतयैव प्रतीयत इति तदर्थः। अथ साध्यस्वभावः सक्रमोऽर्थः क्रियेत्यस्य समर्थनाय निरुक्तवचनं प्रमाणयति-पूर्वापरीभूतमिति, पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तम् (निरु० अ० १ सू. १४) मूर्त्तं सत्त्वभूतं सत्त्वनामभिः (सू. १५) व्रज्या पक्तिरिति (सू. १६) इति पाठक्रमो दृश्यते तद्व्याख्यानञ्च क्रियाया एकत्वादपूर्वमन-परं सन्तं पूर्वापरमिव भूतं पौर्वापर्येणावस्थितं भावं किं करोतीत्याख्यातेनाचष्टे-पृच्छते कस्मैचित् अन्य उपक्रमप्रभृत्यपवर्गपर्य-वसानं भावं व्रजति पचतीत्याद्याख्यातेनाऽऽचष्टे, उपक्रमः प्रारम्भस्तदादि अपवर्गोऽन्तिमक्रिया तदवसानम्, एवञ्चानेकक्रियाभि- 30
व्यङ्ग्यो भाव आख्यातेनोच्यत इति भावः। कदाचित्तु तमेवोपक्रमप्रभृत्यपवर्गपर्यन्तमभिनिर्वर्त्तमानं मूर्त्तं-किमपि रूपान्तरतामापन्नं सत्त्वभूतं द्रव्यत्वं प्राप्तं भावसत्त्वनामभिः लिङ्गसंख्यायुक्तैः शब्दैराचष्टे यथा कतरो देवदत्त इति द्रव्यं पृष्टः यः पाचकः कारकः इति नाम्नाऽऽचष्टे। उदाहरणं दर्शयति-व्रज्यापक्तिरितीति, कृदभिहितभावस्य द्रव्यवत्प्रकाशनात्, अत्र मते गुणसमुदायस्य द्रव्यत्वं बोध्यम्' एवं द्रव्यं क्रिया च भाव उच्यत इत्याह-तस्माद्धटपटादीति। अस्वशब्दोपादानेत्यादिमूलार्थमाह-तत्रेति,

---

१ सि. क. भाववाभक्ति०। २ सि. क. °सिद्धभावं।

साध्यो भावः साध्यत्वं याऽसावनुमानगम्या क्रिया न शक्या साधनात् पृथग्दर्शयितुम्, गर्भवन्निर्लुठिता सा परतः साधन एव यथाऽऽत्मानं लभते तथाऽभिधानेऽपीत्यस्वशब्दोपादानः साध्यभावो भावः क्रियेत्यर्थः, तद्भावात् अस्वशब्दोपादानसाध्यभावत्वाद्भावस्य प्रवृत्तिलक्षणस्यैवं प्रश्नप्रतिवचनसिद्धिरिति, तद्विपर्ययेण तु द्रव्यभावस्य प्रश्नप्रतिवचने दृष्टे व्युत्पादनकाले, तद्यथा कस्य भाव इति प्रश्नः कस्य 5 क्रिया प्रवृत्तिः कर्त्तरि षष्ठीं कृत्वा, तदनुरूपं प्रतिवचनमपि योऽसौ भवतीति यो भविता स एव वा द्रव्यलक्षणः स उच्यते, नोच्यते यत्तद्भूयते तद्भवनमेव, किं भूयते ? न भूयते केनापीति, अनिर्दिष्टकारकं हि भावसामान्यमेव, भावस्याभिन्नत्वात्, किं कारणं ? स्वशब्दोपादानसिद्धभावत्वात् सत्त्वस्य, स्वशब्देनैव पृच्छयते कस्य भावः ? को भवतीत्यर्थः, न पृच्छयते किं भूयते ? न भूयते केनापीति [illegible]पि, तथोच्यते योऽसौ कोऽपि भवतीति तस्य भावः स भवति तेन भूयत इति नोच्यते यत्तद्भूयते 10 केनापीति, अस्वशब्दं भवनमात्रं न व्याक्रियते तस्यापृष्टत्वात्, किं कारणं ? क्रियालक्षणभावव्युत्पादनविपर्ययेण प्रश्नव्याकरणदर्शनात्तथैवार्थप्रसिद्धेः तद्वाचिशब्दप्रवृत्तेरपि तदनुरूपत्वादिति ।

भावप्रधानं हि आख्यातं भवति तथा च पचतीत्यादौ देवदत्तादिकर्तृकः पाक इति बोधात् तिङर्थनिष्ठप्रकारतानिरूपितविशेष्यताशालित्वे सति साध्यत्वेन प्रतीयमानत्वं क्रियायाः, कर्त्रादिवाचकतिङ्प्रत्ययमन्तरेण क्रियायाः प्राधान्येन बोधासम्भवात् न स्वशब्देन क्रियोपादीयत इति भावः । एतदेव स्फुटयति-**याऽसाविति**, क्रिया नामेयमत्यंतापरदृष्टाऽशक्या पिण्डीभूता 15 निदर्शयितुम्, यथा गर्भो निर्लुठितः, साऽसावनुमानगम्येति भूवादिसूत्रे भाष्ये प्रोक्तम्, धातवो हि सकलकारकव्यापाराभिधायिनः, अत एव कारकाणां प्रवृत्तिविशेषः क्रियेत्युच्यते नहि केवलं विक्लित्तिरेव पचधात्वर्थः, अधिश्रयणादिकाले पचतीति प्रयोगानापत्तेः, तथा चाधिश्रयणाद्यधःश्रयणान्तक्रियाणामेव पचधात्वर्थता, तदेवं साध्यत्वेनाभिधीयमानः समाश्रितक्रमः पौर्वापर्यवानर्थः क्रियेति फलितम्, क्रमवताञ्च क्रियाक्षणानामेकफलोद्देशेन प्रवृत्तानां सङ्कलनाबुद्ध्या समापादितैक्यानां क्रियात्वव्यवहारः, एकैकावयवेऽपि समूहरूपारोपादधिश्रयणकालेऽपि पचतीति व्यवहारः, वर्तमानकक्रियायाः प्रत्यक्षत्वेऽपि समुदायरूपतया फला- 20 नुमेया क्रिया यथा कुक्षिस्थो गर्भोऽप्रत्यक्षस्तथेयं क्रिया अथवा यथा निर्लुठितः निष्क्रान्तः कुक्षेर्गर्भः प्रत्यक्षो नैवं क्रियेति व्यतिरेकदृष्टान्तः, अनुमानप्रयोगश्च-विमतं कारकेभ्यो भिद्यते बाधकाभावे कारकसत्ताकालेऽव्यवह्रियमाणत्वात्, बाधकाभावे यद्यत्काले न व्यवह्रियते तत्ततो भिद्यते, एवञ्च कारकातिरिक्तक्रियाया यथा प्रत्यक्षेण नोपलम्भस्तथाऽभिधानेऽपीत्यस्वशब्दोपादानत्वे सति साध्यभावत्वं क्रियाया इति भावः । **प्रवृत्तिलक्षणस्येति** कारकाणां प्रवृत्तिविशेषः क्रियेति लक्षणस्येत्यर्थः, अप्रत्यक्षतया द्रव्यव्यतिरेकेण क्रियायाः सत्तामसम्भावयता प्रश्नकर्त्रा कृतस्य का पुनः क्रियेति प्रश्नस्य साधनात् पृथग्भूता प्रत्यक्षतो 25 निदर्शयितुं न शक्येत्युक्तावेव प्रतिवचनं सम्भवति न तु क्रियास्वरूपमात्रोपदर्शनेनेति भावः । अत्रेदं बोध्यं भाष्यकृता क्रियाशब्दः परिस्पन्दलक्षणः, भावशब्दश्च परिस्पन्दापरिस्पन्दसाधारणः प्रोक्तः तेन अस्तिभवत्यादीनामपि धातुत्वं सिध्यतीति । द्रव्यपक्षे भावशब्दार्थं वर्णयति-**तद्विपर्ययेण त्विति**, क्रियापक्षविपर्ययेण त्वित्यर्थः । प्रश्नप्रतिवचने दर्शयति-**तद्यथेति**, कारकचक्रस्य प्रवृत्तिर्भवतीति तदेव द्रव्यं तस्यैव भवनात् न त्वसौ भाव्यमानः सिद्धरूपत्वादिति भावः । भाव्यमानत्वं निरस्यति-**नोच्यत इति** । क्रियाकारकसम्बन्धोपसर्जनस्य परिनिष्ठितस्य द्रव्यभावत्वान्न स भाव्यमान इत्याशयेनाह-**अनिर्दिष्टेति** साधनव्यापारावस्थाप्रति- 30 पत्तये हि निर्वर्त्यमाना प्रधान्येनोपादीयमाना क्रिया भवति यदा तु साधनव्यापारावस्थां कथयितुं न प्रकृता नापि क्रिया प्राधान्येनोपादीयते तदा व्यापारानपेक्षया धर्मान्तराणामाश्रयभूतत्वेन चेदं तदिति प्रत्यभिज्ञातं द्रव्यमुच्यते नासौ क्रिया तस्मादेव योऽसौ भवतीत्युच्यते नोच्यते च यत्तद्भूयते इति भावः । **स्वश[illegible]ति**, लिङ्गादिनिष्ठप्रकारतानिरूपितविशेष्यताशालित्वे सति सिद्धत्वेन प्रतीयमानत्वादिति भावः । ननु पचति पाक इत्यादौ पचधात्वर्थे क्रियायां न लिङ्गसंख्यादीनां सम्बन्धः लिङ्गसंख्यादयो हि प्रत्ययवाच्याः ते प्रत्ययवाच्यकर्तृकर्मादिरूपे द्रव्ये एव सम्बध्यन्त इति द्रव्यं लिङ्गसंख्यादियोगि, क्रिया च न तादृशीति

**क्रियाऽन्यत्—**

**लिङ्गादिमद्द्रव्यं तद्रहिता च क्रिया भिन्नमुभयमेव भाव इति लिङ्गसंख्यावतो द्रव्यात् वस्तुत्वैकत्वगता क्रिया स्वरूपतोऽन्यैव, अलिङ्गसंख्यत्वात् प्लक्षादिवत्, भिन्नानां पदार्थानामेकसम्बन्धिविषयश्चार्थः, समुच्चयोऽन्वाचयः समाहार इतरेतरयोगश्च पदार्थोत्तरकालभाविनः द्रव्याणां गुणानां क्रियाणाञ्च दृश्यन्ते, न चैते द्रव्यं न क्रिया न गुणः किन्तु वीरपुरुषविशेषणविशेष्यैकात्मवत् वस्तुत्वैकत्वगत्याऽनन्यान्यत्वभाजो धर्माः ।**

लिङ्गादिमदित्यादि यावदुभयमेव भाव इति, द्रव्यं लिङ्गसंख्याकालकारकयोगि, क्रिया तद्रहिता, लिङ्गादिमत्त्वाच भवतो द्रव्यस्य भवनमलिङ्गसंख्यं भिन्नं वस्तु तद्भवनभूतं तद्द्विधा, तस्मादुभयं वस्तु, तच्चैकमिति प्रतिपाद्यमुपपत्त्या इत्यतः प्रतिज्ञायते लिङ्गसंख्यावत इत्यादि, वस्तुत्वेनैकत्वं वस्तुत्वैकत्वं तस्य गतिरापत्तिः, वस्तुत्वेनैकत्वमापन्ना क्रिया स्वरूपतो अन्यैव, द्रव्यात् क्रियास्वरूपं भिन्नमेकं वस्त्वित्यर्थः, कस्मात्? अलिङ्गसंख्यत्वात्—न लिङ्गसंख्ये यस्य तदिदमलिङ्गसंख्यं भवनम्, तद्धि वस्तुत्वेनैकत्वं गतं सत् द्रव्येण सहान्यत्, अन्यदेवेति प्रतिज्ञार्थोऽनेन साध्यते, अलिङ्गसंख्यत्वादिति हेतुना, दृष्टान्तः प्लक्षादिवत्, भिन्नानां पदार्थानामेकसम्बन्धिविषयश्चार्थः, यथा प्लक्षश्च धवश्चेत्यत्र चशब्दः प्लक्षधवयोरन्ययोः समुच्चेतापि समुच्चयमेकमेव सम्बन्धिनं विषयीकृत्य वृत्तत्वादनन्यत्वेऽपि सत्यन्यस्यैवार्थस्य वाचकः, तथा द्रव्यक्रियात्मकवस्तुत्वैकत्वान्यत्वमिति । अत्राह द्रव्यादन्यत्वेन पक्षीकृतायां क्रियायां समुच्चयनक्रियैव यदि दृष्टान्तत्वेनोच्यते साध्यत्वाददृष्टान्तः, अथ मा भूदेष दोष इति द्रव्यान्तरसमुच्चयो यदि दृष्टान्त उच्यते तथापि द्रव्यार्थत्यागः, प्लक्षधवसमुच्चयाद्यादिसर्वसत्त्वार्थसङ्ग्रहार्थत्वाद्द्रव्यार्थस्य, अ[थ] द्रव्यार्थं मा त्याक्षमित्येकमेवेष्यते पुनरपि दृष्टान्ताभावः द्रव्याद्भिन्नस्यार्थान्तरस्याभावादित्यत्रोच्यते, पदार्थानामिति पदार्थग्रहणान्नैष दो[षः], प्रातिपदिकार्थो हि क्रियासम्बन्धी,

क्रिया अलिङ्गसंख्यत्वात्सापि द्रव्यादन्येत्याशयेनाह—लिङ्गादिमदिति । उभयस्य भावत्वेनैकत्वेऽपि लिङ्गादिमत्त्वतद्रहितत्वाभ्यां तयोर्भेद इत्याशयेनाह—लिङ्गादिमत्त्वाच्चेति, भवतो द्रव्यस्य लिङ्गादिमत्त्वाच भवनमलिङ्गसंख्यं भिन्नं वस्त्विति योजना, भवनाश्रयीभूतद्रव्यस्य लिङ्गादिमत्त्वात् पाकः आस्यते इति घञ्तेप्रत्ययाभ्यामुपस्थितस्य भावस्य लिङ्गसंख्यायोगाभावात् द्रव्यक्रिययोर्भवनरूपत्वेनैकत्वेऽपि भावाभिहिता क्रिया द्रव्याद्भिन्नेति भावः । यद्यपि पाकौ पाका इत्येवं द्विवचनबहुवचने भवतः, तथापि ते भावाश्रयीभूतद्रव्यभेदापेक्षे एवेति बोध्यम् । तद्भवनभूतमिति, द्रव्यस्य भवनभूतं भवनमित्यर्थः, एवञ्च द्रव्यं क्रिया चेत्युभयरूपो भावः, तत्रोभयरूपताप्रसिद्ध्यर्थं तयोः स्वरूपं युक्त्या प्रतिपादनीयमिति तत्प्रतिपादनाय द्रव्यात् क्रियाया भेदः साध्यत इति भावः । अत्रानुरूपं निदर्शनमाह—दृष्टान्त इति, यदा परस्परनिरपेक्षाः पदार्थाः क्रियायां समुच्चीयन्ते तदा समुच्चयश्चार्थो भवति, स च समुच्चयो यदा चेनैव प्रकाशितो भवति तदा द्वन्द्वसमासो भवति, तत्र समुच्चयनक्रिया प्लक्षधवयोरेकत्र चशब्देन प्रकाश्यते तस्मात् सा क्रिया प्लक्षधवाभ्यां यथा भिन्ना तथैव भावप्रत्ययाभिहिता क्रिया द्रव्याद्भावभूतादप्यन्यैवेति भावः । अनन्यत्वेऽपि सतीति समुच्चयस्यावयविरूपस्यावयवाभ्यां प्लक्षधवाभ्यामनन्यत्वेऽपि सतीत्यर्थः । द्रव्यात् क्रियाया भेदे साध्ये क्रियाया एव दृष्टान्तो न संभवति तत्रापि द्रव्यभेदस्य साध्यत्वेन दृष्टान्तस्यासिद्धेरित्याशयेन शङ्कते—अत्राहेति । यत्किञ्चिद्द्रव्यसम्बन्धिसमुच्चयनक्रियाया विशेषरूपाया दृष्टान्तत्वे क्रियायां द्रव्यसामान्यभेदो न साध्यं भवेत्, यत्किञ्चिद्द्रव्यभेदस्यैव साध्यत्वपर्यवसानात्, तस्माद्द्रव्यार्थत्याग इत्याशयेनाह—अथ मा भूदिति । द्रव्यसामान्यभेदस्यैव साध्यत्वे दृष्टान्ताभावस्तदवस्थ एवेत्याह—अथ द्रव्यार्थमिति । समाधत्ते—पदार्थानामितीति, नात्र क्रिया

१ सि. क. भावनस्य च यथासंख्यं । २ सि. क. द्रव्यक्रियास्वरूपमिमकं । ३ सि. क. सहानन्यत् । ४ सि. क. अनन्य० । ५ सि. क. प्लक्षधवयो० ।

अन्तरङ्गत्वात् क्रियायाः, न पदार्थो बहिरङ्गत्वात्, यथा पुत्रमिच्छति पुत्रीयतीति द्वितीया बहिरङ्गकर्माभिधायिनी पुत्रस्यैषणोत्तरं गणसम्बन्धात्, उक्तञ्च 'प्रातिपदिका[र्था]नां क्रियाकृताः सम्बन्धा भवन्ति' (एतत्समानार्थः भा० अ० २ पा० ३ आ० ३) इति, एषितुर्देवदत्तस्य पुत्रेणाभिसम्बन्धो न पदार्थेन विभक्त्यन्तेन, पदान्तरसन्निधौ तु तद्व्यक्तिः, 'कारकाणां प्रवृत्तिविशेषः क्रियेति' (महाभा० अ० १ पा० ३ सू० १) वचनात्, क्रियया सम्बन्धमित्वा कर्मादित्वमेतीति पूर्वमेव क्रियया सम्बन्धः, यदि क्रियासम्बन्धवत् प्रातिपदिकावस्थायामेव समुच्चयादिसम्बन्धोऽपि स्यात्ततः प्रातिपदिकार्थातिरेकात् सम्बोधनवद्यत्नान्तरविधया प्रथमा स्यात्, द्वितीयादयश्च न स्युः, कर्माद्यधिके हि प्रातिपदिकार्थे ता विधीयन्ते, यदि तु समुच्चयाद्यधिको कर्माद्यस्तीति द्वितीयादयः स्युस्ततः कर्माद्याधिक्येऽपि प्रातिपदि-

र्थान्तः, अपि तु समुच्चयः प्रवृत्तिरूपः, तत्र सुप्तिङन्तपदजन्यप्रतीतिविषयीभूतार्थस्य सम्बन्धः, न तु प्रातिपदिकार्थस्य, तस्य क्रिययैवान्वयात्, कस्यचित्तु साक्षात् क्रियासम्बन्धोऽन्यस्य तु तद्विशेषणत्वेनेत्यतस्तान् समासान्तरेषु भेदः, द्वन्द्वेषु तु समुदायविभक्त्या समुदायार्थस्य क्रियासम्बन्धद्योतनात् क्रियार्थिनोऽवयवार्थाः समुदायात्मतामापद्यन्ते, कथमन्यथा प्लक्षादिशब्दाः प्रत्येकं प्लक्षन्यग्रोधादिरूपो ह्यर्थः स्यात्, द्वयोरेवार्थयोरपेक्षावतोः समुदायत्वात्, अत एव समासेऽन्योन्यापेक्षायाः समुदायादेवार्थानामवगतेश्चरितार्थत्वाच्चशब्दो निवर्त्तते, न तु वाक्ये, तत्रार्थानां विच्छेदेन प्रतिभासनात् समुच्चयप्रकाशनाय चशब्दस्यावश्यकत्वादिति । पुत्रमिच्छतीति अत्र 'सुप आत्मनः क्यजि'ति क्यच् प्रत्ययः, तदर्थ इच्छा, एकदेवदत्तकर्तृका स्वसम्बन्धिपुत्रकर्मिकेच्छेति बोधः, अत्र पुत्रशब्दोऽसत्यः कल्पितोऽवयवः, तथा च पुत्रविशिष्टेच्छा पुत्रीयतिनाऽभिधीयते पुत्रमिच्छतीत्यादिवाक्यं तु प्रकृतिप्रत्ययपरिकल्पनेनान्वाख्यानोपायमात्रम्, सा च क्रिया देवदत्तादिकारकात् भेदेन न गृह्यते, कारकाणां प्रवृत्तिविशेषरूपा हि सा, भावविकारत्वात्क्रियाश्रिता कारकशक्तीनां प्रवर्तिका भवति, तस्माद्देवदत्तादेः पुत्रैषणायामभिसम्बन्धः अन्तरङ्गत्वात् कारकशक्तिप्रवर्तकरूपत्वेन क्रियाया अन्तरङ्गत्वात्, कारकशक्तिभूतं द्वितीयार्थकर्मत्वं क्रियासम्बन्धोत्तरकालभावीति बहिरङ्गम्, [illegible] तर्हि कारकम्, सिद्धस्य च द्रव्यस्य स्वरूपतः क्रियाजनकत्वान्यथानुपपत्त्या शक्त्याविष्टस्यैव तस्य तत्त्वं वाच्यमिति सा प्रवृत्तिशक्तिरन्तरङ्गेति भावः । तत्र प्रमाणमाह-उक्तञ्चेति, भाष्ये 'प्रातिपदिकार्थानां क्रियाकृता विशेषा उपजायन्ते तत्कृताश्चाऽऽख्याः प्रादुर्भवन्ति कर्म करणमपादानं सम्प्रदानमधिकरणमिति' दृश्यते, सर्वेषां हि स्वव्यापारद्वारा स्वातंत्र्येणैव क्रियाजनकत्वात् कर्तृत्वेन कारकत्वम्, ततः कः किं केन कस्मै क्व पचतीति विवक्षायां स्वस्वव्यापारवशेन करणादित्वम्, तत्र साधनान्तरनियोगव्यापारः कर्ता, कर्तुः क्रिययेप्सिततमव्यापारं कर्म, कारकान्तरसाध्यव्यापारं करणम्, प्रेरणानुमत्यादिव्यापारं सम्प्रदानम्, अवधिभावोपगमव्यापारमपादानम्, कर्त्रादिव्यवहितक्रियाधारोऽधिकरणमिति एता विशेषक्रियाः सामान्यक्रियापूर्विका इति सर्वत्र कारकत्वमनुवृत्तमिति तद्भावार्थः । एषितुरिति, कर्तुः क्रियायामेवान्वयात् पुत्रीयेति नामधातुवाच्यायां क्रियायामेव देवदत्तस्य सम्बन्धो न तु पुत्रमिति द्वितीयान्तेन, पुत्रीयतेरकर्मकत्वात्, तत्समानार्थकवाक्ये एव पुत्रमिति पदार्थस्याभिव्यक्तेर्न तत्र देवदत्तस्याभिसम्बन्ध इति भावः । सामान्यक्रियासम्बन्ध एव विशेषक्रियासम्बन्धः विशेषस्य सामान्यपूर्वकत्वादिति दर्शयति-क्रिययेति । प्रकृते द्वन्द्वे निगमयति-यदीति, यथा प्रातिपदिकार्थः अन्तरङ्गत्वात् क्रिययाऽभिसम्बध्यते तथा यदि समुच्चयेनापि प्रातिपादिकार्थः सम्बध्येत तर्हि प्रातिपादिकार्थभूतेभ्यः स्वार्थद्रव्यलिङ्गसंख्याकारकेभ्यः समुच्चयस्य भिन्नत्वात् तत्र प्रथमाविभक्तिसम्पत्तये प्रयत्नः कर्तव्यः स्यात्, 'प्रातिपदिकार्थलि[ङ्गपरिमाणवचनमात्रे] प्रथमे'ति सूत्रेणागतार्थत्वात्, यथा संबोधनस्यानेनागतार्थत्वात्तत्र प्रथमाविभक्तिसम्पत्तये 'सम्बोधने चे'ति सूत्रप्रणयनरूपं यत्नान्तरमादृतमिति भावः । द्वितीयादयश्चेति प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधाभ्यामित्येवं द्वितीयादिविभक्तयो न स्युः, द्वितीयादीनां कर्माद्यधिकप्रातिपदिकार्थे विधानादिति भावः । अथ यदि लिङ्गाद्यधिकः कर्मादिरस्तीति राममित्यादौ यथा द्वितीयादयो भवन्ति तथा समुच्चयाद्यधिकः कर्मादिरस्तीति ता भवन्तीत्युच्यते तर्हि कर्माद्यधिकः प्रातिपदिकास्यार्थोऽस्तीति प्रथमैव कुतो न स्यात्, तस्मात् समुच्चयः पदार्थप्रतिपत्त्यनन्तरं वाक्यार्थकालेऽवभासते, न तु पदार्थप्रतिपत्तिपूर्वमित्याशयेनाह-यदि त्विति । वाक्यार्थे चोपकुर्वन्तश्चादयः पदैरभिसम्बध्यन्ते, अत एव भिन्नानां पदार्थानामेक[illegible] यथार्थ इत्युक्तम्,

१ सि. क. °सम्बन्धत्वात् ।

कार्योऽस्तीति प्रथमैव स्यात्, अतः पदार्थोत्तरकालभाविनि वाक्यार्थ उपजायते, तस्योपकुर्वन्तश्चावयः पदैरपि सम्बध्यन्ते इत्यत उच्यते भिन्नानां पदार्थानामिति क्रियासम्बन्धव्युदसनार्थम्, स च समुच्चय एकसम्बन्धिविषयः, कोऽसावेकः सम्बन्धी ? वाक्यार्थः प्र[illegible], अन्वाचयसमुच्चययोरानयननयनादि, उक्तञ्च 'चार्थे द्वन्द्वः' ( पा० अ० २ पा २ सू० २९ ) चस्य कोऽर्थः ? समुच्चयोऽन्वाचयः समाहार इतरेतरयोगश्च पदार्थोत्तरकालभाविनः, तत्र समुच्चयः 'गामश्वं पुरुषं शकुनिं पशुमहर[illegible]नयमानो 5 वैवस्वतो न तृप्यति सुरया इव दुर्मदी ( एतत्समानः पाठो महाभा० २ अ० २ पा० २९ सूत्रे ) अन्वाचयो यथा देवदत्त ! भिक्षामट यज्ञदत्तञ्चानय, पाणिपादं ब्राह्मणक्षत्रियविट्शूद्राः, रामकेशवाविति समाहारेतरेतरयोगौ, ते[1] च द्रव्याणां गुणानां क्रियाणाञ्च दृश्यन्ते तद्यथा घटश्च पटश्चेति, रूपञ्च रसश्चेति, हसति तिष्ठति रमते चेत्यादयः पदार्थोत्तरकालभाविनः समुच्चयविकल्पादयः, न[2] चैते द्रव्यं न क्रिया न गुणः किन्तु द्रव्यस्यैव क्रियात्वात् वीरपुरुषविशे[illegible] वस्तुत्वैक- 10

पदार्थैस्सह चार्थस्य सम्बन्धो न क्रिययेत्याह—तस्योपकुर्वन्त इति । एकसम्बन्धिनं दर्शयति—कोऽसाविति, वाक्यार्थभूत एकाश्रयत्वरूपः समूहः एकः सम्बन्धी, स च धर्मभूतत्वादेकदेशरूप इति भावः । अथश्चेतरेतरसमाहारस्थले भाव्यः, अन्वाचयसमुच्चयस्थले तु क्रियैवेत्याह—अन्वाचयेति । चार्थे द्वन्द्व इति, अनेकं सुबन्तं चार्थे वर्तमानं वा समस्यते स द्वन्द्व इति सूत्रार्थः । चशब्दार्थमाह—समुच्चय इति, परस्परनिरपेक्षस्यानेकस्यैकस्मिन्नन्वयः समुच्चयः, अत्र चशब्देन स्वसमभिव्याहृतपदार्थे इतरसापेक्षत्वं बुध्यते तदसमभिव्याहृते तु न, अत एवात्रैकचशब्दप्रयोगः, यथेश्वरं गुरुञ्च 15 भजस्वेति, अत्रैकस्यान्यसहितस्यान्वयित्वनिमित्तसाहित्येऽप्येकस्य केवलस्यैवैकधर्मावच्छिन्नेऽन्वयेन चार्थेऽनेकसुबन्तस्य वृत्त्यभावान्न समुच्चये समासः । गामश्वमिति भाष्ये 'अहरहर्नयमानो गामश्वं पुरुषं पशुम् । वैवस्वतो न तृप्यति सुराया इव दुर्मदी' ॥ इति दृश्यते, दुःखेन यो माद्यति स यथा सुरया न तृप्यति एवं यमो गवादीन्नयमान इति तदर्थः, सुराया इति शेषषष्ठी, अत्र चशब्दाभावेऽपि अहरह इत्यनेन चार्थसम्प्रत्ययादितरेतरयोगस्वरूपसमुच्चयप्रतीतेः द्वन्द्वः प्राप्नोति, परन्तु चशब्देनैव यत्रेतरेतरयोगः प्रतीयते तत्रैव समासो भवति, अत एव न समुच्चयसमासोदाहरणमिदम् । अन्वाचय इति, 20 अन्यतरस्यानुषङ्गिकत्वेऽन्वाचयः, अन्यनिष्पादकयत्ननिष्पाद्यत्वम् तच्चाप्रधानम्, अदर्शने हि गां नानयति, उभयोः प्राधान्याभावान्नात्र समासः । पाणिपादमिति, अनुद्भूतावयवभेदः समूहः समाहारः, अयमेव विशेष्योऽत एव तत्रैकवचनम् । ब्रा[illegible]णेति, परस्परापेक्षाणामुद्भूतावयवभेदसमूहरूपाणामेकधर्मावच्छिन्नत्वेनान्वय इतरेतरयोगः, अत्र साहित्यं विशेषणं द्रव्यं प्रधानं समाहारे साहित्यं प्रधानं द्रव्यं विशेषणम्, अत्रान्योऽन्यस्मिन्नन्योऽन्यसाहित्यं गम्यते, यथा ब्राह्मणशब्देन ब्राह्मणक्षत्रियविट्शूद्राः, क्षत्रियपदेन त एव विट्पदेन शूद्रपदेन च त एव, अत एव तद्विग्रहवाक्ये प्रतिपदं चशब्दप्रयोग 25 इति बोध्यम् । रामेति, इतरेतरयोगस्यैवेदमुदाहरणम्, अत्रापि रामपदेन रामकेशवयोः केशवपदेन च तयोरभिधानाद्भवति द्वन्द्वः, सहभूतयोरेव युगपदर्थद्वयबोधसामर्थ्यम्, अतो नान्यतरवैयर्थ्यम्, समूहद्वयापेक्षञ्च द्विवचनमिति बोध्यम् । समुच्चयादीनां योग्यतामाह—ते चेति । द्वन्द्वविषयसमूहपदार्थं दर्शयति—न चैत इति, सोऽयं समूहश्चार्थो न द्रव्यगुणक्रियारूपः, अपि तु भेदाभेदरूपा प्रवृत्तिरेवेत्याह—किन्त्विति नात्र चार्थः क्रिया, क्रियागुणयोश्चार्थान्वयासम्भवात्तत्र द्वन्द्वानापत्तेः, द्रव्यस्यैव क्रियान्वययोग्यत्वात्, किन्तु द्रव्यगुणक्रियासाधारणा प्रवृत्तिरेव चार्थभूतसमूह इति भावः । वीरेति, अत्र वीरादि- 30 शब्दोऽनपेक्षितेतरेतरपदसमन्वयो व्यतिरिक्तः स्वार्थमात्रवचनः, पदान्तरसन्निधानेऽपि तस्य तावत्येवाभिधा निर्धीयते, तत्र च सम्बन्धे गुणप्रधानभावस्यावश्यम्भावाद्विशेषणविशेष्यभावो वाक्यार्थः, न तु स प्रातिपदिकार्थः, पदान्तरसन्निधान एव तस्य प्रतीतेः, वि[illegible]गुणप्रधानभावज्ञापकत्वात्, विशेष्यं हि सामान्यात्मना क्रियासम्बन्धितायामुपक्रान्तं ज्ञातमपि स्वगतविशेषणेनानिश्चितत्वात्तन्निश्चयाय ज्ञापकत्वेन निश्चितो वीरादिगुणः प्रवर्तमानो विशेषणं भवति ज्ञाप्यञ्च प्रधानं विशेष्यम्, ज्ञापकन्तु परोपकारायोपादीयमानं शेषभूतमप्रधानं विशेषणम्, द्रव्यं हि साक्षात् क्रियासम्बन्धात्तत्र

१ सि. क. ये च । २ सि. क. न चेद्रव्यं ।

स्वगताऽनन्यान्यत्वभाजो धर्माः प्रवृत्तिरेवेति सम्बन्धः, यथाऽत्र वीरशब्दः पुरुषसामानाधिकरण्यात् वस्तुत्वेनैकत्वं गतः तथा पुरुषशब्दोऽपि वीरसामानाधिकरण्यात्, अन्यथा वैयधिकरण्याद्घटपटादि[वद] सम्बन्धाभावदोषाः स्युः, दृष्टज्ञानयोरैकात्म्यं सामानाधिकरण्यात्, अथ च वीरो विशेषणं पुरुषो विशेष्य इति परस्परं भिन्नार्थत्वमनयोः, इतरथा सामानाधिकरण्यात्तादात्म्यात् पौनरुक्त्यादिदोषाः स्युः

5 दृष्टज्ञानयोरैकात्म्यं सामानाधिकरण्याद्विशेष्य[विशेषण]भावाच्चान्यत्वम् एवं प्लक्षादिपदम्, तेन दृष्टान्त-परिणतत्वे सत्युत्तरकालभाविनश्चार्थस्यैकसम्बन्धिविषयत्वं प्लक्षधवप्रत्ययगोचरत्वमित्यनन्य-त्वम्, अन्यत्वन्तु प्लक्षधवयोरेवासौ समुच्चय इति, तथा द्रव्यादलिङ्गसंख्यो भावो वस्तुत्वैकत्वगतेरन-न्योऽन्यश्चेति । इत्थं वा व्याख्यानेऽन्यत्वैकान्तो द्रव्यार्थत्यागोऽन्वयत्यागश्चेति परिहृता दोषाः ।

अतः परमलिङ्गसंख्यत्वप्रतिपादनायोत्तरो ग्रन्थः—

10 **साधु भवतीत्यादौ भवने भवितृषु लिङ्गसंख्याभेदवत्सु याः लिङ्गसंख्यास्ता न भवन्ति, भवने नपुंसकलिङ्गमेकवचनञ्चानुमीयते श्रूयते च तद्विशेषणे साधुशब्दे, तस्मादन्यच्च भवनं भवद्भ्यः ।**

साधु भवतीत्यादि यावद्भेदवत्सु याः [लिङ्ग]संख्यास्ता न भवन्तीति, एकस्मिन् द्वयोर्बहुषु वा देवदत्तादिभवितृषु लिङ्गसंख्याभेदवत्सु यल्लिलिङ्गं संख्याश्चैकत्वाद्यास्ता न भवन्ति भवने नपुंसकलिङ्ग-

15 मेकवचनमेव चानुमीयते, तद्विशेषणे साधुशब्दे श्रूयते साधु भवनं पश्येत्यादिकारकव्यतिरेकेऽपि, तस्मादन्यद्भवनं भवद्भ्यो देवदत्तादिभ्यः स्वरूपतो वस्तुत्वैकत्वे ।

स्यान्मतं किमर्थं नपुंसकलिङ्गं प्रथमैकवचनञ्चेत्यत्रोच्यते—

**प्रत्ययपरप्रकृतिव्यवस्थायान्तु प्रथमैकवचने अतिक्रमकारणाभावात्, नपुंसकञ्च भवन-**

---

प्रधानम्, गुणस्तु तद्वारेण क्रियासम्बन्धमनुभवन् द्रव्यावच्छेदकोऽप्रधानीभूतः, अयञ्च विशेषणविशेष्यभावः सामानाधिकरण्य-

20 स्वभावः, स च शब्दयोर्भिन्नप्रवृत्तिनिमित्तकत्वे सत्येकार्थवृत्तित्वम्, अर्थयोस्तु विशेषणत्वं वीरे पुरुषनिरूपितं विशेष्यत्वञ्च पुरुषे वीरनिरूपितं तयोः साहित्यं सम्बन्धः, एवञ्च वीरत्वपुरुषत्वसमूहवान् वीरपुरुष इति बोधः, पुरुषत्ववीरत्वधर्म-योरधिकरणत्वात्सामानाधिकरण्यम्, तच्च भिन्नाभिन्नमिति तथैव समुच्चयादयो वस्तुना सह भिन्नाभिन्नरूपा इति भावः । अयमेव घटयति—यथाऽत्रेति, वीरशब्दः वीरशब्दप्रतिपाद्यः, वीरत्वं पुरुषत्वं च समानाधिकरणौ धर्मौ, धर्मधर्मिणो-रेकत्वाद्वस्तुत्वेनैकत्वं गतस्स इत्यर्थः । विशेष्यत्वाद्विशेषणत्वाच्च तयोर्भेदोऽपीत्याह—अथ चेति, यद्यन्यत्वं न स्याद्वीरपदेन

25 वीरपुरुषस्य पुरुषशब्देन च वीरपुरुषस्य बोधात् पौनरुक्त्यं भवेदिति भेदोऽप्यभ्युपेय इति भावः । प्लक्षादौ भेदाभेदावाह—एवमिति । द्रव्यक्रिययोर्दार्ष्टान्तिकयोर्भेदाभेदमुपसंहरति—तथा द्रव्यादिति । अथ क्रियाया अलिङ्गसंख्यत्वं वक्तुमाह—साधु भवतीत्यादीति । एतदेव विवृणोति—एकस्मिन्निति । साधु भवतीत्यत्र साधुशब्दो भवनक्रियाविशेषणम्, अत एव द्रव्यधर्मान् लिङ्गसंख्यादीन् स न गृह्णाति, किन्त्वौत्सर्गिकमेकवचनं क्लीबत्वञ्चेति तद्विशेष्यभूतक्रियापि तादृशीति निर्णीयते, यदा तु क्रिया कृदन्तेन पदेनोपस्थाप्यते साधु भवनं पश्येति तदा तु तस्या द्रव्यवद्भासमानत्वात् कर्मत्वमुपैति

30 एवं कर्तृत्वमपि भवनं वर्तत इतीति भावः । भवन इति, आख्यातवाच्यभावस्वरूपत्वेन तत्र स्थितिरूपं नपुंसकलिङ्गमेव भवति, भेदाभावलक्षणममेदैकत्वञ्च, न त्वेकत्वसंख्येति भावः । एतदेव पुनः स्फुटयति—प्रत्ययपरेति साधु भवतीत्यादौ क्रियाविशेषणत्वात् कर्मादीनामभावात् द्वितीयादिविभक्तेरप्रसङ्गात् प्रातिपदिकार्थव्यतिरिक्तलक्षणाभावेन प्रथ

स्याव्यक्तत्वात्, यथा लोके दृष्टं किमपि दृश्यत इति, तथा त्रिकालविषयाद् द्रव्यादन्यो भावो न च तेन विना कारकः त्रिकालत्वात्, द्रव्यं त्रिकालविषयम् भावस्य त्रिधा त्रिकालत्वेऽप्येकरूपत्वात्, वर्त्तमानत्वेनावतिष्ठमानं तत्सम्बन्धे द्रव्यं त्रीनपि कालान् विषयीकरोति गमनगन्तृवत्, वर्त्तमान एव देवदत्ते गन्तरि गते त्रैकाल्यं दृष्टम्, अगमद्गच्छति गमिष्यतीति तथाऽभूद्भवति भविष्यति द्रव्यमिति । 5

( प्रत्ययेति ) प्रत्ययपरप्रकृतिव्यवस्थायान्तु प्रथमैकवचने, किं कारणं? अतिक्रमकारणाभावात्-अवश्यञ्च प्रत्ययपरा प्रकृतिः प्रयोक्तव्या 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' ( पा० २ अ-३ पा० ४६ सू० ) इति सत्तामात्रेऽपि प्रथमाविधानात् ततोऽतिरिक्तार्थासम्भवात् प्रथमातिलंघने फलाभावात्, वचनस्य वचना[न]न्तरीयकत्वात् सत्तामात्रार्थकारणत्वात् कारणान्तराभावात्, कारणाद्धि तदतिक्रमः स्यात्, नपुंसकञ्च भवनस्याव्यक्तत्वात्, अव्यक्ते गुणसन्देहे [च] नपुंसकलिङ्गं प्रयोक्तव्यमिति, 10 किं तथा लोके दृष्टमिति चेदुच्यते किमपि दृश्यत इति-यथा हस्त्यश्वनरादिसमूहं दृष्ट्वा वक्तारो भवन्ति किमपि दृश्यत इति, इतिः प्रदर्शने, एतदेव वाक्यमुदाहरणत्वेन प्रदर्शयति तथेत्यादि, पूर्वसाधने तस्मिन्नेवपक्षे हेत्वन्तरमुपचयरूपेणोच्यते तेन प्रकारेण तथा, यथा पूर्वं वस्तुत्वैकत्वगत्याऽनन्यद्रव्यदिति पक्षीकृत्य साधितं तथाऽत्रापि त्रिकालविषयाद्द्रव्यादन्यो भावः, न च तेन विना कारक इति पक्षः द्रव्येण विना न स्वयं कारको भावः, तत्सहवृत्तिरेवान्यत्वेऽपीत्यर्थः, कस्मात्? त्रिकालत्वात्, त्रयः काला 15 अस्येति त्रिकालः, कोऽसौ? भावः क्रियालक्षणः, अभून् भवति भविष्यतीत्युपनेष्यमाणत्वात्, भेदेन

विभक्तेरप्यप्रसङ्गेन प्रकृतिपर एव प्रत्ययः प्रत्ययपरैव च प्रकृतिः प्रयोक्तव्येति व्यवस्थया प्रकृतिमात्रप्रयोगासंभवेन प्रातिपदिकार्थे प्रथमैव भवति तत्रापि प्रथमोपस्थितत्वात् केवलान्वयित्वाच्चैकत्वस्यैकवचनमेव भवतीति भावः । तदेवाह-अतिक्रमेति । प्रातिपदिकसामान्येन विशेष्यमाणोऽर्थः सत्ता, सा हि सर्वार्थैरव्यभिचरितसम्बन्धा प्रथमं प्रतीयमाना विभक्त्यादिसम्बन्धनिरपेक्षस्य प्रातिपदिकमात्रस्यार्थः तत्र प्रथमाविभक्तिर्भवतीति विधायकं सूत्रं प्रमाणयति-प्रातिपदिकार्थेति । 20 ततोऽतिरिक्तेति सत्तातिरिक्तार्थस्य साधुशब्देनाप्रतीतेरिति भावः । अत एव प्रथमाविभक्तिपरित्यागे बीजाभाव इत्याह-प्रथमेति । सत्त्वभूतार्थस्य संख्यावत्त्वात् भेदलक्षणद्वित्वादीनामभेदलक्षणैकत्वाविनाभावात् सत्तामात्रार्थाभिधाने भेदनिमित्ताभावेन एकवचनस्यैवाभिधातुं योग्यतया तदतिक्रमे हेत्वभावादेकवचनमेव प्रयुज्यत इत्याशयेनाह-वचनस्येति वचनं संख्या द्वित्वादिरूपा सैकत्वसंख्यानान्तरीयकेति भावः । एकवचनप्रयोगे सत्त्वभूतार्थ एव केवलं हेतुर्नान्य इत्याह-सत्तामात्रार्थेति । अथ नपुंसकत्वे हेतुमाह-नपुंसकञ्चेति अव्यक्त इत्यादिव्याख्यातमेव पूर्वम् । पुनरपि द्रव्यात् क्रियाया अन्यत्वं समर्थयति- 25 तथेत्यादीति द्रव्यं स्वरूपतो नित्यत्वात् न कालत्रयं स्पृशतीत्यत्रिकालमपि क्रियासम्बन्धाद्भूतभविष्यद्वर्त्तमानविषयो भवति ततश्च त्रिकालविषयम्, कालत्रयेऽपि तस्य भवनात्, क्रिया तु स्वरूपतोऽनित्याऽत एव च कालत्रयमनुभवति स्वत एवेति त्रिकाला, एकस्याश्च क्रियायाः कालत्रयाननुभवनात् प्रवाहतो नित्यत्वेऽपि वर्त्तमानैकविषया भवतीति त्रिकालविषयादत्रिकालाद्द्रव्यात् वर्त्तमानविषया क्रियाऽन्या त्रिकालत्वादिति भावः । अमुमर्थमेवोपपादयति-त्रिकालविषयादिति कारकः क्रिया भाव इत्यर्थः, त्रिकालत्वमस्य दर्शयति-अभूदिति भूधात्वर्थस्य सर्वत्राविशिष्टत्वात् अभूत् घटः अत्र भूतत्वं न तावद्घटस्य 30 तस्य द्रव्यत्वेन कालेनासंस्पर्शात् क्रियाणामेव हि साध्यस्वभावानां कालेन सम्बन्धात् धातुवाच्या भ्वर्थभूता सत्ताऽऽख्या क्रिया भूतेत्युच्यते घटसत्ता च घटसमवायिनीति पारम्पर्येण घटेन सम्बन्धो न तु साक्षाद्द्रव्यकालयोस्तथा च कालसम्बन्धः क्रियायाः साक्षाद्भवतीति त्रिकाला सा, तथाविधक्रियाद्वारेण द्रव्यं सम्बध्यत इत्यत्रिकालं द्रव्यं त्रिकालविषयमिति, उक्तञ्च

त्रिभिरपि कालैरभिसम्बन्धदर्शनात् भावस्य त्रिकालत्वं सिद्धत्वाद्धेतुः, द्रव्यं त्रिकालविषयमिति, भावस्य त्रिधा भिन्नकालत्वेऽप्येकरूपत्वात्, वर्त्तमानेनावतिष्ठमानं तत्सम्बन्धे द्रव्यं त्रीनपि [कालान्] विषयीकरोतीति त्रिकालविषयमित्युच्यते त्रिष्वपि कालेषु तदेव भवतीत्यर्थः, अत्रिकालं द्रव्यं त्रिकालविषयमिति, त्रिया तु त्रिकाला वर्त्तमानविषयेत्युक्तं भवति, गमनगन्तृवदिति दृष्टान्तः, तद्व्याचष्टे वर्त्तमान एव देव-
5 दत्ते गन्तरि, एवकारोऽवधारणे, त्रिष्वपि कालेषु गन्तुर्वर्तमानैककालतामवधारयति गतेः त्रैकाल्यं गमनस्य त्रयोऽपि काला अनवधारितैकरूपा दृष्टाः, तन्निदर्शयति अगमद्गच्छति गमिष्यतीति तथाऽभू [वि] त्यादिरुपनयो व्याख्यातार्थः ।

**भावस्य द्रव्यात् पृथक्त्वासिद्धिवत् गन्तुर्गमनपृथक्त्वासिद्धे[1] दृष्टान्तः साध्यैकदेश इति चेदुच्यते देवदत्तगमनयोः त्रैकाल्यात्रैकाल्यभेदसिद्धेः द्रव्यभावयोरपि तद्वत्, युगपदयु-
10 गपत्तत्त्वखघटवत् ।**

भावस्येत्यादि परमताशङ्का, स्यान्मतं भावस्य द्रव्यादन्यत्वेन तदपृथक्कारकत्वेन च साध्यत्वाद्भावगमनयोरेकार्थत्वात् द्रव्याद्भवनपृथक्त्वासिद्धिवत् गन्तुर्गमनपृथक्त्वा[सिद्धेः]द्वि[1] दृष्टान्तः साध्यैकदेश इत्येतस्यां विचिकित्सायां कथं साधनमिति चेदुच्यते, देवदत्तगमनयोस्त्रैकाल्यात्रैकाल्य-भेदसिद्धेर्द्रव्यभावयोरपि तद्वदिति सामान्यविशेषयोः साध्यसाधनत्वाभ्यां विवक्षितत्वाददोषः, तद्विचिकि-
15 त्सायामपि तुल्यतेति, युगपदयुगपत्तत्त्वखघटवदिति दृष्टान्तः, तस्य भावः तत्त्वम्, तदिव भवतीत्यर्थः, ननूक्तं द्रव्यभेदे द्रव्यार्थत्यागः, अत्यागेऽन्वयाभाव इति नैष दोषः युगपदयुगपत्तत्त्वविशेषणात्, आत्मा-

'परतो भिद्यते सर्वं आत्मा तु न विकल्पते । पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते ॥' इति, पर्वतनद्यादीनामपि नित्यानामपरतत्सहचरितपदार्थगतसत्तोपाश्रयेण सत्ताभेदात् कालभेदोपपत्तिः, सर्वमेव हि भावजातमेवमुपाधिसंसर्गवशेन भिद्यते न तु स्वरूपेणेति तदर्थः । तदिदमाह-**भावस्येति**, भावस्य-क्रियायाः कालत्रयसम्बन्धेऽपि द्रव्यस्यैकरूपत्वादित्यर्थः, उक्तं
20 हेतुं संघटयति-**वर्त्तमानेनेति** तत्सम्बन्धे-त्रिकालक्रियासम्बन्धे सति । तात्पर्यमाह-**अत्रिकालमिति** । दृष्टान्तमाह-**गमनगन्तृवदिति**, देवदत्तादि द्रव्यं वर्त्तमानैकरूपतयाऽवधारितम् गमनादिक्रिया त्वेकरूपेण नावधारिता कालत्रयमनुभवति, अगमत् गच्छति गमिष्यतीति, एवं द्रव्यं भावश्च विज्ञेयाविति भावः । अथ गमनगन्तृदृष्टान्तो द्रव्यक्रियारूपतया साध्यैकदेश एव, तयोर्भेदासिद्धेरतो दृष्टान्तः साध्य इत्याशङ्कते-**भावस्येति** । भावस्य हि द्रव्यान्यत्वे सत्यनन्यत्वं साध्यम् तत्र च निदर्शनं गन्तृगमनवदिति, तथा सति द्रव्यार्थत्वादस्य नयस्य भावस्य द्रव्यपृथक्त्वासिद्धिवद्गमनस्य गन्तृपृथक्त्वासिद्धिरिति दर्शयति-
25 **स्यान्मतमिति** । भावोऽपि क्रिया गमनमपि क्रियेत्येकार्थत्वं तयोरित्याह-**भावगमनयोरिति** अतो भेदासिद्धेः साध्यैकदेश इति भावः । गन्तुर्देवदत्तस्य गमनस्य च विशेषत्वात् तयोश्च त्रैकाल्यात्रैकाल्ययोः भेदः सिद्ध एवेति तन्निदर्शनेन द्रव्यभावयोरन्यत्वं साध्यत इत्याशयेन समाधत्ते-**देवदत्तगमनयोरिति** । सामान्यविशेषयोरन्यत्वे दृष्टान्तमाह-**युगपदिति** युगपत्तत्त्वं खं सहभाविनां सर्वेषामात्मादीनामैक्यात् सामान्यम् अयुगपत्तत्त्वो घटः क्रमभावी विशेषः तयोरनन्यत्वेऽपि यथाऽन्यत्वं तथा गमनगन्त्रोर्द्रव्यभावयोश्चानन्यत्वमिति भावः तदिव-युगपदयुगपत्तत्त्वखघट इव । अत्रापि दृष्टान्तदार्ष्टान्ति-
30 कयोः खघटयोर्वा भेदे द्रव्यार्थत्यागः द्रव्यार्थे सर्वस्य नित्यत्वादेकत्वाच्च, अत्यागे वा दृष्टान्ताभावात् साधनस्यान्वयाभाव इत्याशङ्कते-**ननूक्तमिति** । समाधत्ते-**युगपदिति** सामान्यविशेषन्यायेनानन्यान्यत्वमिति न द्रव्यार्थत्यागो न चाऽनन्वय इति भावः । द्रव्यार्थत्यागं दर्शयति-**आत्मादीति** । तस्यैव भेदं दर्शयति-**द्रव्यात्मव वेति** । नन्वयं नयो द्रव्यार्थविशेषत्वात्

१ सि. क. द्विदृष्टान्तः । २ सि. क. त्रैकाल्या० । ३ सि. क. तदेव ।

दिसर्वैक्याद्युगपत्तत्त्वं स्वं द्रव्यार्थात्माभेदत्वादेः द्रव्यात्मैव वाऽयुगपत्तत्त्वो घटः तथा त्रैकाल्यात्रैकाल्यवस्त्वन्यानन्यत्वे द्रव्यभावयोः ।

अथ मतं द्रव्यार्थाभेदत्वादस्य नयस्य द्रव्यार्थस्य च नित्यत्वात् कथमिदं प्रागभावप्रध्वंसाभावात्मकं त्रैकाल्यम्, पूर्वापरकालतुल्यत्वात् द्रव्यार्थाभ्युपगमात् द्रव्यस्यैव वाऽत्रैकाल्याभ्युपगमे भावस्य द्रव्यार्थत्याग इत्यत्रोच्यते, प्रवृत्तिनित्यत्वात् नात्रापि द्रव्यार्थत्यागः, 5
वस्तुनो द्रव्यभवनात्मकस्योभयत्वादेव नित्यत्वस्यापि द्वित्वम् तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यत इत्युक्तत्वात् ।

अथेत्यादि, अथ मतं द्रव्यार्थाभेदत्वादस्य नयस्य द्रव्यार्थस्य च नित्यत्वात् कथमिदं प्रागभावप्रध्वंसाभावात्मकं त्रैकाल्यं, युज्यत इति वाक्यशेषः, यदभावादधुना भवति तद्वर्त्तमानमित्युच्यते तच्च प्रागभूतम्, यद्विनष्टमतीतं प्रध्वस्तम्, अभूतं यद्भविष्यति तदपि प्रागभूतमिदानीमभावात्, 10
मृत्पिण्डघटकपालादिदर्शनात् तच्च पूर्वापरकालतुल्यत्वान्नित्यस्य न युक्तम् न व्येतीति नित्यमिति निरुक्तेः, तस्मात् सिद्धं भावस्य(।) त्रैकाल्यम् द्रव्यार्थाभ्युपगमात्, द्रव्यस्यैव वाऽत्रैकाल्याभ्युपगमे भावस्य द्रव्यार्थत्याग इत्यत्रोच्यते न दोषः, प्रवृत्तिनित्यत्वात्—नात्रापि द्रव्यार्थत्यागः प्रवृत्तिनित्यत्वात् भवनं प्रवृत्तिर्भाव इत्यर्थः, सा च प्रवृत्तिर्नित्या सदा प्रवृत्तेः वस्तुनो भावोऽपि नित्य एवेति न द्रव्यार्थत्यागोऽत्रैकाल्यमिति । इतर आह—कुतो नित्यत्वस्य द्वैतमिति अत्रोच्यते वस्तुनो द्रव्यभवनात्मकस्योभयत्वादेव 15

---

वस्तुनाऽभिन्नेन नित्येन भवितव्यम्, तस्माद्द्रव्यं क्रिया चोभयमपि नित्यमेवेति कथं क्रियायास्त्रिकालत्वं नित्यस्य द्रव्यवत् कालत्रयसम्बन्धासम्भवादित्याशङ्कते—**अथ मतमिति** । **प्रागभावेति** विद्यमानध्वंसप्रतियोगिसमयत्वं भूतत्वं वर्त्तमानप्रागभावप्रतियोगिसमयत्वं भविष्यत्वम्, प्रारब्धापरिसमाप्तक्रियाधिकरणसमयत्वं वर्त्तमानत्वम्, इमानि च नित्यप्रवृत्तिरूपायां क्रियायां न सम्भवन्ति यथा पर्वताः तिष्ठन्ति नद्यः स्रवन्तीत्यादौ स्थितेः सर्वदा सद्भावादिति भावः । कालत्रयं लक्षयति—**यदभावादिति,** यत्पूर्वमविद्यमानं सदिदानीं भवति तद्वर्त्तमानमित्युच्यते, घटो हि प्रागविद्यमान इदानीं भवतीति वर्त्तमानः स इति, 20
यद्विनष्टं प्रध्वस्तं तदतीतं यथा मृत्पिण्ड इदानीमभावात्, यच्चाभूतं तद्भविष्यति यथा कपालादि, तत्प्रागिदानीमपि नास्ति, एवञ्चातीतभविष्यतोरभावरूपतया सततप्रवृत्तिशीलस्य द्रव्यार्थतो नित्यस्य भावस्य तौ कालौ न भवत इति कथं त्रैकाल्यं युज्यत इति भावः । एतदेव हेतुपूर्वकमाह—**तच्चेति,** सर्वकालं तुल्यत्वेनासाध्यत्वान्नित्यत्वेन न युक्तमिति भावः । नित्यलक्षणं दर्शयति—**नेति** यो न व्येति—विच्छेदं न याति तद्धि नित्यम्, न हि क्रियाप्रवाहस्य कदाचिदपि व्ययोऽस्ति तस्मान्नित्या सेति न त्रैकाल्यं युज्यत इति भावः । अत्रैकाल्ये हेतुमाह—**द्रव्यार्थेति** । यदि द्रव्यमेवात्रिकालं न तु क्रिया तर्हि भावे द्रव्यार्थता त्यक्ता भवेत् 25
विनाशाभ्युपगमादित्याह—**द्रव्यस्यैव वेति** । समाधत्ते—**न दोष इति** साधनानां प्रवृत्तिविशेषस्य सर्वत्रैव सर्वदाऽनुभवसिद्धत्वात् तत्तत्प्रवृत्तिविशेषस्यानित्यत्वेऽपि प्रवृत्तिसामान्यरूपेण नित्यत्वान्न द्रव्यार्थत्यागः, आहुश्च 'अभिन्नाश्चैव भिन्नाश्च आहुः कृभ्वस्तयः क्रियाः । एकानेकविशेषस्था प्रवृत्तिः सार्वनामिका ॥' इति, प्रवृत्तिः खल्वपि नित्या न हीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते वर्द्धते वा यावदनेन वर्द्धितव्यम् अपायेन वा युज्यत इत्युक्तत्वेन प्रवृत्तेः सदा प्रवर्त्तनात् वस्तुनो भावोऽपि नित्य एवेति त्रैकाल्यं द्रव्यार्थतयाऽभेदश्चोपपद्यत इति भावः । एवञ्च स्वरूपनित्यता प्रवाहनित्यता चेति द्रव्यमेदान्नित्यत्वं 30
द्विविधमिति प्रश्नपूर्वकं समर्थयति—**कुत इति** । क्रियायाः क्वचिद्विनाशदर्शनेऽपि सर्वत्र विनाशाभ्युपगमोऽयुक्तः, वस्त्वन्तरे तदुपलम्भात्, एवञ्चैकाकारपरामर्शदर्शनेन तस्या नित्यत्वमेवेति द्वैविध्यं नित्यत्वस्येत्याशयेन समाधत्ते—**वस्तुन इति** ।

---

१ क० XX । २ सि. क. यन्नस्मादृ० । ३ सि. नङ्कुरघट० । ४ सि. क. न दुर्वत्रमित्रम् ।

नित्यत्वस्यापि द्वित्वं सिद्धम्, यथा प्रागुपवर्णितं 'नहि तदेवमित्यादि यावत् तदपि हि नित्यं यस्मिंस्तत्त्वं न विहन्यते' (महाभा० अ० १ पा० १ आ० १) इत्युक्तत्वात्।

इदानीमपि तद्द्वित्वं प्रदर्श्यते—

कूटस्थस्य द्रव्यस्य सर्वप्रभेदनिर्भेदस्य बीजभूतस्य गमनस्थानादिसर्वात्मकत्वेनावस्थित-
5 स्यानन्तमात्मानं पर्यनुभवतस्तदर्थानुभवनात्मत्वादेव द्रव्यकौटस्थ्यं युज्यते, इतरस्य तु तथा-तथाऽभिव्यज्यमानस्य सततप्रवर्त्तनात्मनो भावस्याकौटस्थ्यं सततसंप्रवृत्तिरूपं नित्यत्वञ्च।

कूटस्थस्येत्यादि, द्रव्यं हि कूटस्थं नित्यं पूर्वापरकालतुल्यत्वात् तस्य कूटस्थस्य द्रव्यस्य सर्वप्रभेदनिर्भेदस्य बीजभूतस्य गमनस्थानादिसर्वात्मकत्वेनावस्थितस्यानन्तमात्मानं पर्यनुभवतस्तदर्थानुभवनात्मत्वादेव द्रव्यकौटस्थ्यं युज्यते, इतरस्य तु भावस्य तथातथाऽभिव्यज्यमानस्य पर्यनुभूयमानस्य क्रमेण
10 युगपद्वा सततप्रवर्त्तनात्मनो भावस्य प्रवृत्तेरकौटस्थ्यं सततसंप्रवृत्तिरूपं—अव्यवच्छिन्नभवनात्मकं नित्यत्वञ्चेति नित्यत्वस्यापि द्वित्वमिति साधूक्तम्।

अत एव भूताभूतभाक्त्वं द्रव्याद्वैधर्म्यमस्याः प्रवृत्तेरन्यत्वकारि, भूताभूता क्रिया, द्रव्यं भवदेव, व्यतिक्रान्त्यव्यतिक्रान्तिभाक्त्वात् यथा कृतः कटो देवदत्तेन, कृतः कर्मणा विभागः तत्र विभागः कटकर्तुश्चलनात्मकस्य कर्मण ईप्सिततमत्वात् कर्म, चलनेन देशान्तरं प्रापयित्वा
15 क्रियत इति सा व्यतिक्रामति, विभागः कर्म च न व्यतिक्रामतः शब्दार्थस्य पिण्डितत्वात्, न च व्यतिक्रमो निर्निमित्तो भवितुमर्हति, दृष्टश्च वर्त्तमानयोः कर्मविभागयोर्द्रव्ययोरव्यतिक्रमे करणस्य व्यतिक्रमः।

अत एवेत्यादि एतस्मादेव नित्यत्वद्वित्वादन्यदिदमपि कारणं भूताभूतभाक्त्वं द्रव्याद्वैधर्म्यमस्याः प्रवृत्तेरन्यत्वकारि—द्रव्यादन्यो भाव इत्यस्यार्थस्य साधनं—द्रव्यविलक्षणो भाव इत्यत्र हेतुरित्यर्थः,
20 भूताभूता क्रिया द्रव्यं भवदेव—वृत्ता वर्तमाना च क्रिया द्रव्यं वर्तत एवेत्यर्थः, अथ वा भूतं द्रव्यमभूतं

तत्रैव महाभाष्यं विधिनयोक्तं स्मारयति—यथा प्रागिति। महाभाष्ये ह्युक्तम्—'अथवा नेदमेव नित्यलक्षणम् ध्रुवं कूटस्थमविचाल्यनपायोपजनविकार्यनुत्पत्त्यवृद्ध्यव्यययोगि यत्तन्नित्यमिति, तदपि नित्यं यस्मिंस्तत्त्वं न विहन्यते' इति, तत्तत्क्रियाया नाशेऽपि क्रियात्वाव्यभिचारात् न क्रियातत्त्वं विहन्यत इति भावः। अथोभयविधं नित्यत्वं दर्शयति—कूटस्थस्येति।
25 द्रव्यं हीति यथा हि लोके मृत्पिण्ड एव स्थासको भवति, स्थासक एव कोशको भवति, कोशक एव कुशूलो भवति, स एव च घटो भवति घट एव कपालानि भवन्ति कपालानि च शर्करा भवन्ति तत्र मृत्पिण्डस्थासकादयोऽन्ये मृत्तु सैव बीजभूता तांस्तान् प्रभेदाननुभवति, एवमेकमेव देवदत्तादिद्रव्यं तिष्ठति गच्छति आस्ते शेते करोति पचति पठति हसति चेति तदेव गमनस्थानादिभावमनुभवदेकरूपमेवावतिष्ठत इति स्वरूपतः कूटस्थनित्यत्वं तस्येति भावः। देवदत्तस्य च द्रव्यस्य किञ्चित्प्रवृत्तिशून्यस्य शशविषाणायमानतया गमनस्थानाद्यन्यतमप्रवृत्तिमत्त्वेन प्रवृत्तेः सततसंप्रवृत्तिरूपमकूटस्थनित्यत्वं भवतीत्याशयेनाह—
30 इतरस्य त्विति। मतश्च क्रियायाः प्रवाहनित्यत्वं तत एव क्रिया भूताऽपि अभूतापि, ततश्च द्रव्याद्भिन्नो भावो भूताभूतभाक्त्वादित्यपि हेतुः सम्भवतीत्याशयेनाह—अत एवेति। तद्व्याचष्टे—एतस्मादेवेति। क्रियाव्युपरमलक्षणभूततायास्तद्विपरीतलक्षणाभूततायाश्च क्रियायामेव सम्भवस्तस्याः प्रवाहतो नित्यत्वात्, न तु स्वरूपतो नित्ये द्रव्ये तत्सम्भव इत्याशयेनाह—भूतेति। यथासंख्यमिति, व्यतिक्रान्तिभाक्त्वा भूतत्वमव्यतिक्रान्तिभाक्त्वाच्चाभूतत्वं वर्तमानत्वमित्यर्थः। द्रव्यक्रिया

करणं स्थितं गतञ्च यथासंख्यं व्यतिक्रान्त्यव्यतिक्रान्तिभाक्त्वाद्भिन्ना क्रिया द्रव्यभावः तद्यथा कृतः कटो देवदत्तेन, देवदत्तः कटकरणकाले करणोपरमे च कटस्यैकरूप एव, क्रिया तु वीरणसंयोगावस्थाया-मव्यतिक्रान्ता कटनिर्वृत्त्युत्तरावस्थायां व्यतिक्रान्ता, तथा कृतः कर्मणा विभाग इति द्वितीयमुदाहरणम् [illegible]मवयित्वात् क्रियायाः पचिभिदिवत् वैयाकरणसिद्धान्तेन तु 'कर्तुरीप्सिततमं कर्म' (पा० अ० १ पा० ४ सू० ४९) क्रियैव तु वैशेषिकस्य, इहाविशेषेण विभागहेतुः क्रिया विभागश्च सन्तत्यनुपरमात् द्रव्यवदवस्थित इति विवक्षितस्य विभागः कटकर्तृश्चलनात्मकस्य कर्मण ईप्सितत-त्वात् कर्म, चलनेन द्रव्यं देशान्तरं प्रापयित्वा क्रियत इति सा क्रिया व्यतिक्रामति विभागः कर्म च न व्यतिक्रामतः, शब्दार्थस्य पिण्डितत्वात्—नामत्वादित्यर्थः। न च व्यतिक्रमो निर्निमित्तो भवितुमर्हति, दृष्टश्च वर्त्तमानयोः कर्मविभागयोर्द्रव्ययोरव्यतिक्रमे करणस्य क्रियायाः विभागविपयस्य व्यतिक्रमः।

**न चैकस्मिन् व्यतिक्रमाव्यतिक्रमौ युगपद्भवतो विरोधात् तस्मादेतदनुमीयते—देवदत्ते द्रव्ये कटस्य कर्त्तरि कर्मणि वा कर्त्तरि चलने वीरणानां कटे वा कर्मणि करणलक्षणया प्रवृत्त्या तद[illegible]। द्विरूपतया भवितव्यमविच्छेदेन।**

(**नचेति**) न चैकस्मिन् व्यतिक्रमाव्यतिक्रमौ युगपद्भवतो विरोधात् प्रमाणान्तरापेक्षामन्तरेण,

योर्व्यतिक्रान्ताव्यतिक्रान्तत्वे दर्शयति—**तद्यथेति**, अत्रोदाहरणं वीरणसंयोजनादिक्रिया देवदत्तगता भाव्या। कर्तृकर्मोभयगत-क्रियाया निदर्शनमाह—**कृतः कर्मणेति**। **पचिभिदिवदिति** अधिश्रयणाद्यधःश्रयणपर्यन्तपाकक्रियायाः कर्तृसमवायित्वम्, काष्ठादिभेदनक्रियायास्तु कासांचिदुद्यमननिपतनादिक्रियाणां कर्तृसमवायित्वं द्वैधीभवनादीनाञ्च कर्मभूतकाष्ठादिसमवायित्वम्, एवमेव कृतः कर्मणा विभाग इत्यत्रापि कटादेर्देशान्तरप्रापणक्रिया कर्तृभूतकर्मगता विभजनक्रिया कर्मभूतविभागगता विज्ञेया। विभागस्य व्याकरणसिद्धान्तेन कर्मत्वं दर्शयति—**वैयाकरणेति**। कर्तुरीप्सिततमं कर्मेत्यस्य कर्तृगतव्यापारप्रयोज्यफलाश्रयत्व-प्रकारकेच्छोद्देश्यं कर्म भवतीत्यर्थः, कर्त्रा व्यापारद्वारेणाऽऽप्तुमिष्यमाणं कर्मेति यावत्, तच्च कर्म तादृशफलाश्रयभूतं द्रव्यं वा भवतु क्रिया वा न तत्राग्रहः 'क्रियां हि नाम लोके कर्मेत्युपचरन्ति कां क्रियां करिष्यसि, किं कर्म करिष्यसी'ति तथा 'क्रियापि क्रिययेप्सिततमा भवतीति' महाभाष्ये प्रोक्तत्वादिति। वैशेषिकमते तु क्रियैव कर्मेत्युच्यते द्रव्यगुणकर्मेत्यादौ कर्मपदेनोत्क्षेपणा-दिक्रियाया एव विवक्षितत्वादित्याशयेनाह—**क्रियैव त्विति**। प्रकृते कर्मपदेन विवक्षितं दर्शयति—**इहाविशेषेणेति** यद्विभागस्य हेतुभूतं तदेवात्र कर्मेत्युच्यते, तच्चाविशेषेण क्रियाऽपि विभागोऽपि भवति, फलपर्यन्तं क्रियाप्रवाहस्यानुपरमेण तत्प्रवाहस्य द्रव्यायमाणत्वात् कृदभिहितो भावो द्रव्यवत् प्रकाशत इति न्यायादिति भावः। कृतः कर्मणा विभाग इत्यत्र विभागक्रियायां कर्मलक्षणं घटयित्वा विभागतत्क्रिययोः व्यतिक्रान्त्यव्यतिक्रान्तिभाक्त्वं प्रदर्शयति—**विवक्षितस्य विभाग इति**, कटादेर्विभाग इत्यर्थः, कटकर्तृ चलनात्मकं कर्म, तेनेप्सिततमो विभागः, तत्कर्म भवति, स च विभागः कर्तृभूतेन चलनेन कर्मणा द्रव्यं देशान्तरं प्रापयित्वा क्रियत इति विभागकर्मलक्षणकर्मकर्तृसमवायिनी क्रिया व्यतिक्रामति फलानन्तरं व्युपरमात् क्रियासन्तानरूपा कर्मभूता द्रव्यायमाणा क्रिया न व्यतिक्रामतीति भावः। कर्मविभागगतान्यक्रियासद्भावे तद्व्यतिक्रमे च प्रमाणं दर्शयति—**न च व्यतिक्रम इति**, द्रव्यादिव क्रियाया द्रव्यायमाणक्रियातोऽपि भिन्नत्वात्तस्याश्च भवनरूपत्वादाख्यातवाच्य-क्रियात्वाच्च व्यतिक्रान्तत्वं युक्तमेव, दृष्टा च तस्या व्यतिक्रमो द्रव्यायमाणकर्मविभागसद्भावे, ओदननिर्वृत्तौ पचनस्येवेति भावः। अत एव कर्मणः कर्तृत्वे तस्य व्यतिक्रमाव्यतिक्रमौ विरुद्धौ धर्मौ प्रमाणमन्तरेण न भवेताम्, तस्मात् कर्मविभागवृत्तिकरणं व्यतिरिक्तमनुमेयमित्याह—**न चैकस्मिन्निति**, तथा च कर्मणि करणस्य व्यतिक्रमे कर्म भूतं भवति, अन्यथाऽभूतम्, द्रव्यन्तु सततभवनलक्षणप्रवृत्तिमत्तया भवदेवेति तत्र करणं प्रवाहतो नित्यं भवतीति भावः। एतदेव विशदयति—**न चैकस्मिन् व्यति-**

१ सि. क. 'दर्शितं क्रिया। २ सि. क. परिच्छिन्न[illegible]। ३ क. ××। ४ क. व्यतिक्रमाव्यतिक्रमो। ५ सि. क. न विमित्तो।

तस्मादेतदनुमीयते तद्यथा देवदत्ते द्रव्ये कटस्य कर्त्तरि कर्मणि वा कर्त्तरि चलने वीरणानां कटे वा कर्मणि करणलक्षणया प्रवृत्त्या भवितव्यमविच्छेदेन, सा च प्रवृत्तिः क्रिया तत्तद्भवनस्वरूपा—तस्मिन् द्रव्येऽतस्मिंश्च करणे भवनमस्याः प्रवृत्तेः स्वरूपं तया च [ व्यतिक्रमा ] व्यतिक्रमविभागतया द्विरूपतयाऽथेयमव्यवच्छिन्न[ा]कूटस्थया प्रवृत्तिभवनात्मिकया भवितव्यमिति ।

5 यथा देशान्तरसंयोगविभागफलं कर्म गमनं गन्तुः पदार्थान्तरम्, तयोः तत्कारणस्य च कर्मणो यावद्द्रव्यभावाभावात् पदार्थान्तरतायां सत्यां गन्तुर्गमनेन सम्बन्धः गच्छति देवदत्त इति, व्यतिलंघितगमनश्च गत इत्युच्यते, तथा गमनाद्यपि करणसम्बन्धमन्तरेण न भवतीति क्रिया सिद्ध्यति अतो भिन्नं स्वतत्त्वात्, यदि स्वतत्त्वस्याश्रयो न स्यात् कर्मेति न स्यात्, क्रियमाणाद्धि तत्कर्म करणव्यतिक्रमे च कृतमिति न स्यात्, तथाभवद्वा स्वसम्बन्ध-
10 व्यतिक्रममन्तरेण कृतमित्येतं व्यपदेशं न जनयेत् करणसम्बन्धाभावात्, आकाशादिवत् तथा च तद्भवकर्मसत्त्वात् करणसम्बन्धाच्च सदसत्कारणमिति नित्यं स्यात्, सद[कारणवन्नि]त्यमिति नित्यलक्षणयोगात् ।

यथा [ देशान्त ]रसंयोगेत्यादि, इदमधुना गन्तृगमनदृष्टान्तयोर्भवितृभवनदार्ष्टान्तिकयोश्च प्रागुक्तवद्भेदानभ्युपगमे दोषाभिधित्सयोच्यते, 'संयोगविभागाः [ च ] कर्मणाम्'
15 ( वैशे० अ० १ आ० १ सू० ३० ) कार्यं सामान्यम्, 'गुरुत्वप्रयत्नसंयोगानामुत्क्षेपणम्' ( वैशे० अ० १ आ० १ सू० २९ ) कार्यं सामान्यमिति वचनात् देशान्तरसंयोगं द्रव्यस्य देशान्तरविभागञ्च गमनकर्माऽऽरभते गुरुत्वादिकार्यश्चोत्क्षेपणं कर्म, तस्मात् संयोगविभागफलं कर्म गमनं गन्तुः पदार्थान्तरम्, तयोः संयोगविभागयोः तत्कारणस्य कर्मणो यावद्द्रव्यभावाभावात्, वैशेषिकमतवत् पदार्थान्तरतायां सत्यां गन्तुर्गमनेन सम्बन्धः, तत्सम्बन्धञ्चान्तरेण गमनं [न] भवति गच्छति देवदत्त

---

20 कर्मेति । देवदत्त इति देवदत्तेन कटः कृत इत्यत्र देवदत्ते द्रव्ये कर्तरि कटे कर्मणि, कर्मणा विभागः कृत इत्यत्र चलने कर्मणि कर्तरि च करणेन भवितव्यम्, तच्च करणं द्रव्ये क्रियायाश्च भवनरूपं व्यतिक्रमाव्यतिक्रमविभागमविच्छिन्नप्रवाहतया नित्यमिति भावः । तदेवं प्रवृत्तिलक्षणकरणसिद्धौ तस्य भिन्नत्वं साधयति—यथेति । भवितृभवनसामान्ये गन्तृगमनविशेषस्य दृष्टान्तीकृतत्वादादौ दृष्टान्ते प्रवृत्तेर्गन्तृगमनापेक्षया भेदं व्यवस्थापयितुं गमनस्वरूपं निदर्शयति—देशान्तरेति । अत इति, अन्यथानुपपत्त्या क्रियासिद्धौ क्रियातः कर्म भिन्नमित्यर्थः, कस्मात्तद्भिन्नमित्यत्र प्रतियोगिनमाह—स्वतत्त्वादिति, कर्मत्वादित्यर्थः, कर्त्तुः क्रिययेप्सिततमत्वं
25 हि कर्मत्वम्, क्रियैव कर्मत्वमिति, क्रियमाणत्वादिति भावः । कर्म प्रारब्धापरिसमाप्तक्रियाकलापरूपं कृदभिहितं द्रव्यायमाणम्, क्रिया तु तदन्तर्गतक्रियाविशेषरूपेति भाति । तदेव व्यावर्णयति—इदमधुनेति । संयोगेति, संयोगविभागेषु स्वोत्पत्त्यनन्तरोत्पत्तिकानपेक्षं कारणं कर्म संयोगं विभागं वेगं च जनयतीति संयोगविभागाः कर्मणां सामान्यभूतं कार्यमिति भावः । गुरुत्वेति, हस्तनिष्ठलोष्टादिगुरुत्वं लोष्टनिष्ठोत्क्षेपणादेः कर्मणः कारणम्, प्रयत्नवदात्मसंयोगो हस्तनिष्ठोत्क्षेपणादेः कारणमित्यर्थः । एवञ्च गमनकर्म गन्तुरुत्तरदेशेन सह संयोगं पूर्वदेशाद्विभागञ्च जनयति, गुरुत्वादिरूपञ्च कारणमुत्क्षेपणं कर्म जनयतीति गन्तृगमनयोर्भेद
30 इत्याह—देशान्तरेति । पदार्थान्तरत्वे हेतुमाह—तयोरिति, संयोगविभागकर्मणामव्याप्यवृत्तित्वादनित्यत्वाच्च न यावद्द्रव्यभावित्वम्, अत एव तेषां द्रव्यतोऽन्यत्वमन्यत्वेऽपि धर्मिग्राहकप्रमाणतस्तथैव तेषां सम्बन्धः, तस्माद्गमनं कर्म स्वकारणेभ्यो

---

१ सि. [illegible]व्यवच्छेद । २ सि. क. कारणं । ३ सि. क. °विसारजनक० ।

इति हि गमनसम्बन्धात् दृष्टम्, व्यतिलंघितगमनश्च गत इत्युच्यते, तस्मात्तद्व्यतिक्रममन्तरेण गतमिति न भवति, एष विधिः कर्मविशेषे गमने दृष्टः, तथा गमनाद्यपि करणसम्बन्धमन्तरेण न भवतीति क्रिया सिद्ध्यति अतो भिन्नं स्वतत्त्वात्–कर्मत्वात् द्रव्याद्वा [यदि] कर्मत्वस्य स्वतत्त्वस्याश्रयो न स्यात् कर्मेति न स्यात्, क्रियमाणाद्धि तत् कर्म करणे सति, करणव्यतिक्रमे च कृतमिति स्यात्, कर्मणि तु भिन्ने द्रव्यात् स्वतत्त्वाद्वा स्यादिति, तथा भवद्वेत्यादिना करणं भवदपि स्वसम्बन्धव्यतिक्रममन्तरेण कृतमित्येतं 5 व्यपदेशं न जनयेत् स च दृष्टः, किं कारणं न स्यादिति चेत् करणसम्बन्धाभावात्, किमिव ? आकाशादिवत्, ततः किं स्यात् ? तथा च तद्भवकर्मसत्त्वात् करणासम्बन्धाच्च सदसत्का[रण]मिति नित्यं स्यात् नित्यलक्षणयोगात्, किं नित्यलक्षणमिति चेदुच्यते 'सदकारणवन्नित्यम्' (वैशे० अ० ४ आ० १ सू० १) इति नित्यलक्षणं वैशेषिकमतेनेति, एवं तावत् कर्म गमनादि करण-सम्बन्धाद्भवतीत्युपपादितम् । 10

**यथा च कर्म क्रियया विना न भवति तथा करणमपि भवनव्यक्तिमन्तरेण नैव भवेत् तथा भवनसम्बन्धव्यतिक्रममन्तरेण भूतमिति न स्यात् ततश्च प्रागादिनिर्विशेषणः नास्त्य-भाव इत्यविशेषेणैकात्यन्ताभाव एव स्यात्, न भवेदेव सर्वम्, खपुष्पवत् असत्कारणत्वात्। अभूतः भवनसम्बन्धव्यतिक्रमत्वात् ।**

**यथा च कर्मेत्यादि,** यथा च गमनादिकर्म क्रियया विना न भवति उक्तविधिना तथा 15 करणमपि भवनव्यक्तिमन्तरेण–भवनक्रियाविर्भावेन विना नैव भवेत्–न भवितुमर्हतीत्यर्थः, तथा भवनसम्बन्धव्यतिक्रममन्तरेण भूतमिति न स्यात्–तत्सम्बन्धे भवतीति भवति, तत्सम्बन्धव्यतिक्रमे च भूतमिति पूर्वपूर्वोत्तरोत्तरकार्यकारणभावेनेति क्रियासम्बन्धप्रबन्धं प्रदर्शयति, ततश्च प्रागादि

यदा द्रव्ये समुदेति तदैव देवदत्तो गच्छतीत्युच्यते, तदुपरमे च गत इत्युच्यते तस्मात् क्रियायाः प्रध्वंसलक्षणो व्यति-क्रमोऽवश्यं वाच्य इति भावः । एवं गमनमपि करणसम्बन्धनेन भवतीत्याह–**तथेति** तथा च करणं क्रियातो द्रव्यतश्च भिन्न- 20 मिति भावः । क्रिययाऽऽप्तुमिष्यमाणं हि कर्म तस्मात् क्रिया कर्मणस्तत्त्वम् तदेव कर्मत्वमुच्यते ततश्च यदि कर्म कर्मत्वस्याश्रयो न स्यात् कर्मणः स्वरूपहान्या कर्मैव न स्यात् अक्रियमाणत्वात्, एवञ्च कर्म क्रियासम्बन्धात् भवति तद्व्यतिक्रमे च कृतमिति भवतीति क्रियातो द्रव्यतश्च कर्म भिन्नमित्याह–**यदि कर्मत्वस्येति** । कर्मणि भवत् करणं स्वसम्बन्धेन तत्र कर्मव्यवहारं व्यतिक्रमेण च कृतमिति व्यवहारं जनयतीत्याह–**करणं भवदपीति** ।आकाशादौ करणसम्बन्धाभावाद्यथा कृतादिव्यपदेशो न भवति तथा तत्सम्बन्धाभावे कर्मणोऽपि कृतादिव्यवहारो न स्यादित्याह–**आकाशादिवदिति** । तथा चापत्तिमाह–**तथा** 25 **चेति** करणसम्बन्धाभाव इत्यर्थः, क्रियाजन्यकर्मणः सद्भावात् पुनः करणसम्बन्धाभावात् सत्त्वे सत्यकारणत्वान्नित्यत्वं कर्मणः प्रसज्यते, सदकारणवन्नित्यमिति नित्यलक्षणसद्भावादिति भावः । अथ कर्मवत् क्रियाया अपि भवनमन्तरेणाभावताप्रसङ्गात्तस्या अपि भवनमावश्यकम्, तस्याश्च भवनसम्बन्धतद्व्यतिक्रमाभ्यां भवति भूतमिति व्यपदेश्यत्वमिति समर्थयति–**यथा चेति,** विशेषस्य सामान्यमन्तरेणासम्भवादिति भावः । एतदेव स्फुटीकरोति–**यथा च गमनादीति** । किं करोति इति प्रश्ने गच्छतीति गमनं करोतीति प्रतिवचनात् गमनक्रियासामानाधिकरण्यं यथा करोतेः तथा किं करोतीति प्रश्ने न करोति 30 किन्त्वास्ते इति भवनक्रियया प्रतिवचनात्तथा यां काञ्चित् क्रियां कुर्वन्नास्ते यदा तदाऽऽस्तेऽभ्रेति प्रतिवचनाच्च करोतेर्भवन-क्रियासामानाधिकरण्यात् करणस्यापि भवनं सत्यमीति भावः । **पूर्वपूर्वेति,** गमने कर्म कारणं कर्मणि च भवनं कारणमिति,

१ सि. क. अन्यतो । २ सि. क. न स्यात् । ३ सि. क. तच्च दृष्टम् ।

निर्विशेषणं इत्यादि भवनसम्बन्धे तद्व्यतिक्रमे चासति प्राक्प्रध्वंसेतरेतरसंयोगाद्यभावाभावात् अभावभेदरहितो नास्त्यभाव इत्यनर्थान्तरमित्यविशेषेणैकात्यन्ताभाव एव स्यात्, भवनसम्बन्धव्यति-क्रमाभावात्, खपुष्पवदिति, यथा खपुष्पं भवनसम्बन्धाभावात् तद्व्यतिक्रमाभावाच्च न भवेदेवं सर्वं घटादि स्यादिति, असत्कारणत्वाद्वा—तदा हि वस्तुनो भवनकारणं योऽसौ करणसम्बन्धो भवन-
5 सम्बन्धश्च स नास्ति तद्व्यतिक्रमो वेत्यसत्कारणभावादकारणत्वादत्यन्ताभाव एव स्यात् खपुष्पवत् सर्वं घटादि तदुपसंहृत्य हेतुमाह—अभूनभवनसम्बन्धव्यतिक्रमत्वादिति, गतिस्थित्यादिकरणभवनसम्बन्ध-व्यतिक्रमस[illegible]भावात् गच्छति तिष्ठति करोति भवति गतस्थितकृतभूतव्यक्त्यात्मकं देवदत्तवस्तु भवदुप-लभ्यते [न] अन्यथेति ।

स्यान्मतं भवनस्य सततसंप्रवृत्तस्य [न] व्यतिक्रम इत्यत्रोच्यते—

10 **व्यतिक्रमश्च भवति तृणकर्मादौ कटविभागादिभवनभूततायां, तृणं कटो भवति गमनकर्म विभागो भवति संयोगश्चान्येनेति कथं तृणं कटो भवति, कर्म विभागो भवतीत्येत-दुच्यते? ननूक्तं द्रव्यं क्रिया च द्वयमेव सर्वमिदमिति, तस्य भूतता व्यतिक्रमः ।**

(व्यतिक्रमश्चेति) व्यतिक्रमश्च तृणकर्मादौ—तृणतन्त्वादीनां कर्म तृणकर्म, आदिग्रहणा-

नहि गमनक्रिया कर्तारं कर्म करणादि विना भवतीति भावः । भवनसम्बन्धाद्भवतीति भवनसम्बन्धव्यतिक्रमाच्च कर्म भूतमिति
15 व्यपदिश्यते तत्र भवनसम्बन्धात् पूर्वं प्रागभावः भवनसम्बन्धे भावः भवनसम्बन्धव्यतिक्रमे च प्रध्वंसाभावो भवति अत एव च क्रिया भूता भवति भविष्यतीति कालत्रयसम्बन्धव्यपदेशं लभते, एवञ्च भवनसम्बन्धो यदि क्रियाया नोपेयते तर्हि भावस्यासत्त्वादभाव एव प्रसज्यते, सोऽप्यभावः केवलमत्यन्ताभाव रूप एव न तु प्रागभावादिरूपः, भवनसम्बन्ध-बलेन तत्सम्बन्धस्य प्राक्कालपश्चात्कालापेक्षया तद्भावादित्याशयेनाह—**भवनसम्बन्ध इति** अभावभेदरहितः—अभावस्या-वान्तरभेदै रहितः केवलमत्यन्ताभाव एक एव स्यादित्यर्थः । एवञ्च भावस्यैवाभावात् सर्वे घटादयः खपुष्पवन्न भवेयुरित्याह—
20 **यथा खपुष्पमिति** । हेत्वन्तरमाचष्टे—**असत्कारणत्वाद्वेति**, सतः कारणाभावादित्यर्थः, सद्रूपतायां हि भवनसम्बन्धः करणसम्बन्धस्तद्व्यतिक्रमश्च कारणम्, नहि क्रियाया भवनस्य वा सामान्यविशेषलक्षणपरिणामस्याभावे द्रव्यं नाम किञ्चिदस्ति तस्मात् कारणाभावात्, सर्वं घटादि न भवेदेव खपुष्पवदिति भावः । अभवने हेतुमुपसंहरति—**अभूतेति** । वस्तुनः करण-भवनसम्बन्धव्यतिक्रमौ निदर्शयति—**गतिस्थित्यादीति**, देवदत्तो गच्छति तिष्ठति करोतीति करणसम्बन्धे भवतीति भवनस-म्बन्धे, गतः स्थितः कृत इति करणसम्बन्धव्यतिक्रमे भूत इति भवनसम्बन्धव्यतिक्रमे एक एव देवदत्तो भवदुपलभ्यते,
25 तत्र तत्सम्बन्धव्यतिक्रमाभावे देवदत्तोऽसन्नेव भवेदिति, अत्रेदं तत्त्वम् पचादयो धातवः भाववचनाः, भवति पचति, भवति पश्यति, भवत्यपाक्षीदिति भवतिना सामानाधिकरण्यात्, आत्मभरणवचनो हि भवतिः, आत्मभरणञ्च षड्भाववि-कारानुस्यूतं सदिति प्रत्ययवेद्यं रूपम्, तच्च केवलान्वयि, तथा चाश्रये वस्तुनि पचिक्रियाबोधे आत्मभरणस्यापि तत्र सत्त्वेन तद्वाचकत्वं पचादीनाम्, यथा शुक्ले गुणे रूपत्वसत्त्वेन शुक्लादिशब्दानां रूपवाचकत्वम्, एवञ्च भवति पचतीत्यस्य यत्कर्तृका पचिक्रिया तत्कर्तृका सत्तेति बोधः, पचादिक्रियाः भवतिक्रियायाः कर्त्र्यो भवन्तीति वा बोधः, अत्रार्थे साध्यसाधनभावः
30 सम्बन्धः, तिर्ङभिहितभावस्य क्रियया साध्यसाधनातिरिक्तसम्बन्धाभावात् षड्विकारानुस्यूतभाववाचकत्वादेव भवतेरपि भाव-वचनत्वम्, तत्रैकैकविकारापेक्षया च भवत्यर्थक्रियाया अपि भूतादित्वमिति । ननु भवनं हि सततप्रवृत्तिरूपं तस्य कथं व्यति-क्रम इत्याशङ्कते—व्यतिक्रमश्चेति, प्रतिकलमन्यान्यपरिणामप्रवाहस्यैव सततप्रवृत्तिरूपतयाऽऽविर्भावतिरोभावव्यतिरेकेण स्थितिरूपप्रव्यतताया असम्भवेन तृणादिपूर्वभावव्यतिक्रमेणैव कटाद्युत्तरभावस्योदयात् तृणादिभावस्तदानीं व्यतिक्रान्त एव भवतीति नानुपपत्तिरिति भावः । **आदिग्रहणादिति**, कर्मादावित्यादावादिग्रहणादित्यर्थः, विभागादित्यत्रादिग्रहणात् घटविभागसंयोगा-

१ सि. क. °विशेषणमि° । २ सि. क. °तरसक्लिसं° । ३ सि. क. स्यात् भावन° । ४ सि. क. कारण° ।

संयोगः यथासंख्यं कटविभागादिभवनभूततायां—अत्राप्यादिग्रहणात् पटविभागसंयोगादयो गृहीताः, भवनस्य भूततायामेवंलक्षणस्य भवति व्यतिक्रमः, तृणं कटो भवति, गमनकर्म विभागो भवति संयोगश्चान्येन, स्यान्मतं कथं तृणं कटो भवति कर्म विभागो भवतीत्येवदुच्यते इति, अत्रापि ननूक्तं द्रव्यं क्रिया च द्वयमेव सर्वमि[त्य]ादि, संयोगादिसर्वगुणक्रियात्वप्रतिपादनात्, तस्य भवनस्य भूतता व्यतिक्रम एव । 5

एवञ्च भावक्रियाश्रयोऽयं कारकाणां कर्मादिभावः न नि[य]तरूपः, न हि किञ्चिज्जातिविशेषयोगा[त्] नियतम्, किं तर्ह्यनियतशक्तिविषय[ः] तदेव हि द्रव्यमन्यया क्रियया कर्म भवति, अन्यया करणम[न्य]याऽधिकरणमित्यादि, तस्मात् सर्वप्रभेदनिर्भेदं बीजं वस्तु द्रव्यं तत्त्वम्, तद्भेदिभवनव्यक्तिक्रिया ।

एवञ्चेत्यादि, एवंकृत्वा भावक्रियाश्रयः—भाव एव क्रिया, द्रव्यं भावः स एव च क्रिया, 10 द्रव्यस्य वा क्रिया तदाश्रयः द्रव्यभवनाश्रयोऽयं कारकाणां कर्मादिभावः कर्मकरणादिभावः न नियतरूपः विचित्रक्रियाभवनसम्बन्धाद्भवति देवदत्तः पचत्योदनं काष्ठैः स्थाल्याम्, ओदनो भवति, काष्ठानि ज्वलन्ति—संधुक्षन्ति स्थाली धारयति अधिश्रित[ा] इत्येवमादिदर्शनात्, न हि किञ्चिज्जातिविशेषयोगात् गोत्वादियोगादिवत् कर्मत्वकरणत्वाधिकरणत्वादियोगात् कर्मैवेदं करणमेवाधिकरणमेव नियतं नान्यदपि

दयो ग्राह्याः, यथासंख्यमित्यस्य तृणकर्मसंयोगाभ्यां कटविभागादिभवनम्, तन्तुकर्मसंयोगाभ्यां पटविभागसंयोगादिभवनमित्यर्थः, एवञ्च, तृणसंयोगात् कटो भवति, तृणकर्मणा कटविभागाः, तन्तुसंयोगात् पटः, तन्तुकर्मणा पटविभागः तन्तूनां देशान्तरसंयोगश्चेति कटादिभवने तृणादौ प्रवृत्तिप्रवाहो व्यतिक्रान्तः, इदानीं कटादावेव तस्य भवनादिति भावः । अथ कूटस्थनित्यं द्रव्यं कथं कटो भवति, तदभावे वा कथं कर्म विभागो भवतीत्याशंक्य मायाकारपताकिकावद्व्याप्त् सर्वप्रभेदनिर्भेदाद्बीजभूतात् क्रियात्मनां पचिपठिगम्यादीनां रूपाद्यात्मनां मूलकीलकादीनाञ्चाभिव्यक्तेः समर्थितत्वादिति समाधत्ते—स्यान्मतमित्यादिना । द्रव्यादनन्यान्यभवनसामर्थ्यादेकमेव द्रव्यं नानारूपं भवतीत्याह—एवञ्चेति । भावक्रियाश्रय इत्यस्य व्याख्याभेदानाह—भाव एव क्रियेति, अनेन सामान्यविशेषक्रिययोरभेदं दर्शितम्, द्रव्यं भाव इति, अनेन द्रव्यक्रिययोरनन्यत्वं दर्शितम्, द्रव्यस्य वेति, अनेन द्रव्यक्रिययोरन्यत्वं दर्शितम् । तात्पर्यमाह—द्रव्यभवनेति, द्रव्यनिष्ठक्रियाजनकत्वशक्तिरेव कारकं साधनमिति चोच्यते, सिद्धस्य द्रव्यस्य स्वरूपतः क्रियाजनकत्वानुपपत्त्या शक्त्याविष्टस्यैव तत्त्वं वाच्यमिति शक्तिरेव साधनम्, तत्र कर्तृकर्मणोः स्वाश्रयसमवेतक्रियाजनकता, करणादीनामाश्रयान्तरसमवेतक्रियाजनकता, किञ्च द्रव्यस्य कारकत्वे तस्यैकरूपत्वेन कार्यवैचित्र्यानुपपत्तिः, दृश्यते च घटं पश्य घटेन जलमाहर घटे जलं निधेहीत्यादौ कार्यवैचित्र्यम्, सर्वस्य च सर्वशक्त्याश्रयत्वेन कदाचित् कस्यचिद्विवक्षया तत्तद्विचित्रानेककार्योपपत्तिः, क्वचिच्छक्त्याविष्टद्रव्यस्यापि दण्डो घटसाधनमिति साधनत्वेन व्यवहारः, शक्तिशक्तिमतोरभेदस्यापि सत्त्वात्, शक्त्या करोतीत्यादौ च शक्तेरपि द्रव्यायमाणतया शक्त्यन्तरयोग इति भावः । देवदत्त इति, देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्यादावविशेषेण पचतेर्धातोः सर्वकारकव्यापारस्वीकारादखिलकारकव्यापाराभिधायी धातुरिति दर्शितम् । अथ कर्मादिभूतानामपि व्यापारविशेषेषु कर्तृत्वं प्रदर्शयति—ओदनो भवतीति अत्र कर्मैव कर्ता ओदनः, काष्ठानि ज्वलन्ति, काष्ठानि पचिक्रियाकरणान्यपि स्वव्यापारे ज्वलने स्वतंत्रत्वात् कर्तृणि, स्थाली धारयति, पचिक्रियाया अधिकरणमपि स्थाली स्वव्यापारे धारणे स्वतंत्रत्वात् कर्त्रीति कर्मादीनि न नियतरूपाणीति भावः । गोत्वघटत्वादिवत् कर्मत्वादीनि न प्रतिनियतजातिरूपाणि येन कर्मत्वसत्त्वे करणत्वादयो न भवेयुरित्याशयेनाह—नहि किञ्चिदिति । यदि कर्मत्वादयो न [जातिरूपास्त]र्हि किमात्मका इत्यत्राह—अनियते ते क्रियाजनकत्वशक्तिरेव 15 20 25 30

१ क० अभोच्यत इत्यधिकं दृश्यते ।

भवतीति, किन्तर्हि ? अनियतशक्तिविषयत्वात् शक्तीनां कारकत्वात्, तदेव हि द्रव्यमन्यया क्रियया प्रमार्ष्टि नेत्रमिति नेत्रादि कर्म भवति, अन्यया करणं नेत्रेण पश्यतीति, अन्ययाऽधिकरणं नेत्रे अञ्जनं तिष्ठतीति, तस्मात् सर्वप्रभेदनिर्भेदं बीजं वस्तु द्रव्यं तत्त्वं तद्भेदिभवनव्यक्तिः क्रिया ।

यदि द्रव्यवत् क्रियापि वस्तुनस्तत्त्वं स्यात् ततस्तया विना नैव स्यात् तत्त्वात्तदात्मत्वात्त-

5 त्स्वरूपत्वात्, न तत्तेन विना भवति देवदत्तबालादिवत्, घटरूपादिवत्, दृष्टञ्चैतद्गमनादि-क्रियया विनापि देवदत्ताख्यं वस्तु, अन्तरेणापि तु क्रियां भवत्येव वस्तु दोषादर्शनात् ततोऽन्यत्, तदन्तरेणापि भावात् यद्यदन्तरेणापि भवति तत्ततोऽन्यत्, घटपटवत् ।

यदीत्यादि, एवमनिच्छतो दोषो यदि द्रव्यवत् क्रियापि वस्तुनस्तत्त्वं आत्मा स्वरूपं स्यात् ततस्तया विना- क्रियया नैव वस्तु स्यात्, तत्त्वात्तदात्मत्वात्तत्स्वरूपत्वात्, यद्यत्तत्त्वं य आत्मा स्वरूपं

10 वा न तत्तेन विना भवति देवदत्तबालादिवत्, यथा देवदत्ततत्त्वाः बालादयोऽवस्थाविशेषाः क्रमभाविनो न तेन विना भवन्ति तथैतदपि वस्तु क्रियया विना न स्यात्, घटरूपादिवदिति. घटतत्त्वा रूपादयो युगपद्भाविनस्तेन विना न भवन्ति तथा क्रियया विना तद्वस्तु न स्यादिति विशेषः, दृष्टञ्चैतद्गमनादि-क्रियया विनापि देवदत्ताख्यं वस्त्वित्यनिष्टापादनमेतत्, [1]दोषादर्शनादपि वस्तु भवतीत्येतदर्थसाधनमाह-अन्तरेणापि तु क्रियां भवत्येव वस्तु तस्या[2] विनाभावे दोषादर्शनात्[3]ततोऽन्यत् क्रियातोऽन्यद्वस्त्विति प्रति-

15 पत्तव्यम्. न केवलं दोषादर्शनादेव[4], किं तर्हि ? अन्यत्वहेतुरप्यस्तीति, तत आह-तदन्तरेणापि भावात्, यद्यदन्तरेणापि भवति तत्ततोऽन्यत् घटपटवत्, यथा घटः पटमन्तरेण भवन्नन्यः पटश्च घटमन्तरेणापि भवंस्तथाऽन्यः, तथा क्रियामन्तरेणापि भवद्वस्तु ततोऽन्यदिति ।

तन्निदर्शनान्तरं विचारान्तरास्पदमप्याह[5]—

दृश्यते हि देवदत्ते गच्छति वृत्तिं करोति यज्ञदत्त इति, अत्र यज्ञदत्तस्य वृत्तिकारणं

20 गमनं देवदत्ताख्यवस्तुनो द्रव्यपरमार्थः तथा क्रियापि स्यात्, गमनवत्क्रियात्वात् स्थानमपि

कारकत्वं कर्मत्वादयोऽपि कर्तुरीप्सिततमं कर्मेत्यादि शास्त्रबोधितकर्मादिसंज्ञाज्ञाप्या द्रव्यगताः शक्तिविशेषा एव, ताश्च शक्तयः सर्वत्र द्रव्ये प्रतिनियतास्तत्तत्क्रियासमभिव्याहारे व्यज्यन्त इति भावः । तत्र निदर्शनमाह-**तदेव हि द्रव्यमिति** । तदेवं द्रव्यक्रियास्वरूपं पूर्वोदितं दर्शयति-**तस्मादिति** । अथ द्रव्यक्रिययोरनन्यत्वैकान्ते दोषमादर्शयितुमाह-**यदीति** । क्रियाद्रव्ययोरभेदे क्रियाया द्रव्यस्य स्वरूपत्वादात्मत्वाच्च क्रियया विना कदाचिदपि द्रव्यं न भवेत्, यथा क्रमभाविनीनां बालाद्यवस्था-

25 नामात्मभूतेन द्रव्येण विना न सत्त्वम्, यथा वा युगपद्भाविनां रूपादीनां स्वात्मभूतेन घटेन विना, दृश्यते च क्रियया विनापि देवदत्तादिद्रव्यं गमनादिव्युपरमे, तस्मादन्यैव सेत्याह-**यदि द्रव्यवदिति** । क्रमभाविदृष्टान्तं घटयति-**यथेति** । सहभाविदृष्टान्तं घटयति-**घटतत्त्वा इति** । **विशेष इति** दृष्टान्तद्वयप्रदर्शने क्रमयुगपद्भावित्वमेव विशेष इति भावः । **अन्तरेणापि त्विति,** क्रियामन्तरेणापि द्रव्यस्य सद्भावे कस्यापि दोषस्याभावाद्द्रव्यादन्या क्रियेति भावः । **तस्या विना भाव इति** क्रियाया विना द्रव्यस्य भाव इत्यर्थः । तदन्तरेणापि द्रव्यसिद्धौ तमेव हेतूकृत्यान्यत्वं साधयति-**तदन्तरेणापीति** ।

30 क्रियामन्तरेणापीत्यर्थः । अत्रैव विचारान्तरास्पदभूतं निदर्शनान्तरमादर्शयति **दृश्यते हीति**, यत्र स्थाने देवदत्त आसीत्

१,३,४ सि. क. दोषदर्श० । २ सि. क. तस्माद्विना । ५ सि. क. स्याह० ।

**परमार्थ इति प्रागेव स्थानक्रियया गमनविरोधिन्या यदि देवदत्तोऽवरुद्धः स्यात्ततश्च तस्य गमनं नैव स्यात्, देवदत्तत्वावरुद्धदेवे यज्ञदत्तत्ववत्, गमनक्रियापरमार्थदेव तस्य वा स्थानं नैव स्यात्कदाचिदपि, गमनेनावरुद्धत्वात्, देवदत्तत्वावरुद्धे यज्ञदत्तत्ववदेवेति यानस्थानयो-रभावाद्यज्ञदत्तस्य वृत्त्यवृत्ती स्याताम्, यानाभावात्तावत् पूर्ववद्वृत्तेर्यज्ञदत्तस्याभावः, देवदत्तस्य वा गमनकालेऽपि भावे सततमवृत्तिर्वा स्यादिति, एवं स्थानाभावादपि तथेति ।** 5

(**दृश्यते हीति**) दृश्यते हि देवदत्ते गच्छति[1] वृत्तिं करोति यज्ञदत्त इति, अत्र यज्ञदत्तस्य[3] वृत्तिकारणं गमनं देवदत्ताख्यवस्तुनो द्रव्यपरमार्थस्तथा क्रियापि स्यात्, गमनवत्क्रियात्वात् स्थानमपि परमार्थ इति प्रागेव स्थानक्रियया गमनविरोधिन्या यदि देवदत्तोऽवरुद्धः स्यात्ततश्च तयाऽवरुद्धत्वात् तस्य देवदत्तस्य गमनं नैव स्यात्—कदाचिदपि न गच्छेद्देवदत्त इत्यर्थः, देवदत्त[त्व]ावरुद्धदेवे यज्ञदत्त[त्व]-वत्, यथा देवदत्ताख्यं वस्तु देवदत्तत्वेनावरुद्धमिति तद्विरोधिनो यज्ञदत्तत्वस्यानवकाशाद्यज्ञदत्तत्वं 10 नैव जातु भवति तथा देवदत्ते स्थानेनावरुद्धे गमनं नैव जातु स्यादिति, अथ मा भूद्यज्ञदत्तवृत्तिकारणस्य देवदत्तस्य गमनस्याभाव इति गमनतत्त्व एव देवदत्त इष्यते तथापि गमनक्रियापरमार्थदेवदत्तस्य [वा] स्थानं नैव स्यात्कदाचिदपि, गमनेनावरुद्धत्वाद्देवदत्तस्य, देवदत्तत्वावरुद्धे देवदत्ते यज्ञदत्तत्ववदेव, इतिशब्दो हेत्वर्थे, ततश्च हेतोर्यानस्थानयोरभावात्, यानाभावात्तावत् पूर्ववद्वृत्तेः—यथा प्राग्गमनोत्पत्तेर्ग-मनासत्त्वाद्वृत्त्यभावः[6] तथा गमनाभावाद्गच्छत्यपि देवदत्ते यज्ञदत्तवृत्त्यभावः, देवदत्तस्य गमनकालेऽपि 15 भावे यथा यज्ञदत्तस्यावृत्तिर्भवत्येवं सततमवृत्तिर्वा स्यादिति, एवं स्थानाभावादपि वृत्त्यवृत्ती स्यातामुक्त-न्यायेन तथेति—तेन प्रकारेण प्रोक्तोपपत्तिक्रमप्रापिताभावप्रकारेण यानस्थानयोरिति ।

---

तत्रैव यज्ञदत्तस्य वृत्तिर्देवदत्तस्य गमने सत्येव भवति, एकत्रैकदा द्रव्यद्वयस्थित्यसंभवात्, तथा च तत्र यज्ञदत्तस्य वृत्तेः कारणं देवदत्तस्य गमनमेव, तदन्तरेण तदसम्भवात्, तच्च गमनं यदि देवदत्तद्रव्यस्वरूपमेव तर्हि तद्वत्, गमनात् प्राक् देवदत्तस्य स्थितिक्रियापि देवदत्तद्रव्यस्वरूपैवेति तया क्रियया देवदत्तस्यावरुद्धत्वात् तस्य गमनं कदापि न भवेत्, गमनविरोधिन्या 20 स्थितिक्रियया तस्यावरुद्धत्वात्, देवदत्तत्वेनावरुद्धे देवदत्ते यज्ञदत्तत्वस्य तद्विरोधिनोऽनवकाशवत्, दृष्टश्च देवदत्तस्य कदाचिद्ग-मनं कदाचिच्च स्थितिरतः क्रिया न देवदत्तात्मिकेति भावः । अमुमेव दृष्टान्तं वर्णयति—**अत्र यज्ञदत्तस्येति**, तथा क्रियापि-गमनवत् क्रियासामान्यमपि देवदत्तस्वरूपं स्यादित्यर्थः । गमनवत् स्थानमपि गमनवतः क्रियेति तदपि देवदत्तस्वरूपमिति प्रथममेव देवदत्तो गमनविरोधिस्थानक्रियाऽवरुद्ध इति तस्य कदापि गमनं न स्यादित्याह—**गमनवदिति** । दृष्टान्तमाह—**देवदत्तत्वेति** । स्थानेन स्थितिक्रियया पूर्वप्रवृत्तयेत्यर्थः । गमनतत्त्व एव यदि देवदत्तस्तदा स्थितिस्तस्य कदापि न भवे- 25 दित्याह—**अथ मा भूदिति** । तथाऽदर्शनाद्गमनतत्त्वत्वे देवदत्तस्य स्थित्यभावः स्थितितत्त्वत्वे गमनाभाव इत्युभयाभाव इत्याह—**ततश्चेति** । देवदत्तस्य यानाभावात् यज्ञदत्तस्य वृत्त्यवृत्ती तावदुपपादयति—**यानाभावादिति**, देवदत्तस्य पूर्ववद्वृत्तेः, यथा हि तस्य गमनात् पूर्वं वृत्तिरासीत् तथैव गमनकालेऽपि देवदत्तस्य स्थितिक्रियास्वरूपत्वाद्वृत्तेर्यज्ञदत्तवृत्तिकारणगमनस्या-भावाद्यज्ञदत्तस्य वृत्त्यभावः स्यात्, देवदत्तस्य गमनकालेऽपि यज्ञदत्तस्य यद्यवृत्तिरेवेष्यते तर्हि सततं तस्यावृत्तिरेव स्यात् देवदत्तस्य गमनेऽगमनेऽपि तत्सत्त्वादिति देवदत्तयानाभावाद्यज्ञदत्तवृत्त्यवृत्ती भवेतामिति भावः । एवं स्थानाभावादपि यज्ञदत्तस्य 30 वृत्त्यवृत्ती भावयेदित्याह—**एवं स्थानाभावादपीति**, तदेवं देवदत्तस्य यानस्थानाभावावभ्युपगम्य यज्ञदत्तस्य वृत्त्यवृत्ती भाविते ।

---

१ सि. क. °दत्तेन । २ सि. क. त्यवृ० । ३ सि. क. °स्यावृत्ति० । ४ सि. क. °र्वति० । ५ सि. क. °भावतात० । ६ सि. क. °वृत्त्यभावः । ७ सि. क. °दत्तवृत्य० । ८ सि. क. °भावेऽपि ।

तथा गमनात्मकत्वादस्य देवदत्त एवास्य [वृ]त्तिनिमित्तमिति याव[द्दे]वदत्तं [वृ]त्तिप्रसङ्गः, [तदा]त्मत्वात्तत्कालवत् , तस्य गतिपरमार्थत्वावस्थानाच्च, स्थित्यात्मकत्वाद्वाऽस्य गच्छत्यपि देवदत्ते यज्ञदत्तावृत्तिरेव सदा स्यात्, स्थानकालवत्, एवं तावद्देवदत्तगतिस्थितिविषययज्ञ-दत्तवृत्त्यवृत्तिविचारद्वारेण दोषा उक्ताः । इदानीं यज्ञदत्त[वृ]त्त्यवृत्तिविषयोऽपि विचारस्तथैव 5 कर्त्तव्यः, अत्रापि यदि द्रव्यपरमार्थवदित्यादिग्रन्थो याव[द्वृ]त्त्यवृत्ती य[ज्ञ]दत्तशब्दोच्चारणेन यथासम्भवं योज्यः, प्रकारान्तरेण तु यज्ञदत्तवस्तुस्वरूपवद्वृत्त्यवृत्तिक्रिययोः तदव्यतिरिक्त-त्वात् देवदत्तयानस्थानयोरपि तदव्यतिरेकाद्यावद्देवदत्तगमनस्थानञ्च [वृ]त्तिरेवावृत्तिरेव वा स्यात्, विरोधिनः क्रि[या]न्तरस्याभावात् पूर्ववत् ।

तथागमनेत्यादि, गमनस्थानभावावभ्युपगम्यापि दोष उच्यते, तत्र गमने तावद्यथा देवदत्ते 10 गच्छति वृत्तिरस्य तथा तदात्मत्वाद्यावद्देवदत्तं वृत्तिप्रसङ्गः, यथा देवदत्तगमनकाले यज्ञदत्तस्य वृत्तिहेतु-र्देवदत्तो गमनात्मत्वात् तथा यावज्जीवमात्मनो यावदायुर्यज्ञदत्तवृत्तिहेतुरेव स्यात्, गमनात्मत्वात् तत्कालवदिति, तस्य—देवदत्तस्य गतिपरमार्थत्वावस्थानाच्च—देवदत्तस्य गमनात्मनः पूर्वोत्तरकालतुल्यत्वात्, अतस्तद्विवरणार्थमाह—देवदत्त एवास्य वृत्तिनिमित्तमिति, इतिशब्दो हेत्वर्थे, यतो देवदत्तो गमनात्मैव तस्मात् सततं वृत्तिप्रसङ्गः, एवं तावदयं स्थानविरोधिन्या गतेर्भावेऽभिहितो दोषः, गतिविरोधिन्याः स्थितेरेव 15 वा भावे स्थित्यात्मकत्वाद्वाऽस्य—देवदत्तस्य गच्छत्यपि देवदत्ते यज्ञदत्तावृत्तिरेव सदा स्यात् स्थानकाल-वद्देवदत्तसद्भावादिति, एवं तावद्देवदत्तगतिस्थितिविषययज्ञदत्त[वृत्त्य]वृत्तिविचारद्वारेण दोषा उक्ताः, इदानीं यज्ञदत्त[वृत्त्य]वृत्तिविषयोऽपि विचारस्तथैव कर्त्तव्यः अत्रापि यदि द्रव्यपरमार्थवदित्यादिग्रन्थो [यावत्] वृत्त्यवृत्ती यज्ञदत्तशब्दोच्चारणेन यथासम्भवं योज्यः प्रकारान्तरेणापि तु यज्ञदत्तादि यावत् वृत्तिरवृत्तिर्वा, यज्ञदत्तद्रव्यत्वं हि वस्तुस्वरूपं वृत्त्यवृत्तिक्रिये च तदव्यतिरिक्ते ततो देवदत्तयानस्थान-20 योरपि देवदत्ताव्यतिरेकात्तद्[३]यावद्देवदत्तगमनस्थानञ्चेति वृत्तिरेवावृत्तिरेव वा स्यात्, यज्ञदत्ततत्त्ववत्, विरोधिनः क्रियान्तरस्याभावात् पूर्ववत् ।

---

अथ तस्य यानस्थानात्मकत्वमभ्युपेत्य दोषमाह—तथा गमनात्मकत्वादिति देवदत्तस्य गमनात्मकत्वे यथा गच्छति यज्ञदत्तस्य वृत्तिः, कारणसत्त्वात् तथा तस्यागच्छतोऽपि वृत्तिप्रसङ्गेन यावद्देवदत्तं यज्ञदत्तस्य वृत्तिरेव भवेत् । दृष्टान्तमाह—तत्काल[वदि]ति यज्ञदत्तस्य सदा वृत्तौ हेतुमाह—तस्य देव[द]त्तस्येति । तद्व्याचष्टे—यतो देवदत्त इति । देवदत्तस्य 25 स्थित्यात्मकत्वे यथाऽगच्छति तस्मिन् यज्ञदत्तस्यावृत्तिस्तथा गच्छत्यपि सदाऽवृत्तिरेव यज्ञदत्तस्य स्यादित्याह—[स्थित्या]त्मकत्वा-द्वेति । तदेवं देवदत्तगमनं यज्ञदत्तवृत्तौ कारणमभ्युपेत्य देवदत्तस्य यानस्थानाभ्यां यज्ञदत्तस्य वृत्त्यवृत्ती विचारिते । अथ यज्ञदत्तस्य वृत्तिर्देवदत्तगमने कारणमभ्युपेत्य यज्ञदत्तस्य वृत्त्यवृत्तिभ्यां देवदत्तस्य गमनस्थाने प्रोक्तदिशा भावनीये इत्याह—इ[दा]नीमिति । पूर्वग्रन्थयोजनोपायमाह—अत्रापीति अत्र 'यदि द्रव्यपरमार्थो यज्ञदत्तस्य वृत्तिः वृत्तिमत्क्रियात्वादवृत्तिरपि परमार्थ इति प्रागेवा-[वृ]त्तक्रियया वृत्तिविरोधिन्या यदि यज्ञदत्तोऽवरुद्धः स्यात्तथा तस्य वृत्तिर्नैव स्यात् यज्ञदत्तत्वावरुद्धदेशे देवदत्तत्ववत् वृत्तिक्रियाप-30 रमार्थयज्ञदत्तस्य वाऽवृत्तिर्नैव स्यात् कदाचिदपि, वृत्त्याऽवरुद्धत्वात्, यज्ञदत्तत्वावरुद्धे देवदत्तत्ववदेवेति वृत्त्यवृत्त्योरभावाद्देवदत्तस्य यानस्थाने स्याताम्, वृत्त्यभावात्तावत् पूर्ववदवृत्तेर्देवदत्तस्य गमनाभावः, यज्ञदत्तस्य वा वृत्तिकालेऽपि भावे सततं गमनाभाव एव वा स्यात्, एवमवृत्त्यभावादपि तथा, तथा वृत्त्यात्मकत्वादस्य यज्ञदत्त एवास्य गमननिमित्तमिति यावद्यज्ञदत्तं गमनप्रसङ्गः तदात्मत्वात् तत्कालवत्, तस्य स्थितिपरमार्थत्वावस्थानाच्च । अवृत्त्यात्मकत्वाद्वाऽस्य वृत्तिमत्यपि यज्ञदत्ते देवदत्तस्थानमेव सदा स्यात्

---

१ सि. क. तथाभवनेत्यादि, भवनमुपागनं स्थानभवेत्युपगम्यादि । २ सि. क. मवृत्ति॰ एवमग्रेऽपि ज [वृ]त्तिस्थान [स्थाने] वृत्तिशब्दः प्रतिषु दृश्यते । ३ सि. क. [°दे]रवात्तद्व॰ ।

तस्मा तेन क्रियाया अपि नित्यत्वमित्या —

त तद्भवनाविच्छेदात्मकप्र त्तिनित्यत्वस्या टस्थत्वाद्भवनमवेदं गति त्तिस्थित्यादि, सततसंप्र त्तिरूपभवनात्मकत्वादतो द्रव्यं क्रिया चोभयं नित्यं भावः ।

( तदत ति ) तदतद्भवनाविच्छेदात्मकप्र त्तिनित्यत्वस्याकूटस्थत्वात्—तद्भवनमतद्भवनञ्च सरूपैकशेषात्तदतद्भवनम् [ तद्भवनं ]तावदस्तिभवत्यादिविषयं पुनःपुनर्भवत्येवेति, अतद्भवनं स्थानाद्गमनं 5 गमनाच्च स्थानमिति, [illegible] भवनसहिते ते एव स्थानगमने, तथा स्थवृत्ती, तस्याविच्छेद आत्मा यस्याः प्र तेरविच्छेदात्मिका सा तदतद्भवनाविच्छेदात्मकप्रवृत्तिः, तस्या अपि नित्यत्वं तदकूटस्थं— टस्थद्रव्यनित्यत्वविलक्षणं तद्भावात्—तदतद्भवनाविच्छेदात्मकप्र त्तिनि त्वस्या टस्थत्वाद्भवनमवेदं गतिवृत्तिस्थित्यादि—एता यानस्थानवृत्त्यवृत्त्यादिकाः परस्परविरोधिन्यः क्रियास्ता एता भवनमेव, सततसम्प्रवृत्तिरूपभवनात्मकत्वात् भवद्भवनविलक्षणं नित्यञ्च प्रवृत्तिभवनमेवेत्यभिन्नं क्रियामात्रमतो 10 द्रव्यं क्रिया चोभयं नित्यं भावः ।

स्यान्मतं क्रियाभेदाभावाद्भेदज्ञानव्यवहाराभावः स्यात्, दृश्येते भेदज्ञानं भेदव्यव ारश्चेत्ये- तदयुक्तम्—

तस्माद्भेदज्ञानव्यव ारौ तु शब्दभेदद्रव्यप्रवृत्तितत्त्वा रूप्यात्, शक्तिमतो द्रव्यस्य

न त्तिकाभवदि'ति योजना स्यादिति प्रतिभाति । तदेवं यानस्थानयोर्वृत्त्यवृत्त्योः सततभवनात् द्रव्यव्यतिरिक्तायाः क्रियाया अपि 15 प्रवाहतो नित्यत्वमिति निरूपयति—त त वनेति तच्चातच्च तदतती, भवनञ्च भवनञ्च भवने, अत्र सरूपैकशेषः, तदतती च ते भवने च तदतद्भवने, तयोरविच्छेद आत्मा यस्याः सा तदतद्भवनाविच्छेदात्मिकेत्येवं समास [illegible]—तद्भवनमिति सजातीयताभवनपरम्परा तद्भवनम्, यथोत्पत्तिप्रभृत्याविनाशं घटस्यानुक्षणं भवनम्, स्थूलरूपधारणानुकूलव्यापारस्यास्याव- र्थत्वात्, उत्पत्तिप्रभृत्याविनाशाच्च सत्तानुवृत्तात्तस्याश्च साध्यतया प्रतीयमानत्वाच्चानुक्षणभवनरूपता अत एव च तस्याः काल- सम्बन्धः अभूद्भवति भविष्यतीति । अतद्भवनञ्च विजातीयभवनपरम्परा, यथा स एव देवदत्तः क[illegible] 20 पुनर्गच्छति पुनस्तिष्ठतीति विलक्षणक्रियाभवनपरम्परेत्याशयेनाह—तद्भवनमिति । तथा [illegible]त्तीति कदाचिद्वृत्तिर्दे- वदत्तादेः, कदाचिदवृत्तिः, देवदत्तादेर्यानस्थानाभ्यामिति भावः । तदेवं सजातीयसाधनसान्निध्ये भावानामनुक्षणं भवनपरिणाम- मनुभवतां विजातीयतथाविधसाधनसम्पत्तौ गमनस्थानाद्यतद्भवनपरिणाममनुभवतां प्रवृत्तिविशेषैः निरन्तरमवियोगः, अत [illegible]नां गम्यादीनाञ्च कारकप्रवृत्तिविशेषत्वेन धातुता सेत्स्यति, प्रवृत्तिप्रवाहस्याविच्छेदादेव प्रवाहतो नित्यत्वं भवनात्म- प्रवृत्तेरित्याशयेन। —तस्याविच्छेद इति, गमनस्थानादीनां क्रियाविशेषाणां विनाशेऽपि प्रवृत्तिसामान्यस्य भवनलक्षणस्यावि- 25 च्छेदान्नित्यत्वम्, यद्यपि भवनमपि प्रतिकलमन्यदेव तथापि तद्वृत्तिधर्मो न विहन्यत इति भावः । टस्थेति, कूटमयोघनः, [illegible] तत्कूटस्थं संसर्गप्रध्वंसपरिणामानित्यताविरहितं द्रव्यं तथाविधद्रव्यनित्यत्वविलक्षणं क्रियाया नित्यत्वमि भावः । एवञ्च गत्यादिक्रियाविशेषाणां भवनसामान्यात्मकत्वं सामान्यविलक्षणविशेषाभावादित्याशयेनाह—भवनमेव मिति । भवदिति भवद्भवनं—द्रव्यभवनं ततो विलक्षणमित्यर्थः । गतिस्थित्यादितोऽभिन्नं भवनं क्रियामात्रमतो द्रव्यं क्रिया चेत्युभयं मूलं वस्त्वित्युपसंहरति—अ भव ति । सर्वासां क्रियाणामेकरूपत्वे गच्छति तिष्ठति वर्तते न वर्तत इत्येवं [illegible] 30 तद्व्यवहारश्च कथं स्यादित्याशङ्कायां शब्दव्यवहार एव केवलं नार्थभेदः क्वचिदिति समाधत्ते—तस्मा वहारेति ।

१ सि. क. [illegible]० । २ सि. क. तच्चापि । ३ सि. क. भवनवद्भवनात्म र्णं ।

शक्तयो युगपद्भाविन्यो रूपरसादयः क्रिया एव, गमनस्थानादिक्रियास्तु क्रमभाविन्यः, विवक्षापि च तासां शक्तीनां यथानुरूपं प्रतिविषयानियतप्रत्यायनवृत्तित्वात्, रूपादिद्रव्यशक्तिप्रवृत्तिभेदनियतेन्द्रियग्राह्यत्ववत्, नियतप्रवृत्तिविशिष्टवस्तुभागाभिधायिशब्दाभिधानैः सर्वस्य वस्तुरूपस्याभिधातुमयोग्यत्वात्, यथा देवदत्तो गच्छतीत्यादौ देवदत्तशब्दो गत्यादीन् नोपादत्ते न वा व्युदस्यति तथाऽऽख्यातमपि देवदत्तादीन् नोपादत्ते न वा व्युदस्यति क्रियांशविषयनियतत्वात्, तदेवं द्रव्यशक्त्यंशानियतशब्दप्रवृत्त्यनुपात्यर्थं भेदप्रत्ययः।

(तस्मादिति) तस्माद् द्रव्यव्यवहारो तु गच्छति तिष्ठति वृत्तिं करोत्यवृत्तिं वा न वेति द्वावप्येतौ शब्दभेदद्रव्यप्रवृत्तितत्त्वानुरूप्यात्—शब्दो भेदो यस्या द्रव्यप्रवृत्तेः सा शब्दभेदद्रव्यप्रवृत्तिः शब्दोऽन्यो द्रव्यात्, प्रवृत्तिः क्रिया गुणोऽपि क्रियेति प्रागुक्तम्, रूपरसगन्धस्पर्शभेदायाः प्रवृत्तेः शब्दभेदा [द्रव्य]
10 प्रवृत्तिरन्या तस्यास्तत्त्वं वर्णावर्णात्मकत्वादिरूपं तदानुरूप्यात् शब्दभेद[द्रव्य]प्रवृत्तितत्त्वानुरूप्याद्भेदज्ञानं भेदव्यवहारश्च भवति, शक्तिमतो द्रव्यस्य शक्तयो युगपद्भाविन्यो रूपरसादयः क्रिया एव, गमनस्थानादिक्रियास्तु क्रमभाविन्यः, यथोक्तं 'शक्तिमात्रासहायस्य विश्वस्याद्भुतकर्मणः। सर्वथा सर्वदा भावात् क्वचित् किञ्चिद्विवक्ष्यते' ॥ (वाक्य. का. ३ ) इति, विवक्षापि च तासां

---

द्रव्यप्रवृत्तिरन्या, अन्या च शब्दप्रवृत्तिरित्याशयेनाह—शब्दो भेदो यस्या इति, निरन्तरप्रवृत्तिमद्धि द्रव्यम्, तच्च प्रवृत्तिः
15 सत्स्वपि नित्यत्वादिष्वन्येनोत्पादव्ययस्थितिरूपमिति पूर्वमुक्तम्, ततश्च द्रव्यं सर्वसर्वात्मकमिति सिद्धम्, शब्दस्तु किञ्चित्पर्यायविशिष्टं द्रव्यमेवाभिधत्ते, न सर्वपर्याययुक्तं द्रव्यम्, तस्माच्छब्दभेदद्रव्यप्रवृत्तिरन्या, नहि गच्छति शब्दो गमनस्थित्यादिनिखिलप्रवृत्तिमद्द्रव्यमाख्यातुं पारयति, एवञ्च तत्तच्छब्दविशेषैस्तत्तद्द्रव्यप्रवृत्तेर्विज्ञानाद्भेदज्ञानं भेदव्यवहारश्च भवतीति भावः। प्रवृत्तिः क्रियेति, प्रवृत्तिः क्रिया भाव इति पूर्वं वर्णनात्, अद्रव्यद्रव्यवदित्यादिना गुणादेः क्रियात्ववर्णनाच्चेति भावः। तस्यास्तत्त्वमिति, तस्याः शब्दप्रवृत्तेस्तत्त्वमवान्तरो भेदः, वर्णात्मकध्वन्यात्मकत्वरूपः, वर्णपदवाक्यरूपो वा, अवर्णात्मकत्वञ्च
20 पदादीनां 'पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च' इति स्वीकारात्, भेदव्यवहारो भेदप्रत्ययश्च तन्निबन्धनः, अत्र शब्दोऽखण्डरूप एकोऽपि गकारौकाराद्यवस्थाभ्यो भिन्नोऽभिन्नश्च चरमावस्थया विसर्जनीयादिरूपया पदादिरूपेण व्यज्यते इति वर्णेषु तत्तद्व्यवहारोपपत्तिर्लोकस्य, अथ वा सर्वं वाक्यमखण्डमेव सत्यम् पदान्यसत्यान्येव, तेषां सत्यत्वे राजा राजानं राज्ञा राजनीत्यादौ राजरूपार्थप्रत्यायकस्यानियतत्वं न स्यात्, सत्यस्य नियतत्वात्, एवं योगरूढियोगरूढ्यादयपि कल्पनैव, लोकव्यवहारबोधार्था, अत एव व्याकरणभेदेन साधनोपाया अनियताः, एवमर्थेऽपि नानापक्षास्तेऽपि तत्तच्छास्त्रवासनावशात् कल्पिता एव, यथाऽभिहितान्वयः,
25 अन्विताभिधानम्, संसर्गो वाक्यार्थः, संसृष्टाः पदार्था वाक्यार्थः, जातिः पदार्थो व्यक्तिर्वा जातिविशिष्टव्यक्तिर्वा, अत एव घट इति प्रयुक्ते वैशेषिकोऽतिरिक्तमवयविनं बुध्यते, सांख्यो गुणसमूहम्, बौद्धादि परमाणुसमूहं मीमांसकोऽवयवेभ्यो भिन्नाभिन्नं घटमिति, तदेवं शाब्दी प्रवृत्तिः शब्दविषयाऽर्थविषया च रूपरसादिद्रव्यप्रवृत्तेरन्या, तथाविधकल्पितवर्णपदादितः कल्पितबोद्धपदार्थव्यवहारो भवति, तत्तच्छास्त्रप्रवर्तकानामृषीणां तत्त्वविषयदर्शनेऽपि तत्त्वभूतेन वस्तुना परमार्थतो व्यवहारासम्भवाद्व्यवहारकालेऽदृष्टतत्त्वसदृशा इव नानाप्रकारैर्व्यवहरन्तीति तत्त्वं बोध्यम्। वस्तुभूततत्त्वस्य व्यवहारानुपातित्वे हरिकारिकां प्रमाणयति—
30 शक्तिमात्रेति, अत्र क्वचित् 'शक्तिमात्रासमूहस्य विश्वस्यानेकधर्मणः।' इति अन्यत्र च 'सर्वमात्रासमूहस्य विश्वस्यानेकधर्मणः' इति पूर्वार्द्धे पाठभेदो दृश्यते, विश्वं हि शक्तिरूपेण निखिलधर्मात्मकमतस्तत्र सर्वस्य सद्भावात् सर्वस्यैकदा विवक्षासम्भवाद्यथा प्रयोजनं क्वचिदेव किञ्चिद्विवक्ष्यते इति तदर्थः स्यादिति भाति उपलभ्यमानवाक्यपदीये कारिकाया अदर्शनात्। एवमेव विवक्षेत्याह—विवक्षापि चेति, येनोच्चरितेन सास्नालाङ्गूलककुदविषाणिनां सम्प्रत्ययो भवति स एव गवादिशब्दस्तत्रार्थे नियत

---

१ सि. क. °प्रवृत्तिवृत्तता।

शक्तीनां यथानुरूपं प्रतिविषयनियतप्रत्यायनवृत्तित्वात्—सत्यपि सर्वसर्वात्मकत्वे द्रव्यार्थनयस्य घटोत्म-कघटशब्दशक्तेः पृथुबुध्नकम्बुग्रीवाद्याकारप्रत्यायने नियता वृत्तिर्नान्यत्र, रूपादिद्रव्यशक्तिप्रवृत्तिभेदनियते-न्द्रियगतत्ववत्, शब्दशक्तिप्रवृत्तिभेदाभेदज्ञानव्यवहारादित्यर्थः, तद्व्याचष्टे नित्यप्रवृत्तीत्यादि, नित्यप्रवृत्तेः क्रमप्राप्त्या विशिष्टो यो वस्तुभागस्तद[भि]निवेशिभिरभिधानैः सर्वस्य वस्तुरूपस्याभिधातुं शब्दैरयोग्यत्वा-दिति, तन्निदर्शयति—यथा देवदत्तो गच्छतीत्यादि यावन्न वा व्युदस्यतीति गतार्थम्, तथाऽऽख्यातमपीत्यादि 5
तद्वदेव गतार्थं यावत् क्रियांशविषयनियतशक्तित्वादिति, नामाख्यातयोर्नियतवस्तुभागाभिनिवेशित्वादिति तदेव कारणं तदनुपात्ययं भेदप्रत्यय इत्युपसंहरति, द्रव्यशक्त्यंशनियतशब्दप्रवृत्त्यनुपाति भेदज्ञानमित्ययः।

तथैव गतिस्थितिवृत्त्य[वृत्त्]यादिभेदव्यवहाराः, सर्वभेदपर्यनुभवार्थत्वान्नित्यप्र[वृत्ते]ः, याऽसौ सततसम्प्र[वृ]त्तिः सा सर्वान् गमनादी[न्] भावभेदान् पर्यनुभावयामि द्रव्यमिति प्रवर्त्तते, यदि तान्नानुभवेत् ततो न ते स्युः, तेनापर्यनु[भू]यमानत्वात्, खपुष्पवत्, सर्वप्रभेदनिर्भेदं बीजं 10
[द्रव्य]मिष्यते तद्वा द्रव्यं न स्यात् भेदापर्य[नु]भवनात् खपुष्पवत्।

(तथैवेति) तथैव गतिस्थितिवृत्त्यवृत्त्यादिभेदव्यवहाराः सर्वभेदपर्यनुभवार्थत्वान्नित्यप्रवृत्तेः, याऽसौ सततसम्प्रवृत्तिः सा सर्वान् गमनादीन् भवनभेदान् पर्यनुभावयामि द्रव्यमिति प्रवर्त्तते, यदि तान्नानुभवेत् क्रियाभेदान् द्रव्यं ततो न ते स्युः, तेनापर्यनुभूयमानत्वात् खपुष्पवत्, सर्वप्रभेदनिर्भेदं बीजं द्रव्यमिति चेष्यते, तद्वा द्रव्यं न स्यात्, भेदापर्यनुभवनात् खपुष्पवत्—एवं तद्द्रव्यं बीजं स्याद्यदि 15
तान् भेदान् पर्यनुभवेत्।

आह—यथाऽनन्तरोक्तदेवदत्तशब्दो गत्यादीन् नोपादत्ते न च व्युदस्यति, नियतत्वाच्छब्दश-क्तीनां प्रवृत्तत्वाच्च तथा वस्तुनापि देवदत्तेन गत्यादयः किमनुपात्ताव्युदस्ताः? नेत्युच्यते विशेषः—

इत्यनादितः शब्दार्थयोः प्रतिनियतत्वाद्विवक्षाऽपि प्रतिनियतशब्दार्थविषयिण्येवेति तदर्थः। एतदेव व्याचष्टे-सत्यपीति। 'इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा। अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा' ॥ इति शब्दानां प्रतिविषयनि- 20
यतशक्तिमत्त्वमवसेयम्। चक्षुरादे रूपाद्यात्मद्रव्यप्रवृत्तिभेदेषु ग्राहकत्वनैयत्यमिति निदर्शयति-रूपादि[द्रव]व्येति। शब्द-स्यैव प्रवृत्तिविशेषरूपया भेदज्ञानमभेदज्ञानं तथा व्यवहारश्चेत्याह-शब्द[शक्ति]ीति। सर्वे शब्दा न सर्वार्थवाचकाः, अपि त्वन्वयव्यतिरेकाभ्यां प्रतिनियतार्थशक्तिमन्त इत्याह-नित्यप्र[वृत्ते]रिति, यस्मिन् हि शब्दे उच्चारिते यस्यार्थस्य नियमेनो-पस्थितिस्तमर्थमेव स शब्दो बोधयति, नार्थान्तरम्, अत एव द्वारमित्यादौ पिधेहीति प्रकरणादिना पदाध्याहारः सङ्गच्छते, न तु पिधानार्थकत्वं द्वारपदस्य, अत एव नामाख्यातादिपदभेदः, तस्मान्नाम सिद्धार्थमेव बोधयति, न साध्यार्थम्, आख्यातञ्च 25
साध्यार्थमेव बोधयति न सिद्धार्थमिति भावः। तदेवं शब्दस्पर्शरूपरसगन्धात्मिकाया द्रव्यप्रकृतेरंशभूता शब्दप्रकृतिरन्या ततश्च भेदज्ञानं भेदव्यवहारश्चेत्युपसंहरति-द्रव्य[शक्]त्यंशेति। नामाख्यातपदयोः परस्परार्थाबोधकत्वमुक्त्वाऽऽख्यातमेवानामपि गच्छतितिष्ठत्यादीनां अन्योन्यार्थाबोधकत्वाद्भेदव्यवहार इत्याह-तथैवेति नामाख्यातविधयैवेत्यर्थः। गतिस्थित्यादयः क्रमभा-विनः पर्यायविशेषा अनुक्षणभाविनः द्रव्यप्रकृतयः, तान् द्रव्यमनुभवति अन्यथा तत्स्वरूपहानिर्भवेत्, तद्भवनविशेषाननुभव-नादत एव द्रव्यं सर्वप्रभेदाननुभवत् स्वतो निर्भेदमित्याह-याऽसाविति क्रियाया द्रव्येणासम्बन्धे क्रियैव न स्यादित्याह- 30
[तान्नानुभवे]दिति। तथा द्रव्यमपि न स्यादित्याह-तद्वेति, तथा च क्रियाक्रियावद्द्रव्यमिति भावः। यथा नामाख्यातश-ब्दयोः प्रतिविषयनियतशक्तिमत्त्वेन निखिलवस्तुरूपाभिधानसामर्थ्यात् स्वाभिधेयातिरिक्तस्योपादानपरित्यागयोरुदासीनता तथा किमर्थोऽपि स्यात्, उतास्ति वा कश्चिद्विशेष इत्याशङ्कते-आहेति। अथ देवदत्तो गच्छतीत्यादौ देवदत्तशब्देन गत्यादिर्नोपादीयते,

---

१ सि. क. °भेदाज्ञान०। २ सि. सर्वस्यावस्तुवस्तुरू०। क. सर्वस्यावस्तुरू०। ३ सि. क. °[illegible]। ४ सि. क. °ख्यातम०। ५ सि. क. °त्विवादिति। ६ सि. क. °शब्दाप्रवृ०। ७ सि. क. °भेदाद्रव्यं।

देवदत्तवस्तुना शब्देना[illegible]पादीयमानापि हि गतिरुपात्तैव, नियतभावात् त[illegible]त्मत्वादि[illegible]ति विशेषहेतोश्च, यद्य[illegible]त्मकं तेन तदुपात्तमग्निनेवौष्ण्यम् तथा [illegible]वदत्तेन गति[illegible]ति, गच्छतिश[illegible]न च देवदत्त उपात्तः, देवदत्ताभिसम्बन्धा[illegible], शब्देन चेदर्थ उपात्तोऽर्थेन [illegible]त्तार्थ उपात्त एव, तदात्मत्वात्, तथा शब्देऽप्येष विधिः, उक्तवदुभयवस्तुत्वात् ।

5 देवदत्तवस्[illegible]नेत्यादि, देवदत्तशब्देनानुपादीयमानापि हि गतिः—वस्तुना तेनोपात्तैवाऽसौ, नियमभावात् विशेषहेतोश्च, को विशेषहेतुरिति चेदुच्यते तदात्मत्वात्, गत्याद्यात्मको हि देवदत्तः तत्पर्यनुभवनात्, यद्यदात्मकं तेन तदुपात्तमग्निनेवौष्ण्यम्—यथाग्नेरौष्ण्यमात्मेत्यग्निनोपात्तं तथा देवदत्तेन गतिरिति, एवं तावद्देवदत्तवस्तुना गतिरुपात्ता न देवदत्तशब्देनेति विशेष उक्तः, किं गच्छतिशब्देन गत्यर्थेन देवदत्तार्थोऽनुपात्तः ? नेत्यत्रोच्यते—गच्छतिशब्देन च देवदत्त उपात्त इति, लिङ्गं—देवदत्ताभिसम्बन्धात्,

10 शब्देन चेदर्थ उपात्तोऽर्थेन गच्छतिलक्षणेन देवदत्तार्थ उपात्त एव तदात्मत्वादिति विशेषः, यथा च [illegible] विच्छेदात्मप्रवृत्तिनित्यत्वस्याकूटस्थत्वाद्भवनमेवेदं गतिस्थितिवृत्त्य[illegible]त्यादीति गम्यादिप्रवृत्तिभवनेन भवद्भवनमुपात्तमेव, उभयात्मत्वाद्वस्तुनो—द्रव्यक्रियात्मद्वैरूप्यादर्थेन गत्याद्युपात्तं देवदत्तादि गमयता[illegible] क[illegible] ×क्रियाया द्रव्यभेदपर्यनुभवन[प्रवृत्त्य]त्मकत्वादिति, तथा शब्देऽप्येष विधिः—गच्छतिशब्देनेत्यादि गच्छतिश[illegible]न च देवदत्त [उपात्तः] उक्तवदुभयवस्तुत्वात्—शब्दस्य द्रव्यभेदपर्य[illegible]भवनप्रवृत्त्या-

15 त्मत्वादिति× एवं तावत् सर्वसर्वात्मकद्रव्यार्थात्मत्वादसतो भेदान् कल्पितानाश्रित्य भेदज्ञानव्यवहारावुक्तौ ।

परमार्थतस्[illegible] अर्थानियतत्वा[illegible] वचसः [illegible]वदत्तशब्देन गत्यादि ना[illegible]पात्तम्, तद्भवनार्थत्वा[illegible] [illegible] गृहाण, [illegible] हि द्वितीयादिविना[illegible]तः केवले कर्त्तर्येव प्रयुज्यते, कर्त्ता

गच्छतिशब्देन तु देवदत्त उपादीयत इत्याह—देवदत्तवस्तुनेति । देवदत्तवस्तुनो द्रव्यत्वात् सर्वसर्वात्मकत्वाद्देवदत्तवस्तुना

20 गत्यादय उपादीयन्त एव न तु देवदत्तशब्देन, देवदत्तपदार्थश्च गत्यादिक्रियाणामात्मेति सर्वाः क्रिया उपादत्त इत्याह—व[illegible]स्तु-नेति, हेतुमाह—नियतभावादिति देवदत्तादिद्रव्ये गतिस्थित्यादिक्रियाया नियतत्वादिति भावः । हेत्वन्तरमादर्शयति—विशेषहेतोश्चेति निखिलक्रियाप[illegible]नुभवनात्मकत्वादित्यर्थः । देवदत्तशब्देन गतेरनुपादानेऽपि गच्छत्यादिशब्दा देवदत्तादिद्रव्यमाचक्षत एवेति विशेषान्तरमप्याह—किं गच्छतिशब्देनेति । लिङ्गं हेतुरित्यर्थः, तमेवाह—देवदत्ताभिसम्बन्धादिति, शब्दस्य देवदत्तव[illegible]ना सह सम्बन्धादित्यर्थः, शब्दो हि द्रव्यस्य प्रवृत्तिविशेषः । तथा च शब्दार्थ[illegible]त् गच्छत्यादिशब्देन तदभिन्ने

25 देवदत्तद्रव्ये उपात्ते गच्छतिशब्दार्थेन गमनलक्षणेन देवदत्तार्थः सुतरामुपात्त एव, गमनादिक्रियात्मत्वाद्देवदत्तादिद्रव्यस्येति भावः । सततसंप्रवृत्तिलक्षणक्रियाया आत्मत्वं द्रव्यस्य प्रागुपपादितं स्मारयित्वा क्रियया क्रियावत उपादानं भवत्येवेति दर्शयति—यथा चेति । उपसंहरति—अर्थेनेति । यथाऽर्थः क्रियालक्षणो द्रव्यस्य गमनादिभेदानां पर्यनुभावकः तथा शब्दोऽपि प्रवृत्त्यात्मकत्वा[illegible] द्रव्यस्य भेदानां पर्यनुभावक इत्याशयेनाह—उक्तवदिति । एवञ्च क्रियामात्रस्यैव परमार्थत्वाद्गतिस्थितिवृत्त्यादिक्रियाभेदाः केवलं व्यवहारायैव कल्पिता इत्युपसंहरति—एवं तावदिति, प्रवृत्तिलक्षण[illegible]त् शब्दशब्दार्थप्रकल्पना व्यवहारार्थं

30 महता वाक्येन च व्यवहारो भवति, तत्र प्रतिवाक्ये सङ्केतग्रहासम्भवात् वाक्ये पदानि प्रकल्प्य पदे च प्रकृतिप्रत्ययभागं प्रकल्प्य कल्पिताभ्यामन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययार्थाः कल्पिताः तदाश्रित्य भेदज्ञानभेदव्यवहारौ भवत इति भावः । अथ [illegible] [illegible]मतेन गच्छत्यादिश[illegible]ब्दोऽपि गत्यादीनुपादत्त इत्याह—परमार्थतस्त्विति, साध्यसाधने परस्पर

१ सि. क. °मानयापि । २ सि. क. नियतमाभावात् । ३ सि. क. °र्थ उपात्तो । ४ क. ××।

च क्रियायाः साधनत्वात् क्रियामन्तरेण न भवति, तत्र स्वयमसौ कर्त्ता तेन तेन प्रकारेण वर्त्तमानः, तथा शब्दोऽपि तत्तदर्थवाची यथाहुरन्ततः 'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति' (महाभा० अ० २ पा० ३ सू० १) स एष उपात्तगत्यर्थो देवदत्तशब्दो [illegible]तकर्त्रर्थप्रत्यायनार्थो नानर्थकः, अर्थप्रत्यायनार्थत्वाद्वचनप्रवृत्तेः ।

परमार्थतस्तु अर्थनियतत्वात्तु वचस इत्यादि शब्देनापि गत्यादि नानुपात्तमुपात्तमेवार्थवत्, कुतः ? तद्भवनार्थत्वात्—तस्य भवनं तद्भवनं गत्यादिभवनमेवार्थो देवदत्तशब्दस्येति देवदत्तार्थेनेव गत्यर्थोऽप्युपात्त इति गृहाण, मा शङ्किष्ठास्तद्भवनार्थत्वमसिद्धमित्येतदाह—देवदत्तशब्दो हीत्यादि, यदा स्वार्थद्रव्यलिङ्गसंख्याकर्मादिवाचि प्रातिपदिकं विभक्तयस्तद्व्यञ्जिकाः विवक्षावशाच्च कारकविशेषाश्रयणं कर्मादीनामपि कारकत्वात् कर्त्तृत्वमिष्टमेवेति सिद्धान्तस्तदा विशेषानाश्रयणेऽपि द्वितीयादिविनाभूतो देवदत्तशब्दः केवले कर्त्तर्येव प्रयुज्यते, कर्त्ता च क्रियायाः साधनत्वात् क्रियामन्तरेण [न] भवति, क्रियाश्चास्तेशेतेतिष्ठत्यादयः तासु स्वयमसौ कर्त्ता तेन तेन प्रकारेण वर्त्तमानः तथा शब्दोऽपि तत्तदर्थवाची, यथाहुरन्तत इति ज्ञापकम्, विचारावसाने वैयाकरणैरेतन्निश्चितम् अस्तिर्भवन्तीपरः इत्यादि, लड् भवन्तीत्युच्यते, शेषं गतार्थम्, प्रथममध्यमोत्तमयुक्तमन्यदपि क्रियापदं भवत्येव, दिङ्मात्र[illegible], त्वमसि, अहमस्मि तिष्ठसि तिष्ठामीत्यादीनां नियमाभावात्, क्रियापदेन विना

---

मविनाभाविनी, तस्माद्यथाऽऽख्यातपदप्रतिपाद्या क्रिया निःसाधना न भवतीति आख्यातपदस्य सत्त्वाभिधानेन विनाऽऽकांक्षा न निवर्तत इति सामान्यतः [illegible]वाचकत्वं तथैव साधनं निष्क्रियं न भवतीति साधनवाचकस्यापि आकांक्षावशात् क्रियावाचकत्वं न्याय्यमिति देवदत्तादिशब्देन गत्यादिक्रियोपात्तैवेति भावः । तदेतद्व्याचष्टे-शब्देनापीति, देवदत्तादिशब्देनापीत्यर्थः, अनुपादाने हेतुमाह-तद्भवनार्थत्वादिति, देवदत्तस्य गमनादिभवनमेव परमार्थः, नहि द्रव्यं गमनादिरूपेण प्रवृत्तिमनापन्नं सद्भवितुमर्हति तथा वाच्यवाचकयोस्तादात्म्याद्देवदत्तशब्दस्य गत्यादिभवनं परमार्थः इति भावः । एतदेवोपपादयति-यदा स्वार्थेति पञ्चकस्य प्रातिपदिकार्थत्वात् प्रातिपदिकेनैव विभक्त्यर्थस्य संख्याकर्मत्वादेः प्राप्तत्वाद्विभक्तयो व्यञ्जिका एव, सामान्येन कारकत्वेन कर्मादीनां प्रातिपदिकेन प्राप्तत्वेऽपि कर्मत्वादिना रूपेण विशेषविवक्षायां कर्मादिरूपकारकविशेषाश्रयणम्, सर्वेषां स्वस्वव्यापारे कर्तृत्वात् कर्मादीनामपि [illegible] सिद्धान्ताश्रयेण कर्मत्वादिविशेषानपेक्षायां द्वितीयादेर्विभक्तेरभावात्तदा देवदत्तादिशब्दः केवले कर्त्तर्येव प्रयुज्यते, कर्त्ता च क्रियाया जनक इति क्रियया विना न तस्य कर्तृत्वं सम्भवतीति क्रियाऽऽवश्यकी, ताश्चास्ते शेते तिष्ठतीत्यादयस्तत्तत्क्रियायाः स्वातंत्र्येण कर्तृत्वादुपवेशनशयनस्थित्यादिक्रियारूपेण देवदत्तादिद्रव्यं वर्त्तत इति देवदत्तादिशब्द उपवेशनादिरूपेण भवन्तं देवदत्तादिद्रव्यं प्रतिपादयतीति तद्भवनार्थत्वं तस्य नासिद्धमिति भावः । प्रथमाविधायकं हि सूत्रं क्रियायोगे एव प्रवर्त्तते, कर्मणि द्वितीयेत्यादिसूत्रसाहचर्यात्, तथैवाकांक्षितत्वात्, 'तिङ्समानाधिकरणे प्रथमा' इति वार्तिकाच्च, यत्र तु क्रियापदं न श्रूयते तत्र तदध्याहार्यमित्याशयेनाह-यथाहुरन्तत इति, विचारावसाने-'अनभिहिते' इति सूत्रविचारावसाने भाष्ये, भवन्तीपर इत्यत्र भवन्तीशब्दः लट्लकारे संकेतित इत्याह-लड् भवन्तीत्युच्यत इति ज्ञातं वस्तु परं प्रतिपादयितुं शब्दः प्रयुज्यते, ज्ञानञ्च विद्यमानस्यैव, तस्माद्यत्र क्रियापदान्तरस्याप्रयोगस्तत्रोत्सर्गतः सत्ता प्रतीयत इत्यस्तीति क्रियापदस्यानुषङ्गः कर्त्तव्य इति तदर्थः, एवञ्च यत्र क्रियाविशेषाणां पुरुषविशेषाणां वचनविशेषाणाञ्च गमकं नास्ति तत्रास्तीत्येव पदमध्याहार्यम्, नामार्थस्य सत्ताऽव्यभिचारित्वादिति भावः । सति किञ्चिद्गमके मध्यमोत्तमपुरुष[illegible]मन्यदपि क्रियापद[illegible] ज्ञापकस्य दिङ्मात्रनिदर्शकत्वादित्याह-प्रथमेति । दृष्टान्तं दर्शयति त्वमसीति । ननु

---

१ सि. क. अर्थो नियत[illegible] इत्या० । २ सि. क. मानोपात्त० । ३ सि. क. °नाश्रयाणामपि । ४ सि. क. तथातथा ।

[न] भवतीत्येव हि नियमः, स एष उपात्तगत्यर्थो देवदत्तशब्दो देवदत्तकत्रर्थप्रत्यायनार्थो नानर्थकः, [illegible]ति वर्त्तते, तस्या अर्थप्रत्यायनार्थत्वात् वचनप्रवृत्तेः—अर्थं प्रत्याययिष्यामीति वचनं प्रवर्त्तते, तस्मान्नानर्थकं समीक्ष्यकार्युक्तित्वान् प्रमाणान्तरापलब्धत्वा[त्] देवदत्तस्य ।

देवदत्तशब्दो न देवदत्तस्य वाचकः किन्तर्हि देवदत्तशब्देन देवदत्तार्थो वि[ज्ञा]यमान
5 एवा[नू]द्यते स गच्छती[ति] विधानाय, स्थानविपरीतगमनप्रतिपादनाय च देवदत्तं गतिकर्तृत्वे नाध्यारोहयामीति प्रयुज्यते यो गच्छति स देवदत्त इति ज्ञातार्थेनानूद्यमानेन विधानात्, तथा च देवदत्त इत्युक्ते विशिष्टक्रियात्मककर्तृनिर्देशाद्गतेर्गतत्वाद्गच्छातिशब्दोऽनर्थकः पुनरुक्तश्च, तौ च न विभक्तविध्यनुवादार्थवक्तारं श्रोतारं वा प्रति भवतः ।

(देव[द]त्तशब्द इति) [देवदत्तशब्दो]न देवदत्तवाचकः किं तर्हि ? देवदत्तशब्देन देवदत्तार्थो
10 विज्ञायमान एवानूद्यते ज्ञातार्थो ह्यनुवादो विध्यङ्गत्वात्, किमर्थोऽनुवाद इति चेन्? स गच्छतीति विधानाय—देवदत्तविशिष्टगतिविधानाय, गतिर्ह्यज्ञातार्थत्वाद्विधीयते, देवदत्तकर्तृकदेवदत्तानुवादो गतिविधानार्थोऽस्तु, गतिविधानं किमर्थमिति चेत् उच्यते—स्थानविपरीतेत्यादि, अध्यारूढदेवदत्तकर्तृसाधनं गमनं विवक्षितं तत्प्रतिपादनाय देवदत्तं गतिकर्तृत्वेनाध्यारोहयामीति प्रयुज्यते, तन्निदर्शयति—यो गच्छति स

---

[illegible] गत्यादिक्रियाया अवगतौ गच्छतितिष्ठतीत्याद्युपादानं व्यर्थम्, उक्तार्थानामप्रयोगात्, यतः सम्भवे व्यभिचारे
15 च विशेष्यविशेषणभावो भवति, यथा नीलोत्पलमिति, गत्यादयश्च न पदार्थं व्यभिचरन्ति, देवदत्तादिपदेन गत्यर्थस्याप्युपादानाभ्युपगमादित्याशङ्कायामाह-स एष उपात्तगत्यर्थ इति, वस्तुतो विचार्यमाणे गमनादिक्रियादेवदत्तादिद्रव्ययोः कर्तृत्वकार्यत्वप्रतिपादनाय देवदत्तो गच्छतीत्युच्यत इति भावः । तस्या इति, बुद्धौ पदार्थसत्तामन्तरेण परं प्रत्यर्थबोधाय पदोच्चारणासम्भवात्, गत्यादिकर्त्ता देवदत्त इत्येवं परं बोधयितुं देवदत्तो गच्छतीत्यादिशब्दः समीक्ष्यकारिणा प्रयुज्यत इति भावः । नन्वेवं प्रमाणान्तरेणोपलब्धमर्थं प्रतिपादयित्रा परं बोधयितुं यदि प्रयुज्यते तदा देवदत्तादिशब्दो देवदत्तादेर्वाचको न भवति, प्रतिपादयित्रा पद-
20 व्यतिरेकेणैव प्रमाणान्तरेण पदार्थस्यावबुद्धत्वादिति पदोच्चारणं व्यर्थमेवेत्याशङ्कायामाह—देवदत्तशब्द इति । अनूद्यत इति, यावत बुद्ध्या पदार्थो न विषयीकृतः तावत् पदस्य प्रयोगाभावः, तस्माद्बुद्धिसमाविष्टोऽर्थो विधिनिषेधजननादिभिः सम्बध्यते, एवञ्च पूर्वं बुद्धौ पदार्थसत्तां समारोप्य वृक्षोऽस्ति वृक्षो नास्ति वृक्षो जायत इत्येवं विधिनिषेधजननादीन् बोधयति, अत एव बहिरत्यन्तासतोऽपि शशविषाणादीनर्थान् बुद्ध्या विषयीकृत्य शशविषाणादिपदप्रयोगः, तदेवं बुद्ध्युपारूढा उपचरिता सत्ता शब्दप्रयोगाश्रयत्वादव्यभिचारा, सैव तु प्रयोक्तृप्रतिपत्तॄणां बहीरूपतयाऽवभासते, यदि तु वृक्षादीनां बाह्यसत्तासमाविष्टं वस्तु वाच्यं
25 स्यात्तदा वृक्ष इत्यतः सत्तावगमात् गतार्थत्वादस्तीत्यस्य प्रयोगो न स्यात्, नास्तीत्यस्य च सत्ताविरोधात् प्रयोगाप्रसङ्गः, अङ्कुरो जायत इति च प्रयोगो न स्यात् बाह्यतः सतो जन्मविरोधात्, उक्तञ्च गौतमेनापि, 'बुद्धिसिद्धं तु तदसत्,' इति, कारणकाले कार्याभावेऽपि बुद्धौ सिद्धत्वादेव प्रतिनियतकार्यजन्म, न शशशृङ्गादिजन्म, इह तन्तुषु पटो भविष्यतीति विज्ञायैव हि कुविन्दादेः प्रवृत्तिरिति । अत्राप्युच्यते-अध्यारूढेति, देवदत्तस्य गमनस्थानादयः शब्दप्रयोगप्राक्काले बुद्धावारूढा एव परं प्रतिपादयितुः मुच्यन्त इति भावः । देवदत्तकर्तृकेत्यस्य वक्त्रा प्रोक्तो देवदत्तानुवादः गतिविधानायेत्यर्थः । एवं क्रियापदमात्रप्रयोगे सर्वकारका-
30 ध्याहारः स्यात्, तत्र कारकान्तरप्रयोगस्तु अपरकारकनिवृत्त्यर्थः, कर्तृपदमात्रप्रयोगे क्रियापदप्रयोगः क्रियान्तरनिवृत्त्यर्थः, साध्यसाधनयोः परस्परसाकांक्षत्वादेकोपादानेऽपरस्य मानानैयत्यात् गच्छतीत्युक्ते देवदत्तादिकर्तृकगमनस्य देवदत्त इत्युक्ते देवदत्तकर्तृकगमनादेरवगमात् देवदत्तो गच्छतीत्यभिधानं विधिनियमार्थम्, येयं गतिः सा देवदत्तकर्तृका, नान्यकर्तृकेति [illegible]नाह—यो ग[च्छ]तीति । ननु वक्तुर्विध्यनुवादयोर्गतार्थत्वात्तं प्रति देवदत्तो गच्छतीत्यभिधानं पुनरुक्तं भवेदित्यत्रेदापत्तिं करोति—

देवदत्त इति–तथा [च] योऽसौ गच्छतीति [स] देवदत्तो गतिक्रियायाः कर्तेति ज्ञातार्थेना-[ऽ]प्रमाणेन विधानात्, द्रव्यक्रियाभिन्नोऽप्यभिन्नार्थत्वाद्वस्तुतः, एवं सति पौनरुक्त्यमिति चेदभ्युपगम्यते, तथा चेत्यादि, एवञ्च कृत्वा देवदत्त इत्युक्ते विशिष्टक्रियात्मककर्तृनिर्देशाद्गतेर्गतत्वाद्गच्छतिशब्दोऽनर्थकः पुनरुक्तश्च तथा गच्छतिशब्दादेर्विशिष्टकर्तृकगमनवचनाद्देवदत्तार्थगतेर्देवदत्तशब्दोऽपि, तौ चानर्थक्य-पौनरुक्त्यदोषौ न विभक्तविध्यनुवादार्थवक्तारं श्रोतारं वा प्रति भवतः । 5

किं तर्हि प्रति ? उच्यते—

विभक्तविध्य[नु]वादार्थाविवेक्तारं प्रति अन्यतरस्यैव वानयोरविवेक्तारं वक्तारं श्रोतारं वा स्यात् ।

( विभक्तेति ) [1]विभक्तविध्यनु [वादार्थाविवे]क्तारं प्रति–विभक्तो विधि[रज्ञाता]र्थत्वात् शब्दोऽनुवादोऽयं विज्ञातार्थत्वात्, विध्यनुवादावित्यविवेक्तारं वक्तारं श्रोतारं वा स्यात्–आनर्थक्यं 10
पौनरुक्त्यं वा स्यात् अन्यतरस्यै[व]वाऽनयोरविवेक्तारं विध्यनुवादार्थाविति ।

स्यान्मतमस्तु स्वयं[अ]निश्चितद्रव्यक्रियात्मकैकवस्तुविध्यनुवादार्थवचनं वक्तारं प्रति, कथं पुनः श्रोतुरिति चेदुच्यते तस्यापि—

प्रथमपदोपादानसन्निहितार्थव्यञ्जनं द्वितीयपदं सन्निधिमात्रेण तथाप्रतिपत्तुः श्रोतुरुपकारकं नान्यस्य, न स पुनः शब्दापराधो यदसौ तदर्थं न प्रतिपद्यते, यथा न हि स[्था]णोरयमपराधो 15
यदेनमुलूको न पश्यतीति, अत्र प्रयोगः–प्रथमपदोपात्तार्थमेव द्वितीयपद[म्], उपग्राहितार्थविवरणायत्वा[त्], भाष्यग्रन्थवत् ।

प्रथमपदोपादानेत्यादि यावच्छ्रोतुरुपकारकमिति, प्रथमं पदमत्र देवदत्त इति गच्छतीति वा यथाविवक्षं प्रयुक्तं, प्रथमपदमुपादानमस्य सोऽर्थः प्रथमपदोपादानः सन्निहितश्च द्वितीयपदाभिधेया-[भि]मतः, तस्य व्यञ्जनं–शब्दो द्वितीयपदं तत् सन्निधिमात्रेण प्रयोगमात्रेण प्राक्प्रतिपन्न एवाभि- 20
व्यज्यते सोऽर्थस्तेनेत्यर्थः, तथाप्रतिपत्तुः श्रोतुरिति–वक्तुरभिप्रायमूहितुं समर्थस्य गृहीतसङ्केतस्येत्यर्थः, उपकारकं–प्रतिपत्त्याधानसमर्थं नान्यस्य–अविभक्तविध्यनुवादार्थस्याकृतसङ्केतेर्वा, न स पुनः शब्दा-

एवं सतीति । एतदेव स्पष्टयति-एवञ्च कृत्वेति, तथा च नाम्नाऽऽख्यातेन वा विशिष्टकर्तृकविशिष्टक्रियाया अवगतौ विध्यनुवादाविवेकाभावे पौनरुक्त्यमानर्थक्यञ्च वाक्यवक्तारं श्रोतारं प्रति भवेत् विध्यनुवादार्थप्रकल्पने तु नेति भावः । तर्हि कं प्रति आनर्थक्यपौनरुक्त्यदोषौ भवत इत्यत्राह–विभक्तेति विभक्तयोर्विध्यनुवादार्थयोरविवेक्तारमित्यर्थः, विध्यनुवादोभयविवेका- 25
भावेऽन्यतरस्य वा विवेकाभावे वक्तारं श्रोतारञ्च प्रति तौ दोषौ भवतः न केवलमेकस्यैवोभयोः वक्तुः श्रोतुर्वेति भावः । नन्विमौ दोषौ वक्तारं प्रति युक्तौ तस्यैव नाम्नाऽऽख्यातार्थस्याऽऽख्यातेन नामार्थस्य प्राप्तत्वात्, श्रोतारं प्रति कथं भवतः, तस्य नामाख्यातयोरेकस्यापि अनुपस्थितत्वादित्याशङ्कते–स्यान्मतमिति । एकपदेनोपात्तस्यापरपदार्थस्यापरपदं व्यञ्जकं सत् वक्तुः श्रोतुश्च सन्निहितं सदुपकारकं भवति न तु स्वार्थस्याप्राप्तस्याभिधायकं सत् तदेवंविधमुत्तरपदमजानानस्य श्रोतुरेवापराधो न तु शब्दस्येत्याह–प्रथमपदेति । देवदत्तो गच्छति, गच्छति देवदत्त इत्यत्र वा यथाविवक्षं देवदत्तपदं गच्छतिपदं वा देवदत्तकर्तृकगमनस्य 30
व्यञ्जकम्, यदा च प्रथमपदप्रयोगतस्तत्सन्निहितं तदापि यदि द्वितीयपदं तद्व्यञ्जकमिति ज्ञात्वाप्यानर्थक्यपौनरुक्त्यौ न जानीते तर्हि

१ सि. क. अज्ञातार्थेना० । २ सि. क. °भिन्नार्थत्वाद । ३ सि. क. चेदमि ० । ४,५ सि. क. अवि० । ६ सि. क. वक्तारं श्रोतारं वा स्यादानर्थक्यं पौनरुक्त्यं वा स्यात् स्यादन्यतरस्यैवानयोर्विवेक्तारमित्यधिकं दृश्यते ।

पराधो यदसौ तदर्थं न प्रतिपद्यते, यथा न हि स स्थाणोरपराधो यदेनमन्धो न पश्यतीति, तस्मात् कार्ये सत्यपि विध्यनुवादभावेनार्थावेतौ, अत्र प्रयोगः—प्रथमपदोपात्तार्थमेव द्वितीयपदम्, उद्ग्राहितार्थविवरणार्थत्वात्—उद्ग्राहितो[ऽर्थो]गमनभवनाभिसम्बन्धी देवदत्तः तद्विवरणार्थो गच्छतिशब्दो देवदत्त[ार्थ]इत्युक्तः, 'आगृहीतगतिरपि न परेण ज्ञायते' (        ) त्युक्तत्वात्, यदुद्ग्राहितार्थविवरणार्थं पदं तत्पूर्व-
5 पदोपात्तार्थमेव दृष्टम्, भाष्यग्रन्थवत्, यथा 'वृद्धिरादैच्' (पा० अ० १ पा० १ सू० १) इति सूत्रेणैवोपात्तमर्थं भाष्यग्रन्थपदानि विवृण्वन्ति—वृद्धिरितीयं संज्ञा भवत्यादैच्वर्णानामिति शब्दानुशासनादिविचाराधारेण सूत्रेणैवोपात्तत्वात्, तथा चोक्तं 'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्त्तिके। उदाहरणमन्यस्य प्रत्युदाहरणं पशोः ॥' ( महाभाष्यटीकायामुद्द्योते पूर्वार्धमात्रं दृश्यते अ० १ पा० १ आ० १ ) इति।

स्यान्मतम्—

10 **प्रथमपदोपात्तार्थश्चेद् द्वितीयपदं प्रथमपदोच्चारणकाल एव ततः प्रतिपत्तेः वक्तृवत्तथा प्रतिपत्तुः श्रोतुरुपकारकं स्यात् तेनैव व्यक्तत्वादित्यत्रोच्यते कस्यचिद्भवत्यपि केषाञ्चिद्भावित एव तदर्थस्य कारकं तथाव्यक्तव्यञ्जनत्वात् प्रदीपवत् ।**

( **प्रथमेति** ) प्रथमपदोपात्तार्थश्चेत् [द्वितीयपदं]प्रथमपदोच्चारणकाल एव ततः—तस्माद्दृष्टायाः प्रतिपत्तेः, केव ? वक्तृवत्—वक्तरीव वक्तृवत्, यथा वक्तरि प्रतिपत्तिः प्रागुपजाता गच्छति[इति पदं]
15 देवदत्तकर्तृविषयं प्रयुञ्जेऽहमिति[1] ×[एवमेव]तथा प्रतिपत्तुः श्रोतुरुपकारकं स्यात्, तेनैव व्यक्तत्वादित्यत्रोच्यते कस्यचिद्भवत्यपि केषाञ्चिद्भावित एव तदर्थस्य कारकम्, तथाव्यक्तव्यञ्जनत्वात्—तेन प्रकारेण व्यक्तस्तथाव्यक्तः देवदत्तशब्दोच्चारणश्रोतुर्विशिष्टक्रियाकर्तृको देवदत्त इत्येतावत्तावदाधीयते बुद्धौ, तस्मात्तथाव्यक्तः, तस्य व्यञ्जनो गच्छतिशब्दो नापूर्वं किञ्चिदाह, तदनुवादित्वादतस्तथाव्यक्तव्यञ्जन-

कस्यायं दोष इति विभाव्यतामिति भावः। तत्र दृष्टान्तमादर्शयति—**यथा न हीति**। एवञ्च विध्यनुवादभावेनानयोस्तयैव सति
20 न दोष इत्याह—**तस्मादिति**। प्रथमपदेनैव द्वितीयपदार्थ उपात्तो भवतीत्येतत्साधयति प्रयोगतः—**अत्र प्रयोग इति**। हेतुमाह—**उद्ग्राहितार्थेति**, प्रथमपदेनैव समुद्बोधितस्य गमनादेरर्थस्याभिव्यञ्जनार्थं गच्छतिपदमिति भावः। दृष्टान्तमाह—**भाष्यग्रंथवदिति**, भाष्ये अथ शब्दानुशासनमित्यारभ्य विचारधारया व्याकरणशब्दार्थविचारे 'नहि सूत्रत एव शब्दान् प्रतिपद्यन्ते, किं तर्हि ? व्याख्यानतश्चेति, तदेव सूत्रं विगृहीतं व्याख्यानं भवति, परिहृतमेतत्—ननु चोक्तं न केवलानि चर्चापदानि व्याख्यानम्, वृद्धिः आत् ऐच्, इति, किं तर्हि ? उदाहरणं प्रत्युदाहरणं वाक्याध्याहार इत्येतत्समुदितं व्याख्यानं भवति',
25 इत्येवं विचारः कृतः, उपसंहृतश्च 'सूत्रत एव हि शब्दान् प्रतिपद्यन्ते' इति, एतस्यैव व्याख्याने उद्योते 'एतन्मूलमेव पठ्यते सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्त्तिके' इत्युक्तम्। तंत्रवार्त्तिके च 'सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्त्तिके। सूत्रं योनिरिहार्थानां सर्वं सूत्रे प्रतिष्ठितमिति' दृश्यते। ननु प्रथमपदं यदि द्वितीयपदार्थं बोधयेत्तर्हि प्रथमपदोच्चारणश्रवणकाल एव द्वितीयपदार्थबोधापत्तिरित्याशङ्कते—**प्रथमपदेति**। वक्तुर्यथा प्रथमपदोच्चारणकाल एव द्वितीयपदार्थाधिगमस्तथा श्रोतुरपि स्यादिति दृष्टान्तमादर्शयति—**वक्तृवदिति**। अन्विताभिधानवादी मीमांसकः समाधत्ते—**कस्यचिद्भवत्यपीति**, कस्यचिद्वक्त्रादेरेकस्मादेव
30 पदादपरपदार्थस्य बोधो भवन्नपि श्रोत्रादेः कस्यचिन्न प्रथमत एव तदर्थबोधस्य कारकमित्यर्थः। साधनमाचष्टे—**तथाव्यक्तेति**। प्रतिपत्तृषु वाक्यार्थस्यावगतिरभिव्यक्ताभिव्यञ्जिका, अतो न वैयर्थ्यं वाक्यार्थे पदानाम्, एकेन पदेन सकलवाक्यार्थस्याक्षेपविशेषखचितस्यावगतेरुत्तरेषां पदानां नियमायाऽनुवादाय वोच्चारणादिति भावः। अभिव्यक्तस्यार्थस्यैवाभिव्यञ्जकः त्तरपदमित्यत्रा-

१ सि. क. सावधानु०। २ सि. क. स्वमिव। ×× एतच्चिह्नान्तर्गतः पाठः प्रतिषु ५४१ पृष्ठे ६ पंक्तौ 'इत्यस्यासिद्धि'रित्यनन्तरं दृश्यते।

स्यात् [प्र]दीपवत्, यथा प्रदीपः प्रागभिव्यक्तं घटं [त]मःस्थं व्यनक्तीति नादित एव तदर्थज्ञानस्य कारकः तथा तु वाक्ये गच्छतिशब्दोऽपीति, अथ वा द्रव्यार्थवादे कुम्भकारोऽपि विद्यमानमेव घटं तथाभिव्यनक्ति नाविद्यमानमुत्पादयति प्रदीपवत् तस्मात् कुंभकारस्यापि व्यक्तव्यञ्जनत्वात् पिण्डावस्थायामपि व्यक्त एव घटः क्रियाक्रमाभिव्यक्तिप्रत्यक्षत्वात् प्रदीपव्यक्तघटवत्, तथा देवदत्तो गच्छतीत्यत्रापि व्यक्तव्यञ्जनत्वान्नादित एव तत्तदर्थज्ञानस्य कारक इति ।

मा च मंस्थाः केवलोपपत्तिमात्रकमेवैतदुच्यते प्रथमपदोपात्तार्थवाचि द्वितीयपदमिति, किन्तु लोकेऽपि व्यवहारप्रसिद्धिस्तथा दृष्टेति तद्दर्शयितुमाह—

**तथा च विनापि तत्सन्निधिं पूर्वश्रुतशब्दवृत्तेरेव तथानियतत्वात्तथैव प्रतिपत्तारो दृश्यन्ते यथा प्रविश पिण्डीमिति प्रविशशब्दश्रवणात् सुषिरं गृहादि कर्मपदमत्रेति पिण्डीमिति च कर्मपदश्रवणात्तद्योग्यभक्षिक्रियाकर्तृकर्मकमिति ।**

तथा च विनापीत्यादि यावत् प्रविश पिण्डीमितीति, एवञ्च कृत्वा तस्यानुवादमात्रभिन्नार्थस्य शब्दस्य सन्निधिमन्तरेणापि पूर्वश्रुतशब्दोपात्तस्यार्थस्य वृत्तेरेव तथा नियतत्वात् तथा हि तच्छब्दवृत्तिर्नियता यथा क्वचिदश्रूयमाणद्वितीयपदोऽपि तस्य पदार्थविषयप्रतिपत्तिहेतुर्भवति, तथैव च प्रतिपत्तारो दृश्यन्ते तथा प्रविश पिण्डीमित्यत्र प्रविशशब्दश्रवणात् प्रवेशयोग्यं प्रकरणादिभिः सुषिरं गृहादि कर्मपदमत्रेति पिण्डीमिति च कर्मपदश्रवणादनन्तरोक्तप्रविशि[अ]सम्भवात् तद्योग्यभक्षिक्रियाकर्तृकर्मकमिति प्रतिपद्यन्ते, तस्मात् प्रथमपदोपात्तार्थव्यञ्जनं द्वितीयपदमिति साधूक्तम् ।

यथा देवदत्तशब्दोपात्तार्थवाची गच्छतिशब्दः—

**तथा गच्छतीति च तिपोपात्त एव कर्त्ता, 'लः कर्मणि च' (पा० अ० ३ पा० ४ सू० ६९) इति । कर्त्तरि विहितलकारोदेशत्वात्तिपः, स च देवदत्त एव विशिष्टः, विशिष्टकर्तृविष-**

भिव्यक्तस्यैवान्धकारस्थस्य घटस्याभिव्यञ्जकं प्रदीपं दृष्टान्तीकरोति-**प्रदीपवदिति**, सत्कार्यवादाश्रयेण दृष्टान्तमाह-**अथ वेति** । यस्मात् प्रथममुच्चरितात् पदात् निखिलक्रियाकारकोपस्थितिः तादृशमेकमेव पदं वाक्यं भवतीत्यत्रोपपत्तिमुदीर्य तथा व्यवहारप्रसिद्धिमपि लौकिकीमादर्शयति-**तथा चेति** । अनुवादमात्रफलस्य द्वितीयादिपदस्य सन्निधिना विनापि प्रविशेत्येतावन्मात्रोक्तावपि प्रवेशक्रियाकर्मत्वयोग्यस्य प्रकरणादिवशात् गृहादेः प्रतिपत्तिर्भवति, तथा पिण्डीमित्येतन्मात्रोक्तं कर्म स्वयोग्यां क्रियामाक्षिपद्भक्षणादिक्रियां प्रत्याययति, तस्मादुत्तरपदस्यानुवादमात्रत्वादेव भेदात् तदभावेऽपि पूर्वपदस्य सर्वे सर्वार्थवाचका इति न्यायेन सर्वार्थप्रतिपादनशक्तिनियतत्वमिति अभिव्यक्तार्थप्रकाशकमेवोत्तरपदमिति व्याचष्टयति-**अनुवादमात्रभिन्नार्थस्येति** । पिण्डीमिति पदं हि गर्भीकृतक्रियापदम्, निराकांक्षार्थावगतेरनन्तरम् प्रसिद्ध्यादिना पिण्डीकर्मकभक्षणक्रियाया बोधकत्वाद्वाक्यत्वम्, एवं प्रविशेत्याख्यातमपि प्रकरणादिवशाद्गृहादिकर्मकप्रवेशनक्रियाबोधात् विशिष्टाभिधायकं वाक्यमेव, तस्मादेतादृशस्थले द्वितीयपदोपात्तमनुवादकमेव, केचित्तु प्रविश गृहं, पिण्डीं भक्षयेति तृपादीयमानं विशिष्टं वाक्यमखण्डमन्यदेवेति वदन्ति । यथा नामपदं गर्भीकृतकारकत्वाद्विशिष्टार्थप्रतिपादकं वाक्यमेवेत्युक्तम् तथाऽऽख्यातपदमपि गर्भीकृतकर्तृकर्मत्वाद्विशिष्टार्थं वाक्यमित्याह-**तथा गच्छतीति चेति** । गच्छतीति पदं हि प्रकृतिप्रत्ययविशिष्टम् प्रकृत्यर्थः क्रिया तिप्प्रत्ययार्थः कर्ता, 'लः कर्मणि च भावे चाकर्मकेभ्यः' इति सूत्रेण लकाराः सकर्मकेभ्यो धातुभ्यः कर्मणि कर्तरि च स्युः, अकर्मकेभ्यो भावे कर्तरि चेत्यर्थकेन कर्तरि लस्य

---

१ क. एव च तद० । २ क. तस्य भूतस्या० । ३ सि. सुषिरं गृहादिमिरित्यधिकम् ।

**यगमनविवक्षितत्वात् तच्छब्दव्यवस्थाप्यस्वरूपत्वाद्वा गच्छतिः स्वांशोपात्तार्थविषयक एव, वक्तुर्विवक्षायामन्यथोक्त्यानर्थक्यात्, अर्थप्रकरणाद्यापादनाच्च, श्रोत्राप्यश्रुतोऽपि गृह्यते स इति गच्छतीत्युक्ते, अन्ते च नाम्नः कर्तृत्वप्रतिपत्तिरिति ।**

(**तथेति**) तथा गच्छतीति च तिपोपात्त एव कर्त्ता, किं कारणं ? 'लः कर्मणि च' (पा० अ० ३ पा० ४ सू० ९६) इति कर्त्तरि विहितलकारोद्देशत्वात्तिपः, कोऽसौ कर्त्तेति चेदुच्यते स च देवदत्त एव विशिष्टः विशिष्टकर्तृविषयगमनविवक्षितत्वात्, अथवा गच्छतिः स्वांशोपात्तार्थविषयक एव, तच्छब्दव्यवस्थाप्यस्वरूपत्वात्, यो यच्छब्दव्यवस्थाप्यस्वरूपः शब्दः स स्वांशोपात्तार्थविषयक एव दृष्टो यथा घटशब्दव्यवस्थाप्योऽर्थो[घट]त्वादिरिति, एवमनिच्छतो दोष उच्यते—वक्तुर्विवक्षायामन्यथोक्त्यानर्थक्यादिति—देवदत्तकर्तृविषयां गतिं प्रति[पि]पादयिषता हि वक्त्रा गच्छतिः प्रयुक्तो यदि तमेवार्थं न ब्रूयात् उक्तेर्वाऽन्यः कोऽर्थः स्यादित्यानर्थक्यं प्राप्तमिति, किञ्चान्यत् अर्थप्रकरणाद्यापादनाच्च—संसर्गविप्रयोगसाहचर्यविरोधार्थप्रकरणलिङ्गशब्दान्तरसन्निध्यौचितीदेशकालव्यक्तिस्वरादिसामर्थ्यभेदैरर्थस्या-

विधानात्तिपस्तत्स्थानिकत्वादिति हेतुमाह—किं **कारणमिति** । अर्थप्रकरणाभ्याञ्च सोऽयं कर्त्ता विशिष्ट एव देवदत्तादिरित्याह—**स चेति**, कर्तृत्वेन तिपा कर्तृसामान्यप्रतीतावपि विशिष्टकर्तृविषयगमनस्यैव विवक्षितत्वात् देवदत्तादेरेवावगम इति विवक्षया विशेषार्थनिर्णय इति भावः । न केवलं तादृशविवक्षयैव तथाविधशब्दस्तथाविधार्थे शक्तिमन्तरेणापि प्रयुज्यत इति, किन्तु शब्दस्य तथाशक्तिसद्भावादेव तथा विवक्ष्यते प्रयुज्यते चेत्याशयेनाह—**अथ वेति** गच्छत्यादिक्रियाया निःसाधनाया असम्भवात् यत्किञ्चित्साधनविशिष्टक्रियैव गच्छतिशब्देनोपादीयते, यथा घटशब्दाद्व्यक्तिमात्रबोध आनन्त्यव्यभिचाराभ्यामनुपपन्न इति कृत्वा घटत्वादिविशिष्टस्य घटपदार्थत्वम् घटत्वमेव हि घटपदार्थैकदेशं लक्षीकृत्य वक्तारो द्रव्ये घटशब्दं प्रयुञ्जते, एवमेव साधनविशिष्टक्रियायामेवाख्यातप्रयोगात् गच्छत्यादिपदं स्वांशभूतकर्त्रर्थविषयकमेवेति भावः । तथैव वक्तुर्विवक्षाया दर्शनादित्याह—**देवदत्तेति** यादृशार्थप्रतिपिपादयिषया वक्त्रा यच्छब्दः प्रयुक्तः स शब्दो यदि तादृशमर्थं न बोधयेत् तर्हि स शब्दो विवक्षितार्थाप्रतिपादकत्वेनान्यार्थप्रतिपादकोऽपि व्यर्थ एव भवेदिति भावः । अथ कर्तृत्वेन देवदत्तादेर्गच्छत्यादिनानुपादाने व्याख्यातृभिरर्थप्रकरणादिना कर्तृविशेषपरत्वव्यवस्थापनमसम्भावितमेव स्यात्, सामान्येनोपस्थितमेव हि विशेषे व्यवस्थाप्यते नान्यथेत्याशयेनाह—**अर्थप्रकरणादीति** 'संसर्गो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥ सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥' इत्येते संसर्गादय उपस्थितानामनेकेषामेकतरमात्रार्थतात्पर्यनिर्णयद्वारा तन्मात्रार्थविषयकान्वयबोधजनकाः, सवत्सा गौरित्यत्र वत्ससंसर्गात् गोर्धेनोरेव सम्प्रत्ययः, अकिशोरा धेनुरित्यत्र किशोरविप्रयोगेन विशिष्टजातीयाया एव धेनोरवगतिः, रामलक्ष्मणावित्यत्र लक्ष्मणसाहचर्याद्दाशरथेरेव प्रतीतिः रामार्जुनगतिस्तयो'रित्यत्र विरोधेन जामदग्न्यस्यैव प्रतीतिः; अञ्जलिना जुहोति, अञ्जलिना सूर्यमुपतिष्ठत इत्यत्र जुहोत्यादिपदार्थवशात्तदाकाराञ्जलिपरत्वम् । सैन्धवमानयेत्यादौ प्रकरणेनाश्वादिपरता, अक्ताः शर्करा उपदधातीत्यादौ तेजो वै घृतमिति घृतस्तुतिरूपाल्लिङ्गादक्ता इत्यस्य घृतसाधनाञ्जनपरत्वम्, रामो जामदग्न्य इत्यादौ जामदग्न्यपदसन्निधानेन रामः परशुरामः, अभिरूपाय कन्या देयेत्यादौ सामर्थ्यादभिरूपवरायैवेति प्रतीयते, 'यश्च निम्बं परशुना' इत्यादावौचित्यात् परशुनेत्यस्य छेदनार्थत्वम्, भात्यत्र परमेश्वर इत्यत्र राजधानीरूपाद्देशात् परमेश्वरपदं राजपरम्, चित्रभानुर्भातीत्यादौ रात्रौ वह्नौ दिवा सूर्ये चित्रभानुशब्दः, मित्रो भाति मित्रं भातीत्यादौ लिङ्गरूपव्यक्त्याऽऽद्ये सूर्योऽन्त्ये सुहृत् । स्थूलपृषतीमित्यादौ स्वरात्तत्पुरुषबहुव्रीह्यर्थनिर्णयः, स्वरादीत्यादिना षत्वसत्वणत्वनत्वादि, सुसिक्तमित्यत्र पूजार्थः सुः, सुषिक्तमित्यत्रोपसर्गोऽन्यार्थः, प्रणायके प्रणयनक्रियाकर्त्ता णत्वात् प्रनायके प्रगतनायकदेशो ज्ञायते इति । वस्तुतः सामर्थ्यमेवैकं मुख्यं निर्णायकम्, संसर्गादयः तद्व्यञ्जकप्रपञ्च इत्याशयेनोक्तं **स्वरादिसामर्थ्यभेदैरिति** । श्रोतुरपि क्रियामात्रश्रवणात् कर्तृप्रतिपत्तिर्भवति, दृश्यते हि गच्छतीत्युक्ते श्रोतुः स

१ सि. क. कर्त्तरि ।

नवगम्यमानस्य वक्त्रभिप्रायानुवर्त्तिभिर्व्याख्यातृभिर्विशेषेऽवस्थापनं दृष्टम्, तच्च तेनैव शब्देनाभिधीयते घटते नान्यथेति, तथा श्रोत्राप्यश्रुतोऽपि गृह्यते स इति गच्छतीत्युक्ते, को गच्छति देवदत्त इत्यन्ते-अवसाने नाम्नः कर्त्तृत्वप्रतिपत्तिः, यद्यपि तिपोपात्तं कर्त्तृत्वं तथापि यां तां गतिं गत्वा नामपदार्थ एव कर्त्तेति प्रतिपत्तिः श्रोतुरपि भवन्ती दृष्टेति×, [एवञ्च] अन्योऽन्याभिसम्बद्धद्रव्यक्रियावाचिनौ नामाख्यातशब्दाविति साधूक्तम्, एवमुपपत्त्यनन्तरं शब्दार्थोऽपि द्रव्यक्रियात्मकवस्तुविषय इति भावितम्। 5

**अनया च शब्दार्थगतिभावनया लोके दृष्टया भवनमेवेदमेकरूपं देवदत्तभेदं गतिभेदं स्थितिभेदं वृत्त्यवृत्तिहसनकथनादिभेदं वा भवतीति सर्वत्र व्यक्तेर्भवति तेन तथा तथा भूयत इति।**

**अनया चेत्यादि,** एतया शब्दार्थगतिभावनयाऽस्मद्व्याख्यानया लोके दृष्टया भवनमेवेदमेकरूपं देवदत्तभेदं गतिभेदं स्थितिभेदं वृत्त्यवृत्तिहसनकथनादिभेदं वा भवतीति सर्वत्र व्यक्तेर्भवति, यस्मात्तेन तथा [तथा] भूयत इति, इतिशब्द[स्य] हेत्वर्थत्वात्-यस्मादेकमेव भवनं देवदत्तद्रव्यरूपं गतिस्थित्यादिक्रियारूपञ्च भवति तेनैव तेन तेन रूपेण भूयते न भवनशून्यमन्यत् किञ्चिदस्ति, भवनमेव भवतीति। 10

**ननु कारकाणां प्रवृत्तिविशेषः क्रियेत्येतज्ज्यायः क्रियालक्षणम्, न सततसम्प्रवृत्तिमात्रम्, सर्वत्र प्रवृत्तिसम्भवेऽपि केनचित्फलोद्देशेन कारकवत्याः क्रियायाः पचिपठिगम्यादेः परिग्रहार्थं विशेषग्रहणम्, प्रवृत्तिमात्रपरिग्रहे तु सर्वभावेषु हि प्रवृत्तिरस्तीति सहभाविभिरसहभाविभिर्विशेषैः प्रत्याश्रयं सहिता प्रचयाप्रचयफला सा तस्याः सर्ववस्तुनि वसन्त्या मुहूर्त्तमप्यनवस्थानात् किं फलं लौकिकं स्यात्? विशेषास्तूपजायमानाः पच्यादय ओदनादिफलान्तरहेतव स्वाश्रयाः कारकान्तराण्यपेक्षन्ते, यथा विक्लेदस्तण्डुलाश्रयः काष्ठादीन्यपेक्षते, तत्र या प्रवृत्तिः भवनरूपा सा कारकान्तरानपेक्षत्वेन विशेषाव्यापित्वाच्च प्र[वृ]त्तिसामान्यं क्रिया लोकव्यवहारानङ्गत्वात्, भावश्च क्रिया द्रव्यञ्चेति यदुच्यते तत्र क्रियायाः फलोद्देशकारकसम्बन्धाभावात् कुतः क्रियात्वम्? गच्छत्यादिव्यापिरूपता वा? प्रवृत्तिविशेषत्वेनाभूतत्वात्, कारकव[त्],** 15 20
**वैधर्म्येण तद्भेदवत्।**

इति प्रतिपत्तिः, ततश्च को गच्छतीति कर्तृविशेषजिज्ञासायां देवदत्तो गच्छतीति देवदत्तादिनाम्नः संसर्गादिनाऽवगतिरित्याशयेनाह-**श्रोत्रा[प्य]पीति**। एवञ्च नामाख्यातशब्दौ परस्पराभिसम्बद्धद्रव्यक्रियावाचिनौ सिद्धावित्युपसंहरति-**एवञ्चेति**। इत्थमेकस्यैव शब्दस्य द्रव्यक्रियाप्रतिपादकत्ववत् सर्वमेकरूपमेव शक्तिभेदात् देवदत्तादिद्रव्यभेदं गच्छत्यादिभेदञ्च भवतीति द्रव्यक्रिययोर्भवनसामान्याद्भवनमेवेदं सर्वमिति प्रकृतनयविषयमुपदर्शयति **अनया चेति,** शब्दार्थयोर्या गतिर्भाविता तयेत्यर्थः एक एव नामशब्द 25 आख्यातशब्दो वा यथा सर्वशक्तत्वात् द्रव्यक्रियालक्षणस्य निखिलार्थस्य बोधकः, सर्वे शब्दाः सर्वार्थाभिधानसमर्था इतीष्टत्वात्तथैवैकमेव भवनं वस्तु द्रव्यक्रियारूपेण भवति भवनव्यतिरिक्तस्य कस्यापि वस्तुनोऽभावादित्याशयेन व्याचष्टे-**एतयेति**। तथा च सर्वं भवनरूपमेवेति भवनसामान्यस्यैव क्रियात्वे प्रतिपादिते तदनभ्युपगच्छता वैयाकरणेन यत्क्रियालक्षणमुक्तं तद्दर्शयति-**ननु कारकाणामिति** भूवादयो धातव इति सूत्रव्याख्यानावसरे भाष्यकारः क्रियावचनो धातुरिति पूर्वाचार्यधातुलक्षणे करोतीति क्रियेत्यभ्युपगम्यास्तिभवतिविद्यतीनां करोतिना सामानाधिकरण्याभावादन्यादृशया धातुत्वं वक्तव्यमिति चोदितम्, 30 लोके हि परिस्पन्दस्वभावा क्रिया प्रसिद्धा, अस्तिभवतिविद्यतीनाञ्च न परिस्पन्दस्वभावोऽर्थ इति सकलधातुव्यापकं क्रियालक्षणं कारकाणां प्रवृत्तिविशेष इति भाष्यकृता प्रणीतम्, सर्वेषां कारकाणामेकविधप्रवृत्तेरसम्भवात् देवदत्तः पचति काष्ठानि पचन्ति स्थाली पचतीत्येवं सर्वत्र पचिप्रयोगाच्च प्रवृत्तेरनेकविधत्वात् प्रवृत्तिविशेषः क्रियेति लक्षितम्, एवञ्च पचनक्रियाणां मिथो वैलक्षण्यात् प्रवृत्तिविशेषरूपत्वं सिद्धम्, एतादृशं वैलक्षण्यं भवत्यादीनां नास्तीत्याशंक्य समाहितं यथा 'यद्येवं सिद्धाऽस्त्यादीनां

ननु [का]रकाणामित्यादि, भवनमेवाविशिष्टं सर्वत्र क्रियेत्यापादिते तदमृष्यतेदं वैयाकरणेन
क्रियालक्षणमभिधीयते प्रवृत्तिविशेषः क्रियेत्यतज्ज्यायः क्रियालक्षणं न सततसम्प्रवृत्तिमात्रम्, तत्र
कारकाणामित्येतस्य व्याख्यानमुद्भूतशब्दैः [कृतम] कारकस्यैव क्रियात्वं मा विज्ञायि भवता कारक-
पृथग्भूता गृह्यतामिति भेददर्शनार्था षष्ठी, विशेषग्रहणं पुनः किमर्थमिति चेत्तत आह–सर्वत्र प्रवृत्तिसम्भव
5 इत्यादि, केनचित्फलोद्देशेनेति, सांव्यवहारिकमोदनादिफलमुद्दिश्यते, कारकवत्या इति स्वाश्रयापृथग्भू-
तकरणादिसाधनवत्या इत्यर्थः, सर्वा हि क्रिया कर्त्तृसमवायिनी वा स्यात् पचतिभिनत्तिवत्फल-
वतीति, एवंरूपायाः पचिपठिगम्यादेः परिग्रहार्थं भिद्यादेश्च विशेषग्रहणमिति, प्रवृत्तिमात्रपरिग्रहे
त्वत्पक्षे दोष उच्यते–सर्वभावेषु हि प्रवृत्तिरस्तीत्यादि, रूपादिभिः सहभाविभिरसहभाविभिर्गतिस्थित्या-
दिभिश्च विशेषैः प्रत्याश्रयं वस्तुनि सहिता–युक्तैव सा प्रवृत्तिः प्रादुर्भावतिरोभावात्मिकेति, [स्व]रूपम-
10 स्याः कथयति, प्रचयाप्रचयफलेति [3]कार्यसामान्यक्रियां गृहीत्वोक्तं भाष्यकारेणेति तस्याः सर्वत्र वस्तुनि
वसन्त्याः स्वरूपफलसद्भावप्रदर्शनार्थमुक्तमिति ग्रन्थं प्रयोजयति, [4]सर्वस्या मुहूर्त्तमप्यनवस्थानात् किं फलं

---

धातुसंज्ञा, अन्यथा हि कारकाण्यसौ प्रवर्त्तन्ते, अन्यथा हि 'म्रियता'वित्युक्तम् । अत्र टीकाकारस्तस्य प्रयोजनादीन्याह–
भवनमेवेति । अविशेषेण द्रव्यभावयोर्भवनस्वरूपत्वात् प्रवृत्तिमात्रस्य क्रियात्वे द्रव्यस्यापि तदापत्त्या तद्वारणाय कारकाणामिति
भेदषष्ठी निदर्शितमित्याह–तत्र कारकाणामिति कारकशब्देन सकलकारकाणां कर्तृकर्मणोः प्रधानयोः साधनमात्रं वा
15 गृह्यत इति तत्तद्वादिभिर्व्याख्यानं कृतमिति भावः । विशेषग्रहणप्रयोजनमाह–विशेषग्रहणमिति, सर्वे ह्यर्थाः प्रवृत्तिमन्तः, तत्र
कारकाणां फलजननरूपा प्रवृत्तिरेवात्र प्रवृत्तिविशेष उच्यते, एवञ्च प्रवृत्तिरेव विशेष इति विग्रहः, प्रवृत्तौ विशेषता च फलजननेनैव
रूपेण न त्वधिश्रयणादिरूपेण, सर्वेषां कारकाणां फलजननयैव प्रवृत्तेः सर्वेषां कारकाणां फलजननरूपैकैव प्रवृत्तिः, तथा च
प्रधानफलं प्रति सर्वेषां कारकाणां येन केनचिद्रूपेण जनकत्वात् सर्वेषां कारकाणां साधनत्वमप्यविशिष्टम्, स्वगतभेदेन तु जन-
कत्वे तेषां कर्तृकरणत्वादिव्यपदेश इति भावः । प्रकृतधातूपात्तप्रधानफलमेवात्र फलपदेन ग्राह्यमिति सूचयति–सांव्यवहारिक-
मिति । सर्वत्र हि क्रिया कारकाद्भेदेन न गृह्यते कारकाणां हि प्रवृत्तिविशेषाऽसौ तत्समवेतैव, साधनस्य व्यापाराविष्टस्यैवाऽऽख्या-
20 तात् प्रतीतेरतः कारकसंसृष्टैव क्रिया सर्वा कर्मणा सम्बध्यत इत्याशयेनाचष्टे–स्वाश्रयेति क्रियाश्रयेत्यर्थः । अपरे तु कारकमत्र
प्रधानं कर्तृकर्मरूपं विवक्षितं न त्वप्रधानं करणादि, कर्त्तरि कर्मणि च लकारदर्शनात्, अनेकक्रियाभेदेन कर्तृकर्मभेदात् कारकाणा-
मिति बहुवचनमिति ब्रुवते, अत उक्तं–कर्त्तृसमवायिनी वेति, वाशब्दस्य फलवतीत्यग्रेणान्वयः, एवञ्च तयोर्या विशिष्टा
प्रवृत्तिः सैव क्रियेति भावः । अत्रापि प्रवृत्तेर्विशेषरूपता प्रवृत्त्यन्तराद्भिद्यमानत्वात्, अत एवास्त्यादिक्रियाणां प्रवृत्तिविशेषत्व-
मिति बोध्यम् । विशेषपदानुपादानेऽनिष्टप्रसङ्गमुपदर्शयति–प्रवृत्तिमात्रेति सर्वे पदार्थाः आविर्भावतिरोभावस्थितिस्वरूपप्रवृत्ति-
25 मन्तो न कदाचिदपि प्रवृत्त्या वियुज्यन्ते, नहि परिणामं विना कश्चित् स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते, सहभाव्यसहभाविभिः
पर्यायैर्बाह्यनिमित्तोपादानवशेन प्रतिकलमाविर्भावतिरोभावानुयायित्वात्, दृश्यते हि तेजस्संयोगादिबाह्यनिमित्तापेक्षः फलादीनां
पूर्वपूर्वरूपाद्यपगमेऽभिनवरूपाद्युत्पादश्च, परन्तु न सा प्रवृत्तिः स्थूलदृशाऽवसेयेति न व्यवहारानुपातिनीति न तत्र साध्यसाधनभावो
विनिवेष्टुं शक्य इति भावः । प्रवृत्तेः स्वाभाविकं फलं दर्शयति–प्रचयाप्रचयफलेति अजस्रपरिणामिनां सत्त्वरजस्तमसां परिणामो
हि प्रवृत्तिरुच्यते, सत्त्वरजस्तमसां पुरुषार्थे परिणममानानां प्रवृत्तिराविर्भावतिरोभावलक्षणैवोपचयापचयरूपा सामान्यं फलमिति
30 भावः । स्वरूपेति, प्रचयाप्रचयस्वरूपमेव फलमस्याः नान्यत्तद्व्यतिरिक्तमस्तीति तद्ग्रन्थतात्पर्यमिति भावः । कथमन्यत् फलं
नास्तीत्यत्राह–सर्वस्या इति, सर्वस्याः प्रवृत्तेः क्षणमप्यस्थिरत्वादिति भावः । तथाविधायास्तस्याः स्थूलदृग्भिरनवधार्य-

---

१ सि. क. °हृत्या° । २ सि. क. °वस्तुनिरसहिता । ३ सि. क. कार्यसामहि क्रियायां गृहीतोक्तं° । ४ सि. क.
सर्वस्य ।

लौकिकी—सांव्यवहारिकमिति व्यवहाराक्षमतां दर्शयति, विशेषग्रहणसामर्थ्यात् पुनर्विशेषात्मना जायमानाः पच्यादयः ओदनादिफलान्तरहेतवः स्वाश्रयाः कारकान्तराण्यपेक्षन्ते, तन्निदर्शयति यथा विच्छेदस्तण्डुलाश्रयः काष्ठादीन्यपेक्षत इति, तदुपनयति तत्र या प्रवृत्तिरित्यादि गतार्थं यावन्न प्रवृत्तिसामान्यमिति इति विशेषग्रहणसाफल्यं व्याख्यातं भवति, प्रवृत्तिसामान्यस्याक्रियात्वञ्च भावश्च क्रियेत्यादि यावत् कुतः क्रियात्वं ? फलोद्देशकारकसम्बन्धा[भा]वाद्यदुच्यते द्रव्यं च क्रियत इति प्रत्ययबलेन त्वयोच्यते 5 द्रव्यक्रियात्मको भाव इति तन्न सिद्ध्यति त्वदभिप्रेतक्रियाभावासिद्धेरित्यर्थः, इतश्चासिद्धिः विशेषाव्यापित्वान्न प्रवृत्तिसामान्यं क्रियेति तत्प्रदर्शनार्थमाह गच्छत्यादिव्यापिरूपता वेति, कुत इति वर्तते, गच्छत्यादिव्यापिनी न भवति त्वदिष्टप्र[वृ]त्तिसामान्यलक्षणा क्रिया, प्रवृत्तिविशेषत्वेनाभूतत्वात्, यद्यत् प्रवृत्तिविशेषत्वेनाभूतं तद्गच्छत्यादीन् न व्याप्नोति यथा कारकं कारकाणां प्रवृत्तिविशेषत्वेनाभूतमक्रिया, अक्रियात्वञ्चावयोः सिद्धमिति दृष्टान्तः साधर्म्येण, वैधर्म्येण तद्भेदवदिति, या या क्रिया सा सा 10 प्रवृत्तिविशेषत्वेन भूता यथा गच्छतितिष्ठत्यादिक्रियाभेदो द्रवणपतनसर्पणरिङ्गणादयो वा गमनविशेषाः, तस्माद्गच्छत्याद्यव्यापित्वादप्यक्रियात्वं प्रवृत्तिसामान्यस्य कारकवदिति ।

---

माणाया व्यवहारानङ्गत्वं किं फलमित्यनेन दर्शितमित्याह—लौकिकमिति । समारोपितसमूहरूपास्ता एव धातुवाच्याः प्रवृत्तयो विशेषरूपतामुपगता व्यवहारक्षमा भवन्तीत्याह—विशेषग्रहणेति, प्रवृत्तिलक्षणेयं क्रियाऽनपायिनी साधनशक्तिभिः सह साध्यमेकं साधयितुं भागशः प्रविभक्ता भवति विशेषरूपतामापाद्य कारकशक्तीन् प्रार्थयतीति भावः । तदेवाऽऽह—यथा 15 विच्छेद इति । कर्तृकर्मादिकारकभेदेऽप्यनुवर्त्तमानत्वमेव प्रवृत्तेर्विशेषः जातितुल्यः पचतीत्यादिप्रत्ययव्यङ्ग्यः स च विशेषः स्वाश्रयभूतक्रियामुखेन साध्यः सक्रमश्च, अत एव स्वाश्रयद्वारेणैवास्य साधनाकांक्षा, सामान्यभूता प्रवृत्तिस्तु न क्रिया, असाध्यत्वात्, पचिपठिगम्यादिक्रिया एव हि साध्यत्वेन प्रतीयन्ते न तु प्रतिक्षणप्रवृद्धरूपा प्रवृत्तिर्नित्यत्वादसाध्यत्वाच्चेत्याशयेनाह-तत्र या प्रवृत्तिरिति, अत्रोक्तं मूलं न स्फुटमुपलभ्यते । भावश्च क्रियेति भवनसम्बन्धमात्राद्यदभ्युपगम्यते नासौ भावः क्रिया भवितुमर्हति साक्षात् फलोद्देशकारकसम्बन्धाभावात्, वैयाकरणैः सामान्यक्रियावाचिना भावशब्देन साक्षादनभिधीयमानोऽपि विशेषः सामान्यविशेषात्मकवस्तुसामर्थ्यात् सन्निहित एव, सामान्यविशेषयोरत्यन्तभेदाभावात् सकलविशेषपरिहारेण 20 सामान्यरूपानुपपत्तेरिति स्वीक्रियते, ये तु सामान्यं भिन्नमेवाचक्षते तेषान्तु भावस्य विशेषानात्मकस्य क्रियात्वं नोपपद्यत एवेति ध्येयम् । सामान्यात्मक्रियाया अभावं साधयति—यदुच्यत इति विशेषानात्मकसामान्यक्रियायाः फलोद्देशकारकसम्बन्धायोग्याया असत्त्वात् कथं द्रव्यं क्रिया चेत्युभयं भावो भवेदिति भावः । हेत्वन्तरमाह—विशेषाव्यापित्वादिति, किं करोतीति प्रश्ने पचति, किं करिष्यति ? पक्ष्यति, किमकार्षीत् ? अपाक्षीदिति सामान्यविशेषभावेन पचादेः करोतिना सामानाधिकरण्यात् यथा क्रियाविशेषाः पचादयः विशेषव्यापिनः तथा भवतिनासामानाधिकरण्याभावात् क्रियामात्रपर्यायो भावो न 25 वि[शे]षव्यापीति न तस्य क्रियात्वमिति भावः । अत एवोच्यते—गच्छत्यादीति । अत्रैव प्रयोगमाह—गच्छत्या[दि]व्यापिनीति । यथा क्रियाविशेषमजनयत् कारकं कारकं न भवति विशेषरूपतामन्तरेण सामान्यरूपताया असम्भवात् तथा क्रियापि वि[शे]षाव्यापित्वऽसत्येवेति दृष्टान्तं दर्शयति—यथा कारकमिति । करोतीति हि कारकमिति क्रियायाः शब्देन प्रतीतेस्तन्निर्वर्तकतया कर्त्रादिविशेषप्रतिपत्तिः, तथा विशेषाप्रतिपत्तौ भवतामप्यक्रियात्वं तस्येष्टमेवेत्याह—अक्रियात्[व]ञ्चेति । वैधर्म्यदृष्टान्तेन व्याप्तिं दृढयति—वैधर्म्येणेति, यथा गच्छत्यादयः क्रियात्वात् प्रवृत्तिविशेषत्वेन भूताः, न तथा 30 भावात्मा क्रियेति तस्या अक्रियात्वमे[व], एवं गत्यादिक्रिया अपि द्रवणपतनादिप्रवृत्तिविशेषा एव क्रिया भवन्ति न तथा भवनमिति

१ सि. क. स्वाश्रयात् । २ वैधर्म्य ।

तथा च द्रव्यं क्रिया च द्वौ भावाविति द्रव्यस्य द्वितीयो भावः क्रियेत्येतदपि च नोपपद्यते, तस्याः क्रियाया असत्त्वात् खपुष्पवत्, असत्त्वमद्रव्यत्वे सत्यगत्यादित्वात् खपुष्पवत् अगत्यादित्वञ्च तदव्यापित्वादिति ।

तथा चेत्यादि, एवञ्च कृत्वा द्रव्यं क्रिया च द्वौ भावाविति द्रव्यस्य—भावस्य द्वितीयो भावः 5 क्रियेत्येतदपि प्रवृत्तिसामान्यक्रियावादिनो नोपपद्यते, तस्याः क्रियायास्त्वदिष्टाया असत्त्वात् खपुष्पस्येव, यथा खपुष्पमसत्त्वाद्द्रव्यस्य द्वितीयं न भवति तथा प्रवृत्तिसामान्यमिति, असत्त्वमसिद्धं प्रवृत्तिसामान्यस्येति चेत्—असत्त्वं[अ]द्रव्यत्वे सत्यगत्यादित्वात् खपुष्पवत्, अगत्यादित्वञ्च तदव्यापित्वादिति तस्मात् प्रवृत्तिविशेषः क्रिया न प्रवृत्तिसामान्यमिति वैयाकरणपक्षः ।

अत्रोच्यते अभ्युपगता तावदस्मदभिमतवत् सर्वभावविषया प्रवृत्तिर्भावानामात्मेति 10 न हीह कश्चित्स्वात्मनि मुहूर्त्तमप्यवतिष्ठते वर्द्धते यावदनेन वर्द्धितव्यमपायेन वा युज्यत इति ब्रुवता, स चाभ्युपगमोऽस्मन्मतसाम्यात् प्रवृत्तिसामान्यक्रियात्वं समर्थयति फलान्तरहेतुहेतुभावाविभक्तवृत्तिः सर्वभावेष्वित्युक्तेः, न हीह कश्चित् स्वात्मनीति वचनात् ।

अत्रोच्यते अभ्युपगता तावदस्मदभिमतवादित्यादि, ननु त्वयापि प्रवृत्तिविशेषक्रियावादि[ना] प्रवृत्तिसामान्यमेव क्रियेत्येतदभ्युपगतमस्मदभिमतवत्, कथमिति तद्दर्शयति—सर्वभावविष- 15 या प्रवृत्तिर्भावानामात्मेति आदावेवेदमभ्युपगतं त्वया 'न हीह कश्चित् स्वात्मनि मुहूर्त्तमप्यवतिष्ठते वर्द्धते [वा] यावदनेन वर्द्धितव्यमपायेन [वा]युज्यते' ( महाभा० अ० ४ पा० १ आ० १ ) इति ब्रुवता सततसम्प्रवृत्तिरात्मस्वरूपमिति, स चाभ्युपगमोऽस्मन्मतसाम्यात् प्रवृत्तिसामान्यक्रियात्वं समर्थयति, किं कारणं? फलान्तरहेतुहेतुभावाविभक्तवृत्तिः सर्वभावेष्वित्युक्तेः—फलं बीजादिप्रवृत्तेर्हेतुभूतस्याङ्कुरादि, ततोऽन्यानि फलानि फलान्तराणि तदनुबन्धजन्मानि पर्णनालकाण्डतुषशूकक्षीरतन्दुलादीनि क्रमेण हेतवः 20 पूर्वे पूर्वे यथास्वं ततोऽपि पूर्वे पूर्वेऽन्तरिता हेतुहेतवः त एव भावाः क्रियात्मानः, तैरेवाविभक्ता वृत्तिः-वर्त्तनं सततसम्प्रवृत्तिः सर्वभावेष्वित्युक्तत्वात्, कथमुक्तं? न हीह कश्चित् स्वात्मनीत्यादिवचनात्, सर्वभावेषु बीजाङ्कुरमृत्पिण्डादिषूक्तं तच्च प्रवृत्तिसामान्यं तण्डुलविच्छेदादीनामपि तत्स्वारूप्यानतिवृत्तेः ।

भावः । एवञ्च भावस्य द्वैविध्यं क्रियाया द्वितीयभावत्वञ्चानुपपन्नमिति निगमयति-तथा चेति, विशेषानात्मकसामान्यक्रियाऽभ्युपगम इत्यर्थः गतार्थं, मूलं टीका च, एवं वैयाकरणपक्षः संस्थापितो ननु कारकाणामित्यादिना तमेतं पक्षं निराकुर्वन्नयं 25 नय आह-अत्रोच्यत इति, सामान्यप्रवृत्तेः क्रियात्वं साधयितुमयं नयो यद्वैयाकरणेन सर्वत्र प्रवृत्तिरभ्युपगतेवेति दर्शयति-ननु त्वयापीति वैयाकरणेनेति भावः । तद्ग्रन्थमादर्शयति-न हीहेति, भाष्येऽनेन ग्रन्थेन द्रव्यस्य गोत्वादिसामान्यस्य शशविषाणादेश्च लिङ्गलक्षणप्रवृत्तिमत्त्वं साधितम्, एवञ्च गुणत्रयाणां वैषम्यलक्षणा प्रवृत्तिः सामान्या परिणामविशेषानादरेण सर्ववस्त्वविशिष्टेति सततसम्प्रवृत्तिरात्मस्वरूपम्, तत्र च स्थितिपरिणामो द्रव्यमुच्यते तस्य सामान्यरूपतया सामान्ये नपुंसकमिति न्यायाद्द्रव्यमात्रस्य नपुंसकत्वम्, आविर्भावतिरोभावौ तु क्रिया कारकापेक्षाविशिष्टेति वृद्ध्यपायावेव वर्द्धते इत्यादिना दर्शिताविति 30 तद्भाष्याभिप्रायः । सर्वभावविषया प्रवृत्तिर्भावानामात्मेत्यभ्युपगमे हेतुं दर्शयति-फलान्तरेति, कार्यकारणभावेन पूर्वोत्तरभावेन भवनस्वरूपाणामङ्कुरपर्णनालकाण्डतुषशूकक्षीरतन्दुलादीनामेवाविर्भावतिरोभावात्मकतया क्रियात्वेन बीजादिरूपप्रवृत्तितस्तेषामविभक्तत्वादिति भावः विशेषाणां सामान्यापृथग्भावादिति यावत् । बीजाङ्कुरादीनां मृत्पिण्डस्थासादीनां सामान्यविशेषाणां यथाऽविभक्तवृत्तिता तथैव तण्डुलविच्छेदादीनामपि सामान्यविशेषाणामविभक्तवृत्तित्वात् प्रवृत्तिसामान्यानतिरिक्तत्वमेवेत्याह-सर्वभावे-

१ सि. क. नहि किञ्चित् । २ सि. क. नहि किञ्चित् ।

किञ्चान्यत्—

यदपि चोक्तं केनचित् फलोद्देशेन प्रवृत्तिविशेषः कारकाणामिति, एतेनापि वचनेन सामान्यप्रवृत्तेरेव क्रियात्वमुक्तम्, अनन्तरोक्तविशेषद्वयसन्निधानात् प्रवृत्तिविशेषात्मिकापि सैव, यदपि चोक्तं विशेषास्तूपजायमाना इत्यादि यावन्न प्रवृत्तिसामान्यं लोकव्यवहारानङ्गत्वादिति, अत्रोच्यते इहापि समानकल्पत्वात्, यथा च विशेषा उपजायमानाः 5 पच्यादय ओदनादिफलनिर्वृत्तौ कारकान्तराण्यपेक्षन्ते तथा मृद्भवनमपि घटफलनिर्वृत्तौ कारकान्तराण्यपेक्षत एव कर्त्ता कुम्भकारोऽस्य करणेन दण्डादिना जलाद्याहरणाय मृदाहृत्य तच्छालायां घटं निर्वर्त्तयति, मालवनगरे सप्तवर्षशतानि यावत् स एव घट आर्द्रादिसामिशुष्कनवयुवाद्यन्यथाभवनेऽपि तथातथाभवति तत्राम एव घटो वर्षे न दृश्यते सङ्गोप्यते च गोदोहं वा तडागादौ, तथैवापरस्य क्षणभङ्गव्याख्यानमुदके प्रक्षिप्तस्येति, 10 प्रवृत्तिविशेषत्वेनाभूतत्वाद्यसिद्धतापि चैवमुक्तैव ।

यदपि चोक्तं केनचित्फलोद्देशेन प्रवृत्तिविशेषः कारकाणामिति, स च विशेषः, सहभाविनो रूपादयोऽसहभाविनो गमनस्थानादयश्च तैः प्रत्याश्रयं युक्ता तदात्मिका चेत्येतेनापि वचनेन सामान्यप्रवृत्तेरेव क्रियात्वमुक्तम्, किं कारणं ? अनन्तरोक्तविशेषद्वयसन्निधानात् सर्वत्र तेषामेव च विशेषाणां सामान्यप्रवृत्त्यात्मकानामोदनाद्युद्दिश्य फलरूपत्वात् सन्निधानाच्च फलान्तरहेतुत्वात् तेषामेव, 15 त एव ह्योदनादिफलान्तरहेतवो नान्यः कश्चित्, अतः प्रवृत्तिविशेषात्मिकापि सैव—सामान्यप्रवृत्तिरेवेति, यदपि चोक्तं विशेषास्तूपजायमाना इत्यादि—तदनन्तरोक्तो ग्रन्थो यावन्न प्रवृत्तिसामान्यं लोकव्यवहारानङ्गत्वादिति, अत्रोच्यते इहापि समानकल्पत्वान्न दोषो विशेषग्रहणानर्थक्यञ्च परपक्ष इत्यत आह—

ष्विति । कारकाणां प्रवृत्तिविशेषः क्रियेत्यनेनापि प्रवृत्तिसामान्यस्यैव क्रियात्वमुक्तमत एवेत्याह—यदपि चोक्तमिति । केनचिदिति, फलजननस्वरूपा कारकाणां सामान्यात्मिका क्रियैव प्रवृत्तिविशेष इत्युच्यते, सर्वकारकाणां फलजननायैव 20 प्रवृत्तेः, परिस्पन्दलक्षणव्यापारस्यैव लोकप्रसिद्धस्य व्यावर्त्तनाय प्रवृत्तिविशेष इत्युक्तं न तु प्रवृत्तिसामान्यव्युदसनाय, सर्वा प्रवृत्तिः प्रवृत्त्यन्तराद्भिद्यमाना विशेषरूपतामापद्यत इति प्रवृत्तिरेव विशेषः प्रवृत्तिविशेष इत्युक्तमिति भावः । अनेनापि वचनेनास्मदभिमतप्रवृत्तिसामान्यस्यैव क्रियात्वमुक्तमित्याशयेन व्युदस्यति—सामान्यप्रवृत्तेरेवेति । हेतुं दर्शयति—अनन्तरोक्तेति सामान्यरूपाया एव प्रवृत्तेः किञ्चिदपेक्षया फलत्वात् किञ्चिदपेक्षया च हेतुत्वाद्विशेषद्वयसन्निधानात् सामान्यप्रवृत्तिरेव सेति भावः । एतदेव व्याचष्टे—सर्वत्रेति यथा पश्य मृगो धावतीत्यादौ धावनक्रियैकैव कर्तृमृगापेक्षया साध्या दर्शनक्रियापेक्षया च कर्म भवति, 25 न च मृगः कर्म द्वितीयाप्रसङ्गादिति, परन्त्वेतावान् विशेषः प्रथमं साध्यत्वं ततः साधनत्वमिति, न त्वेकदा ते, अनिष्पन्नस्य साधनत्वासम्भवात्, एवञ्चैकस्य विशेषद्वयसन्निधानात् प्रवृत्तिविशेषोऽपि सन् प्रवृत्तिसामान्यरूप एवेति भावः । अथोपजायमानाः प्रवृत्तिविशेषाः कारकाण्यपेक्षन्ते, न तु प्रवृत्तिसामान्यं तस्य व्यवहारानङ्गत्वादिति यदुक्तं तन्निराकर्तुमाह—यदपि चोक्तमिति 'यावत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते । आश्रितक्रमरूपत्वात् सा क्रियेत्यभिधीयते' । इत्युक्त्या साध्यत्वेनाभिधीयमानाऽऽश्रितक्रमरूपा प्रवृत्तिरेव प्रवृत्तिविशेषरूपोच्यते तथाविधा प्रवृत्तिः साध्यत्वात् कारकान्तराण्यपेक्षते, एवञ्चानाश्रितक्रमरूपा 30 प्रवृत्तिः प्रवृत्तिसामान्यम्, निरुक्ता प्रवृत्तिः प्रवृत्तिविशेष इत्युक्तं भवतीत्येवं तात्पर्यं पूर्वपक्षस्य प्रतिभाति । अयमपि पक्षः प्रवृत्तिसामान्यतद्विशेषयोरैक्यापादनादेव निरस्त इत्याशयेन समाधत्ते—अत्रोच्यत इति । प्रवृत्तिविशेषस्यैव प्रवृत्तिसामान्यस्य

---

१ सि. क. °रेवेति ।

यथा च विशेषा इत्यादि, प्रवृत्तिविशेषसामान्यलक्षणयोः क्रिययोरविशेषापादनग्रन्थो गतार्थः, पचेरोदन-
फलनिर्वृत्तौ कारकान्तरापेक्षावन्मृद्भवनस्यापि घटफलनिर्वृत्तौ कारकान्तरापेक्षेति पिण्डादिषु सर्वेषु भवनमेव
कुम्भकारादीनि मृदोऽन्यानि कारकाण्यपेक्षत इत्यर्थः, तान्युदाहरति-कर्त्ता कुम्भकारोऽस्येत्यादि, कर्तृकर-
णसम्प्रदानापादानाधिकरणानि कुलालो दण्डादिनोदकार्थं मृदाहृत्य तच्छालायामिति, कालोऽपि केषा-
5 ञ्चित् कारकमिति तद्दर्शयन्नाह-मालवनगरे सप्तवर्षशतानीति, तन्नाम एव घटो [3]वर्षं न दृश्यते सङ्क्षोप्यते
च सङ्क्षोपितसाराणि द्रव्य[ाणीति]ख्यापनार्थं गोदोहं वा तडागादाविति, [4]तथैवापरस्य क्षणमप्यनवस्थानमु-
दके प्रक्षिप्तस्येति च कारकविशेषापेक्षाप्रदर्शनम्। यदप्युक्तं [प्रवृत्ति] सामान्यं प्रवृत्तिविशेषत्वेनाभूतत्वात्
कारकवद्गच्छत्यादिव्यापी न भवतीति तदपि नानुमानमसिद्धहेतुत्वात् प्रवृत्तिसामान्यस्य प्रवृत्तिविशेष-
त्वेनाभूतत्वमसिद्धम्, [5]प्रवृत्तिविशेषस्वरूपत्वादेव तत्सामान्यस्य सामान्यस्य प्रवृत्तिविशेषस्वरूपत्वञ्च
10 सर्वभवनस्याविच्छिन्नत्वात् तदविनाभावाच्च गत्यादिविशेषाणाम्, भवनस्वात्मवदिति, तन्न्याय-
मनुस्मारयन्नाह प्रवृत्तिविशेषत्वेनाभूतत्वाद्यसिद्धतापि चैवमुक्तैव, आदिग्रहणाद्विरोधाविरोधभावौ
द्रव्यक्रिययोरेवमुक्तावेवेति ।

यदप्युक्तमसत्त्वाद्द्रव्यद्वितीयतापि नैव प्रवृत्तिसामान्यस्यासत्त्वञ्च खपुष्पवद्गत्यादित्वादिति,
अत्रोच्यते—

15 भवनस्यापि साधनाकांक्षा वर्तत एवेत्याह-[illegible]फलनि[illegible]त्ताविति, अत्रेदं बोध्यं वैयाकरणमतेऽस्तिभवतिविद्यतीना-
मपि प्रवृत्तिविशेषत्वमेव, अन्यथा तेषां धातुसंज्ञा नोपपद्येत, साधितञ्च भाष्ये भवनस्यापि क्रियाविशेषत्वम् 'अन्यथा हि कारका-
ण्यस्तौ प्रवर्तन्ते, अन्यथा हि भ्रियतौ' इति, अत्र च प्रवृत्तिसामान्यं भवनं प्रवृत्तिविशेषाः पच्यादय इत्याश्रित्य पच्यादीनां
प्रवृत्तिविशेषाणां कारकापेक्षावत् प्रवृत्तिसामान्यं भवनमपि घटादिफलजनने कारकाण्यपेक्षत इति विशेषाभावात् प्रवृत्तिविशेष
इत्यत्र विशेषपदोपादानमनर्थकमेवेत्युक्तमिति । आकांक्षामेव दर्शयति-**कर्त्ता कुम्भकार इति** घटस्य कर्त्ता कुम्भकार इत्यर्थः,
कुम्भकारः कर्त्ता, दण्डादि करणम्, उदकाहरणादि सम्प्रदानम्, मृदपादानम्, शालाऽधिकरणमित्येतानि कारकाण्यपेक्षन्ते
20 इति भावः । देशकालभावगन्तव्याध्वनामपि अकर्मकधातुयोगे सकर्मकधातुयोगेऽपि कर्मत्वात् कुरून् स्वपिति मासमास्ते गोदो-
हमास्ते क्रोशमास्त इत्यादाविव घटादिनिष्पत्तौ कालस्यापि कारकत्वे सप्तवर्षशतानि कारकं भवतीति देशविशेषज्ञातव्या-
पेक्षया दृष्टान्तमाह-**मालवनगर इति** प्रवृत्तिसामान्यस्याक्रियात्वे वाद्युक्तं मानं दूषयति-**यदप्युक्तमिति**। प्रवृत्ति-
सामान्यस्यैव प्रवृत्तिविशेषत्वात्त्वदुक्तो हेतुरसिद्ध इत्याह-**तदपि नानुमानमिति**। भवनं हि वस्तुषु सर्वदा वर्तते न
कदाचिदपि तस्यास्ति विच्छेदः, यदि विच्छेदः स्यात् स्यान्नाम विशेषप्रवृत्तिकाले सामान्यप्रवृत्तिर्नास्तीति विशेषप्रवृत्तेः क्रियात्वम्,
न चैवमिति गत्यादिकालेऽपि तस्याः सत्त्वेनाविनाभावात् विशेषोऽपि प्रवृत्तिसामान्यमेव, तथा च भवनस्वात्मा यथा भवनभूत
25 एव तथा प्रवृत्तिविशेषोऽपि भवनभूत एवेति प्रवृत्तिविशेषत्वेनाभूतत्वं सामान्यस्यासिद्धमित्यादर्शयति **सामान्यस्येति**, सर्वभव-
नस्याविच्छिन्नत्वात् सर्वकालं भवनस्य प्रवाहरूपेण सत्त्वात्, गतिस्थित्यादिसर्वेषां भावानां विच्छेदस्याभावादिति वाऽर्थः,

१ सि. क. °पेक्षावन्मृ० । २ सि. क. कुलालदण्डाद्युदकातयाहृत्य तच्छालाया इति । ३ सि. क. वर्षंऽत्रव ।
४ सि. क. तथैवामरस्य । ५ सि. क. प्रवृत्तिविशेषत्वेनाभूतत्वमसिद्धम् प्रवृत्तिविशेषरूपत्वात् सामान्यस्य प्रवृत्तिविशेष-
स्वरूपत्वात् इत्यधिकं दृश्यते ।

अगत्यादित्वात् नासत्त्वं हेत्वसिद्धेरवोक्तवद्गत्यादिस्वरूपत्वात् सततभवनस्य, नन्वगमनस्थानश्चाकाशं भवत्येव, तत्र किमगत्यादित्वादसत् स्यात् खपुष्पवत्? उताकाशवत् सत् स्यादिति सन्देहहेतुता।

( **अगत्यादित्वाच्चेति** ) अगत्यादित्वाच्च नासत्त्वं हेत्वसिद्धेरेवोक्तवद्गत्यादिस्वरूपत्वात् सततभवनस्येति, अभ्युपगम्याप्यगत्यादिहेतुसिद्धिमनैकान्तिकत्वं ब्रूमः, नन्वगमनस्थानश्चाकाशं-अगच्छदतिष्ठच्च 5 व्योम भवत्येव, तत्र किं अगत्यादित्वादसत् स्यात् खपुष्पवत्? उताकाशवत् सत् स्यात्? इति सन्देहहेतुतेति।

स्यान्मतमगत्यस्तु कथमस्थानमाकाशम्? नित्यस्थितत्वात्, तस्मादगतित्वादिति संशयहेतुता स्यात् [ अतः ] अस्थानत्वादित्युक्तमित्यत्रोच्यते—

नित्यस्थितत्वादस्य नेति चेदुच्यते, अस्याप्यस्थानत्वमेव, छागतिनिवर्त्तनवदस्थानमिति च स्थानादन्यद्गमनाद्युच्यते, न स्थानस्यात्यन्ताभाव एव, तस्मादाकाशमप्यस्थानगमनं सच्च, गत्यभावेऽप्युपस्थितिरिति चेत् अथ निरुपाख्यमेव [illegible]भावमात्रस्थानं प्राप्नोति, अभावत्वात् अभावत्वञ्चास्याप्रवृत्तत्वात् खपुष्पवत्, आकाशादि च प्रवृत्तं स्थानवदस्थानञ्चेति वक्ष्यामः। 10

( **नित्येति** ) अस्याप्यस्थानत्वमेव यस्मादुच्यते छागतिनिवर्त्तनवत् स्थानं गतिनिवृत्तौ प्रवृत्तं प्रवृत्ताया गतेर्या निवृत्तिः प्रतिबन्धः सा स्थितिः वक्ष्यमाणवत्, न चास्याप्रवृत्तगतेराकाशस्य प्रतिबन्धः, 15 जानुप्रगतदेवदत्तगतिनिवर्त्तनवत्, अस्थानमिति च स्थानादन्यद्गमनाद्युच्यते न स्थानस्यात्यन्ताभाव एव,

भवनवद्गत्यादीनामविच्छेदादेव गमनादीनां भवनसामान्याविनाभूतत्वम् भवनस्यात्मवत् तदेतत्सर्वं भवनमेवेदमेकरूपं देवदत्तभेदं गतिभेदं स्थितिभेदं शयनवृत्तिहसनकथनादिभेदं वा भवतीति सर्वत्र व्यक्तं भवति तेन तेन भूयत इत्यन्तेन ग्रन्थेनोक्तमेवेति पूर्वसकलग्रन्थस्मरणं तच्चायमनुस्मारयन्निति शब्देन कारयतीति भावः। द्रव्यस्य द्वितीयो भावः क्रियाऽपि नोपपद्यते द्रव्यत्वे सत्यगत्यादित्वात्, खपुष्पवदिति यदुक्तं तन्निराकरोति—**अगत्यादित्वाच्चेति**, अगत्यादित्वाद्यदसत्त्वं प्रवृत्तिसामान्यस्य साध्यते तदपि न, अगत्यादि- 20 त्वस्यासिद्धेः, तदेव गतिस्थित्यादिभेदं भवतीत्युक्तत्वादिति भावः। यदि स्थित्यादिस्वरूपस्य भवनसामान्यस्यागत्यादित्वं सिद्धमित्युच्यते तदाऽप्याह—**अभ्युपगम्यापीति**, आकाशं हि न गमनरूपं स्थितिरूपं वा तथापि भवतीति तत्र सत्त्वेन समानाधिकरणमगत्यादित्वं दृष्टम्, खपुष्पे चासत्त्वेन समानाधिकरणम्, तथा च प्रवृत्तिसामान्यं किमगत्यादित्वादाकाशवत् सत् किं वा खपुष्पवदसदिति संशयजनकत्वादगत्यादित्वमनैकान्तिकमिति भावः। नन्वगत्यादित्वमाकाशे नास्ति, अगत्यादित्वादित्यादिना स्थित्यादेर्विवक्षिततया तत्र गत्यभावेऽपि स्थितेः सत्त्वेन अगतित्वरूपहेतोर्व्यभिचारित्वेऽपि अस्थितत्वरूपहेतोरनैकान्तिकत्वं नास्तीत्याशङ्क्य समाधत्ते— 25 **नित्यस्थितत्वादिति**, आकाशस्य नित्यत्वोक्तिर्न्यायमतानुसारेण, वैयाकरणमतेन तस्यापि त्रिगुणपरिणामात्, अन्यथा स्त्रीपुंनपुंसकलिङ्गानुपपत्तिर्भवेत्, प्रवृत्तिलक्षणत्वाल्लिङ्गस्य गुणसन्द्रावरूपत्वाच्च द्रव्यस्येति बोध्यम्। आकाशोऽपि न स्थितिमानित्याह— **अस्यापीति**, गतिनिवृत्तिरूपं स्थानं हि गतिमत एव भवति, न त्वगतिमतः, तत्प्रतिबन्धरूपत्वात्तस्य, आकाशश्च न गतिमानतो न स्थितिमानिति नित्यस्थितत्वं तस्यानुपपन्नमतोऽस्थितत्वमपि गगने सत्त्वाद्व्यभिचरितमेवागतित्ववदिति भावः। यथा स्थानपदं गतिविरोधिभावं बोधयति तथाऽस्थानशब्दोऽपि स्थितिविरोधिनं भावमेव बोधयति, न तु निर्विशेषणमभावमात्रम्, तस्मादाकाशो 30 न स्थानात्मकं न वा गत्यात्मकमिति तस्यागतित्वमस्थानत्वञ्चेत्यनैकान्तिकत्वं हेतोर्दुर्वारमिति दर्शयति—**अस्थानमिति चेति**।

१ सि. क. °दित्ययुक्तेत्यत्रो०। २ सि. क. °नास्यास्य। ३ सि. क. दस्थानमिति वृत्तौ प्रवृत्ताप्र०। ४ सि. °माणत्वात्। ५ सि. क. नचास्य प्र०।

तस्मादाकाशमप्यस्थानगमनं सचेत्यनैकान्तिकहेतुता तदवस्थैव साधनयोरनयारिति । गत्यभावोऽप्रवृत्तिर्गतिनिवृत्तिरिति चेत्—स्यान्मतं नन्वभावगतेर्गतिनिवृत्तिर[प्र]वृत्तिः, तस्माद्गत्यभावमात्रत्वात् स्थितेरभावत्वाभास्थानं न स्थानं तदेव चाकाशं गतेरेवाभावादित्यत्रोच्यते अथ निरुपाख्यमेवेत्यादि, उपाख्या संज्ञा, निर्गतोपाख्यं त्वत्परिकल्पितगत्यभावमात्रस्थानं तत्प्राप्नोति, अभावत्वादभावत्वञ्चास्याप्रवृत्तत्वात्,
5 खपुष्पवत्, आकाशादि च प्रवृत्तं स्थानवदस्थानञ्चेति वक्ष्यामः ।

गतिविशेषणसामर्थ्यादिति चेत् तदेवेदमस्मदिष्टं गत्यभावस्य स्थानस्य सत्त्वं सिद्धम्, स्थित्यभावस्य गमनस्य सत्त्ववदिति गतिविशेषणसामर्थ्यापादितस्थित्याद्युत्तरभावसत्यत्वादेव सर्वात्मकत्वाद्गतिस्थित्यादिभवनतत्त्वमवलम्ब्य तदपरित्यागेन तत्स्वाभाव्यान्निरुच्यते भवनं भाव इति ।

10 (गतीति) गतिविशेषणसामर्थ्यादिति चेत्—स्यान्मतं यदि सर्वथा स्थानं निवृत्तिरभाव इति अविशेषं ब्रूयाम् खपुष्पवन्निरुपाख्यं स्यात्, किं तर्हि ? गत्या विशिष्टं स्थानं गतिनिवृत्तिरिति ब्रूमः, तस्माद्गत्यभाव इति सोपाख्यमित्यत्रोच्यते तदेवेदमस्मदिष्टं स्थानस्य सत्त्वं गत्यभावस्य[स्थित्यभावस्य] गमनस्यसत्त्ववत्, गतिविशेषणयोगात भवन्मतविरुद्धं [सिद्धम्] तस्मिंश्च सिद्धे स्थाने तद्गतिस्थित्यादिसर्वक्रियापदाभिधेयो भावः—सदेव नासदिति सिद्धं तस्माच्च गतिविशेषणसामर्थ्यापादितस्थित्याद्युत्तरभावसत्यत्वात्,
15 अत एव च सर्वात्मकेत्यादि यावद्भवनं भाव इति, येयं निरुक्तिर्भवनं भाव इति साप्येतस्मादेव कारणात् गतिस्थित्यादिसर्वात्मकमेव भवनस्य तत्त्वमवलम्ब्य तदपरित्यागेन तत्स्वाभाव्यात्—तत्तद्भवनानुभवस्वभावत्वात् पूर्वस्य गतिस्वभावस्योत्तरस्य स्थितिस्वभावस्य, अथवा पूर्वस्य स्थिति[स्व]भावस्योत्तरस्य गति[स्व]भावस्य यथाविवक्षाक्रमं यथापरिणतिक्रमञ्च यथासंख्यमेकस्याभिव्यक्त्येतरस्यानभिव्यक्त्या च भवनं भाव इति निरुच्यते ।

20 ननु स्था गतिनिवृत्तावित्युक्त्वान्निवृत्तिमात्रमेव स्थानशब्देन प्रतीयते, न तु काचित् प्रवृत्तिः, तस्माद्गतिनिवृत्तिर्गत्यभाव एवाप्रवृत्त्यात्मा, स च नाकाशे, गतेरभावात्, तथा चाभावरूपं स्थानमस्थानं वा तत्र नास्तीति नानैकान्तिकत्वं हेतोरित्याशङ्कते—गत्यभाव इति, अभावगतेः गतिनिवृत्तिपदेनाभावस्य बोधादित्यर्थः । एवं सति स्थानं गत्यभावमात्रं प्रसक्तं तथा चाप्रवृत्तिरूपत्वादभावो भवदुक्तो निरुपाख्य एव प्रसज्यते खपुष्पवदिति समाधत्ते—अथेति । आकाशादि च न तथाभूतमित्याह आकाशादि चेति । प्रतियोग्यनुयोग्यन्यतरासम्बद्धस्यैवाभावस्य निरुपाख्यत्वं न सर्वथा, अन्यथा खपुष्पेणेव नञा कस्यापि प्रतिषेधो
25 निरुपाख्यत्वान्न भवेत्तथा च प्रतियोगिना गत्यादिना विशिष्टत्वान्नाभावो निरुपाख्य इत्याशङ्कते—गतिविशेषणेति । गत्या विशिष्टं स्थानं गतिविलक्षणं स्थानमित्यर्थः । एवं तर्हि सोपाख्यत्वेऽभावः सन्नेव भवेदिति समाधत्ते—तदेवेदमिति, एवञ्च प्रवृत्तिसामान्यं गतिस्थित्यादिसर्वरूपत्वात्सर्वपदाभिधेयं सदेवेति भावः । प्रवृत्तिः सर्वात्मकत्वादेव भवतीति भाव उच्यते सैव हि स्वस्वरूपमत्यजती तेन तेन रूपेण भवति गतिभवनस्वभावं स्थितिभवनस्वभावं वा यथाविवक्षमनुभवतीत्याह—गतिविशेषणेति गत्युत्तरं भवतो गतिनिवृत्तिरूपस्थानस्य गतिविशेषणादेव सद्रूपत्वादित्यर्थः । भवनस्य सर्वात्मकत्वेऽपि क्रमेणैवाभिव्यक्तिस्वभावत्वमिति दर्शयति—यथा विवक्षाक्रममिति भवनस्यापि तथा तथा भवने सामग्र्यपेक्षणात् प्रतिनियतसामग्रीसहकारेण प्रतिनियतगत्यादिभवनव्यक्तिः
30 इतरेषां स्थित्यादीनामनभिव्यक्तिश्चेति भावः । ननु विरोधिभावप्रादुर्भावे पूर्वभावनिवृत्तिर्नाम पूर्वभावस्य विनाश एव, यथा पाकेन

१ सि. क. तद्गच्छति० । २ सि. क. सत्यमेव ।

स्यान्मतं विरोधिनो भावस्योत्तरस्य स्थित्यादेः प्रादुर्भावाद्गतेर्विनाशो गतेर्वा प्रादुर्भावे स्थितेः, स चाभावोऽपि नाशः पाकजोत्पत्तिवदित्यत्रोच्यते–

**योऽप्यभावाभिमतो विनाशो विरोधिभावप्रादुर्भावे भावान्तरनिवृत्तिरितीष्टः सा च भावान्तरानभिव्यक्तिः तस्य भावान्तरस्य भाव एव, विरोधिभावप्रादुर्भावत्वादेव, यथा जागरणेन स्वप्नो निवर्त्त्यतेऽनभिव्यक्तिं नीयत इत्युच्यते तथा स्वप्नेन जागरणम्, अन्यतरापनयनेनान्यतरभवनात् सर्पस्फटाटोपकुण्डलभवनवत्, न हि क्रियान्तरादन्यच्छीयते न वाऽन्यज्जायतेऽपूर्वमिह किञ्चित्, इहापि च गतिभवनं स्थितिनिवृत्तिः स्थितिभवनमेव गतिनिवृत्तिरिति।** 5

(योऽपीति) योऽप्यभावाभिमतो विनाशो विरोधिभावप्रादुर्भावे भावान्तरनिवृत्तिरितीष्टः सा च भावान्तरानभिव्यक्तिः, तस्य भावान्तरस्य–स्थितेरन्यस्य गत्यादेः, गतेर्वाऽन्यस्य स्थित्यादेर्भाव एव, नाभावो विरोधिभावप्रादुर्भावत्वादेव, यथा जागरणेन स्वप्नो निवर्त्त्यते तेनानभिव्यक्तिं नीयत इत्यु- 10
च्यते यथा जागरणेन स्वप्नोऽनभिव्यक्तिं नीयते तथा स्वप्नेन जागरणम्, जाग्रतोऽपि च सुप्तवन्मन्दमन्दतरमन्दतमचैतन्यदर्शनात् सुप्तस्यापि जाग्रत इवाभिव्यक्ततराभिव्यक्ततमस्वप्नदर्शनात्, तदेव हि चैतन्यं तीव्रमन्दावरणोदयक्षयोपशमापेक्षं निद्राप्रचलादिभेदं पटुपटुतरपटुतमैन्द्रियादिभेदञ्च दृश्यते, तस्मादेकस्यैव वस्तुनोऽभिव्यक्त्यनभिव्यक्तिकृते स्वप्नजागरणे, अन्यतरापनयनेनान्यतरभवनात्, सर्पस्फटाटोपकुण्डलभवनवत्, अत आह न हि क्रियान्तरादन्यच्छीयत इत्यादि गतार्थं यावदिह किञ्चिदिति, एषा दृष्टान्तव- 15
र्णना, इहापि च गतिभवनमित्यादि गतार्थं दार्ष्टान्तिकवर्णनमपि, तस्मात् क्रियान्तरप्रादुर्भावे पूर्वभावनिवृत्तिर्नाभाव इति।

अत्राह–

**स्यादेतत् यथा तु भुक्तिक्रियाप्रवृत्तिस्तृप्तिफलावसाना, प्रयोजनाभावे कारकानभिसम्ब-**

घटे रक्तरूपोत्पत्तौ श्यामरूपस्य विनाशः तथैव स्थित्यादेः प्रादुर्भावे गतेर्निवृत्तिर्गतिर्विनाश एवेति कथं प्रवृत्तेः सर्वात्मकतेत्याशङ्कते– 20
**स्यान्मतमिति। योऽप्यभावाभिमत इति** प्रवृत्तेः सर्वक्रियाविशेषात्मकत्वेऽपि क्रियाविशेषाविवेकेन सा न व्यवहारपथमवतरति, तस्माद्यत्किञ्चित् क्रियाविशेषरूपेणैव व्यवहार्या, देशकालाभ्यां यत्क्रियाविशेषेण मोच्यते, स क्रियाविशेष एवाभिव्यक्तिरुत्पत्तिर्वोच्यते, अपरक्रियाविशेषाणां सतामप्यविवक्षितत्वात् ते तिरोभूता विनष्टा उच्यन्ते स च विनाशो न शून्यतारूपः, अकिञ्चिद्रूपस्य प्रत्येतुमशक्यत्वात्, नहि प्रत्ययो जायते प्रत्येतव्यं नास्तीति युज्यते तस्माद्वस्त्वन्तरं क्रियाविशेषव्यवहार्यमेव विनाश इत्युच्यते, तथा च स्थितिरूपेण प्रवृत्त्यनुभवनमेव गतिविनाशानुभवनं गतिरूपेण वा प्रवृत्त्यनुभवनमेव स्थितिविनाशानुभवनमिति 25
भावः। तत्र दृष्टान्तमाह–**यथा जागरणेनेति,** चितिशक्तेरावरणस्य तरतमभावेन प्रतिबन्धकसामग्रीसमवधाने यथानुरूपमावरणतिरोधाने चैतन्यस्य तरतमभावेनाभिव्यक्तिरेवञ्च तथा तथा चैतन्याभिव्यक्तिरेवावरणस्य तथा तथा विनाश उच्यते न तावदभावः कश्चिदेवं गतिव्यक्तिरेव स्थितिनिवृत्तिरिति भावः। इदमेवोपसंहरति–**नहि क्रियान्तरादिति** अत्र मूलं चारु नोपलभ्यते, नहि सर्पस्य क्रियाविशेषात् स्फटादयः पूर्वभावाः परभावाविर्भावे निरन्वयं ध्वस्ता भवन्ति न वा परभावा अपूर्वा उत्पद्यन्ते किन्तु विद्यमाना एव क्रियान्तरेणाभिव्यज्यन्त इत्युत्तरभाव एव पूर्वभावनिवृत्तिरिति भावः। ननु यत्किञ्चित्फलोद्देशेन कारकाणां 30
प्रवृत्तिर्दृश्यते न तु निष्प्रयोजनम्, तथा च तस्मिन् प्रयोजने निष्पन्ने सति तानि कारकाणि न प्रवर्त्तन्ते यथा तृप्तिफले निष्पन्ने भोजनक्रिया निवर्त्तते न तु तृप्तिरेव भोजननिवृत्तिः, तयोः साध्यसाधनभावावगमात्, भोजननिवृत्तौ हि तृप्तिरेव हेतुः, तथा च तृप्तेः कारणत्वेन पूर्वभावित्वान्निवृत्तेः कार्यत्वेनोत्तरभावित्वात् कथमुत्तरभावाभिव्यक्तिरेव पूर्वभावनिवृत्तिरित्याशयेनाशङ्कते–**स्यादे-**

१ सि. क. निवृत्ति०।

**न्धाद्भुजेः नि[वृत्ति]र्न क्रियान्तरबाधनात् तथैव तदपि स्यात्, अत्रो[च्य]ते अत्रापि तु मा मंस्था भुजिनिवृत्तिरभाव एव, किं तर्हि? फलं क्रियान्तरम्, बुभुक्षां हि बाधित्वा भुक्तिक्रियाप्रादुर्भावः भुक्तिं बाधित्वा तृप्तिक्रियाप्रादुर्भाव इत्येवं [क्रिया]चक्रकान्येतानि, तद्वन्नाभावो गतिनिवृत्तिः भाव एव स्थितिरिति।**

5 **स्यादेतदित्यादि** यावदेवमेतदपि स्यादिति, यथा तु भुक्तिक्रियाया निवृत्तिस्तृप्तिफलावसाना-तत्प्रयोजनमुद्दिश्य कारकप्रवृत्तेः, तस्मिंश्चावसिते प्रयोजने कारकाणि न प्रवर्तन्ते तस्मात् कारकानभिसम्बन्धात् भुजेर्निवृत्तिः न क्रियान्तरबाधनात्, एवं गतिरपि प्राप्तिफलावसाना प्रयोजनाभावे कारकानभिसम्बन्धान्निवर्तते न क्रियान्तरबाधनादतः संशेमहे किं स्वप्रजागरणवत्क्रियान्तरन्यग्भवने क्रियान्तरो, द्भवः तादात्म्ये सत्येव स्यात्? उत अत्यन्तनिवृत्तिरेव गतेः, फलावसाने भुजिक्रियावदिति, अत्रोच्यते

10 अत्रापि तु मा मंस्था भुजिनिवृत्ति[र]भाव एवेति, किं तर्हि? फलं–तृप्तिः क्रियान्तरं प्रवृत्तेरेव क्रियात्वात् बुभुक्षां हि बाधित्वेत्यादि यावत् क्रियाचक्रकान्येतानि, एतदुक्तं भवति क्रियान्तरप्रादुर्भावेन विना न क्रियानिवृत्तिः, नापि पूर्वक्रियान्यक्करणमन्तरेण क्रियान्तरप्रादुर्भावः, बुभुक्षाभुजितृप्तिक्रियाचक्रवत् पूर्वपूर्वबाधयोत्तरोत्तरप्रादुर्भावात् समानमेतदपीति, तस्मान्नाभावो गतिनिवृत्तिः, भाव एव स्थितिरिति।

एतदनिच्छोर्दोष उच्यते–

15 **यदि स्थितिर्नाम न भावस्तर्ह्यवस्तुकत्वे विवक्षाशब्दयोरप्र[वृ]त्तिरित्यभिधानाभावः, अर्थाभावात्, काकव[ा]सि[ता]दि[व]त्[स्व]र्थ[ं] वा तत्स्यात्, अथ द्रव्यमात्रं स्थितिर्गतावपि स्यात्, उभयत्र द्रव्यस्य सत्त्वा[द्वि]शेषाभावाच्च, यतस्तु खलु विरोधाविरोधात् भाव एव गतिस्थिती द्रव्यवत्, अत एव द्रव्यभवना[न]न्यैव सती भवनान्यत्व एव गतिविरोधिनी स्थितिरिति।**

**तदिति** भुजिक्रियाप्रवृत्तेः फलावसानत्वे हेतुमाह–**तत्प्रयोजनमिति**, प्रयोजनाभिनिर्वृत्तौ कारकाणां प्रवृत्त्यभावात् प्रवृत्ति-
20 जनकहेत्वभावादेव भुजिनिवृत्तिर्न तृप्त्युत्तरकालभाविक्रियान्तरेण भुजेर्बाधनम्, येन क्रियान्तरस्वरूपा भुजिनिवृत्तिर्भवेदिति भावः। तदेव दृष्टान्तमभिधाय दार्ष्टान्तिकमादर्शयति–**एवं गतिरपीति**, गतेर्हि फलमुत्तरदेशप्राप्तिः, तन्निवृत्तौ सत्यां गमनसाधनोपरमात् गतिनिवृत्तिः, न तु स्थितिलक्षणक्रियान्तरेण गमनसाधनसत्त्वेऽपि बाधनात् गतिनिवृत्तिरित्यर्थः। विरोध्युत्तरभावप्रादुर्भावत्वादेव पूर्वभावनिवृत्तिर्विरोधिभावस्वरूपेति यदुक्तं तत्र संशयमादर्शयति–**अतः संशेमहे इति** तत्र विरोध्युत्तरक्रियाप्रादुर्भावे सति पूर्वक्रियानिवृत्तिरुत्तरक्रियास्वरूपे सत्येव दृष्टा, स्वप्रजागरणस्थले, एवं फलप्राप्तौ कारकानभिसम्बन्धात् पूर्वक्रियाया अत्यन्त-
25 निवृत्तिर्भुजिक्रियास्थले दृष्टा, तथा च गतिनिवृत्तिरपि किं विरोधिक्रियाप्रादुर्भावे सति विरोध्युत्तरक्रियास्वरूपा? उत भोजननिवृत्तिवत् फलावसाने गतेर्निवृत्तिरेवेति संशयात् विरोध्युत्तरभावप्रादुर्भावत्वादिति तादात्म्यसाधकहेतुरनैकान्तिक इति शङ्कितुरभिप्रायः। समाधत्ते–**अत्रोच्यत इति** विरोध्युत्तरभावप्रादुर्भावत्वादिति नानैकान्तिको हेतुः, भुजिनिवृत्तेरभावात्मकत्वासम्भवात्, न हि भुजिक्रियास्थले विरोध्युत्तरक्रियाप्रादुर्भाव एव नास्तीति, किन्तु तृप्तिरेव विरोध्युत्तरक्रिया, तत्स्वरूप एव च भुजिनिवृत्तिरिति भावः। प्रवृत्तिपरम्परामविच्छिन्नां भुजिक्रियास्थले प्रदर्शयति–**बुभुक्षां हीति**। तात्पर्यं विशदयति–**एतदुक्तम्भवतीति**
30 प्रवृत्तिपरम्पराया द्रव्ये सर्वदा भावादन्यक्रियाप्रादुर्भावेन विना न पूर्वक्रिया निवर्तते, न वा पूर्वक्रियाप्रतिरोधेन विना क्रियान्तरमाविर्भवतीति परस्पराश्रयेणैव वस्तुप्रवृत्तेर्न कस्यापि निवृत्तिरभावमात्रमतो गतिनिवृत्तिलक्षणास्थितिर्भाव एवेति भावः। स्थितेरभावात्मत्वेऽनुपपत्तिं दर्शयति–**यदीति** स्थितेः क्रियात्मकभावत्वानभ्युपगमे स्थितिर्द्रव्यात्मा भावो वा स्यात्, अवस्तु वा

१ सि. °णाभावे।

**यदि स्थितिर्नामेत्यादि**, स्थितेर्भावत्वानभ्युपगमे द्वयी गतिः स्थितिशब्दस्य स्यात्, तृतीयविकल्पाभावात्, यद्वा स्थित्यभिधानमवस्तुकं यद्वा द्रव्यमात्रविषयं स्यात्, किञ्चातः ? इदमतो भवति दोषजातम्, अवस्तुकत्वे विवक्षाशब्दयोरप्रवृत्तिप्रसङ्गः–यद्यवस्तुविषयं स्थितिशब्दवचनं वक्तुमिच्छा विवक्षा सा स्वनिश्चितमर्थं परं प्रत्याययामीति जायते, अर्थाभावाच्च न जायते, तथा चाभिधीयतेऽनेनेत्यभिधानं स्थितिशब्दः, तस्याभावः स्यादर्थाभावात्, काकवासितादिवदनर्थकं वा तत्स्यादिति, एवं 5
तावदवस्तुकत्वे दोषः, अथ द्रव्यमात्रं स्थितिः द्रव्यस्याविरोधाद्गतावपि स्यात्, यथा देवदत्तसद्भावाद्गत्यविरोधाच्च देवदत्तो गच्छतीत्यत्र देव[दत्त]श्चाभिधानं प्रवर्त्तते तथा देवदत्तस्तिष्ठति गच्छति चेत्येतदभिधानं प्रवर्त्तेत, उभयत्र द्रव्यस्य सत्त्वाद्विशेषाभावाच्च एवं दोषदर्शनाच्च गत्यभावमात्रं स्थितिः, यतस्तु खल्वित्यादि विरोधाविरोधाभ्यां[3] भाव एव गतिस्थिती–गतिस्थित्योः परस्परतो विरोधात् देवदत्तद्रव्येण सहाविरोधाद्भाव एव गतिस्थिती द्रव्यवत् ग्रन्थो गतार्थो यावद्भवनान्यत्व एव गतिविरोधिनी स्थितिरिति, 10
भवनान्यत्व इति द्रव्यभवनादनन्यैव[4] गतिः स्थितिर्वा इति प्रवृत्तिभवनान्यत्व एवेति यथोपक्रान्तमुपसंहरति ।

**स्यान्मतं विरोधित्वादित्यनैकान्तिकमभावप्रसङ्गात्, गतेरभावो गत्या विरुद्ध्यते प्रकाशाभावेनेव तमसा प्रकाशः त्वन्मतेनेव, स्थित्या विरोधवत् खपुष्पादिना गत्यभावेनापि विरोधस्तत्र तद्विरोधित्वात्तदविनाभावात्, खपुष्पादेर्वा भावत्वमेव स्यात् गतिविरोधित्वात्** 15
**स्थितिवत्, एवं सति कुत एतद्भावविषयमेव, अभावविषयमेवैतदिति कुतः ? इति ।**

स्यादिति गतिद्वयव्यतिरिक्तगतेरभाव इत्याह–**स्थितेरिति** । गतिद्वयं प्रदर्शयति–**यद्वेति** । तत्र प्रथमपक्षे दोषमाह–**अवस्तुकत्व इति**, विवक्षापूर्विका हि शब्दप्रवृत्तिः, तत्र यदि स्थितिरवस्तु तर्हि तत्र विवक्षाऽनुदयेन शब्दप्रवृत्तिर्न स्यादिति भावः । इदमेव स्फुटयति–**यद्यवस्तुविषयमिति**, गतिनिवृत्तत्वमभावमात्रं तच्चावस्तुत्वात् स्थितिशब्दोऽनभिधानं भवेत् तेन कस्यचिदर्थानभिधानादिति भावः । ननु अभावोऽसन् अवस्तु शशशृङ्गम् निवृत्तिरित्यादयः शब्दा अपि 20
असदर्थबोधका दृष्टाः, अन्यथाऽसदिदमिति परप्रतिपादनासम्भवः स्यात्, हरिणाप्युक्तम् 'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति हि' । इति, तस्मान्नानभिधानं स्थितिशब्द इत्याशङ्कायामाह–**काकवासितादिवदिति** । अथ द्वितीयपक्षे दोषमाह–**अथ द्रव्यमात्रमिति**, यदि स्थितिशब्दस्य द्रव्यमर्थस्तर्हि तस्य गतौ स्थितौ चैकरूपत्वाद्गच्छत्यपि तिष्ठतीत्यभिधानं प्रवर्त्तेतेति भावः । **विशेषाभावाच्चेति** गच्छति द्रव्ये गच्छतिशब्द एव प्रयोक्तव्यो न तु तिष्ठतिशब्द इत्यत्र नियामकाभावादित्यर्थः । उपसंहरति–**एवमिति** तदेवं स्थितेर्गत्यभावमात्रत्वे दोषदर्शनान्न तन्मात्रं स्थितिः किन्तु गतिविरोधिभावविशेष एवेति भावः । 25
अथ गतिस्थित्योर्भावत्वं परस्परतोऽन्यत्वं च साधयति–**यतस्तु खल्विति** अत्र मूलं सम्यङ्नोपलभ्यम् । यथा गतिस्थित्योर्द्रव्येण सहाविरोधाद्भावत्वम्, तथा भवनस्य प्रवृत्तिलक्षणस्यान्यान्यत्व एव गतिस्थित्योर्विरोधः सम्भवति, अतो विरोधाविरोधाद्भावत्वं गतिस्थित्योस्तथा च स्थितिर्भाव एव तद्विरुद्धत्वादिति भावः । अथ विरोधित्वं तयोर्न सम्भवति भावाभावयोरेव विरोधात्, दृष्टं हि प्रकाशाभावस्वरूपेण तमसा प्रकाशस्य विरोधः, गतेश्च स्थित्या विरोधवत् खपुष्पादिनापि विरोधोऽस्ति तत्रानेकभावैर्विरोधकल्पनापेक्षया गत्यभावेनानेकभावनियतेन विरोधो लाघवाद्युक्तः, अस्ति हि गत्यभावः आसनशयनादिकालेऽपीति 30

१ सि. क. भावत्वाभ्यु० । २ सि. क. °त्यायर्यामिति । ३ सि. क. °विरोधिभावावस्तुस्थितिः । ४ सि. क. °भवनादननैव ।

स्यादिति, यदि स्यान्मतं विरोधित्वादित्येतदनैकान्तिकमभावप्रसङ्गात्, गतेरभावो गत्या विरुध्यते प्रकाशाभावेनेव तमसा प्रकाशः, यथा त्वन्मतेनेव—ननु प्राग् गतिरेव क्रियान्तरभावेनाभिव्यक्तिं नीयमाना भाव एवेत्युक्तम्, तत्र स्थित्या विरोधवत् खपुष्पादिना गत्यभावेनापि विरोधः, तत्र तद्विरोधित्वात्तदविनाभाव इति गतिरभावाविनाभाविनी स्यात्तद्विरोधित्वात्, यद्यद्विरोधि तत्तेना-

5 विनाभावि दृष्टम्, यथा गतिः स्थित्या, खपुष्पादेर्वा भावत्वमेव स्यादिति विरोधित्वात् स्थितिवत्, एवं तदविनाभावित्वे सति कुत एतद्भावविषयमेव एतदभिधानं स्थितिरिति, खपुष्पादिरित्यभावविषयमेवैतदिति वा कुतः ? विशेषो वाऽत्र वाच्य इति ।

अत्र ब्रूमो यद्यभावोऽपि भावेनाभावेन वा भावो विरुध्यते तावुभौ भावावेव तर्हि, विरोधित्वात् यत्किञ्चिद्वद्देशतः कालतो वा, गत्यभावाविनाभावित्वे चा..पपद्यमानस्थितिर्गति-

10 निवृत्तिरिति स्यात् तथा च कल्प्यमानायामनुपपद्यमानस्थितौ गतिस्थित्याद्येकभवनाविनाभूतद्रव्यविनाशविषयं स्थानमित्यभिधानं स्यात्, न चैवं द्रव्यस्य कूटस्थनित्यत्वाद्भवितुमर्हति, तस्मादेव च गतिनिवृत्तिः स्थितिर्नाभावः खपुष्पादिश्च, तस्माद्गत्यभावलक्षितभावविशेषस्थित्यविनाभाव्येव द्रव्यमिति ।

अत्र ब्रूमो यद्यभावोऽपीत्यादि, खपुष्पादेर्विपक्षं कृत्वा भवेन्नानिष्टापादनम्, किं विशे-

15 षेणोक्तेन ? यथा स्थितेरभावत्वायुक्तिस्तथा खपुष्पादेरित्यभिप्रायः, तत्कथं भाव्यत इति तदुच्यते-यद्यभावो भावेन अभावेन वा भावो विरुध्यते तावुभौ यौ विरुध्येते भावावेव तर्हि विरोधित्वात्, यत्किञ्चिद्वदित्युदाहरणसौलभ्यं दर्शयति, अहिनकुलादिवत् घटपटादिवत् घटकपालादिवद्वा सर्वत्र सहानवस्थानलक्षणविरोधदर्शनाद्देशतः कालतो वेति, तस्मात् खपुष्पादेरपि भावत्वं नानिष्टमिति, यदपि च त्वया स्थित्यभिधानमभावविषयमिति मन्यते तस्यापीयमुपपत्तिः स्याद्भवन्ती तद्यथा गत्यभावमात्रविषयत्वे

20 तद्विरुद्धत्वं स्थितिलक्षणं भावं गत्यभावं च विद्यत इत्यनैकान्तिकमिति शङ्कते-स्यान्मतमिति । गतिस्तु भाव एवेत्युक्तमित्याह-ननु प्रागिति गतिर्भावः क्रियान्तरेणाभिव्यक्तिं नीयमानत्वात् पचनादिवदिति भावः । गतेः स्थित्या विरोधस्येवान्येनापि विरोधो दृष्ट इत्याह-तत्रेति गतावित्यर्थः । गतिरभावाविनाभाविनी अभावविरोधित्वात् स्थितिवदित्याह-तत्र तद्विरोधित्वादिति । अभावविरोधित्वस्याभावाविनाभावित्वव्याप्तत्वेऽपि स्थितेर्भावत्वमिष्यते चेत्तर्हि खपुष्पादेरपि भावत्वं स्यादित्याह-खपुष्पादेर्वेति, गतिविरोधित्वात् स्थितेरिव खपुष्पमपि भावः स्यादिति भावः । एवञ्च तद्विरोधित्वेन तदविनाभावित्वस्य स्थितिखपुष्पयोः

25 समानत्वेऽपि स्थितिशब्दो भावमेव वक्ति नाभावम्, खपुष्पशब्दोऽभावमेव वक्ति न तु भावमिति कुतो वैषम्यम्, विशेषहेत्वभावादिति दर्शयति-एवमिति । तद्विरोधित्वस्य भावत्वव्याप्तत्वात् खपुष्पादौ यदि तद्विरोधित्वमभ्युपगम्यते तर्हि स्यात्तस्यापि भावत्वम् किं नः छिन्नमित्याशयेन समाधत्ते-अत्र ब्रूम इति, एवञ्च खपुष्पादिर्न व्यभिचारापादकः तद्विरुद्धत्वस्य भावधर्मत्वात्तुच्छेऽवृत्तेरित्यभिप्रायः । एतदेवाचष्टे-खपुष्पादेरिति । यदि तत्रापि हेतुरभ्युपेयते तर्हि सोऽपि भाव एवेत्याह-किं विशेषेणोक्तेनेति । हेतुबलादेव भावत्वात् तत्सत्त्वे स्थितेरिव खपुष्पादेरप्यभावत्वमयुक्तमेव स्यादित्याह-यथा स्थितेरिति । भावत्वमेव समर्थयति-

30 यद्यभाव इति भावयोर्विरोधित्वञ्च देशतः कालतो वा सहानवस्थानरूपम्, यथाऽहिनकुलयोः घटपटयोर्देशतः घटकपालयोश्च कालत इत्याह-अहिनकुलादिवदिति । यदि स्थितिर्गत्यभावविषयैव भवेत्तदा दोषमभिधत्ते-यदपि चेति गतिनिवृत्तिः

१ सि. नास्तीदं पदम् । २ सि. क. भावात्त इति । ३ सि. क. भावावनि० । ४ सि. क. योविरुध्यते । ५ सि. क. °त्वया° ।

चानुत्पद्यमानस्थितिर्गतिनिवृत्तिरिति, तथा च कल्प्यमानायामनुत्पद्यमानस्थितौ गतिनिवृत्तौ गतिस्थित्याद्ये-कभूतं भवनं प्रागुक्तन्यायकं तेनाविनाभूतं द्रव्यं तस्य विनाशोऽत्यन्तमभावस्तद्विषयं स्थानमित्यभिधानं स्यात्, न चैवं द्रव्यस्य कूटस्थनित्यत्वाद्भवितुमर्हति, तस्मादेव च-तदनिष्टभयात् प्रतिपत्तव्यं गतिनिवृत्तिः स्थितिर्नाभावस्तथा खपुष्पादिश्चेति, तदुपसंहरति-तस्माद्गत्यभावलक्षितेत्यादि गतार्थम्।

अनन्तरं खपुष्पादिरपि प्रसङ्गतोऽभिहितः- 5

अभाव इति च भावादन्यो भावविशेषः, अब्राह्मणक्षत्रियादिवत्, एवं खपुष्पाद्यसत्त्व-वाचिशब्दानां भावार्थत्वम्[1], वक्ष्यते चास्योदाहरणम्।

(अभाव इति) योऽसावभावाभिमतस्तत्राप्यभाव इति नापदार्थ उच्यते, किं तर्हि? नञः पर्युदासवाचित्वाद्भावादन्योऽभाव इति भावविशेषः, अब्राह्मणक्षत्रियादिवत्, एवं खपुष्पाद्यसत्त्ववाचि-शब्दानां भावार्थत्वम्, एवमसद्भावाभिमतेष्वपि सदर्थविषयत्वमिति न्यायव्यापितां दर्शयति-वक्ष्यते चा- 10 स्योदाहरणमतिदेशस्य।

इदं तावत् प्रकृतं भाव्यते-

यथा तिष्ठति पचतीत्यन्यथाभवनं प्रवृत्तिसामान्यं भवनं नातिवर्त्तते तथा विनश्यति प्रध्वंसते नितिष्ठतीत्यादयोऽपि, येऽप्यत्यन्ताभावाभिमताः खपुष्पादिशब्दवाच्यास्तेषामपि न तु

स्थितेरनुत्पद्यमानतालक्षणाऽवस्थेत्युच्येत तथा च गत्यविनाभूतद्रव्यविनाश एव स्थितिरिति स्यात् कूटस्थनित्यस्य द्रव्यस्येदृशी 15 अवस्था कथं सङ्गच्छेतेति भावः। **गतिस्थित्यादीति** गतिभवनेन स्थितिभवनेन वा केनचिदेकेन भवनेनाविनाभूतं द्रव्यं भवति, द्रव्यञ्च गमनस्थानादिसर्वप्रभेदानुभवनात्मकमिति पूर्वं समर्थितमेव, स्थितेर्गमनाभावरूपत्वे तु गमनाविनाभूतद्रव्यनिवृत्तिरेव स्थितिरिति स्यात्तच्च द्रव्यस्य कूटस्थनित्यस्य न सम्भवतीति भावः। एवञ्च गतिनिवृत्तिः स्थित्यात्मा भाव एवाभ्युपेय इत्याह-**तस्मादेव चेति। गत्यभावलक्षितेति,** अत्रापि मूलं नोपलभ्यते। गत्यभावेन लक्षिता या भावभूता स्थितिस्तदविना भाव्येव द्रव्यमिति भावः स्यादिति प्रतिभाति। ननु 'नञिव युक्तमन्यसदृशाधिकरणे' इति न्यायात्, अभाव इत्यत्र भावसादृश्यस्य 20 भावान्ये भावनम्, गतिनिवृत्त्यादिवद्भावनिवृत्तेरेव प्रतीतेरसतो भावान्यभावत्वासम्भवादित्याशङ्कायामाह-**अभाव इति चेति,** निरुपाख्ये व्यामोहाद्भावतत्त्वसमारोपे तत्त्वाध्यवसायात् भावादन्योऽभाव इति नञ् प्रयुज्यते भावादन्योऽसाविति बोधयितुम्, यथा ब्राह्मणसत्ताविषया बुद्धिर्यदा कुतश्चित् क्षत्रिये प्रसज्यते तदाब्राह्मणशब्दः प्रयुज्यते, सोऽयं मिथ्याध्यवसायो यदा तत्त्वज्ञा-नान्निवर्त्तते तदा नञः प्रयोगः, अब्राह्मणोऽयं क्षत्रिय इति क्षत्रियपदसामानाधिकरण्यात्तदवगतिः नायं ब्राह्मणो मिथ्या त्वेवमवसितः, किन्तु पर्युदासवाचित्वान्नञः तत्सदृशो ब्राह्मणोऽयमिति सदृशः क्षत्रियादिरेवाब्राह्मणशब्दार्थो न लोष्टादिः समारोपनिबन्धनस्य 25 सादृश्यादेरभावात्, तथा निरुपाख्येऽपि बुद्ध्या निरूपितमाकारान्तरमवलम्ब्य भावशब्दप्रयोगान्न तत्त्वज्ञाने तु तन्निवर्त्तनाय नञः प्रयोग इति भावः। सर्व एव शब्दा गुणसमुदाये वर्त्तन्त इति पक्षे जातिगुणक्रियालक्षणगुणसमुदायस्यैव शब्दात् प्रतीतेः सामान्यभ-वनमाश्रित्य खपुष्पादौ सामान्यविशेषवाचिभावशब्दप्रयोगप्रसङ्गेऽभावपदं प्रयुज्यते, तत्प्रयोगे च खपुष्पादौ यो विशेषो नास्ति तस्यैव निवृत्तिः प्रतीयते, अवशिष्टस्य च सद्भावोऽवगम्यत इत्याशयेन व्याचष्टे-**योऽसाविति,** अभावाभिमतः खपुष्पादिः, तत्राप्य-भावपदेन नापदार्थो बोध्यते, किन्तु भावविशेषस्यैव निषेधः प्रतीयत इति भावविशेषादन्यो भावविशेष एव खपुष्पादिरिति भावः। 30 दृष्टान्तमाह-**अब्राह्मणेति,** ब्राह्मणशब्दः विद्याविनयादिसम्पन्नब्राह्मणत्वजातिमति प्रसिद्धः, तत्र ब्राह्मणत्वजातिरहिते क्षत्रियादौ विद्याविनयादिगुणाश्रयेण ब्राह्मणशब्दप्रवृत्तिप्रसङ्गे नञा तदेकदेशाप्रवृत्तिता बोध्यत इति भावः। खपुष्पादेर्भावत्वं कथमित्यत्राह-**वक्ष्यते चेति,** अनुपदमेवेति भावः। अथ विशेषभवनानि सामान्यभवनं नातिवर्त्तन्त इत्यादर्शयति-**यथा तिष्ठतीति।**

---

१ सि. क. खपुष्पादिसत्त्व०। २ सि. वक्ष्येचा०।

तथाऽभवनं किन्तु भवनमेव, यथाऽगतिस्थितिः गतेरेव प्रकारान्तरता, सति नियतत्वात् प्रकाराणाम् ।

( यथेति ) यथा तिष्ठति पचतीत्यन्यथाभवनं—अन्येन प्रकारेण परिस्पन्दपरिणतस्य द्रव्यस्य ततः प्रकारादन्येनापरिस्पन्दपरिणतिप्रकारेण भवनं तिष्ठत्यास्ते शेते इत्यादि, तण्डुलादिकठिनद्रव्यमृदू-5 भवनं पचतीत्यादि, यथैताः क्रिया अन्यथाभवनमात्रभेदाः प्रवृत्तिसामान्यं भवनं नातिवर्त्तन्ते तथा विनश्यति प्रध्वंसते नितिष्ठतीत्यादयोऽपि भवनप्रकाराः प्रवृत्तिसामान्यं भावत्वञ्च नातिवर्त्तन्ते, एवं क्रियापदवाच्यस्यार्थस्यान्यथाभवनमात्रता व्याख्याता, येऽप्यत्यन्ताभावाभिमताः खपुष्पादिशब्दवाच्याः तेषामपि न तु तथाऽभवनं—अन्येन प्रकारेण न त्वभवनं[किन्तु]भवनमेव नात्यन्ताभवनमित्यर्थः, यथाऽगतिस्थितिः- गतेरन्या स्थितिरगतिस्थितिः, न तु गत्यभावमात्रं गतेरेव प्रकारान्तरता यथा सा स्थितिर-10 न्यथाभवनमेवं खपुष्पादिरप्यन्यथाभवनम्, किं कारणं? सति नियतत्वात् प्रकाराणाम्, प्रकारत्वात् सन्नेव खपुष्पादिः, यो यः प्रकारः स सन्नेव, यथा गतिनिवृत्तिः स्थितिरगत्या[त]सती ।

कथं खपुष्पादेः प्रकारतेति चेदुच्यते—

**खपुष्पस्य च समवायरूपेणानभिव्यक्तिः, घटादिकुसुमादिप्रकारेणाभिव्यक्तिरिति प्रकारत्वानातिरेकः द्रव्यक्रिययोश्च सर्वात्मकत्वाद्भवनद्वयाभेदात् कतमत् खं? कतमच्च पुष्पाणां विक-15 सनमन्यदिति देवदत्तगमनभवनद्वयत्ववत्तदपि, एवञ्च गमनस्थानादिक्रमभाविनीनामपि क्रियाणां सततसम्प्रवृत्तितादात्म्यानतिक्रमादेक एव भूतभवद्भूतो भावः प्रवृत्तिरित्युच्यते, प्रकर्षेण वर्त्तनात् स च प्रकर्षः सर्वप्रभेदानुभवनरूपः, स एव चान्तर्भावितस्वप्रभेदत्वात् प्रवृत्तिविशेष इत्युच्यते, न त्वदिष्टकारकाणां प्रवृत्तिविशेषः सामान्यप्रवृत्तेर्भिन्नः कश्चित् भुजिविशेषवत् ।**

**यथैताः क्रिया इति** सामान्यस्य विशेषात्मकत्वात् सम्बन्धिभेदेनैक एवानेकरूपः, यथा स्वगतभवनलक्षणापेक्षया सामान्यभाव-20 स्वरूपोऽपि तण्डुलादेर्मृदुभवनाद्यपेक्षया पचिर्विशेषरूपः, यथा वा अपरिस्पंदात्मना स्थितिमद्द्रव्यमेव पचनादिलक्षणपरिस्पन्दप्रकारेण पचतीति भवति, एवं गत्यादिपरिस्पन्दप्रकारेण परिगतं द्रव्यमपरिस्पन्दप्रकारेणाऽऽस्ते तिष्ठति शेते इत्यादिरूपेण परिणतं भवति, अतः पचनगमनस्थानाऽऽसनशयनादयो विशेषास्तदात्मना भवनलक्षणं सामान्यं नातिवर्त्तन्त इति भावः । तदेवं द्रव्यस्य भावाभावात्मकत्वाद्भावभागमाश्रित्य भावविशेषाणां प्रवृत्तिसामान्याविनाभावित्वमादर्शितम्, अथाभावभागमाश्रित्य तत्रापि प्रवृत्त्य-विनाभावित्वं दर्शयति-**तथा विनश्यतीति** घटादिद्रव्यं हि कस्मिंश्चिद्देशे काले वा सौक्ष्म्यात्तनुतामापद्यते साऽवस्था तिरोभावा-25 त्मिका विनश्यति प्रध्वंसत इत्यादिशब्दैर्व्यवह्रियत इति तथाविधद्रव्यप्रवृत्तिरेव विनाश इति प्रवृत्तिसामान्याविनाभाविभाव एवासाविति द्रव्यस्यान्यथाभवनमेव क्रियापदाभिधेयोऽर्थ इति भावः । अथात्यन्ताभावत्वेनाभिमतानां खपुष्पादीनामपि भावत्वं समर्थयति-**येऽप्यत्यन्ताभावाभिमता इति** खपुष्पादयोऽन्यथाऽभवनरूपा इति न किन्त्वन्यथाभवनरूपा एव, तेषामपि प्रकारत्वात्, यथा गतेरन्या स्थितिर्गतेरेव प्रकारान्तरं न तु गतेरत्यन्ताभावः, तथा खपुष्पादिरपि भावादन्यो भावस्यैव प्रकारान्तरं न तु भावस्यात्यन्ताभाव इति भावः । खपुष्पादिर्भावः प्रकारत्वात् स्थितिवदिति मानमभिप्रेत्याह-**यथाऽगतिस्थितिरिति** 30 गतेरन्यप्रकारेण भवनमेव स्थितिर्न तु गत्यभावमात्रमित्यर्थः । हेतुमाह-**सति नियतत्वादिति** प्रकारत्वस्य सत्त्वव्याप्यत्वादिति भावः । व्याप्तिं ग्राहयति-**यो यः प्रकार इति** । पक्षे खपुष्पादौ **हेतुं** प्रकारत्वं साधयत्यसिद्धिपरिहाराय-**खपुष्पस्य चेति**

१ सि. क. कथमगति० ।

(खपुष्पस्य चेति) खपुष्पस्य च समवायरूपेणानभिव्यक्तिः, अशाकक्षभाविप्रकारेणाभि-व्यक्तिरिति प्रकारत्वानतिवृत्तेर्द्रव्यक्रिययोः सर्वात्मकत्वादस्मिन् द्रव्यार्थनयभेदे सर्वं द्रव्यं क्रिया च गमनादि, द्रव्यभेदानां गमनादिक्रियाभेदानाञ्च भवनद्वयानन्यत्वभेदात् कतमत् खम्? कतमच्च पुष्पाणां विकसनमन्यत्? इति देवदत्तगमनभवनद्वयत्ववत् तदपीति-खपुष्पादिरपि भावः, एवञ्चेत्यादि-एवञ्च कृत्वा गमनस्थानादिक्रमभाविनीनामपि क्रियाणां सततसम्प्रवृत्तितादात्म्यानतिक्रमादेक एव पूर्वापरीभूतो भावः प्रवृत्तिरित्युच्यते, एवमेव च तदुपपद्यते यदुक्तं 'पूर्वापरीभूतं भावमाख्यातेनाऽऽचष्टे व्रजति पचती' (निरु० अ० १ सू० १४) त्यादीति, सर्वधात्वेकार्थ्यस्य चानन्तरमुपपादयिष्यमाणत्वात्, कस्मात् स भावः प्रवृत्तिरित्युच्यते? ब्रूमः, प्रकर्षेण वर्त्तनात्, स च प्रकर्षः सर्वप्रभेदानुभवनरूपः, स एव चान्तर्भावितस्वप्रभेदत्वात् प्रवृत्तिविशेष इत्युच्यते, रूपादिगत्यादीन् स्वप्रभेदानन्तर्भावयन्नेव भावः सामान्यभवनलक्षणो भवनभेदानां परस्परतो विशेषाद्विशेषो भेदानभ्युपगतत्वात्, न त्वदिष्टः कारकाणां प्रवृत्तिविशेषः सामान्यप्रवृत्तेर्भिन्नः कश्चिदिति, दृष्टान्तो भुजिविशेषवदिति।

तद्व्याख्यानम्—

यथा भुजिरेवाशनपानादिना द्रव्यक्षेत्रकालभावभेदेन प्रकारमात्रं भिद्यते, न हि तेषु कश्चिदभुजिरक्रिया वा, सर्वोऽप्यसौ भुजिरेव, तथा सामान्यप्रवृत्तिरेव प्रवृत्तिविशेषः, अस्त्यस्य सर्वगतिस्थित्यादिभेदाःस्त्वात्, एवं गतिस्थित्योरस्तियात्योर्वा, सर्वैव चासौ प्रकारमात्रभिन्ना सामान्यभवनलक्षणक्रियैव भुजिसामान्यमात्रप्रकारभिन्नभुजिविशेषवत्।

खपुष्पादेः खपुष्पत्वेन विशिष्टरूपेणानभिव्यक्तिः पुष्पत्वेन रूपेण चाभिव्यक्तिरिति तस्यानभिव्यक्तिप्रकारेण सत्त्वमेवेति नासिद्धता हेतोरिति भावः। एतस्मिन्नये सर्वेषां घटपटादिद्रव्यविशेषाणां द्रव्यात्मकत्वात् गमनादिक्रियाविशेषाणाञ्च क्रियात्मकत्वाद्द्रव्यक्रिययोश्च भवनद्वयानतिरेकात् विशेषा एव सामान्यव्यतिरिक्ता न सन्तीति कतमत् खम्? कतमच्च पुष्पाणां विकसनमिति देवदत्तगमनयोर्भवनद्वयानतिरिक्तत्ववत् खपुष्पादेरपि भवनद्वयानतिरिक्तत्वमेवेति तस्याप्यन्यथाभवनं सिद्धमेवेत्याशयेनाह-द्रव्यक्रिययोरिति। एवञ्च क्रियाविशेषाणां सामान्यात्मकत्वादेव कारकाणां प्रवृत्तिविशेषलक्षणायाः क्रियायाः सततसम्प्रवृत्तिलक्षणसामान्यक्रियाव्यतिरिक्ताया असत्त्वादेव क्रियामात्रं सततसम्प्रवृत्तिरूपमेवेत्याह-एवञ्च कृत्वेति, एवञ्च पूर्वापरीभूतो भाव एव प्रवृत्तिः क्रियेत्युच्यत इति भावः। एतदभिप्रायेणैव नैरुक्तं वचनं सङ्गच्छत इत्याह—यदुक्तमिति, पूर्वापरीभूतमिति च्विप्रत्ययान्तं पदम्, क्रियाया एकत्वादपूर्वमनपरं सन्तं पूर्वापरमिव भूतं पौर्वापर्येणावस्थितं भावं व्रजतिपचतीत्याद्याख्यातेनाऽऽचष्टे इति तदर्थः। पचिपठिभुजिगम्यादिसर्वधात्वर्थानां प्रवृत्तिसामान्यरूपत्वमनन्तरमेवोपपादयिष्यत इत्याह-सर्वधात्विति। ननु पूर्वापरीभूतो भाव एव वृत्तिरिति कुतो नोक्तम्, प्रवृत्तिरिति कुत उच्यते, एकस्यां क्रियायां को वा प्रकर्ष इत्यत्राह-कस्मादिति। सर्वान् क्रियाप्रभेदान् स्वस्मिन्नेव समावेशयत्यत एव सर्वान् प्रभेदाननुभवतीति प्रकृष्टवर्त्तनरूपत्वादसौ प्रवृत्तिरिति प्रवृत्तिविशेष इति चोच्यते, न तु प्रवृत्तिरन्या, अन्यश्च प्रवृत्तिविशेष इत्याशयेनाह-स च प्रकर्ष इति। तदेव स्फुटयति-रूपगत्यादीनिति, प्रवृत्तिशरीरे विशेषाणामन्तर्गतत्वाद्विशेषाणाञ्च परस्परतो भेदात् प्रवृत्तिसामान्यमेव प्रवृत्तिविशेष उच्यत इति भावः। दृष्टान्तं भुजिविशेषं प्रकाशयति-यथा भुजिरेवेति, अशनपानादयो भुजेरेव प्रकारास्तान् कुर्वत्यविशेषेण भुङ्क्ते इति व्यवहारात्, एवञ्च सामान्यविशेषात्मा क्रियेति भावः, उक्तं वैयाकरणैस्तथैव 'अभिन्नावेव भिन्नाश्च प्राहुः कृभ्वस्तयः क्रिया एकानेकविशेषस्थाः प्रवृत्तिः सार्वनामिका॥'

१ सि. क. [illegible]।

यथा भुजिरेवत्यादि यावत् प्रकारमात्रं भिद्यत इति, अशनपानखाद्यस्वाद्यादिद्रव्यभेदेन भाजने पाणौ शरावे वेति क्षेत्रभेदेन प्रथमद्वितीयमासादिना दिनरात्र्यादिना वा कालभेदेन तीव्रमन्दक्षुधितग्लानौषधखस्थ...भावेन च प्रकारमात्रेणैव भिद्यते न भुजित्वेन, न हि तेषु प्रकारभिन्नेषु कश्चिद्भुजिर्भवत्यक्रिया वा, किन्तु सर्वोऽप्यसौ भुजिरूपानति...ते, अथवा परस्परतः ...प्रभेदाद्भिद्यते, सामान्यप्रवृत्तिरेव प्रवृत्तिविशेषो वर्त्तते, अस्त्यर्थस्य सर्वगतिस्थित्या...भेदात्मकत्वात्, एवं गतिस्थित्योरस्तियात्योर्वेति विरोधिभावप्रादुर्भावोऽपि सामान्यभवनस्यैव प्र...विस्पर्...तमिति, तन्निगमयति—सर्वैव चासाविति यावत् क्रियैव, तस्मादस्तिभवतिविद्यतिप...विवर्तीनामेकार्थत्वात् प्रकारभेदाच्च ततोऽ[न]न्यसामान्यप्रवृत्तिविशेषो भुजिसामान्यमात्रप्रकारभिन्नभुजिविशेषवदिति ।

10 किञ्चान्यत्—

**एवञ्च भुजिगतिस्थितिपच्यादीनामपि तथा तथा सर्वभावव्यापिता भाषतिजानातिश्वेतत्या...नामपि पूर्वो...रव्यक्त्यव्यक्तिभवनैकत्वादे...च, पूर्वमभाषमाणो गच्छन् तिष्ठन्नुदासीनो वा पश्चाद्भाषते, तथा पश्यति जानातीच्छति द्वेष्टि प्रयतते स्मरतीत्यादिषु तुल्योऽर्थः ।**

एवञ्चेत्यादि, न केवलमस्त्यादय एव सर्वधात्वर्थव्यापित्वात् सामान्यप्रवृत्तिमात्रभावनायां 15 निदर्शनम्, किं तर्हि ? भुजिगतिपच्यादीनामपि तथा तथा सर्व[भाव]व्यापिता, भुक्तेस्तावत्—भुजेरभ्यवहरणार्थस्योपयोगपर्यायत्वात् उपयोगस्यापत्त्यर्थत्वादापत्तेः परिणामार्थत्वात् परिणामस्य वृत्तिसत्ताभवनार्थत्वात्, तथा गतिरपि सर्वभावव्यापिनी गमनचलनस्पन्दनपरिणामाद्येकार्थत्वात्, द्रवति द्रोष्यति दुद्रावेति द्रुः, द्रोर्विकारो द्रव्यं द्रव्यञ्च भव्ये द्रव्यं सदैव गत्यात्मकं विपरिणामात्मकमित्यर्थः, आर्षोऽपि यथा 'पोग्गले णं भंते ! किं एयति वेयति चलति फंदति खोभति खुभति तं तं भावं परि- 20 णमति ? हंता गोयमा ! तदेव जाव परिणमति' (भग० श० ५ उ० ७ सू० २१२) इति, स्थितिरपि

इति द्रव्यक्षेत्रादिभेदेन प्रकारमात्रेणैव भुजेर्भेद इति दर्शयति—अ...नपानेति । सर्वप्रकारेषु भुङ्क्ते इति व्यवहाराविशेषः, न हि तान् कुर्वन् पुरुषो न भुङ्क्ते इति व्यवह्रियत इत्याशयेनाह—न हि तेष्विति । एवं गति...त्योरिति, विरोधिभावप्रादुर्भावः, अस्तियात्योस्तु सामान्यविशेषभावप्रादुर्भावः, सर्वश्चायं प्रवृत्तिसामान्यस्य प्रकारविशेष एव, अस्त्यर्थस्य सर्वधात्वर्थेषु नियतत्वात् तत्तदर्थानाञ्च तत्प्रकारभेदत्वात्, भुजिसामान्यमात्रप्रकारभिन्नभुजिविशेषवदिति भावः । एवं सर्वधात्वर्थेषु अस्त्यर्थस्य 25 व्यापितां प्रदर्शयित्वा सर्वे सर्वार्थवाचका इति न्यायात् सर्वधात्वर्थाः सर्वधात्वर्थव्यापिन इत्यादर्शयति—एवञ्चेति । तत्र भुजेस्सर्वधात्वर्थव्यापितां तावदाह—भुक्तेस्तावदिति अन्नादेरभ्यवहरणं ह्यात्मन उपयोगविशेष एव, तत्रोपयोगे सत्येव भोजनप्रवृत्तेः, उपयोगश्च प्राप्तिविशेष आपद्यत इति शब्दाभिधेयः, सा चापत्तिः परिणामविशेषः सत्तारूपः, अस्तिभवतिविद्यतिपद्यतिवर्ततीनामेकार्थत्वात्, एवञ्च भुजेरस्त्यर्थत्वेन सर्वभावव्यापित्वं स्फुटमेवेति भावः । एवं गतेः सर्वभावव्यापित्वमाह—तथा गतिरपीति गमनस्य परिणामपर्यायत्वेन क्रियामात्रस्य द्रव्यपरिणामत्वाद्गमनमपि सर्वधात्वर्थव्यापीति भावः । एतदेव द्रव्य- 30 शब्दव्युत्पादनद्वारेण दर्शयति—द्रवतीति । तत्र मानं दर्शयति—आर्षोऽपीति । स्थितेः सर्वभावव्यापित्वमाह—स्थितिरपीति, स्थितेः स्वरूपापरित्यागार्थत्वात् सर्वाः क्रिया न स्वस्वरूपं कदापि परित्यजन्ति, स्वरूपपरित्यागे ह्यसत्य एव भवेयुरिति स्वरूपापरित्यागेन परिणमनं सर्वत्राविशिष्टमिति स्थितेः सर्वभावव्यापित्वमिति भावः । पच्यादीनामित्यादिना भाषानादर्शयति—

१ सि. क. भुजावेवे० । २ सि. क. स्थितियत्यो० । ३ सि. क. °सामान्यः । ४ सि. क. ह्येकार्थत्वात् ।

तिष्ठत्यात्तेऽस्ति स्वरूपं न त्यजति परिणमति तथा तथा भवतीत्यर्थः, पचतिकृषतिलिखत्यादयः पच्यादयः, तेषामपि पच्यादीनामस्त्याद्यविशेषः, पाकस्य क्रियाफलत्वात् क्रियायाश्च हेतुफलरूपाभेद-परिणतित्वात्, पच्यते पचत्यात्मानं बीजम् ... भवति जायतेऽस्ति विपरिणमतीत्याद्येकार्थत्वात्, तथा कृषति लिखति तथाऽऽत्मनः शिरां दर्शयति कण्डूयत इत्याद्येकार्थम्, तथा तथा सर्वभाववृत्तेः। स्यान्मतम् ... भुव्यादीनां सर्वभावव्यापिता, गतिस्थितिसत्ताविपरिणामाद्यनतिक्रमात्, पठिहसिविदि-श्वितिगद्यादीनां कथमिति चेदुच्यते भाषतिजानातिश्वेतत्यादीनामपि पूर्वोत्तरव्यक्तव्यक्तिभवनैकत्वादेव च, तथा तथा सर्वभावव्यापितेति वर्त्तते, भाष व्यक्तायां वाचि, ज्ञाऽवबोधने, श्विता वर्णे गडि वदनैकदेशे इत्येवमादीनां पूर्वोक्तपूर्वापरीभूतव्यक्तिलक्षणभवनस्यैकत्वात्, एकमेव हि पूर्वापरीभूतं भवनं गतिस्थित्या-दिवत् क्रियात्वादि... म्, तथा लषत्यादिनामपि, पूर्वापरीभूतैकभवनव्यक्तव्यक्तिलक्षणक्रियात्वानति-वृत्तेः सर्वभावव्यापितैव, पूर्वमभाषमाणो गच्छन् तिष्ठन्नुदासीनो वा पश्चाद्भाषते, पश्यति जानाति इच्छति 10 द्वेष्टि प्रयतते स्मरतीत्यादिषु तुल्यश्चर्चः, तस्मान्न काचिदपूर्वापरीभूता क्रियाऽस्ति क्रियात्वाच्च सर्वधात्वर्थाः सर्वधात्वर्थव्यापिन इति साधूक्तम्, एवन्तावत् प्रवृत्तिसामान्यमेव क्रियाप्रवृत्तिविशेष इत्युक्तम्।

अधुना लक्षणान्तरं परीक्ष्यमत आह–

यदप्यादिनैगमनयदर्शनमनवबुध्य पूर्वनयनिपातिस्थितिस्वरूपनिरूपणं क्रियते, सा तु द्रव्यावस्थाविशेषो गतिवदिति, यथा गतिर्द्रव्यस्यावस्थाविशेषो बालकुमारादिवद्द्रव्यादनन्या 15 तथा स्थितिरिति गतिस्थितिवच्च सर्वक्रिया इति।

यदप्यादिनैगमेत्यादि, 'णेगेहिं मिणति माणेहिं णेगमो एस तस्स णेरुत्ती'। 'संगहिअ पिंडितत्थं

---

पचतीति। पाकस्य सर्वभावव्यापित्वमाह–पाकस्येति। पचिधातोः पाकोऽर्थः, पाको नाम क्रियायाः फलम्। तथा च क्रियाफलयोः कार्यकारणभूतयोरभिन्नपरिणतित्वात् जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति षड्भावविकाराभिन्नार्थत्वात् सर्वभावव्यापितेति भावः। एवमितरेषामपि धात्वर्थानां सर्वभावव्यापित्वं प्रदर्शयति–भाषतीति पठिहस्योर्भाषधात्वर्थान्तर्गत-20 त्वात् विदेर्ज्ञाधात्वर्थान्तर्गतत्वाच्च शङ्काग्रन्थेनासङ्गतिर्बोध्या, पूर्वमभाषमाणोऽपठन्नहसन् पश्चाद्भाषते पठति हसति चेति अव्यक्तस्य व्यक्ततया भवनात्तेन सहैकत्वमिति सर्वाः क्रियाः पूर्वापरीभूता भवनाविशिष्टाः प्रवृत्तिविशेषत्वेनाभिमताः प्रवृत्तिसामान्यमेवेति सर्वासामेकत्वं विज्ञेयमिति भावः। एतदेव साधयति–एकमेव हीति। न्यायव्यापितामादर्शयितुमनेकान्... रणानीति बोध्यम्। क्रियालक्षणं निगमयति–एवन्तावदिति अथ ... लक्षणप्रकृतिद्रव्यस्यावस्थाविशेषः कारकाणां प्रवृत्तिवि-शेषलक्षणा क्रियेति सांख्यलक्षणं निराकर्तुमाह–यदपीति। णेगेहिं इति, एतत्सदृशी गाथाऽऽवश्यकनिर्युक्तौ गाथार्धमन्यत्राप-25 रार्धमान्यत्र दृश्यते, तद्यथा–'णेगेहिं माणेहिं मिणइत्ती णेगमस्स णेरुत्ती' ॥ ७५५ ॥ इति, ततश्च 'संगहियपिंडियत्थं संगहवयणं समासतो बिंति' ॥ ७५६ ॥ इति, किन्त्वत्र नैगमस्य विभागद्वया... आरम्भात् विभागद्वयादेरेव विशेषसङ्ग्रहत्वाबोधयं प्रदर्शयितुं गाथार्धद्वयं समुच्चित्यात्र टीकाकृद्भिः ... प्रतिभाति। तथा णेगेहिं मिणति माणेहिं इत्ययं पादो गाथालक्षणहीनो भासते। नैगम-... भावो द्विविधः द्रव्यक्रियाभेदादित्येवं वस्तुनो द्वैविध्यप्रतिपादकं दर्शनमाद्यनैगमनयदर्शन... तस्यापरस्य त्रित्वादिना विभागकरणापेक्षया प्रथमत्वात्, त्रैविध्यादिविषयदर्शनानि हि द्वितीयादिनैगमानि भवन्ति, अत्र नये स्थित्यादेर्द्रव्याव-30 स्थावर्णनं न युज्यते वस्तुनो द्वैविध्यात्, एतन्नये स्थित्यादेर्द्रव्यावस्थावर्णनं तद्वत् क्रियाया लक्षणं ...

---

१ सि. क. ...। २ कण्डूयत इत्याद्येकार्थमिति वाक्यं प्रतिषु ... परिवर्तितं दृश्यते।

संगहवयणं समासेणं ॥' ( ) इत्येवमादिनयलक्षणे द्रव्यक्रियात्मकद्वि[illegible] गमो नैगम इति निरुच्यते [illegible]या द्रव्य[illegible]कवस्तुवाद आदिनैगमनयदर्शनम्, त्रित्वादि[illegible]र्शनानां द्वितीयादिनैगमत्वात्, एतद्दर्शनमनवबुद्ध्य पूर्वनयनिपाति–सङ्ग्रहनये निपतितुं शीलं यस्य [illegible] तदिदं स्थितिस्व[illegible]पनिरूपणं क्रियते सङ्ग्रहनयदर्शनानुपाति, प्रथमात् विधिभङ्गात् व्यवहारनयात् आरातीया येऽतीताः

5 पूर्वनयाः ते सङ्ग्रहनयभेदाः तदनुपाति यदुत्तरं क्रियालक्षणं स्थित्युदा[illegible]रणद्वारेणोच्यते तस्य [illegible]पनिरूपणाय तद[illegible]विवेकैरेवोच्यते, कथं पुनस्तैः स्थितिस्वरूपनिरूपणं क्रियते? उच्यते–सा तु द्रव्यावस्थाविशेषो गतिवत् प्रतिपत्तव्येत्येवं निरूप्यते यथा गतिर्द्र[illegible]स्थाविशेषो बालकुमारादिवद्र्व्यादनन्या तथा स्थितिरिति, गतिस्थितिवच्च सर्वक्रिया इति ।

अत्रापि लक्षणान्तरे दोष उच्यते—

10 अत्रोच्यते, अविकल्पितै[क]त्वे यत्नप्रसाधितक्रियार्थान्तरत्वत्यागः, अव्यक्तद्रव्यावस्थात्वात्, यत्तद्द्रव्यं ततो नान्याऽवस्था तदवयवत्वात्, देवदत्तबाल[कु]मारादिवत्, ततश्च द्रव्यार्थान्तरभूतक्रियापदार्था[भ्यु]पगमविरोधः, एवमभिधानात्त्वव्युत्पत्तौ व्युत्पत्तौ वोभयथापि स्ववचनावि[रो]धः, तत्र तावद्[व्यु]त्पत्तौ अवस्था[illegible]तोऽन्यत्वं, तत्स्वादिविषयश[illegible]वाच्यत्वात्, [illegible], यथा देवदत्ताश्व इत्युक्ते [illegible] तस्य स्वमश्वः, सोऽस्य [स्वा]मीति तेन

15 विषयेणाश्वशब्देन तस्य वा[illegible]त्वात्ततोऽन्यत्वं दृष्टमेवं द्रव्यावस्थेति ।

(अत्रो[च्य]त इति) अविकल्पितैक[त्व]इति चेदुच्यते यत्नप्रसाधितक्रियार्थान्तरत्वत्यागः—प्राक्[न]यत्नेन प्रसाधितमुक्तिक्रियालक्षणाभिधानेन द्रव्यादर्थान्तरं क्रियेति तस्य त्यागो दोषः, किं कारणं? अव्यक्तद्रव्यावस्थत्वात्, इह ह्यवस्थाशब्देनाव्यक्ताः क्रमभाविनो बाल[कु]मारादयो धर्मा द्रव्यस्यैव देवदत्तादेरंशा एवोच्यन्ते, ते चांशास्तदवयवत्वात्ततो नान्ये, तस्माच्च ततोऽर्थान्तरमित्येतदापन्नम्, स चाभ्यु-

20 पगमैत्याशयेनाह–[illegible]यलक्षण इति । विधिनयो हि प्रथममत्रोपन्यस्तो व्यवहारनयः, ततः परं [illegible] नयाः स[ङ्ग्र]हनयभेदाः, अयञ्च नयः पञ्चमो नैगमभेदः, तत्र प्रथमनयानन्तरमेतन्नयात् पूर्वं ये नयास्ते सङ्ग्रहनयभेदाः, तच्च वैतदनुपाति क्रियायाः स्थितिवद्द्रव्यावस्थाविशेषत्वं यदभिधत्ते तदयं स्वनयमादिनैगमरूपं न जानात्येव, अत्र द्रव्यक्रिययोर्भेदात्, अवस्थाऽवस्थावद्भावो हि सङ्ग्रहनयविषयः स्यादिति दर्शयति–प्रथमादिति एतद्ग्रन्थोपवर्णितनयापेक्षया प्रथमो विधिनयः, आरातीयाः–समीपस्था इत्यर्थः, पूर्वनयाः–एतन्नयापेक्षया पूर्वोक्ता नया इत्यर्थः, यदुत्तरं–यत्तेभ्य उत्तरनयेनानेन क्रियमाण[illegible],

25 तदविदितनयविषयविवेकैः एतन्नयस्य पञ्चमस्य कोऽसौ विषयः सङ्ग्रहो वा नैगमो वेति तद्विषयानभिज्ञैरित्यर्थः । तन्मतीयं क्रियानिरूपणं दर्शयति–सा त्विति, यथा गतिर्द्रव्यावस्थाविशेषस्तथा स्थितिरपि, एवमेव सर्वाः क्रिया अपि, तथा च द्रव्यावस्था विशेषः [क्रि]येति भावः । मतमता[illegible]–अत्रोच्यत इति, अवस्थावस्थावतोरभेदेन द्रव्यस्यावस्थाविशेषत्वे क्रियाया अविकल्पितैकत्वप्रसङ्गः, द्रव्यस्याविकल्पितमेकत्वं स्यात् ततश्च पूर्वं यद्द्रव्यक्रिययोरन्यत्वं प्रसाधितं तद्व्यर्थं स्यादित्याह–[illegible] इति [illegible] एकरूपस्य द्रव्यस्य तत्त्वे क्रियाद्रव्ययोर्भेदानभ्युपगमे पूर्वं महता यत्नेन प्रसाधितं यद्द्रव्यात् क्रियाया

30 अर्थान्तरत्वं तस्य त्यागः प्रसज्यत इत्यर्थः, छिन्नादिमद्द्रव्यं तद्रहिता च क्रिया भिन्नमुभयमेव भाव इत्यादिना हि तयोरन्यत्वं साधितमिति भावः । त्यागे हेतुमाह–अव्यक्तेति, अव्यक्ता अस्फुटा–द्रव्यस्यावस्था–क्रियात्मिका तद्भावात्, क्रियाया द्रव्यावस्थात्वे त्वव्यक्तत्वमत एव चानन्यत्वं तस्या इति द्रव्यादर्थान्तरत्वसाधनं त्यक्तमिति भावः । अनन्यत्वं मानेन साधयति–

१ सि. क. °मनुत्र ।

पगतद्रव्यार्थान्तरभूतक्रियापदार्थत्यागो दोषः, एष प्रयोगेणैवोद्भाव्यते यत्तद्द्रव्यं ततो नान्यदित्यादि गतार्थं यावद[भ्यु]पगमविरोध इति, एवमेभिधानात्त्वव्युत्पत्तौ[व्युत्पत्तौ]वेत्यादि, अत्र द्रव्यावस्थेत्यस्य शब्द-स्यार्थद्वयकल्पना स्यात्—राजवृक्षादिशब्दवदव्युत्पत्तिः, [व्युत्पत्ति]र्वा राजपुरुषशब्दवत्, उभयथापि स्ववचना[दि]विरोधः, तद्व्याचष्टे तत्र तावदव्युत्पत्ताववस्थायास्ततोऽन्यत्वं—द्रव्यादन्यावस्था तत्स्वादि वि[षयष]ष्ठ्यन्तत्वात् तस्य स्वस्वामिसम्बन्धादिषष्ठीविषयिणोऽवस्थाशब्देन वाच्यत्वं द्रव्यस्य, इतरथा 5
[द्र]व्यशब्दोऽवस्थाशब्दो वाऽनर्थकः स्यात्, इह तद्विशेषवाचिनोऽपि शब्दस्य वाच्यार्थोऽन्य इत्यवश्य-म[भ्यु]पगन्तव्यम्, देवदत्ताश्ववत्, यथा देवदत्ताश्व इत्युक्ते देवदत्तस्य स्वमश्वः सोऽस्य स्वामीति तेन विषयेण स्वामिविषयेणाश्वशब्देन तस्य देवदत्तस्य वाच्यत्वात् ततोऽन्यत्वं दृष्टमेवं द्रव्यावस्थेति।

**शिला[पु]त्रकशरीरवन्नेति चेन्न, अवस्थाशरीरशब्दप्रयोगानर्थक्यात्।**

(शि[ले]ति) शिलापुत्रकशरीरवन्नेति चेत्—स्यान्मतं शिलापुत्रकस्य शरीरमित्यत्र शिलापुत्रकादनन्य- 10
स्मिन्नपि शरीरे स्वादिविषयशब्दवाच्यत्वदर्शनादनैकान्तिकतेति एतन्न न, अवस्थाशरीरशब्दप्रयोगानर्थ-क्यात्, यद्यनन्यच्छिलापुत्रकाच्छिलापुत्रकशरीरं शरीरमेव शिलापुत्रक इति घटकुटशब्दवत् पर्यायमात्र-प्रतिपद[त्वा]त् श्रोतारं प्रत्यन्यतरप्रयोगानर्थक्यं स्याद्गतार्थत्वात् तथा द्रव्यमेवावस्था द्रव्यावस्थेत्यन्यतरानर्थ-क्यम्, तस्मादन्यतरानर्थक्यान्नेदमुपपन्नं शिलापुत्रकशरीरवन्नानैकान्तिकतेति।

किञ्चान्यत्— 15

**अत्रापि शरीरावस्था[क्रि]यात्वादन्यत्व[म्], [शिला]पु]त्रकेण शीर्यते शरारु[स्ता]च्छरीरमिति शरारुर्भवति तेन शरारुणा भूयत इति द्रव्यक्रियाभिधानं नातिवर्त्तते, तथा च द्रव्यस्यावस्था [द्र]व्यमवतिष्ठते [द्र]व्यणावस्थीयत इत्यवस्थानस्य क्रियात्वानतिवृत्तेः, [व्यु]त्पत्तावपि सामासिकप-दत्वात् समासस्य च षष्ठीसमासत्वात् षष्ठ्याश्च कर्त्तरि विहितत्वात्, सा यद्विषयं द्रव्यस्य कर्तृत्वं**

एष प्रयोगेणैवेति। एवं द्रव्यावस्थेतिशब्देन व्युत्पन्नपक्षे चाभेदाभ्युपगमो विरुध्यत इत्याह—एवमभिधानाद्वेति, 20
द्रव्यावस्थेत्यभिधानादित्यर्थः। [अव्युत्पत्ता]विति राजा वृक्ष इत्यादिवदव्युत्पन्नशब्दाङ्गीकारेण राजपुरुषशब्दवत्सामासिक-शब्दत्वाद्व्युत्पन्नशब्दाङ्गीकारेण चार्थद्वयकल्पनेऽपि स्ववचनादिविरोधो भवतीत्यर्थः। तत्र तावदव्युत्पन्नशब्दपक्षे विरोधं दर्शयति—तत्र तावदिति द्रव्यावस्थाशब्दस्याव्युत्पन्नत्वेऽपि द्रव्यस्यावस्थेति वाक्यसमानार्थकत्वात् स्वस्वामिभावसम्बन्धार्थकषष्ठीविष-यत्वेन द्रव्यादन्यत्वं क्रियाया द्रव्यावस्थास्वरूपाया आवश्यकमन्यथा द्रव्यशब्दोऽवस्थाशब्दो वा व्यर्थः स्यादिति द्रव्यावस्था-शब्दवाच्यो द्रव्यादन्य एव सिध्यतीति भावः। तत्र दृष्टान्तमाह—देवदत्ताश्ववदिति, यथाऽत्र देवदत्तः स्वामी अश्वस्य, 25
अश्वश्च देवदत्तस्य स्वमिति तयोर्भेदश्च प्रतीयते तथा द्रव्यावस्थाशब्देनापि, तस्मात्तयोर्भेदादंशबोधकावस्थाशब्दोपादानं विरुद्ध-मिति भावः। ननु षष्ठ्या स्वस्वामिभावप्रतीतावपि न भेदः प्रतीयते शिलापुत्रकशरीरादौ स्वस्वामिभावप्रतीतावप्यभेददर्शनादि-त्याशङ्कते—शिला[पुत्र]केति। तद्व्याचष्टे—स्यान्मतमिति। एवं तर्हि शिलापुत्रकशरीरशब्दयोः पर्यायत्वप्रसङ्गेन घटकुटशब्द-प्रयोगेऽन्यतरवैयर्थ्यवत् वैयर्थ्यमन्यतरस्य स्यात्, एवं द्रव्यावस्थाशब्देऽपीति तत्स्वादिविषयशब्दवाच्यत्वं भेदसाधकमेव न शिलापुत्रकशरीरादौ व्यभिचारः, तत्रापि शिलापुत्रकशरीरयोरभेदे पर्यायताप्रसङ्गेन वैयर्थ्यप्राप्त्या भेदस्यावश्यकत्वादित्याशयेन 30
समाधत्ते—अवस्थाशरीरेति। किञ्च सर्वस्य वस्तुनो द्रव्यक्रियात्मकत्वेन शिलापुत्रकशरीरस्यापि तथात्वेन नानैकान्तिकत्व-मिति दर्शयति—अत्रा[पी]ति शिलापुत्रकशरीरमित्यत्र शरीरशब्दः क्रियारूपः, शॄ धातुनिष्पन्नत्वेन विशरणबोधकत्वा[त्]-

१ सि. क. नने दि०। २ सि. क. °मभिधानात्वे०। ३ सि. क. स्वादिति वि०। ४ सि. क. °षष्ठवि०।

ततोऽर्थान्तरभूतां तां तदन्यगतिविचलनप्रतिबन्धात्मिकामवस्थां दर्शयति, आत्मनोऽक्रियात्वात् क्रियामन्तरेण कर्तुः कर्तृत्वाभावात्, तस्माद्युपत्तावव्युत्पत्तौ च यदि द्रव्यं ततोऽवस्था यतोऽवस्था ततो द्रव्यमिति विरुध्यते ।

(अत्रापीति) अत्रापि शरीरावस्थाक्रियात्वादन्यत्वम्—नन्वस्माभिरुपपादितं द्रव्यक्रियात्मकं
5 सर्वं वस्त्विति, तस्मादत्रापि शिलापुत्रकेण शीर्यते शरारुत्वाच्छरीरमिति शरारुर्भवति तेन शरारुणा भूयत इति द्रव्यक्रियाभिधानं नातिवर्त्तते, तथा च द्रव्यस्यावस्था—द्रव्यमवतिष्ठते द्रव्येणावस्थीयते इत्यवस्थानस्य क्रियात्वानतिवृत्तेस्ततोऽन्यत्वमेव, एवं तावदव्युत्पत्तौ, व्युत्पत्तावपि सामासिकपदत्वात् समासस्य च षष्ठीसमासत्वात् षष्ठ्याश्च कर्त्तरि विहितत्वात्—कर्त्तरि षष्ठीयं द्रव्यस्यावस्थेति द्रव्यमवतिष्ठत इत्यादि प्राग्वत्, सा यद्विषयमित्यादि यावत् तदन्यगतिविचलनप्रतिबन्धात्मिकामवस्थां दर्शयति; सा—षष्ठी
10 यद्विषयं द्रव्यस्य कर्तृत्वं—यां क्रियां साधयत् साधनं कर्तृ भवति तद्द्रव्यं ततोऽर्थान्तरभूतां तां—अवस्थानक्रियां, दर्शयतीति सम्बध्यते, किं कारणं? आत्मनोऽक्रियात्वात्-तस्य द्रव्यस्य स्वयमक्रियात्वात् क्रियामन्तरेण कर्त्तुः कर्तृत्वाभावात् कर्त्तरि षष्ठी [न]स्यात्, ततः—तस्मात् द्रव्यादन्यत्र गतिः, अन्यस्य गतिः, द्रव्याद्विचलनं—परिस्पन्दः परिणतिः पूर्वस्या औदासीन्यावस्थायाः प्रच्युतिः क्रियान्तरावस्थातो वा तयोरन्यगतिविचलनयोः प्रतिबन्ध आत्मा अस्या अवस्थानक्रियायाः सा तदन्यगतिविचलनप्रतिबन्धा-
15 त्मिका तां दर्शयति षष्ठीति, अथवा तदन्यगतिरिति—तस्मिंश्च नियमेन गतिर्विचलनं शेषं पूर्ववत्, पूर्वस्मिन् व्याख्याने भेदोऽनयोः, गतिर्देशान्तरप्राप्तिः[वि]चलनं स्वक्षेत्रेऽपि व्यावृत्ततेति, इह पुनरभेद इति विशेषः, तस्माद्युत्पत्तावव्युत्पत्तौ च यदि द्रव्यं ततोऽवस्थेति विरुध्यते, यतोऽवस्था ततो द्रव्यमिति विरुध्यते, आदिग्रहणात् लोके तथा दृष्टत्वात् प्रत्यक्षविरोधः, तथानुमयत्वत्त्वानुमानविरोधः, तद्वदेव

20 स्वाह—शिलापुत्रकेण शीर्यत इति, अनेन क्रिया प्रतिपादिता । शरारुणा भूयत इति, अनेन द्रव्यं प्रतिपादितम् । एवं द्रव्यावस्थाशब्देनापि द्रव्यक्रियात्मकं वस्तूच्यत इति दर्शयति—तथाचेति । एवमव्युत्पत्तिपक्षाश्रयेण दोष आदर्शित इत्याह—एवन्तावदिति । द्रव्यस्यावस्थेति षष्ठीसमासत्वात् द्रव्यस्यावस्थानक्रियाकर्तृत्वेन कर्तृषष्ठ्यन्तत्वमिति व्युत्पत्तिपक्षमादर्शयति—व्युत्पत्तावपीति । सा यद्विषयमिति, इयं हि षष्ठी द्रव्यस्यावस्थानक्रियाकर्तृत्वं बोधयति द्रव्यस्य क्रियाहेतुत्वात्, एवं द्रव्यादवस्थाया अन्यत्वमपि दर्शयति, द्रव्यस्य क्रियातो भिन्नत्वात्, स्वयमक्रियमपि तत् क्रियाव-
25 त्कुरुति, अन्यथा तस्य क्रियाकर्तृत्वाभावेन षष्ठ्यनुपपत्तेरिति कर्तृत्वं दर्शितमिति भावः । अथ द्रव्यादन्यत्वं दर्शयतीत्याह—तत इति, तदन्यगतिविचलनप्रतिबन्धात्मिकामिति पदस्य गतिविचलनयोर्भेदमभेदञ्चाभ्युपगम्य द्विधा व्याख्यानं कर्तुकामः प्रथमं व्याख्यानं दर्शयति—तस्माद्द्रव्यादिति अन्यगतिश्च विचलनञ्चान्यगतिविचलने, तस्मादन्यगतिविचलने तदन्यगतिविचलने इत्येवं समासः, अवस्थानक्रिया हि द्रव्यादन्यत्रान्यस्य गतिं प्रतिरुणद्धि, तथा द्रव्याद्विचलनं—द्रव्यस्य विद्यमानावस्थायाः प्रच्युतिः, द्रव्यस्य विद्यमानक्रियातोऽन्यस्याः क्रियायाः प्रच्युतिर्वा, तदपि प्रतिरुणद्धि षष्ठीति भावः । गतिविचलनयोरभेदमभ्युपेत्य
30 व्याचष्टे अथ वेति । पूर्वस्मिन्निति, पूर्वव्याख्यायां गतिविचलनयोर्भेदः, अत्र व्याख्यानेऽभेद इति विशेषः । भेदपक्षे गतिविचलनयोरर्थमाह—गतिरिति । व्युत्पत्त्यव्युत्पत्तिपक्षयोर्द्रव्यावस्थयोर्भेदात् अविकल्पितैकत्वे स्ववचनविरोध एवेति भावमाह—तस्मादिति । प्रत्यक्षादिविरोधानादिना दर्शयति—आदिग्रहणादिति स्ववचनादिविरोध इत्यत्रादिग्रहणादित्यर्थः । लोकेऽपि

१ सि. क. दयुक्तम् ।

रूढिविरोधः, एवं द्रव्यावस्थाविशेष इति क्रियालक्षणमभ्युपगमादिविरोधादयुक्तम्, कालसाधनयोगो[1]
भाव इत्येतयोः का[ला]दिष्वव्याप्तेरलक्षण[त्व]मिति तैरेव निराकृतमिति ।

त्वन्मनोरथानुवृत्तेस्तु द्रव्यमात्रदर्शनाभिमुखीभूयापि बलादेवात्याज्याभिमततत्त्वद्रव्य-
शब्दार्थवशात् पुनरपि द्रव्यादर्थान्तरभूताया गतिस्थित्यादिक्रियाया आपत्तिः, भवति भवनं
वा द्रव्यमिति भव्यार्थत्वात्, तत्र प्रकृतिप्रत्ययार्थव्युत्पत्तेर्द्रव्यक्रिययोः सिद्धिः, यद्भूयते 5
सा क्रिया यद्भवति तद्द्रव्यमिति साध्यसाधनभेदात् ।

त्वन्मनोरथानुवृत्तेस्त्वित्यादि, द्रव्यस्यावस्थामात्रं क्रिया नार्थान्तरमित्येषः सांख्यमता-
नुवर्तिनो भवतः परप्रत्ययो मनोरथः स नोपपद्यते, सर्वत्र द्रव्यक्रियात्मकभावापत्तिभावादुक्तवत्,
अथापि त्वन्मनोरथमनुवृत्त्य द्रव्यमात्रदर्शनाभिमुखीभूयापि—अवस्थाशब्दं श्रूयमाणमपि उज्झित्वा,
यद्यपि तदुपर्युक्तं स्याद्द्रवीकृतचेतसो न किञ्चिद्ब्रूमः तथापि बलादेव—उपपत्तेरेवात्याज्याभिमततत्त्वद्रव्य- 10
शब्दा[र्थवशा]त्—अत्यागार्हमभिमतं तत्त्वं तव सांख्यस्य च द्रव्यमेवार्थः, तदभिधायिनो द्रव्यशब्दस्य
वशात् तदर्थवशाच्च पुनरपि—वारं वारं[2] द्रव्यादर्थान्तरभूताया गतिस्थित्यादिक्रियाया आपत्तिः, सा
क्रियाऽऽपन्ना, कस्मात्? भवति भवनं वा द्रव्यमिति भव्यार्थत्वात्, द्रव्यञ्च भव्ये भव्यशब्दश्च कर्तरि
भावे वाऽस्तु तथा द्रव्यशब्दोऽपि, तत्र द्रव्यशब्दस्य भव्यार्थत्वात् प्रकृतिप्रत्ययार्थव्युत्पत्तिरवश्यम्भाविनी,
ततश्च[प्रकृति]प्रत्ययार्थव्युत्पत्तेः द्रव्यक्रिययोः सिद्धिः—प्रकृत्यर्थस्य क्रियात्वात् प्रत्ययार्थस्य द्रव्यत्वात् कथं 15
व्युत्पत्तिरिति चेदुच्यते साध्यसाधनभेदात्, यद्भूयते सा क्रिया, यद्भवति तद्द्रव्यम्,—यत्तद्भवता वस्तुना
भूयते स प्रकृत्यर्थो भावः, यत्तद्भवति तत्कर्तृ, तस्मात् कर्तृभाव[ना]नात्वाद्द्रव्यक्रियानानात्वं[3] स्यात्,

द्रव्यावस्थयोर्भेदस्य दर्शनाल्लोकविरोध इत्याह—**लोक इति** । तयोर्भेदस्यानुमेयत्वात्तैनैकत्वं विरुध्यत इत्याह—**तथेति** ।
रूढिविरोधमाह—**तद्रूढेश्चेति** । द्रव्यावस्था क्रियेति लक्षणाभ्युपगमोऽपि एकत्वाभ्युपगमादिविरोधादयुक्त इत्याह—**एवमिति** ।
द्रव्यस्य कालयोगात् साधनयोगाद्वा भेदात् कालयोगोभावः साधनयोगो भाव इत्यपरेषां लक्षणं तैरेव कालादौ दोषमादर्श्य 20
दूषितमिति नात्र तत्प्रस्तूयत इति दर्शयति—**कालसाधनेति** । अथ द्रव्यमात्रं तत्त्वमिति सांख्यपक्षाभ्युपगमेऽपि क्रियाया
अर्थान्तरत्वं बलात्ते प्रसज्यत एवेत्याह—**त्वन्मनोरथानुवृत्तेस्त्विति** द्रव्यमात्रप्रत्ययस्य मनोरथमात्रत्वे कारणमाह—
**सर्वत्रेति** भावस्य द्रव्यक्रियोभयरूपतायाः प्रतिपादितत्वादिति भावः । त्वदुपरि द्रवीकृतचेतसो वयं तव दर्शनविषयेऽव-
स्थाशब्दपरिहारेण यद्यपि किञ्चिन्न ब्रूमो येनोक्तं स्यात्तथापि युक्तिभिरेव द्रव्यभिन्ना क्रिया सिध्यतीत्याह—**अथापीति** । तव—
वैयाकरणस्य, द्रव्यभिन्नक्रियापत्तौ हेतुमाह—**भवतीति** । भवतीति कर्तृव्युत्पत्तिः, भवनमिति भावव्युत्पत्तिर्भव्यशब्दस्य, 25
भव्यशब्दो हि 'भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा' इति कृदन्तसूत्रेण भावे कर्तरि च निपातितः, 'द्रव्यञ्च
भव्ये' इति तद्धितसूत्रेण भव्यार्थे द्रव्यशब्दो निपातितः, तस्माद्द्रव्यशब्दो भव्यशब्दवत् कर्तरि भावे वा, उभयव्युत्प-
त्त्यङ्गीकारेण च भावप्राधान्यपक्षे क्रियायाः कर्तृप्राधान्यपक्षे द्रव्यस्य च सिद्धिरिति भावः । द्रव्यशब्दवशेन तत्सिद्धिमाह—
**द्रव्यञ्चेति** । द्रव्यशब्दार्थवशेन तत्सिद्धिमाह—**तत्र द्रव्यशब्दस्येति**, प्रोक्तसूत्रेण द्रव्यशब्दस्य भव्यार्थत्वेनैकस्माच्छब्दात्
क्रियाकर्तृभावादिबोधस्य विरोधादसम्भवेनान्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययविभागकल्पनयाऽर्थभेदात् प्रकृतिभूतस्य द्रोः क्रिया 30
प्रत्ययार्थः कर्ता द्रव्यमिति द्रव्यक्रिययोः सिद्धिरिति भावः । प्रकृतिप्रत्ययार्थव्युत्पत्तिमेव तावदाह—**साध्यसाधनभेदा-
दिति** । धातुवाच्या क्रिया साध्यम्, प्रत्ययवाच्यः कर्ता सिद्धरूपः, भावप्रत्ययार्थोऽपि क्रियैवेति सिद्धत्वसाध्यत्वाभ्यां कर्तृभाव-

1 सि. क. °योगाभाव । 2 सि. क. सारं सारं । 3 सि. क. नानात्वात् ।

नान्यथा, तस्मान्नयोत्थानप्रकृताद्द्रव्यशब्दार्थवशात् भव्यभवत्यादिशब्दवशाच्च बलादेव [illegible]सिद्धिरिति साधूक्तम् ।

यत्पुनरेतदु[illegible]संयोगो वा स्थितिरिति लक्षणं तत्र युक्तं वाशब्दवर्ज्यम्, वि[illegible]र्थासम्भवात् द्वाभ्यामविरोधात् ।

5 (यदिति) [illegible]संयोगो वा स्थितिरिति लक्षणं तत्र युक्तं वाशब्दवर्ज्यम् तत्रापि वाशब्दस्यानर्थक्यं विकल्पार्थासम्भवात्, कस्मात् पुनस्तद्युक्तं? द्वाभ्यामविरोधात्–क्रिया द्रव्यादर्थान्तरमित्यनेन दर्शनेनाविरोधात्, उक्तिवत्तु क्रियालक्षणेन द्रव्यक्रियाश्रयेण च प्रागुक्तेन न्यायेन चाविरोधादिति, एवं तावत् प्रवृत्तिसामान्यक्रियात्वनि[illegible]स्यर्थविशेषग्रहणप्रयोजने दोषाभिधानं कृतम् ।

अधुनेदमपि विशेषग्रहणप्रयोजनं दृष्यते–

10 यदपि च द्वितीयं विशेषग्रहणप्र[illegible]भिधीयते सर्वदा सर्वभावानां प्रवृत्तिसमन्वया[illegible] देवदत्त इति नाप्रवृत्तिकम् सप्रवृत्तिकमेव, पचत्यादिव[illegible]वदत्तादयोऽपि शब्दाः क्रियावचनाः, तस्मात् क्रियावचनो धातुरिति धातुसंज्ञास्तेऽपि स्युः, विशेषग्रहणसामर्थ्यात् पुनः [illegible] विशेषा न भवन्तीति निवर्त्यन्ते, सर्वभेदसम्बन्धानुगुण्यात्तु प्र[illegible]त्तिसामान्यमवेदं भवनवत् सत्यपि भवनवचन[illegible] शब्द[illegible]विशेषार्थत्वात् न क्रियेति ।

(यदपि चेति) यदपि च द्वितीयं विशेषग्रहणप्रयोजनमभिधीयते सर्वदेत्यादि, सर्वदेति 15 प्रवृत्त्यनिवृत्तिं दर्शयति, सर्वभावानामिति व्याप्तिः, कुतः? प्रवृत्तिसमन्वयाद्धेतोः देवदत्त इत्यपि नाप्रवृत्तिकं–नाक्रियं वस्तु तेन शब्देनाभिधीयते, किं तर्हि? सप्रवृत्तिकमेवोच्यते, यथा पचत्यादीनां क्रियावचनत्वमेवं देवदत्तादीनां द्रव्यवाचित्वाभिमतानामपि, वाच्यस्यार्थस्य प्रवृत्तया सत्तया गत्यादिसर्वभवनात्मिकया समन्वितत्वम्, ततः पचत्यादिवद्देवदत्तादयोऽपि शब्दाः क्रियावचनाः, तस्मात् 'क्रियावचनो धातुः' (महाभा. अ १ पा ३ सूत्रे १) इति धातुसंज्ञास्तेऽपि स्युः, विशेषग्रहणसामर्थ्यात् 20 पुनर्विशेषा न भवन्तीति निवर्त्यन्ते, कस्मात् पुनर्देवदत्तादयो विशेषा न भवन्तीति? उच्यते

भेदाद्द्रव्यक्रिययोर्भेद इति भावः । एतदेवादर्शयति–यद्भूयत इति । नयोत्थानेति, [illegible] प्रकृतो यो द्रव्यशब्दः [illegible] । द्रव्यञ्च भव्य इति द्रव्यपर्यायभव्यशब्दवशात् यद्भवति यद्भूयत इत्यादितदर्थशब्दवशादपि द्रव्यक्रियाभेदसिद्धिरित्याह–भव्येति । अथ गतिस्थित्योर्द्रव्यान्यभावत्वसमर्थनावसरे स्थितिलक्षणं प्रोक्तमभ्युपेत्याह–यत्[illegible]नरिति । अन्यप्रकारेण परिस्पन्दपरिणतद्रव्यस्य प्रकारान्तरेणाविशिष्टदेशसंयोगपरिणामेन भवनमेव स्थितिः, सा च प्रवृत्तिसामान्यं नातिवर्तत 25 इति भावः । अथ सर्वभावानां सर्वदा प्रवृत्तेः प्रवृत्तिवियुतवस्त्वभावात् प्रवृत्तिमात्रमेव क्रिया तद्वाचकत्वात् पच्यादीनामिव देवदत्तादिशब्दानामपि धातुत्वं स्यात्तद्वारणार्थं प्रवृत्तिविशेषः क्रियेत्युच्यत इति विशेषप्रयोजनं वाद्युक्तं निराकर्तुमाह–यदपि चेति । देवदत्तादेर्द्रव्यस्य कथं क्रियावचनत्वमित्यत्राह–प्रवृत्तिसमन्वयादिति, क्रिया हि कारकाद्भेदेन नावगम्यते, कारकाणां हि प्रवृत्तिविशेषरूपाऽसौ तदभेदेन तत्समवेतैव. एवञ्च द्रव्यासंसृष्टक्रियावाचक[illegible] केवलस्य धातोः प्रयोगो यथा नास्ति किन्तु साध्यमानावस्थारूपेणैव तथा क्रियानात्मकस्य द्रव्यस्यापि प्रयोगो नास्ति, अत एव हि परं ब्रह्म अवाच्यमुच्यते, तथा च प्रवृत्तिविशिष्ट- 30 स्यैव देवदत्तादेर्वाच्यतया देवदत्तादिशब्दानामपि क्रियावचनत्वाद्धातुत्वं प्रसज्यत इति भावः । कृते च विशेषग्रहणे क्रियाप्रवृत्तिका अपि देवदत्तादि[illegible] न क्रियावि[illegible]वचना इत्याह–विशेषग्र[illegible]णेति । तत्र कारणमाह–सर्वभेदेति सर्वे भेद

सर्वभेद [illegible] ख्यात् तु नायं विशेषः—सर्वैर्हसिपठिगम्यादिभिर्भेदैर्देवदत्तभवनप्रवृत्तेः सम्बन्धेनाऽनुगुणत्वात् प्र[illegible]त्तिसामान्यमेवेदं भवनवत् सत्यपि भवद्भवनमादिविशेषे तु शब्दस्य[ा] विशेषार्थत्वात्, तस्मात् [न] क्रियेति देवदत्तादेरक्रियात्वमुपसंहरति, इतिशब्दस्य समाप्त्यर्थत्वात्, एवमर्थं विशेषग्रहणमिति प्रकृतोपसंहारः, प्रवृत्तिविशेषः क्रिया न प्रवृत्तिसामान्यमिति न भवनमात्रं नापि देवदत्त इत्युपसंहारार्थः ।

अस्यापि विशेषग्रहणस्य सदोषत्वमुच्यते— 5

**इदमपि त्यक्तद्रव्यार्थोत्थानम्, प्रत्याख्यातविशेषग्र[ह]णप्रयोजनतुल्यदोषानुबन्धश्च ।**

(इदमपीति) इदमपि त्यक्तद्रव्यार्थोत्थानम्,—इदं हि विशेषग्रहणप्रयोजनव्याख्यानमुत्थान एव द्रव्यार्थत्यागं कुरुते, अपिशब्दात् प्रागुक्तभवनसामान्यक्रियात्वनि[रा]स्यर्थं विशेषग्रहणमन्ते क्रियामेव त्यजतीति स्मारयति, सर्वदा सर्वभावानां प्रवृत्तिसमन्वयादिति हेतुवचनेन देवदत्त इति नाप्रवृत्तिकमिति नामवाच्यार्थस्वरूपवचनेन च प्रवृत्तिमात्रमेवेदं न द्रव्यं नामेति द्रव्यार्थस्य प्रागभ्युपगतस्य त्यागः 10 कृतो भवत्यनेनापि विशेषग्रहणप्रयोजनवचनेन द्वितीयेनेति, न केवलं द्रव्यार्थत्याग एव दोषः, किं तर्हि ? प्रत्याख्यातविशेषग्रहणप्रयोजनतुल्यदोषानुबन्धश्च ।

इदं कथमिति चेदुच्यते—

**यथा तत्र प्रवृत्तिसामान्यनिवृत्त्यर्थे विशेषग्र[ह]णे प्रवर्त्तत ईहते चेष्टत इत्यादीनां धातुसंज्ञा न प्राप्नोति क्रियावचनानामेव धा[तु]त्वात्तेषाञ्चाक्रियात्वात् तथेहापि देवदत्तादिधातुत्व- 15 निवृत्त्यर्थे वि[शेषग्रह]णे वृतादीनां धातुसंज्ञा नैव प्राप्नोति, अक्रियावचनत्वाद्देवदत्तवत्, स वा क्रिया स्यात् सर्वभेदसम्बन्धानु[गु]णत्वाद्वृतादिवत्, अनिष्टञ्चैतदिति । प्रवृत्तिसामान्यनि[वृत्त्]यर्थे देवदत्तादिद्रव्यनिवृत्त्यर्थे च विशेषग्रहणे द्विधाऽप्यस्वशब्दोपादानसाध्यभावादिलक्षण[क्रिया]वचनञ्चानर्थकं स्यात्, द्वयोरपि क्रियात्वात् ।**

**यथा तत्रेत्यादि** ग्रन्थ उपसंहृते दोषासक्त्या चोद्यमेवोत्तरत्वेन समर्थयति, भाष्यकारेण कार- 20 कवृत्त्याः फलोद्देशिन्याः क्रियात्वं प्रतिपाद्योपसंहृतं तस्मात् प्रवृत्तिविशेषः क्रिया न प्रवृत्तिसामान्यमिति, तत्र दोष आसज्यते यदि प्रवृत्तिविशेषः क्रिया प्रवर्त्तत ईहते चेष्टत इत्यादीनां धातुसंज्ञा न

आविर्भावतिरोभावात्मकाः, ते एव हि विशेषाः, नमोबहुला प्रवृत्तिः स्थितिरूपा सामान्यात्मिका द्रव्यमुच्यते, अत एव सामान्ये नपुंसकं भवति, एवञ्चाविर्भावतिरोभावलक्षणसर्वभेदसम्बन्धेऽपि सामान्यस्यैकरूपतया प्रवृत्तिमात्रत्वेन न प्रवृत्तिविशेषतेति देवदत्तादिद्रव्यवाचिनो न धातुत्वमिति भावः । तत्र दृष्टान्तमाह—**भवनवदिति,** शब्दस्य—देवदत्तादिशब्दस्य, अविशेषार्थत्वात्—भवनमा- 25 त्रवाचित्वात्, अखिभवतिविधतीनां भवनसामान्यवाचित्वेन न क्रियाविशेषवचनत्वमेव देवदत्तादिशब्दानामपीति भावः । तदेवमुक्तं विशेषग्रहणसाफल्यं दूषयति—**इदमपीति** विशेषग्रहणेन तत्प्रयोजनप्रदर्शनपरव्याख्यानेन च क्रियाया द्रव्यस्य च निराकरणमेव कृतं भवतीति भावः । एतदेवाह—**इदं हीति** । प्रवृत्तिमात्रमेवेदमित्यत्रैवशब्देन द्रव्यस्य व्यावर्तितत्वाद्र्व्यार्थत्याग इत्याह—**प्रवृत्तिमात्रमे[वे]मिति** । प्रत्याख्यातविशेषग्रहणप्रयोजनतुल्यदोषानुबन्धमेव स्फुटीकरोति—**यथा तत्रेति, कारकवत्या इति** साधनशक्तिभिः सह साध्यमेकं साधयती प्रवृत्तिः क्रिया, सा पूर्वं सामान्यरूपा भागशः प्रविभज्यते, तस्मात् कारकाणां प्रवृत्तिविशेषः क्रियेति 30 भाष्याभिप्रायः । तद्भाष्यस्य निर्गलितार्थं स्वयं दर्शयति—**तस्मा[दि]ति** । तदर्थे दोषमुद्भावयति—**यदीति** विशिष्टप्रवृत्तेरेव क्रियात्वे

१ सि. क. सम्बन्धिना ।

प्राप्नोति क्रियावचनानामेव धातुत्वात् तेषाञ्चाक्रियात्वात्—प्रवृत्तिविशेष[स्य] क्रियात्वादित्येष दोषः यथा तत्र प्रवृत्तेः सामान्यनिवृत्त्यर्थे विशेषग्रहणे, तथेहापि देवदत्तादिधातुत्वनिवृत्त्यर्थे विशेषग्रहणे वृतादीनां धातुसंज्ञा नैव प्राप्नोति किं कारणं? अक्रियावचनत्वात्, देवदत्तवत्, तदर्थस्याक्रियात्वादक्रियावचनत्वम्, तदर्थस्याक्रियात्वं सर्वभेदसंबन्धानुगुण्यात्, स वा देवदत्तः क्रिया स्यात् सर्वभेदसम्बन्धानुगुणत्वात्,
5 वृतादिवत्, अनिष्टञ्चैतदिति, किञ्चान्यत्—प्रवृत्तिसामान्यनिवृत्त्यर्थे देवदत्तादिद्रव्यनिवृत्त्यर्थे च विशेषग्रहणे द्विधाप्यस्वशब्दोपादानसाध्यभावादिलक्षणमुक्तिवचनञ्चानर्थकं स्यात्—यदुक्तमस्वशब्दोपादानसाध्यभावो भावलक्षणं, भावादिग्रहणात् स्वशब्दोपादानसिद्धभावः सत्त्वमिति लक्षणमुक्तित एव पृथगिति[न] वस्तुनोऽपि, लिङ्गसंख्यादिमदलिङ्गसंख्यादित्वेन द्वयोः पृथक्त्वं तथा त्रिकालात्रिकालविषयत्वं भूताभूतभेद इत्यादिपृथक्त्वलक्षणवचनमनर्थकं द्वयोरपि क्रियात्वादिति ।

10 यथा च तत्रोच्यते नैष दोषः, विशेष इति हि भवतः क्व सम्प्रत्ययः? य उपादीयमानोऽन्यं निवर्त्तयतीति परो ब्रूयात् यद्येवं वृतादयोऽपि उपादीयमाना विशेषान्निवर्त्तयन्ति तर्हि गच्छत्या[दयो] विशेषा निवर्त्त्यन्ते न गच्छति न शेते न भुंक्ते वर्त्तत एवास्ति भवति विद्यत एव केवलमिति, तिष्ठत्यादिवत्, यथाचोक्तं भाष्यकारेण 'सामान्यमपि यथा विशेषस्तद्वदिति', (महा० अ० १ पा० २ सू० २४) ततश्चैषां सिद्धा धातुसंज्ञेति यथा तत्र प्रवृत्तिसामान्यनिवृत्त्यर्थे
15 विशेषग्रहणे परिहार एवमिहापि प्रत्युच्यते, एवञ्चोच्यमाने नन्वस्मद्धृदय एव दृष्टं फलमभिव्यक्तम्, नन्वस्माभिरप्यभिहितं प्रवृत्तिरेव प्रवृत्तिविशेष इति, एवञ्च कृत्वा प्रवृत्तिमात्रस्य सर्वत्र भावात् विशेषग्रहणमनर्थकमुभयोरपि व्याख्याविकल्पयोः ।

---

सामान्यप्रवृत्तिबोधकानां प्रवर्तत इत्यादीनां धातुत्वं न स्यादिति भावः। द्वितीयं विशेषग्रहणप्रयोजनमपि दूषयति–**तथेहापीति** । कृते विशेषग्रहणे देवदत्तादीनां सर्वविशेषाधारतया सामान्यप्रवृत्तिरूपत्वान्न धातुत्वं यथा तथैव वृतादिसामान्यप्रवृत्तिबोधकधातूनां
20 धातुत्वं न स्यात्, तद्बोध्यप्रवृत्तेः सर्वविशेषाधारतया सामान्यरूपत्वेन प्रवृत्तिविशेषस्वरूपाक्रियात्वाभावादित्याह–**अक्रियावचनत्वादिति** । सामान्यप्रवृत्तेरक्रियात्वे हेतुमाह–**तदर्थस्येति** वृतादिधात्वर्थस्येत्यर्थः, सर्वे ये भेदा विशेषास्तत्सम्बन्धमनुभवितुं योग्यत्वादिति हेत्वर्थः। सर्वभेदसम्बन्धानुगुणस्यापि वृतादेर्धातुत्वे देवदत्तादीनामपि धातुत्वमत एव स्यादित्याह–**स वेति**। प्रवृत्तिसामान्यस्य देवदत्तादेर्वा व्यावर्त्तनाय भवतु नाम विशेषग्रहणम्, उक्तरीत्या तयोरपि क्रियात्वात्, साध्यत्वेनास्वशब्दोपादानसाध्यभावो भावः, स्वशब्दोपादानसिद्धभावो द्रव्यम्, अलिङ्गसंख्यादिमान् भावः, लिङ्गसंख्यादिमद्द्रव्यम्, अत्रिकालविषयो भावः त्रिका-
25 लविषयं द्रव्यं भूतो भावः, अभूतं द्रव्यमित्यादिरूपेण द्रव्यभावस्वभावभेदवर्णनमुक्तिमात्रत एव भिन्नं न तु वस्तुनोर्भेदः, ततश्च तयोक्तिरनर्थिकैवेत्याह–**किञ्चान्यदिति** । **भावादिग्रहणादिति** साध्यभावादीत्यत्रादिग्रहणादित्यर्थः। वादिना सह भाष्यकारेण विचारद्वारेण समर्थितं वृतादीनां धातुत्वं निराकर्त्तुं भाष्यकृदुक्तिप्रकारं प्रदर्शयते–**यथा चेति** । प्रवृत्तिविशेषलक्षणे वृता-दावव्याप्तिरुच्यते तत्रैष दोषः सम्भवति, यतः विशेषपदस्य कमर्थमभिप्रेत्य भवान् दोषमाचष्टे इति भाष्यकारः पृच्छति–**विशेष इतीति** । व्यावृत्तिमान् विशेषपदार्थ इत्याशयं वक्ति वादी–**य उपादीयमान इति** । वृतादयोऽपि व्यावर्त[...] कुतो न
30 तेषां धातुत्वमिति भाष्यकार आह–**यद्येवमिति** । द्वितीयविशेषग्रहणप्रयोजनव्याख्यानेऽपि देवदत्तादीनां धातुत्वं दुर्वारम्, तेषामप्युक्तरीत्या प्रवृत्तिविशेषत्वादिति दोषमभिधाय मूलकार उभयोरपि व्याख्ययोर्दोषमाह–**एवमि[हा]पीति** । ननु [...]

---

१ सि. क. मद्युताद्यी० ।

**यथा च तत्रोच्यते नैष दोष इत्यादि**, एवं दोषेऽभिहिते स्यान्मतं प्रवृत्तिसामान्यनिवृत्त्यर्थं विशेषग्रहणप्रयोजनदोषं परिहरामीति विशेष इति भवतः क सम्प्रत्ययः? इति प्रश्नोपक्रमं दोषवादिनैव परिहारमभिधापयिष्यतस्ते दोषवादी किल ब्रूयात्—य उपादीयमानोऽन्यं निवर्त्तयतीति परो ब्रूयात्—यद्येवं वृतादयोऽप्युपादीयमाना विशेषान् निवर्त्तयन्तीति, तर्हि गच्छत्यादयो विशेषा निवर्त्यन्ते न गच्छति न शेते न भुंक्ते वर्त्तत एवास्ति भवति विद्यत एव केवलमिति, तस्मादुपादीयमाना गमनादीन् विशेषान् 5 निवर्त्तयन्ति वृतादयस्तिष्ठत्यादिवत्, तथा चोक्तं भाष्यकारेण 'सामान्यमपि यथा विशेषस्तद्वत्' (महाभा० अ० १ पा० २ सूत्रे २४) इति ज्ञापकमिदमिति, वर्त्तत्यादिविशेषोपादीयमानत्वे विशेषनिवृत्तिहेतुत्वात् तिष्ठत्यादिनिवृत्तिहेतुगच्छत्यादिवत्, ततश्चैषां सिद्धा धातुसंज्ञा—वृतादीनामिति, यथा तत्र प्रवृत्तिसामान्यनिवृत्त्यर्थे विशेषग्रहणे परिहार एवमिहापि प्रत्युच्यते—द्रव्यनिवृत्त्यर्थेऽपि विशेषग्रहणे परिहार उच्यते, प्रत्युच्येत सर्वदा सर्वभावानां प्रवृत्तिसमन्वयाद्देवदत्त इत्यपि नाप्रवृत्तिकं वस्तु तस्मात्तन्निवृत्यर्थं सर्वभेदस- 10 म्बन्धानुगुण्यात्तु नायं विशेष इत्येतदर्थेऽपि विशेषग्रहणे देवदत्तस्य क्रियात्वं स्यात्, वृतादीनां तद्वदक्रियात्वात् [धातु]संज्ञा मा भूत्, स्वशब्दोपादानसिद्धतादवचनानर्थक्यश्च[त्या]दिदोषापादने कृते स एव परिहार उच्यते त्वया, विशेष इति भवतः क सम्प्रत्यय इत्यादि यावत् सिद्धा धातुसंज्ञा, एवं परिहारद्वयेऽपि समानमिदमुत्तरमुच्यते—एवञ्चोच्यमाने नन्वस्मद्धृदय एव दृष्टं—नन्वित्यनुज्ञापने—अनुज्ञातं त्वयैतदस्मद्धृदयक्षेत्र उप्तस्य दर्शनबीजस्य त्वद्वचनसलिलसेकेन फलमभिव्यक्तं, तद्विवृणोति स्मारयन्—नन्वस्मा- 15 भिरप्यभिहितं प्रवृत्तिरेव प्रवृत्तिविशेष इति—यदुच्यते वृतादिसामान्यमुपादीयमानं गमनादिविशेषं निवर्त्तयतीति तदुच्येत यदि वृतादिसामान्यव्यतिरेकेण गमनादिविशेषः स्यात्, स तु सामान्यमेवेत्युक्तम् तस्मान्न सामान्यविशेषाभावात् उपादीयमानं विशेषान्निवर्त्तयितुमर्हति, खपुष्पादिविशेषाणि च तत्प्रवृत्ति-

क्रियात्वे वृतादीनां धातुत्वं न स्यात् तेषां प्रवृत्तिविशेषावबोधकत्वादिति वदतो भवतो विशेषपदेन किमभिप्रेतमिति दोषवादिनैव परिहारमभिधापयितुकामो भाष्यकारो वादिनं पृच्छतीत्याह- **स्यान्मतमिति**, उक्तं हि भाष्यकृता 'कां पुनः क्रियां भवान् मत्वाह- 20 अस्तिभवतिविद्यतीनां धातुसंज्ञा न प्राप्नोती'ति। परोक्तिं प्रकटयति-**य उपदीयमान इति**, उक्ता हि भाष्यकृता परोक्तिः 'न ब्रूमः कारकाणि क्रियेति, किं तर्हि? कारकाणां प्रवृत्तिविशेषः क्रिया, अन्यथा हि कारकाणि शुष्कौदने प्रवर्त्तन्ते, अन्यथा च मांसौदने' इति। तामेव युक्तिं भाष्यकारः वृतादौ दर्शयति-**यद्येवं वृतादय इति** उक्तं च भाष्यकृता 'यद्येवं सिद्धाऽस्तिभवतिविद्यतीनां धातुसंज्ञा, अन्यथा हि कारकाण्यस्मीं प्रवर्त्तन्तेऽन्यथा हि म्रियतौ' इति। **तिष्ठत्यादिवदिति**, उक्तं हि भाष्ये 'एवं तर्हि क्रियायाः क्रिया निवर्त्तिका भवति द्रव्यं द्रव्यस्य निवर्त्तकम्, एवं हि कश्चित् कञ्चित् पृच्छति किमवस्थो देवदत्तस्य व्याधिरिति 25 स आह-वर्द्धत इति, अपर आह-अपक्षीयत इति, अपर आह-स्थित इति, स्थित इत्युक्ते वर्द्धतेश्चापक्षीयतेश्च निवृत्तिर्भवति' इति, एवं च क्रिया क्रियान्तराद्व्यावर्त्तमाना प्रवृत्तिविशेष उच्यते तद्वाचिनश्च धातुत्वम्, तथाच स्थित्यादयः क्रियाः क्रियान्तरनिवर्त्तकत्वात् तिष्ठत्यादिनिवर्त्तकगच्छत्यादिवत्, वैधर्म्येण द्रव्यवत्, द्रव्यं हि द्रव्यस्य निवर्त्तकं न तु क्रियान्तरस्य, सर्वभेदसम्बन्धानुगुण्यादिति भावः। एवञ्च सामान्यस्य विशेषत्वादपि द्वितीयव्याख्यायां देवदत्तादेर्द्रव्यस्यापि प्रवृत्तिविशेषत्वाद्धातुत्वं प्रसज्यत इत्याह-**एवमिहापीति**। सर्वस्यापि प्रवृत्तिमात्रत्वात् सामान्यव्यतिरिक्तविशेषाभावात् विशेषपदव्यावर्त्याभावेन तद्ग्रहणं व्यर्थमिति यदुक्तमस्माभि- 30 रादेव त्वयापि प्रकटीकृतमिति द्वयोरपि व्याख्ययोस्तद्दोषनादवस्थ्यमुद्भावयति-**एवञ्चोच्यमान इति**। उपसंहरति-**तस्मादिति**

१ सि. क. भवतः। २ सि. क. °हारमेवेहापि°। सि. क मुत्तरमेव-०। ४ सि. °वात्प्रवृ०।

विशेषत्वाभावादुभयत्र परिहारे विशेषग्रहणा[न]र्थक्यदेवदत्तक्रियात्ववृताद्यक्रियात्वदोषास्तदवस्था एवेति, तदुपसंहरन्नेवञ्च कृत्वा प्रवृत्तिमात्रस्येत्यादि गतार्थं यावदनर्थकमुभयोरपि व्याख्याविकल्पयोरिति, एवं तावद्विशेषग्रहणमनर्थकम् ।

न केवलमनर्थकमेव किं तर्हि ? अनर्थार्थमपीत्यत आह–

5 न चाफलमेव, अनिष्टकृदपि, एवं देवदत्तस्य क्रियात्वं स्यात्, अन्यनिवर्त्तनप्रवृत्तिविशेषत्वात्, पचादिवृतादिवदिति, येऽप्यमीवृतादयस्तेऽपि अक्रियास्तच्छब्दानामधातुसंज्ञा च स्यात्, सर्वभेदसम्बन्धानुगुणविशेषत्वाद्देवदत्तवदेव ।

न चाफलमेवानिष्टकृदपीति, तदनिष्टकृत्त्वं साधनेनैव भाव्यते–एवं देवदत्तस्य क्रियात्वं स्यात्, अन्यनिवर्त्तनप्रवृत्तिविशेषत्वात् पचादिवृतादिवदिति, प्रवृत्तिविशेषत्वमन्यत्वं तन्निवर्त्तनञ्चेति द्रव्या-

10 दन्यस्य प्रवृत्तिसामान्यव्यतिरिक्तस्यार्थस्याभावादेवायुक्तमभ्युपगम्यापि दोषः–देवदत्तः क्रिया स्यात्, अन्यनिवर्त्तनत्वे सति विशेषप्रवृत्तित्वात्, स गच्छत्यादिविशेषनिवर्त्तनो यज्ञदत्तादिविशेषनिवर्त्तनश्च सामान्यत्वात्, उपादीयमानत्वे सत्यन्यनिवर्त्तनत्वात् प्रवृत्तिविशेषश्च, ततश्च पचत्यादिर्वद्वर्त्तत्यादिवच्च क्रिया, क्रियात्वात्तद्वाचिनः शब्दस्य धातुसंज्ञा पूर्वप्रक्रान्तन्यायक्रमेण, पचत्यादिवद्वृतादयः तद्वद्देवदत्तादय इति सर्वं क्रियैवेत्यापन्नं, अनिष्टञ्चैतदावयोरिति, येऽप्यमी वृतादयस्तेऽप्यक्रियाः, तच्छब्दानामधातुसंज्ञेत्यादि,

15 सर्वभेदसम्बन्धानुगुणविशेषत्वाद्देवदत्तवदेव, पचादीनाञ्च गमनादिसर्वधात्वर्थव्यापित्वस्य प्रागुपपादितत्वात् सिद्धहेतुत्वात् साधीयः साधनमिदमपि चशब्दसूचितत्वादनन्तरोदाहृतद्विविधक्रियाकविशब्दप्रकृतत्वाच्च सर्वनामशब्दता च स्यात् ।

---

सामान्यव्यतिरेकेण विशेषाभावादुपादीयमानं विशेषपदं न किमपि व्यावर्त्तयति, सर्वेषां प्रवृत्तिसामान्यरूपत्वात्, खपुष्पादिविशेषाणां खपुष्पादिकल्पविशेषाणां वा प्रवृत्तिविशेषत्वाभावादिति भावः । विशेषपदस्य वैयर्थ्यमेव केवलमत्र न दोषोऽपि तु

20 अनिष्टकरत्वमपीत्याह–न चाफलमेवेति । यद्यपि द्रव्यादन्यन्नास्ति, प्रवृत्तिसामान्यव्यतिरिक्तमपि किञ्चिन्नास्ति तथापि सम्प्रति ते अभ्युपगम्यापि दोष उच्यत इत्याह–प्रवृत्तिविशेषत्वमिति । सामान्यं हि विशेषादन्यत्, अत एव देवदत्तादिद्रव्यं गच्छत्यादिक्रियाविशेषान् यज्ञदत्तादिद्रव्यविशेषांश्च निवर्त्तयति, तच्च गृह्यमाणं सदन्यानि निवर्त्तयतीति प्रवृत्तिविशेषः अतश्च पचत्यादिवत् अन्यनिवर्त्तनत्वे सति विशेषप्रवृत्तित्वात् वृतादिवदुपादीयमानत्वे सत्यन्यनिवर्त्तनत्वाच्च देवदत्तादि द्रव्यं क्रिया स्यादित्याह–देवदत्त इति । द्रव्यक्रियोभयनिवर्त्तकत्वं तस्य कथमित्यत्राह–सामान्यत्वादिति सामान्यं हि विशेषमात्रं निवर्त्तय-

25 तीति भावः । किञ्च वृतादीनामपि सर्वभेदसम्बन्धानुगुणत्वेऽपि विशेषत्वाद्देवदत्तादिवदक्रियात्वेन धातुत्वं न स्यादित्याह–येऽप्यमीति । ननु वृतादेः सर्वभेदसम्बन्धानुगुणत्वमसिद्धमिति शङ्कायामाह–पचादीनाञ्चेति । प्रागुपपादितत्वादिति सततसम्प्रवृत्तितादात्म्यानतिक्रमात् पूर्वोत्तरव्यत्ययव्यक्तिभवनैकत्वादित्यादिहेतुभिरिति भावः । सर्वनामशब्दता चेति, इह प्रवृत्तिः वैश्वरूप्यमापद्यमाना स्वजात्यनतिक्रमेणैव वर्तते तथापि प्रतिक्षणं पचिपाठ[illegible]धर्माणामनुवृत्तिः, एवञ्च प्रवृत्तिसामान्यानुगमात् सर्वावस्थास्वियं प्रवृत्तिरित्येषां कारणं भवन्ती प्रवृत्तिसामान्यतामासादयति, तत्र च सर्वविशेषान्तर्भावात् सर्वनामेव सर्वनाम

30 व्यवह्रियते, तदादिसर्वनाम हि वस्तुमात्रप्रत्यवमर्शजनकं सर्वत्राविहतप्रवृत्ति च तथा पचादीनामपि सर्वविशेषान्तर्भावेण वस्तु-

---

१ सि. क. °भावादेवेत्युक्तम् । २ सि. स गच्छत्यादिविशेषत्वात् सगच्छनिवर्त्तन० । ३ सि. क. °निवर्त्तनयो । ४ सि. क. ।

यत्तु पुनः पचादिविशेषनिवर्त्तकत्वा[illegible]तादयो धातुसंज्ञा भवन्ती[illegible]के नैव निवर्त्त[illegible] पचा[illegible]न् [illegible]तादयो विरोधाभावाच्च [illegible]ताद्यन्तर्भावात् पचा[illegible]नामतो न धातुसंज्ञा वृतादयः [illegible]रित्याशंक्य तत्प्रतिसमाधानं [illegible]नरुच्यते नि[illegible]त्तिरत्रास्माभिर्नार्थधर्मप्रकल्पिता विवक्षिता, किं तर्हि? [illegible]धर्मप्रकल्पिता सा विज्ञानप्र[illegible]त्तिमात्रकृता, यथा देवदत्ते सर्वधर्मसम्बन्धिन्यपि पचति देवदत्त इत्युक्ते गच्छति तिष्ठत्यस्ति शेत इत्यादिक्रियाकलापं निवर्त्त्य देवदत्तं पचतिशब्दो पचनक्रिययैव सम्बन्धयति, [illegible]नाधानहेतुत्वात्, अयञ्च धर्मो [illegible]तादीनामप्यविशिष्ट इति।

यत्तु [illegible] यावदयञ्च धर्मो वृतादीनामप्यविशिष्ट इति, पचादिविशेषनिवर्त्तकत्वाद्वृतादयो धातुसंज्ञा भवन्तीयुक्ते परस्याशङ्का स्यात्—नैव निवर्त्तयन्ति पचादीन् वृतादयो विरोधाभावाच्च वृताद्यन्तर्भावात् पचादीनामतो विशेषनिवर्त्तकत्वाभावात् न धातुसंज्ञा वृतादयः स्युरित्याशंक्य तत्प्रतिसमाधानं पुनरुच्यते न वयं वस्तुन्यसहभावतानिवृत्तिं ब्रूमः—निवृत्तिरत्रास्माभिर्नार्थधर्मप्रकल्पिता विवक्षिता, किं तर्हि? शब्दधर्मप्रकल्पिता विवक्षिता, अर्थगता हि निवृत्तिरसहभावजनिता घटपटादिवदेकत्रासम्भवात्, शब्दगता तु विज्ञानप्रवृत्तिनिवृत्तिमात्रकृता सा देवदत्ते सन्निहितसत्ताद्रव्यत्वगतिस्थिति[illegible]स्यादिसर्वधर्मसम्बन्धिन्यपि—गच्छति देवदत्त इत्युक्ते तिष्ठत्यास्ते शेते इत्यादिक्रियाकलापं निवर्त्त्य देवदत्तं गच्छतिशब्दो गमनेनैव सम्बन्धयति, तद्विषयैकविज्ञानाधानहेतुत्वात्, न तथा वस्तुनिवृत्तिः सम्भवति सततसन्निहितसर्वधर्मात्मकत्वाद्देवदत्तस्य, तदुदाहरति—किं तर्हि? पचतीत्यादि गतार्थं[illegible]वृतार्थसम्भवादि दार्ष्टान्तिकोऽर्थः, अयञ्च धर्मो वृतादीनामप्यविशिष्टो वर्त्तत ईहते चेष्टत इत्यादयोऽपि शब्दाः क्रियान्तरनिवृत्तिविज्ञानावसानधर्माणो न वस्तुगतान् धर्मान्निवर्त्तयितुमलम्, शब्दानां बुद्धिप्रवृत्तिनिवृत्तिक्रियायां प्रभुत्वात्, वस्तुप्रवृत्तिनिवृत्त्युत्तरप्रवृत्तत्वादिति।

अत्र ब्रूमः वस्तुनः प्रवृत्तेः सर्वप्र[illegible]त्तिविशेषसहिताया एवाभ्य[illegible]ज्ञातत्वात्[illegible]वितत्वाच्च

---

मात्रप्रत्यवमर्शजनकत्वात् सर्वत्राविहतप्रवृत्तित्वाच्च सर्वनाम स्यादिति प्रतिभाति। प्रकारान्तरेण वृतादीनां समर्थितं धातुत्वं दूषयितुं समर्थनप्रकारमेव तावदाह—यत्तु पुनरिति, वृतादयः पचादिविशेषान् निवर्त्तयन्ति सर्वभेदपर्यनुभवनात्मकत्वात् नित्यप्रवृत्तेः, अन्यथा प्रवृत्तिविशेषानात्मकत्वे गच्छत्यादिव्यापिता तस्या न स्यात्तस्माद्वृतादेर्गच्छत्यादिना विरोधाभावादन्तर्भावितसर्वक्रियाभेदत्वाद्धातुसंज्ञा न स्यात्, परस्परविरुद्धयोरेव त्वेकोपादानेनान्यनिवृत्तिर्भवेत्, शीतोष्णयोरिव गच्छति तिष्ठत्यादेरिवेति शङ्कार्थः। तत्र वैयाकरणानां समाधानं प्रकटयति—तत्प्रतिसमाधानमिति। वस्तुन्यनेकनिमित्तसन्निधानादेव सर्वभेदानां सहभावाज्जाताः परस्परं निवर्त्तयन्ति, तस्मान्निवृत्तिर्नार्थधर्मप्रकल्पिता, किन्तु योग्यशब्दनिबन्धनविवक्षानियमाश्रयेणेत्याशयेनाह—नि[illegible]त्त्रेति। वस्तुन्यनेकधर्मसम्बन्धिन्यपि शब्दानां स्वशक्तिवैचित्र्यात् किञ्चिदेव तत्र प्रवर्त्तकम्, यथा देवदत्तादेः तक्षण[illegible]नानेकक्रियासन्निधानेऽपि तक्षणमाश्रित्य तथाविधविवक्षावशात्तक्षाऽयमित्यभिधानं कुम्भादिकरणप्रयुक्तभ्रमणनिमित्तं कुम्भकारोऽयमित्यभिधानं प्रवर्त्तते निवर्त्तते च तदेतरक्रियानिमित्तो व्यपदेशस्तथेति दर्शयति—देवदत्त इति। एवं वदता त्वयाऽस्मदभिमतस्यैव विशेषसहितस्यैव सामान्यस्य समर्थितत्वाद्वृतादीनां पचादीनां धातुसंज्ञा प्राप्नोति न वा प्राप्नोतीति त्वयैव विचार्यमित्युपसंहरति नयवादमन्तुम्—अत्र ब्रूम इति। कथं भावित इत्यत्राह—सम्भावितैव हीति, निवृत्तिरत्रास्माभिर्नार्थधर्मप्रकल्पिता किं तर्हि? पचतीत्यादि-

१ सि. क. यत्र पुन०। २ सि. क. °भावश्च। ३ सि. क. वृतार्थं च भावात्।

किमस्माभिर्वाच्यं वृतादीनां पचादीनां वा धातुसंज्ञा प्राप्नोति न प्राप्नोतीति, वैधर्म्येण सर्वेषां धातूनामस्मदभिहितप्रवृत्तिसामान्यक्रियावचनत्वानतिवृत्तेः ।

**अत्र क्रमो वस्तुनः प्रवृत्तेरित्यादि**, यावद्वैधर्म्येणेति, अवसितप्रयोजनमिदं वचः त्वयैव वस्तुप्रवृत्तेः सर्वप्रवृत्तिविशेषसहिताया एवाभ्यनुज्ञातत्वाद्भावितत्वाच्च—सम्भावितैव हि वस्तुप्रवृत्तिः

5 सर्वप्रवृत्तिविशेषात्मिकेत्यतीतविचारेषु विस्तरेण चरितार्थत्वात् कथं ? विशेषवाग्व्यवहारो विशेषान्तरप्रवृत्तिनिवृत्तिविषयो न वस्तुन्यत्यन्तनिर्भेदात्मके प्रभवतीति भावयता भवतैव सुभाषितत्वात्, किमस्माभिर्वाच्यं वृतादीनां पचादीनां वा धातुसंज्ञा प्राप्नोति न प्राप्नोतीति, सर्वेषां धातूनामस्मदभिहितप्रवृत्तिसामान्यक्रियावचनत्वानतिवृत्तेर्वस्तुव्यवहारे शब्दव्यवहारे वेति न किञ्चिन्न प्रतिरुध्यति, त्वया तु पुनरसदर्थविषयत्वाद्भ्रान्तिज्ञानं शब्दार्थविषयं व्यवस्थापितं वस्त्वसंस्पर्शादित्यलं प्रसङ्गेन ।

10 प्रकृतमुच्यते—

**योऽसौ मयाऽऽदावुद्दिष्टो विधिनियमात्मोभयनयः स एष निर्दिष्टः, नैगमदेशत्वाद् द्रव्यार्थोऽयम्, द्रव्यमपि भावसाधनम्, सैव द्व्यर्थता, उक्तवत्, पदार्थो द्रव्यक्रिये, वाक्यमाख्यातशब्दः, तदर्थ उक्तोभयभाक्, नयविनिर्गमसूत्रं 'अत्थित्तं अत्थित्ते परिणमति' इति ।**

**योऽसौ मयाऽऽदावुद्दिष्टो विधिनियमात्मोभयनय इति**, विधिश्च नियमश्च सर्वत्र

15 द्रव्यं क्रिया चेति विधिनियमं द्वन्द्वैकवद्भावात् स एष निर्दिष्टः—प्रत्यक्षीकृतस्ते, केषां पुनरयमार्षाभिहितानां नयानां भेद इत्यत्रोच्यते नैगमदेशत्वाद्द्रव्यार्थोऽयं न पर्यायार्थः, द्रव्यपर्यायसंगृहीतानां बहुभेदानां द्रव्यार्थभेदेषु नैगमसङ्ग्रहव्यवहारेषु यो नैगमो नैकभेदस्तस्यैवैकदेशोऽयं तद्भेद इत्यर्थः, 'एक्केक्को य सतविधो सत्तणयसता हवंति एमेव' (आ. नि. २२६४) इति वचनात्, द्रव्यशब्दः किं-

सर्वधर्मप्रकल्पितेत्यादिग्रन्थेन सम्यग्भावितैवेति भावः । एतदेव प्रकटयति—**विशेषेति** सततसन्निहितसर्वधर्मात्मकत्वाद्वस्तुनः

20 सहभावादेव विरोधाभावाद्व्यावर्तकत्वासम्भवेन पचति पठतीति विशेषवाग्व्यवहार एव गच्छति तिष्ठत्यादिविशेषान्तरवाग्व्यवहारं निवर्तयन् पाकादिक्रियासम्बन्धं बोधयतीति निखिलप्रवृत्तिविशेषसाहित्यं वस्तुप्रवृत्तेर्भावितमेवेति भवताऽधुना विचार्यं वृतादीनां धातुसंज्ञा प्राप्नोति वा न वेति भावः । **वृतादीनामिति** तेषां सामान्यप्रवृत्तित्वे पचादीनामपि तथात्वेन धातुत्वं न स्यात् पचादीनामिव विशेषप्रवृत्तित्वे धातुत्वं स्यात् किन्तु देवदत्तादीनामपि धातुत्वं भवेदित्याशयः । सर्वे धातवोऽस्मदभिहितक्रियासामान्यवचना इति त्वयापि भावितत्वादेतदंशे आवयोः साम्येऽपि शब्दार्थज्ञानं वस्त्वसंस्पर्शादसदर्थविषयत्वेन भ्रान्तिरूप-

25 मेवेति त्वया भावनाद्विशेष इत्याह—**त्वया तु पुनरिति**, अबुधबोधनाय शास्त्रमियं प्रकृतिरस्या अयमर्थः अयञ्च प्रत्ययोऽस्यायमर्थ इति, तस्मात् सर्वोऽयं शब्दार्थव्यवहारः काल्पनिकोऽसत्यभूत एव, न परमार्थभूतं निर्विकल्पं स्पृशतीति स्वीकारादिति भावः । तदेवं द्रव्यं क्रिया चोभयं भाव इति यन्नयादौ निदर्शितं तदेव ते निर्दिष्टमित्याह—**योऽसाविति** । प्रधानभूतसप्तविधनयेषु कुत्रास्यान्तर्भाव इत्यत्राह—**नैगमदेशत्वादिति** द्रव्यद्वित्वत्रित्वाद्यभ्युपगमभेदेन नैगमस्यापि भेदाद्द्रव्यक्रियोभयवादस्य नैगमदेशता विज्ञेया, अनेकैर्नयादिभिरनेकधा वर्णितानां वस्तूनां द्रव्यपर्यायाभ्यां संगृहीतत्वात्, तन्मध्ये नैगमसंग्रहव्यवहारा द्रव्यार्थभेदाः,

30 तेषु प्रकृतो नयोऽनेकभेदस्य नैगमस्यैकदेशो विज्ञेय इति भावः । एकैकस्य नैगमादेर्नयस्य बहुविधत्वे आगमं प्रमाणयति—**एक्केक्को य**

---

१ सि. क. प्रवृत्ताविति । २ सि. सम्भावनैव हि वस्तुप्रवृत्तिविशेषात्मिके० । क. सम्भावनैव हि न वस्तुप्रवृत्तिः सर्वप्रवृत्तिविशेषात्मिके० । ३ सि. क. कथ ।

साधनोऽत्राभिप्रेत इति चेदुच्यते–द्रव्यमपि भावसाधनं यत्तद्भूयते केनापि यो द्रवति गच्छति सततं प्रवर्त्तते तस्य यद्द्रवणं गमनं सततप्रवृत्तिः स भावः तद्द्रवनं, तत्साधनो द्रव्यशब्दः कर्तृसाधनाविनाभाविभावसाधनव्याख्यानस्य सोपपत्तिकस्य विस्तरेण कृतत्वात्, सैव द्व्यर्थता, उक्तवत्– द्रव्यक्रियात्मद्व्यर्थता परस्पराविनाभाविनी, करणादीनां तदव्यतिरिक्तस्वरूपत्वात् सर्वत्र घटपटादिबीजाङ्कुरादिषु च सर्वैकात्म्यस्य भावितत्वादिति, पदार्थो द्रव्यक्रिये, उक्तवदिति वर्त्तते, वाक्यमाख्यातशब्द इति, 5 आख्यातं साव्ययकारकं वाक्यमेकतिङिति च वाक्यं, तदर्थ उक्तो[भयभाक्]–वाक्यार्थ उक्तोभयभाक् द्रव्यक्रियाद्व्यात्मकं वस्तु भजते वाक्यार्थ इति विस्तरेणोक्तोऽनेन विधिनियमभङ्गेन नैगमैकदेशेन द्रव्यार्थेन, नयविनिर्गमसूत्रं–'अत्थित्तं अत्थित्ते परिणमति' (भ. श. १ उ० ३ सू० ३३) इति, अस्तित्वं भावो भावेऽस्तित्वे परिणमति, भावो भाव एव सततं वर्त्तते, परितः समन्तात्भ्रमति परिणमति तं तं भावमापद्यते तदा कर्त्तृसहितं वेति । 10

उभयनयः पञ्चमोऽरः परिसमाप्तः ॥

इति । एतन्नयानुसारेण द्रव्यशब्दं साधयति–**द्रव्यमपीति** । भावसाधनमिति मूलकारोक्तभावपदार्थमाह–**यत्तद्भूयत इति**, अनेन भावशब्दस्य भावे व्युत्पत्तिरादर्शिता, अथकर्त्तरिव्युत्पत्तिं दर्शयति–**यो द्रवतीति** । पूर्वमपि व्युत्पत्तिरादर्शिता समर्थिता चेत्याह–**कर्तृसाधनेति** । द्रव्यं भवतीति विशेषणविशेष्यभावोपगमात् द्रवतीति द्रव्यमिति प्रकृतिप्रत्ययार्थभेदोपगमाच्च द्रव्यक्रियोभयार्थतायाः पूर्वं वर्णितत्वं सूचयति–**सैवेति** । पदस्यार्थमाह–**पदार्थ इति** । वाक्यं दर्शयति–**वाक्यमिति** 15 'आख्यातशब्दो नियतं साधनं यत्र गम्यते । तदप्येकं समासार्थं वाक्यमित्यभिधीयते ॥' इति वाक्यपदीये, यथा वर्षतीत्याख्यातशब्दमात्रे प्रोक्ते देवो जलमिति कर्तृकर्माक्षेपात् परिपूर्णार्थत्वे यथा वर्षति देवो जलमिति वाक्यं तथा तदप्येकं पदं परिपूर्णार्थं वाक्यमेवाभिधीयत इति तदर्थः । व्याचष्टे–**आख्यातमिति** आख्यातमिति पदस्य साव्ययकारकमिति विशेषणाद्विशिष्टस्य वाक्यतावगतेर्मूलानुगुणं न प्रतिभाति, आख्यातं साव्ययकारकविशेषणमेकतिङिति च वाक्यमिति वार्तिककारादीनां [illegible]णान्तरत्वेन वाक्यपदीयप्रकाशव्याख्यायां शङ्कितत्वात् । कोऽत्र नये वाक्यार्थ इत्यत्राह–**तदर्थ इति** द्रव्यक्रियासंघातो 20 वाक्यार्थः, वृक्ष इति वा तिष्ठतीति वा केवलात् नामपदादाख्यातपदाद्वा वृक्ष[illegible]प्रतीतेः, प्रागुपपादितत्वात्, न चैकस्यैव वृक्ष इति नामपदस्य तिष्ठतीत्याख्यातपदस्य वा वाक्यत्वे वृक्षस्तिष्ठतीत्युभयोपादानमनर्थकमिति शङ्क्यम्, विशिष्टार्थप्रत्यायकस्य केवलस्य वृक्ष इति शब्दस्य वृक्षस्तिष्ठतीति शब्दस्य चान्यत्वात्, केवलं सादृश्यादेव वृक्षस्तिष्ठतीति वाक्यैकदेशं वृक्षशब्दमभिमन्यते, एवं च वृक्षशब्दमात्रप्रयोगादपि विशिष्टार्थप्रतीतेर्वृक्षस्तिष्ठतीत्युपादानमफलमेव, लोके शब्दप्रयोगे लाघवानादराच्च क्वचिद्वृक्ष इति क्वचिच्च वृक्षस्तिष्ठतीति च प्रयुज्यते, वृक्षशब्दमात्रप्रयोगाच्च तिष्ठतीति प्रतिनियतार्थप्रतीतिरर्थप्रकरणादितो 25 भवतीति नानियतार्थबोध इत्येवं विस्तरेण पूर्वमुपपादितमिति सूचयति–**विस्तरेणेति** । एतन्नयमूलभूतमागमं प्रदर्शयति–**नयविनिर्गमसूत्रमिति** । भावव्युत्पत्त्यभिप्रायेणाह–**भावो भाव एवेति** । कर्तृव्युत्पत्तिप्रदर्शितार्थमाह–**परित इति** ॥

**इति वि[illegible]विरचिते विषमपदविवेचने नयचक्रस्य पञ्चमोऽर उभयनयः समाप्तः ॥**

---

१ सि. क. °कारकवाक्यमेकमिति ।

# षष्ठो विधिनियमविधिः

एवं विधिनियमभङ्गारे द्रव्यक्रियात्मकवादे संहृते षष्ठनय आह–

नन्वेव[illegible] मयमप्यवस्तु, अनुपपन्नस्वावस्थत्वात् खपुष्पवत्, स्वा अवस्थाः स्थित्युत्पत्ति-
विनाशा द्रव्यस्य वा स्युः क्रियाया वा, ता यदि भावस्य ततो द्रव्यमनवस्थमिति द्रव्यप्रभेदा-
5 सम्भवः खपुष्पस्येव, ततश्च सर्वप्रभेदनिर्भेदं बीजमिति द्रव्यलक्षणहानिः ।

नन्वेवमित्यादि, विचाराश्रयं दोषापादनसाधनम्, उभयमपि–द्रव्यं क्रिया चेति, अवस्तु,
अनुपपन्नस्वावस्थत्वात्–अनुपपन्नाः स्वा अवस्था अस्य तद्भावात्, अनुपपन्नस्वावस्थत्वात्, खपुष्पवदिति,
कास्ता अवस्थाः ? उच्यते स्वा अवस्थाः स्थित्युत्पत्तिविनाशाः, ताश्च द्रव्यस्य वा स्युः क्रियाया वा,
किञ्चातः ? ता यदि भावस्य–ताः स्थित्यादयः प्रागुक्ततथा[भवनाविना]भूतसन्निहितवस्तुत्वव्यक्तिलक्ष-
10 णायाः क्रियाया इष्यन्तेऽवस्था इति, ततो द्रव्यमनवस्थं प्राप्तम्, अवस्थालक्षणत्वादुभयोरन्यतरकल्पनावै-
यर्थ्यादवस्थाव्यतिरिक्तलक्षणाभावात्, भवतु द्रव्यमनवस्थं को दोष इति चेदुच्यते द्रव्यमनवस्थमिति द्रव्य-
प्रभेदासम्भवः प्राप्तः, इतिशब्दस्य हेत्वर्थत्वादनवस्थत्वादित्यर्थः, द्रव्यप्रभेदा रूपादिगत्यादिविवर्त्ताः ते
न सम्भवन्त्यनवस्थत्वात् असत्त्वात्, खपुष्पस्येव, ततश्च यदुक्तं द्रव्यस्य लक्षणं [तस्य] हानिः,
कतमस्येति चेदुच्यते–सर्वप्रभेदनिर्भेदं बीजमित्यस्य, तस्मान्नास्ति द्रव्यमनवस्थत्वात् खपुष्पवत् ।

15 अथास्याप्युभयस्य परस्परनिरपेक्षस्वातंत्र्ये द्रव्यभावयोरनुपपन्नस्थित्युत्पत्तिविनाशस्वावस्थयोरभावत्वं खपुष्पवदतः परतः
स्वतश्च तद्वत्त्याकृत्याख्यं गुणप्रधानभावेन द्रव्यादि सत् परतः सत्तादि स्वत इत्यसदपि भवतीति विधिनियमे विधीयेते इति
विधिनियमविधिदर्शनमुत्थापयति–एवं विधिनियमभङ्गार इति । पूर्वपक्षे दोषं साधनद्वारेणापादयति–नन्वेवमिति,
द्रव्यक्रिययोः परस्परनिरपेक्षस्वातंत्र्येऽवस्तुत्वं प्रसज्यत इत्यर्थः । साधनार्थमाह–अनुपपन्ना इति, अस्य–उभयस्य द्रव्य-
क्रियात्मनः । पूर्वनये सम्मूर्च्छितसर्वप्रभेदनिर्भेदं बीजं द्रव्यमिति द्रव्यलक्षणम्, तथाभवनाविनाभूतसन्निधिवस्तुत्वव्यक्तिः
20 क्रियेति च क्रियालक्षणमुक्तम्, तत्र स्थित्युत्पत्तिविनाशलक्षणा अवस्थाः कस्याभ्युपगम्यन्ते किं क्रियायाः, आहोस्वित् द्रव्यस्येत्या-
शंक्यान्यतरस्य तदङ्गीकारे उभयोरवस्तुत्वं प्रतिपादयितुं वादिमुखेन प्रश्नमुच्चारयति–किञ्चात इति, ता द्रव्यस्य क्रियाया वा
भवन्तु तेन किं नः छिन्नमिति भावः । दोषमुद्धरति–ता यदीति । तथाभूतेति [illegible]क्रियाविशेषरूपेण भवन-
योग्यतया यत् यत्र शक्त्यात्मना सन्निहितं सद्व्यक्तीभवति तथाविधा क्रियेति भावः । अवस्थावत्त्वमेव द्रव्यस्य क्रियायाश्च लक्षणं
नान्यत्, तत्रैकस्यावस्थावत्त्वेऽपरस्य चातथात्वे तथाविधस्य कल्पनैव व्यर्था, लक्षणाभावादित्याह–अवस्थेति । द्रव्यस्यानव-
25 स्थत्वे ततो रूपादिप्रभेदाः पचिपठ्यादिक्रियाप्रभेदाश्च न स्युरित्याह–द्रव्यमनवस्थमितीति । रूपगत्यादिविवर्त्ता इति
एकस्य तत्त्वादप्रच्युतस्य निष्क्रियस्य सक्रमस्येव प्रकाशनं विवर्त्तः, तथा चाप्रविभागमपि द्रव्यं समाविष्टसर्वशक्तिदेशकालाभ्यां
प्रविभक्तमिव चकास्तीति तत्प्रविभागानुसारेण जन्मनाशौ समस्तक्रियाभेदानुयायिनौ व्यावहारिकाविति यदभिमन्यते तन्न सङ्गच्छते
द्रव्यस्यानवस्थत्वेन खपुष्पस्येवासत्त्वादिति भावः । द्रव्यस्य लक्ष्यस्याभावादेव तल्लक्षणमपि नोपपन्नमित्याह–ततश्चेति । सर्व-
प्रभेदाभवस्य स्वतः स्वरूपेण समवस्थानरूपस्य सर्वबीजभूतस्य द्रव्याख्यस्यानवस्थत्वेऽपि यद्यभ्युपगम्यते तर्हि तद् क्रियैव स्यात्

---

१ सि. क. अनवस्था ।

ततः किं प्राप्तम्?—

**भाव एव तु स तथाभूत आपद्यते, तद्भेदस्य तदात्मकत्वात्, मृद्वत्।**

**भाव एवेति,** भाव एव तु स तथाभूत आपद्यते—द्रव्यं क्रियैवापद्यते, कस्मात्? **तद्भेदस्य** तदात्मकत्वात्, स्थित्युत्पत्तिविनाशा हि द्रव्यभेदाभिमता द्रव्यस्यैव[।]भेदात्मनो[1] भवन्ति तत एतद्-**र्थादापन्नं** क्रियाया आत्मेति, क्रियैव च द्रव्यं संज्ञामात्रभेदात्, मृद्वदिति दृष्टान्तः, यथा **मृद्भेदाः** 5 **पिण्डशिवकादयो** मृदात्मकाः सन्तो मृद्रूपा एव, तथा स्थित्यादयो द्रव्यभूतभावभेदा एवेति **द्रव्याभावेऽर्थापत्त्या स्थित्यादयः** क्रियाभेदा इत्यापन्नाः।

यदपि च कल्पितं प्रवृत्तिसामान्यव्यतिरेकेण कारकवत्या ओदनादिफलोद्देशिन्याः **परिग्रहार्थं** विशेषग्रहणं **तदपि न कार्यम्, कस्मात्?**—

**प्रवृत्तिभाववचनात्तु मत्पक्षे प्रवृत्तावेव व्यतिरेकसम्भवः, तस्माद्भावादेव सर्वस्य प्रकृत-** 10 **त्वाद्द्रव्यं भाव इत्येतत्त्यागाद्द्वयविभागवचनं व्यर्थम्, ततश्च विभागेन लक्षणाभावात्तयोरभावः खपुष्पवत् तदभावात् क्रिया कुतः? तथाभवनक्रियासन्निधिलक्षणं द्रव्यं प्रवृत्तिसामान्यञ्च कुतः? तथाभवनविनाभूतत्वात् खपुष्पवदेवेति सर्वनिर्मूलता चैवम्, अव्यक्तिरप्यसान्निहितत्वात् खपुष्पवत्।**

**(प्रवृत्तिभावेति)** प्रवृत्तिभाववचनात्तु मत्पक्षे प्रवृत्तावेव व्यतिरेकसम्भवः—**प्रवृत्तिसामान्यमेव** 15 **भाव** इत्युक्तत्वात् विशेषास्तत्रैव सम्भवन्ति ततोऽस्य व्यतिरेकसम्भवात्, यदप्योदनादिफलं तद[पि] प्रवृत्तिसामान्यमेव, तस्माद्भावादेव—क्रियाया एव सर्वस्य प्रकृतत्वात् द्रव्यं भाव इत्येतस्यक्तम्, तस्यागाद्द्वयविभागवचनं व्यर्थं—द्रव्यं क्रिया च वस्त्वित्युभयाभ्युपगमो मूलत एव विघटते, ततश्च तथाभवनेन प्रवृत्तिलक्षणेन विना भूतस्य सन्निधानमपि निर्मूलम्, ततश्च द्वे अपि द्रव्यक्रिये विभक्ते न

सर्वप्रभेदानामात्मभूतत्वात् पिण्डशिवकादीनां भेदानां मृदात्मकानां आत्मभूतस्य मृद्वदित्याह—**भाव एव तियति,** स इति 20 तच्छब्देन द्रव्यं परामृश्यते, विधेयप्राधान्यात् पुंलिङ्गता। हेतुमाह—**तद्भेदस्येति** द्वितीयतत्पदेन क्रियाया ग्रहणम्, कृष्णगौरपीतादयः पचिपठ्यादयो भेदाभिमताः स्थित्युत्पत्तिविनाशलक्षणा अभेदात्मनो द्रव्यस्यैवाभिमताः, तस्मात्तेषामात्मा द्रव्यं, द्रव्याभावे ते च क्रियाया एव भवेयुः, केवलं संज्ञाभेदाश्रयेणैव द्रव्यमित्युच्यते भवद्भिर्न त्वर्थभेदः कश्चिदिति भावः। दृष्टान्तमाह—**यथेति,** अथवा द्रव्यभेदत्वेनाभिमताः कृष्णादयः पच्यादयश्च क्रियात्मका दृष्टा इति तदात्मभूतस्यापि क्रियात्वं युक्तमिति भावः। ननु भवदेव भवति प्रवर्त्तमानमेव हि मृदादि केनचिद्धर्मेण पिण्डशिवकादिभावेन भवति नाप्रवर्तमानं 25 किञ्चित्, भवनं प्रवृत्तिः क्रियेति पर्यायत्वात्, अप्रवृत्तभवनस्य कस्यचिदभावात्, तस्मात्तेन तेन प्रकारेण परिणममानं प्रवर्तमानं वस्तु भवतीत्युच्यत इत्युक्तत्वात् प्रवृत्तेरेव विशेषसम्भवो न तु सर्वप्रभेदानिर्भेदाद्बीजाद्द्रव्यादप्रवृत्तिलक्षणादित्याशयेनाह—**प्रवृत्तिभाववचनात्त्विति,** प्रवृत्तेरेव भावत्वोक्तेरित्यर्थः। तदेव व्याचष्टे—**प्रवृत्तिसामान्यमेवेति।** प्रवृत्तेरेव भेदाभ्युपगमे द्रव्यभावयोरुभयोरभ्युपगमस्त्यक्तव्य एव, तथा च सति द्रव्यं क्रिया चेत्युभयं वस्त्विति विभागो नार्थवानित्याचष्टे—**तस्माद्भावादेवेति।** एवञ्च तव द्रव्यं तथाभवनाविनाभूतसन्निधिमद्वस्तु न भवति पचिपठ्यादिरूपेण यद्भवनं प्रवृत्तिः 30 तेन विनाभूतत्वात्, द्रव्यस्य च तथाभवनाविनाभूतसन्निधिमत्त्वाभावेन तथाविधसन्निधिवस्तुत्वव्यक्तिलक्षणा क्रियापि

१ सि. क. भेदात्मानो। २ क. सर्वस्येहकृतत्वात्।

स्तः ततस्तयोर्लक्षणमनुपपन्नं ततश्च विभागेन लक्षणाभावात्तयोरभावः खपुष्पवत्, तदभावात् क्रिया कुतः? तथाभवनक्रियासन्निधिलक्षणं द्रव्यं प्रवृत्तिसामान्यञ्च कुतः? तथाभवनविनाभूतत्वात् खपुष्पवदेवेति, सर्वनिर्मूलता चैवमिति सन्निधिनिर्मूलत्वात्, क्रियाया व्यक्तिर्भेदानामव्यक्तिश्च [कुतः] तया विनेत्यत आह—अव्यक्तिरप्यसन्निहितत्वात् खपुष्पवत्।

5 **अथोच्येत भावस्य स्थित्युत्पत्तिलयाः कल्पनामात्राः सन्निहिततथाभूतवस्तुतत्त्वव्यक्ति द्रव्यमेवोक्तवत्, ताश्च क्रिययाऽभिव्यक्तिं नीयन्त इत्यत्रोच्यते, एवं तर्हि सर्वप्रभेदनिर्भेदत्वमसत्यं द्रव्यस्य, क्रियायाश्चाक्रियात्वम्, सन्निहिततथाभूतवस्तुतत्त्वव्यक्तिकरत्वाभावात्, ततश्चाशेषपक्षध्वंसित्वमनुपपन्नस्वावस्थत्वात्।**

अथोच्येतेत्यादि, स्यान्मतं भावस्य प्रागुक्तवत् स्थित्युत्पत्तिलयाः कल्पनामात्राः समनन्त-
10 रोक्तदोषदर्शनात् सन्निहिततथाभूतवस्तुतत्त्वव्यक्ति द्रव्यमेवोक्तवत् सम्मूर्च्छितसर्वप्रभेदस्थित्यादिस्वावस्थेन्तु, ताश्च स्थित्याद्यवस्थाः क्रिययाऽभिव्यक्तिं नीयन्त इत्यत्रोच्यते, एवं तर्हि सर्वप्रभेदनिर्भेदत्वमसत्यं द्रव्यस्य—ते स्थित्यादिभेदा द्रव्यस्यैव संवृत्ता इति निर्भेदत्वोक्तिर्व्याहन्यते, किञ्चान्यत् क्रियायाश्चाक्रियात्वम्, सन्निहिततथाभूतवस्तुतत्त्वव्यक्तिः क्रियेष्यते, ते हि भेदाः क्रियया॒ऽभिव्यज्यन्ते चेद्भेदाः प्रागपि क्रियाभिव्यक्तेः सन्ति, तथाभूतत्वात् क्रियाया व्यक्तिकरत्वाभावस्तस्माद्व्यञ्जनात् क्रिया
15 द्रव्यवत् खरविषाणवद्वा न क्रियेति, ततश्च द्रव्यस्याद्रव्यत्वात् क्रियायाश्चाक्रियात्वादशेषपक्षध्वंसित्वमनुपपन्नस्वावस्थत्वात् द्रव्यस्य क्रियायाश्च खपुष्पवदभाव इति।

नास्तीत्याशयेनाह—**ततश्च विभागेनेति**। तथाविधे द्रव्ये भेदानामव्यक्तिः पूर्वं ततश्च व्यक्तिः क्रियत इति यदुच्यते तदपि न सर्वदैवाव्यक्तिप्रसङ्गात् क्रियाया अभावादित्याह—**क्रियाया व्यक्तिरिति**। ननु नास्त्यनेकक्षणव्यापिनी काचित् क्रिया, यस्याः स्थित्युत्पत्तिलयाख्यास्तिस्रोऽवस्था भिन्नक्षणभाविन्यो भवेयुः, किन्तु पचतिपठत्यादिक्रियाविशेषेषु क्रमरूपताध्यासेन क्रियासामा-
20 न्याध्यासः, न तु सर्वविशेषक्रियानुस्यूताऽनध्यस्ता विशेषव्यतिरिक्ता वस्तुभूता क्रियासामान्यवाच्या विद्यते, अध्यस्तत्वादेव य एव विशेषास्त एव सामान्यमप्युच्यन्ते, अत एव किं करोतीति प्रश्ने पचति पठतीत्यादि प्रतिवचनं सङ्गच्छते, अन्यथा सामान्यप्रश्ने विशेषेण प्रतिवचनमसङ्गतं स्यात्, अत एव विशेषवचना अपि कृभ्वस्तय इत्युच्यन्ते, तस्मात् स्थित्युत्पत्तिलयाः क्रियासामान्यस्य कल्पिता एव, तस्य कल्पितत्वात्, अपि तु द्रव्यस्यैव ते इति द्वितीयविकल्पशङ्कायाः प्रतिविधानमाचष्टे—**अथोच्येतेति**। पूर्वपक्षमेव व्याचष्टे—**स्यान्मतमिति**, द्रव्य एव तादृशशक्तेरवस्थितत्वात् तत्रैव तादृशशक्तेः क्रिययाऽभिव्यक्तेश्च द्रव्यस्यैव स्थित्युत्पत्ति-
25 विनाशलक्षणा अवस्थाः, न तु कल्पितस्य क्रियासामान्यस्येति भावः। उक्त[illegible]दिति, प्रोक्तावस्थावदित्यर्थः, अमुमेवार्थमाह—**सम्मूर्च्छितेति** सम्मूर्छिताः—संसृष्टा अविनिभागेन सर्वे प्रभेदाः स्थित्यादिस्वावस्थारूपा यस्मिंस्तदिति विग्रहः। द्रव्यस्यैव सन्निहिततथाभूतवस्तुतत्त्वव्यक्तिरूपत्वे तस्यैव तथा तथा भावात् निर्भेदत्वं न संभवतीति तस्य सर्वप्रभेदनिर्भेदत्वोक्तिरनर्था स्यादित्युत्तरयति—**एवं तर्हीति**। क्रियालक्षणस्योक्तस्य द्रव्य एवाभ्युपगमात्, क्रियायास्तल्लक्षणविरहेण क्रियात्वं न स्यादित्याह—**किञ्चान्यदिति**। [illegible]प्यसम्भवीत्याह—**सन्निहितेति** ते रूपादिपच्यादिभेदाः पूर्वं वस्तुनि सन्निहिताः क्रियया तेऽभिव्यज्यन्त
30 इति यदीष्यते तर्हि क्रियाया नाभिव्यञ्जकत्वं सन्निहितत्वादेव, अभिव्यञ्ज[illegible]त्तिश्चासत एवेति क्रिया न क्रिया स्यादनभिव्यञ्जकत्वात् द्रव्यवत्, खरविषाणवद्वा, [illegible]वस्थानवस्थत्वाद्द्रव्यमद्रव्यमनभिव्यञ्जकत्वात् क्रियाऽक्रिया चापद्येते तथाशेषपक्षस्य विनाशित्वमेव भवेदित्याह—**ते हि भेदा इति**। सर्वपक्षध्वंसभयादेव द्रव्यस्याद्रव्यत्वं क्रियाया अक्रियात्वं नेच्छति तर्हि

---

१ क. ××। २ सि. क. °स्थावस्थेन्तु।

अथैतदुभयं नेच्छति भयात् ततोऽविभागावस्थत्वात् द्रव्यमसदापन्नम्, मा भूद्द्रव्यस्याव्यक्तत्वं क्रियायाश्चाक्रियात्वमिति द्रव्यमविभागावस्थं तद्व्यञ्जिका क्रियेतीष्यते ततो यदेवोत्पद्यते तदेव विनश्यति युगपदयुगपद्भाविपृथिव्यादिभेदाविभागद्रव्यस्यावस्थत्वात्।

(अथेति) अथैतदुभयं—द्रव्यनिर्भेदासत्त्वादद्रव्य[त्वं] सन्निहिततथाभूतवस्तुतत्त्वव्यक्त्यभावादक्रियात्वञ्च नेच्छति, भयात् सर्ववस्तुत्यागभयात् ततोऽविभागेत्यादि, अविभागावस्थत्वात्—विभागाः भेदाः स्थित्याद्यवस्थाः तदभावाद्द्रव्यमविभागमित्यसदापन्नम्, मा भूद्द्रव्यस्य-भेदात्मकस्याद्रव्यत्वमिति क्रियायाश्चाक्रियात्वमव्यञ्जकत्वात्, प्रागेव तथाभूतव्यक्तेर्व्यर्थत्वान्मा भूदिति, किमापन्नं? द्रव्यमविभागावस्थं तद्व्यञ्जिका क्रियेति—क्रिया चाविभागावस्थद्रव्यविषया यथासन्निधिव्यक्तिक्रियात्वादविभागस्यैव सन्निहितस्य व्यञ्जिका हि क्रिया, ततः किमिति चेत्? ततो यदेवोत्पद्यते तदेव विनश्यति ऊर्ध्वं पत्तिरुत्पत्तिः लाभः प्रत्यक्षोपलब्धिः, विविधमदर्शनं विनाशोऽनुपलब्धिरभावः, एकरूपत्वाच्च वस्तुनस्तदभिव्यञ्जनाच्च क्रियाया उत्पत्तिविनाशयोरप्यभेदाद्यदेवोत्पद्यते तदेव विनश्यति, किं कारणं? युगपद्युगपद्भाविपृथिव्यादिभेदाविभागद्रव्यस्यावस्थत्वात्—यदा चाविभागावस्थं द्रव्यं क्रिया च तद्व्यञ्जिका तदानीं युगपद्भाविनः पृथिव्यप्तेजोवाय्वाकाशकालादिभेदा रूपरसगन्धस्पर्शसंख्यासंस्थानादिभेदाश्च ये चायुगपद्भाविनो मृत्पिण्डशिवकादिभेदाः ते सर्वेऽप्यविभागाद्यवस्थामात्रमित्यापन्नाः, तस्मात् सर्वभेदानामविभागावस्थामात्रत्वादुत्पत्तिर्विनाश इत्यप्ययुगपद्भाविनौ भेदौ, तयोश्चाविभागावस्थं द्रव्यं तत्त्वैक्यम्, एकत्वाच्च यदेवोत्पद्यते तदेव विनश्यतीति साधूक्तम्।

देशकालादिभेदाभावादस्त्विति चेद्भ्रमः, यदि यदेवोत्पद्यते तदेव विनश्यति ततोऽङ्कुरोत्पत्तौ तस्यैव विनाशित्वप्रसङ्गः, बीजोच्छूनमूलादिपूर्वभेदानां पत्रनालाद्युत्तरभेदानाञ्च विनाशावस्थात्वादङ्कुर एवैक इत्यङ्कुरोत्पत्त्याऽयमङ्कुर एव विनश्यति ततश्च दृष्टेष्टविरुद्धा-

स्थित्याद्यवस्थाभावाद्द्रव्यस्य विभागाभावेन क्रियाया अव्यञ्जकत्वेन च तयोरभाव एव स्यादित्याह—अथैतदिति। एतदेव स्फुटयति द्रव्येति, द्रव्यस्य निर्भेदत्वासम्भवेनाद्रव्यत्वमिति भावः। अव्यञ्जकत्वमेवाह—प्रागेवेति क्रियायाः प्रागेव द्रव्ये तेषां व्यक्तत्वात् क्रिया न व्यञ्जिकेति तस्या व्यर्थत्वमिति भावः। द्रव्यस्याविभागात्मकत्वं क्रियायाश्च तद्व्यञ्जकत्वं यदीष्यते तदा दोषं दर्शयितुमाह—द्रव्यमविभागावस्थमिति। क्रिया चेति क्रिया चाविभागावस्थं द्रव्यं व्यञ्जयति, सन्निहितव्यक्तिकरत्वात्, द्रव्ये सन्निहितस्य रूपादिपर्यायव्यञ्जकत्वे द्रव्यस्यैव तेन तेन प्रकारेण भवनात् तस्य निर्भेदत्वानुपपत्तिरिति भावः। अविभागावस्थद्रव्यव्यञ्जकत्वे दोषमाह— ततो यदेवेति। उत्पत्तिविनाशयोरैक्यं प्रसज्यते यैवोत्पत्तिः स एव विनाश इति, तयोरविभागावस्थामात्रत्वाद्द्रव्यस्येति भावः। एकरूपत्वे साधनमाह—युगपदिति। साधनार्थं स्फुटीकरोति—यदा चेति द्रव्यं हि अविभागावस्थामात्रम्, यथा च युगपद्भाविनोऽयुगपद्भाविनश्च भेदा अविभागावस्थामात्रम्, त एव हि यदाऽविभागेन वर्तन्ते तदा द्रव्यमित्युच्यन्ते सत्त्वरजस्तमसां साम्यावस्थायाः प्रकृतित्ववत् तथोत्पत्तिविनाशयोरप्यविभागावस्था द्रव्यमुच्यते तथा चावस्थावस्थावतोरैक्यात् यैवोत्पत्तिः स एव विनाशः स्यादिति भावः। नन्वविभागावस्थायां वैषम्यप्रयोजकक्रियासहकारिदेशकालविशेषाभावात्तदा द्रव्यस्य सर्वात्मकत्वात् सैवोत्पत्तिः स एव विनाशः स्यात् को दोषः, यदा तु देशकालादिभेदोऽस्ति तदा यदा यदुत्पद्यते तदा तदेव विनश्यतीति न भवति तयोर्भिन्नत्वादिति शङ्कते—देशकालादीति। पूर्वपक्षं व्याचष्टे—स्यान्मतमिति, एकत्वात्

१ सि. भावाद्। २ सि. क. व्यक्तिर्व्यर्थं०। ३ सि. क. क्रियायाश्चा०।

नुत्पत्त्यविनाशदोषौ स्यातामू, अङ्कुरोत्पत्तौ तस्यैव विनाशित्वात्, न बीजं विनष्टं नाङ्कुर
उत्पन्नः, विनष्टरुत्पत्त्रुश्चाभेदात् ।

(देशेति) देशकालादि[भेदा]भावादस्त्विति चेत्—स्यान्मतं एकत्वादुत्पत्त्यादिभेदैक्याद्यदेवो-
त्पद्यते तदेव विनश्यतीत्यस्तु नाहि को दोष इत्यत्र दोषकुतूहलव्युद्रमः, यदि बीजाङ्कुराद्ययुगपद्भाविनामपि
5 पृथिव्यादियुगपद्भाविभेदमूलत्वाद्यदेवोत्पद्यते तदेव विनश्यति ततोऽङ्कुरोत्पत्तौ तस्यैव विनाशित्वमिति
दोषः, उदाहरणेन स्फुटीक्रियते—यस्माद्बीजोच्छूनमूलादिपूर्वभेदानां पत्रनालाद्युत्तरभेदानाञ्च विनाशावस्थ-
त्वादङ्कुर एवैक इति सत्यम्, ततोऽङ्कुरोत्पत्त्याऽयमङ्कुर एव विनश्यति ततश्च दृष्टेष्टविरुद्धावनुत्पत्त्यविना-
शदोषौ स्यातामू, अङ्कुरोत्पत्तौ तस्यैवाङ्कुरस्यैव विनाशित्वान्न बीजं विनष्टं नाङ्कुर उत्पन्नः, विनष्टुरुत्प-
त्तुश्चाभेदात्, भेदे तु सति युज्येत बीजं विनष्टमङ्कुर उत्पन्न इति, स चोत्पन्नश्चेन्न विनष्टः विनष्टश्चेन्नो-
10 त्पन्न इति उभयाव्यवस्थानान्नोत्पन्नो न विनष्ट इति ।

अस्तु नामानुत्पन्नोऽविनष्टश्च को दोष इति चेदुच्यते नैक एव, किं तर्हि? सर्व एव
वचनादिविरोधाः, अङ्कुरपत्त्रादिनिराकरणादपि च लोकादिविरोधाः ।

(अस्त्विति) अस्तु नामानुत्पन्नोऽविनष्टश्च किं नामको ममायं दोषो न्यायलक्षणोक्त इति
चेदुच्यते नैक एव, किं तर्हि ? सर्व एवेति वचनादिविरोधाः, उत्पद्यते चेन्न विनश्यति विनश्यति चेन्नो-
15 त्पद्यते, त्वया चोच्यते यदेवोत्पद्यते तदेव विनश्यतीति देशकालादिभेदाभावे कथमूर्द्धपदनविविधादर्श-
नभेदेन तदे[वे]ति चाभेदेन निर्देशोऽविरुद्धार्थोऽतः स्ववचनविरोधः, उत्पत्तिविनाशयोर्वा रूढिभेदादे-

---

देशकालादिभेदकाभावेन द्रव्यस्याविभागावस्थत्वादित्यर्थः । अत्र पक्षे दोषमुद्भावयति—यदीति, अङ्कुरे दोषप्रदर्शने कारणमाद-
र्शयति—बीजाङ्कुरादीति, बीजाङ्कुरादयो ह्ययुगपद्भाविनो भावाः, ते च युगपद्भाविपृथिव्यादिभावव्यतिरेकेण न भवन्तीति भावः,
एतेन देशकालादिभेदसत्त्वमादर्शितम् । कथमङ्कुरोत्पत्तौ तस्यैव विनाशित्वप्रसङ्ग इति चेत्तमुदाहरणेन स्फुटयति—यस्मादिति,
20 विविधमदर्शनमनुपलब्धिरभावो विनाश इति विनाशपदव्यावर्णनात् अङ्कुरकाले बीजोच्छूनमूलादिपूर्वभेदानां पत्रनालाद्युत्तरभेदा-
नामादर्शनेन विनाशावस्थत्वात् अङ्कुरस्यैव सत्त्वात्तस्योत्पत्तौ तस्यैव विनाशित्वं स्यादिति भावः । अनुत्पत्त्यविनाशदोषावादर्श-
यति—अङ्कुरोत्पत्ताविति यस्योत्पत्तिस्तस्यैव विनाशाद्बीजं विनष्टमङ्कुर उत्पन्न इति दृष्टस्येष्टस्य चासम्भवादुत्पत्तुर्विनष्टुश्चाभेदेन यदि
बीजमुत्पन्नं न तर्हि तद्विनष्टं यदि विनष्टं न तदुत्पन्नमित्युत्पादविनाशयोर्भेदेन व्यवस्थाविधानासम्भवादुभयोरव्यवस्थितत्वेना-
भावापत्त्या नोत्पन्नोऽङ्कुरो न वा विनष्ट इति अनुत्पत्त्यविनाशदोषौ स्यातामिति भावः । अत्रापीष्टापत्तौ दोषमाह—अस्तु
25 नामेति । यदेवोत्पद्यते तदेव विनश्यतीति स्वीकृत्यानुत्पादविनाशयोरिष्टापत्तौ दोषमादर्शयति—नैक एवेति, अत्र पक्षे नैक एव
दोषः, किन्तु सर्व एव स्ववचनादिविरोधदोषा भवन्तीति भावः । वचनविरोधं दर्शयति—उत्पद्यते चेदिति, उत्पादविनाशयोर-
भेदेनोत्पादप्राधान्ये न विनाशः, विनाशप्राधान्ये वा नोत्पाद इति वस्तुस्थितेः यदेवोत्पद्यते तदेव विनश्यतीति तवाभिधानं
विरुद्धार्थं भवेत्, देशकालादिभेदाभावेनोत्पादविनाशयोर्भिन्नस्वभावयोरभावात् कथमूर्द्धपदनलक्षणामुत्पत्तिं विविधादर्शनलक्षणं
विनाशमभ्युपेत्य यदेव तदेवेत्यभेदेन निर्देशः क्रियते विरुद्धार्थत्वात्, तस्माद्देशकालादिभेदाभावादस्त्विति वचनेन यदेवोत्पद्यते
30 तदेव विनश्यतीति वचनं विरुध्यत इति स्ववचनविरोध इति भावः । आदिपदग्राह्यमाचष्टे—उत्पत्तीति, उत्पादोऽन्यार्थो लोके

---

१ सि. क. °विविधादर्श° । २ सि. क. °निर्देशाद्वि° ।

काधिकरणविरोधात् [रूढिविरोधः] लोके प्रतीतत[...]विरोधः, प्रत्यक्ष[तः]एवोत्पादविनाशभेददर्शनात् प्रत्यक्षविरोधः, उत्पद्यमानत्वान्न विनश्यति विनश्यत्वाच्च नोत्पद्यते भिन्नघटवदित्यनुमानविरोधः, तथा चाङ्कुरपत्रादिनिराकरणादपि च लोकादिविरोधा इति व्याख्यानमनन्तरोक्तस्यार्थस्य लोकप्रतीति[...]रण सुखप्रतिपाद्यत्वादिति गतार्थम्। वचनद्वारेण तु यो[1]क्यमुक्त्याश्रयत्वाद्दोषाणामिति, एवं तावदेनुत्पाद-विनाशादिदोषभावः[2]।

न केवलमेत एव दोषाः किं तर्हि?—

**अनित्यतादो[...]श्च स च क्षणिकवादं व्यतिलंघ्य वर्त्तते, अतोऽभ्युपगमात्, तत्र न हि य[...]वोत्पद्यते तदेव विनश्यति, किं तर्हि? क्षणोऽस्यास्तीति क्षणिक इत्[...]त्पादादन्यो विनाश-क्षणः, उत्पन्नश्च विनष्टश्चेत्यभ्युपगम्यते जातस्य विनाशात्, इह तु उत्पाद एव विनाशः [क्रि]यार्थकालरहित[...]व्योत्पादादित्वात्।**

(अनित्यतादो[...]श्चेति) [अ]नित्यतादोषश्च स च क्षणिकवादं व्यतिलंघ्यानित्यत्वदोषाति-शयेन वर्त्तते इति, अतः—इत्यस्मादेव हेतोः कस्मात्? यदेवोत्पद्यते तदेव विनश्यतीत्यभ्युपगमात्, स चैवमनित्यत्वातिशयदोषः प्रदर्श्यते तद्यथा—तत्र [न] हीत्यादि[3], तत्र [न] हि—क्षणिकवादे न हि यदेवोत्पद्यते तदेव विनश्यति, किं तर्हि? क्षणोऽस्यास्तीति क्षणिक इत्युत्पादादन्यो विनाशक्षणः, उत्पन्नश्च विनष्ट-श्चेत्यभ्युपगम्यते भिन्नस्य कालस्य क्षणाख्यत्वात् तस्मिंश्च काले जातस्य विनाशात् न जायमानस्य, स हि क्षणिकवादी नैकमेवोत्पादक्षणं विनाशक्षणञ्चेच्छति, एकस्योत्पत्तिभङ्गापत्तिभयात्, यथोक्तं 'यस्मिन्नेक-स्मिन् क्षणे जातः' ( ) इत्यादि, क्षणानां क्षणवर्त्तिनाञ्च भेदाज्जातस्येति च नाशनष्टक्षणानाञ्च भेदं सूचयति, इह तु—यदेवोत्पद्यते तदेव विनश्यतीति वादे उत्पाद एव विनाशः प्रसक्तः, क्रियार्थका-

लो विनाशोऽन्यार्थ इति तयोरेकत्र वृत्त्यसम्भवाद्रूढिविरोध इति भावः। लोकविरोधमाह—लोक इति लोके तयोर्भेदेन प्रतीते-रिति भावः। प्रत्यक्षविरोधमाह—प्रत्यक्षत इति। अङ्कुरो न विनश्यति, उत्पद्यमानत्वात्, उत्पद्यमानघटवत्, नोत्पद्यते वाङ्कुरः विनश्यत्वात् भिन्नघटवदिति भेदानुमानादनुमानविरोध इत्याह—उत्पद्यमानत्वादिति। अङ्कुरस्य पूर्वोत्तरभेदानां बीजोच्छूनादिपत्रनालादीनामदर्शनेन निराकरणात् पुनरपि लोकादिविरोधा इत्याह—तथा चाङ्कुरेति। अपरानपि दोषानाह—अनित्यतेति, तव द्रव्यस्य नित्यत्वाभ्युपगमादनित्यत्वं प्रसज्यते यदेवोत्पद्यते तदेव विनश्यती—त्युत्पाद-विनाशाभ्युपगमादिति भावः। तदप्यनित्यत्वं विलक्षणमेवेत्याह—स चेति। अनित्यत्वे तद्वैलक्षण्ये च हेतुमाह—अत इति, यदेवोत्पद्यते तदेव विनश्यतीत्यस्मादेवाभ्युपगमाद्धेतोरित्यर्थः, तदेवमुत्पत्तिविनाशाभ्युपगमादनित्यत्वमिति भावः। लोक-प्रसिद्धानित्यत्वातिशयत्वमस्य दर्शयति—तत्र न हीति। क्षणिकवादे हि क्षणे एकस्मिन्नेव नोत्पादविनाशौ भवतः, किन्तु प्रथम-क्षणे उत्पादो द्वितीयक्षणे च विनाशः, आत्मलाभानन्तरविनाशी क्षणः स यस्यास्ति स क्षणिक इति व्युत्पत्तेरुत्पादानन्तरविना-शसम्भावो भावः, एवञ्च जातस्यैव विनाशो न जायमानस्य, तव तु यदेवोत्पद्यते तदेव विनश्यतीत्युत्पद्यमानस्यैव विनाशित्वा-भ्युपगमात् क्षणिकवादातिशाय्यनित्यत्वं स्यादिति वर्णयति—क्षणोऽस्यास्तीति। क्षणे जात इत्युक्त्या क्षणतद्वृत्तिनोर्भेदः सूच्यते जातस्य विनाशाभ्युपगमाच्च नाशतत्क्षणयोर्भेदः सूच्यत इत्याह—क्षणानामिति। तदेवं क्षणिकवादासीदानित्यत्वमुप-दर्श्य तदतिशयोऽत्र प्रदर्श्यते—इह त्विति। हेतुमाह—क्रियार्थेति। द्रव्याक्रियोभयवस्तुवादेऽतिरिक्तकालाभावात् क्रियाश-

१ सि. वाक्यवाक्यम्. । २ सि. क. °तावदुत्पादविनाशादि° । ३ क. × × । ४ सि. क. उत्पत्ति[...]विनष्टश्चे° ।

लरहितद्रव्योत्पादादित्वात्–क्रियाशब्दवाच्योऽर्थः क्रियैव वाऽर्थः क्रियाप्रयोजनो वा कालः क्रियार्थकालः स एव ते वैयाकरणस्येष्टः यद्यप्यन्येषामन्यथा, यथोक्तं 'परिमाणवती क्रियैव कालः' ( ) इत्यादि, तादृग्विविक्तकालरहितं द्रव्यं क्रियात्मककालविनाभूतं तदेवोत्पादो विनाशोऽवस्थानञ्चेतीष्टत्वात् क्षणिकवादातिशाय्ययं क्षणिकवादस्त्वदीय इति साधूक्तम् ।

5 नानित्यवादेऽपि तिष्ठत्यनवस्थत्वादुत्पादादीनाम्, किं तर्हि–

**शून्यवादता वा, अविनष्टानुत्पन्नास्थितत्वात् खपुष्पवत् ।**

**( शून्येति )** शून्यवादता वा, यथा प्रागुक्तं सर्वस्याङ्कुरानुत्पादाविनाशवदनवस्थानमपीति शून्यतासाधनं गतार्थं यावत् खपुष्पवत् ।

**ननु पृथिव्यादिद्रव्याभेदात् शबीजाङ्कुरभेदात् तत्कालौ चोत्पादविनाशौ स्त इति न 10 भेदस्याभेदस्य वा व्याघातः, तस्मात्तदेवोत्पद्यते तदेव विनश्यतीत्यत्रोच्यते, एवं तर्हि इदानीं भेद एवापतितस्तत्रापि, अश्मसिकतामृल्लोष्टवज्रादिभेदे सति पृथिवी नाम न काचिदन्याऽस्ति, किन्तु पृथिवीत्वजातिमात्रमभिन्नं तद्भेदव्यापि, तच्च द्रव्यमेकमित्यस्य त्वत्पक्षस्य विघातकम्, बीजस्याङ्कुरस्य च नानात्वं बीजाद्विनश्यतोऽन्याङ्कुरस्योत्पद्यमानत्वात्, विनंष्टुरन्य इव देवदत्ताद्यज्ञदत्त उत्पद्यमानः, तस्मान्न तदेवोत्पद्यते तदेव विनश्यति, ततश्च यथा बीजं व्रीहित्व- 15 सामान्याभेदे सत्यङ्कुरात् पृथगेवेष्यते तथा पांश्वादित्वमपीति भेदनिर्भेदद्रव्यनिर्मूलनम् ।**

---

ब्दवाच्य एवार्थः काल इत्याशयेनाह–**क्रियाशब्दवाच्य इति,** अत्र पक्षे षष्ठीतत्पुरुषः वाच्यपर्यायोऽर्थशब्दः । षष्ठ्यपेक्षया कर्मधारये लाघवादाह–**क्रियैव वेति,** अर्थशब्दोऽत्र वस्तुपर्यायः । अर्थशब्दस्य प्रयोजनपर्यायत्वमाश्रित्याह–**क्रियाप्रयोजन इति,** अत्र पक्षे क्रिया अर्थो यस्येति बहुव्रीहिः, अत्र क्रियाया अन्यः पदार्थः काल इति भाति, महाभाष्यकृताऽपि भाष्ये क्रियातिरिक्तः कालोऽभ्युपगतः यदुच्यते 'येन मूर्तीनामुपचयापचयाश्च लक्ष्यन्ते तं कालमित्याहुः, तस्यैव च कयाचित् क्रियया 20 युक्तस्याहरिति च भवति रात्रिरिति च, कया क्रियया ? आदित्यगत्या, तयैवासकृदावृत्तया मास इति भवति संवत्सर इति च भवति' इति । केचिदर्वाग्दर्शिनो ज्योतिर्गत्या कालस्यैकत्वेऽपि नानात्वव्यवहारस्येष्टतया सैव कालो भवतु किमतिरिक्तेन कालेनेति वदन्ति, यथोक्तं हरिणा 'आदित्यग्रहनक्षत्रपरिस्पन्दमथापरे । भिन्नमावृत्तिभेदेन कालं कालविदो विदुः ॥' इति, गोदोहादिक्रियाविशेषश्च परिच्छिन्नपरिमाणत्वादपरेण दिवसादिशब्दवाच्येनादित्यादिगतिप्रचारेण परिच्छिन्नो भवति गोदोहादिरपि अन्यतः प्रसिद्धपरिमाणो देवदत्तादिगतास्त्वपरिक्रियाः परिच्छिन्दन् काल इति व्यपदिश्यत इत्येतदभिप्रायेणैवोक्तं 'परिमाणवती 25 क्रियैव कालः' इति । **यद्यप्यन्येषामिति** सांख्यानुसारिपातञ्जलदर्शने सततपरिणामिषु सत्त्वरजस्तमसां शक्तिमात्रमुद्भवानुद्भवाभ्यामतीतादिकालसमाख्यां लभते, अन्ये तु भिन्नाः क्रियाः सङ्कलनाबुद्ध्याऽनुसंहियमाणाश्चिरक्षिप्रादिव्यपदेशा भवन्ति तथा च बुद्ध्या सङ्कलनं क्रमो वा काल इति वदन्ति, अपरे स्वातंत्र्यशक्तिर्ब्रह्मणः कालइति वदन्ति, यो वा भवतु कालः शाब्दव्यवहारेऽस्मिन्नविद्याकल्पिते भवति भविष्यत्यभूदित्यादिरूपे भिन्नः कालः कश्चिदभ्युपगन्तव्य एवेति बोध्यम् । एवञ्च वस्तुतः कालाभावात् कालात्मकक्रियारहितद्रव्यस्यैवोत्पादाद्यभ्युपगमेन क्षणिकवादातिशाय्यनित्यत्वं तवेति दर्शयति–**तादृगिति** । न 30 केवलं बीजादीनामनुत्पन्नाविनष्टत्वम्, प्रत्युतानवस्थानादपि शून्यवादे पर्यवसानं भवतीत्याशयेनाह–**शून्यवादता वेति** । अथ द्रव्यत्वेन रूपेण द्रव्यस्यावयवभूतानां बीजाङ्कुरादीनामभेदः, उत्पादविनाशयोश्च बीजाङ्कुराद्यभेदादभेदः, अवयवावयविनोश्चाभेदात् पृथिवीद्रव्यबीजाङ्कुराद्योरभेदः, तत्तदवयवत्वेन च बीजाङ्कुरादीनां परस्परं भेद इति भेदाभेदयोर्वास्तविकत्वात् द्रव्यत्वेन बीजादीनामनुत्पादविनाशित्वस्य सत्त्वेऽपि तत्तत्सामग्रीसन्निधानकालापेक्षयोत्पादविनाशयोरपि संभव इति न कश्चिद्दोष

---

१ सि. क. कालतः । २. सि. क. परिणामवती.

**ननु पृथिवीत्या**॥- यावदभेदस्य वा व्याघात इति स्यान्मतं पृथिवीद्रव्यत्वं शिवकादित्वाभिन्नं तास्मिंश्चाभिन्ने तदुत्पादविनाशयोश्चाभेदे सत्ये पृथिवीद्रव्यत्वेनानुत्पन्नाविनष्टत्वे सत्य एक एव तत्रो-त्पादविनाशौ तत्कालौ च, तस्यैव पृथिवीद्रव्यत्वस्य चांशाभ्यां बीजाङ्कुराख्याभ्यां भेद इत्यस्ति भेदः, कारकसद्भावादित्युत्पत्तिरस्ति तथा विनाशस्तत्कालौ च, इतिशब्दस्य हेत्वर्थत्वात्, एवं भेदस्याभेदस्य च व्याघातो नास्ति तस्मात्तदेवोत्पद्यते तदेव विनश्यति पृथिवीद्रव्यत्वाभेदात् तदंशवीजाङ्कुरभेदात्तत्कालौ 5
च स्त इति नानित्यशून्यते दोषाविति, अत्रोच्यते—एवं तर्हीत्यादि यावन्न तदेवोत्पद्यते तदेव विनश्य-तीति, अयमिदानीमस्मत्परिकल्पितो भेद एवापतितस्तवापि, अश्मसिकतामृल्लोष्टवज्रादिभेदे सति पृथिवी नाम न काचिदन्याऽस्ति तद्व्यतिरेकेण, किन्तु पृथिवीत्वजातिमात्रमभिन्नं तद्भेदव्यापि, तत्र द्रव्य-मेकमित्यस्य त्वत्पक्षस्य विघातकं जातिमात्रमभिन्नं शेषं सर्वं भिन्नमिति सिद्ध्यति, बीजस्याङ्कुरस्य च नानात्वं बीजाद्विनश्यतोऽन्योऽङ्कुरस्योत्पद्यमानत्वात्, विनंष्टुः—मृतादन्य इव देवदत्ताद्यज्ञदत्त उत्पद्यमानं 10
इति, तस्मान्न तदेवोत्पद्यते तदेव विनश्यति, अन्यनिवृत्त्यर्थावधारणस्य भेदसत्यत्वे सत्यानर्थक्यात्, ततश्च यथा बीजमित्यादि दृष्टान्तः-यथाङ्कुरादिकालेषु भिन्नेष्वपि व्रीहित्वसामान्याभेदे सति पृथगेव बीजमङ्कुरादिष्यते मा भूत् पूर्वोक्तोऽनुत्पादविनाश इति त्वया, तथा पांश्वादित्वमपि—पांशुमृत्पिण्डादि-त्वमपि पृथिवीत्वाद्भिन्नमेषितव्यम्, ततः किमिति चेद् ब्रूमः—इति भेदनिर्भेदद्रव्यनिर्मूलनमिति—अस्मात् पांश्वादित्वभेदाभ्युपगमात् सर्वप्रभेदनिर्भेदं न भवति, ततश्च लक्षणाभावाद्द्रव्यमेव निर्मूलितं त्वयेति । 15

इत्याशङ्कते-**ननु पृथिवीद्रव्यत्वेति** । एतदेव व्याचष्टे-**स्यान्मतमिति**, अनेनावयवावयविनोरभेदो दर्शितः । **तस्मिंश्चा-भिन्न इति**, अनेन यैवोत्पत्तिः स एव विनाश इत्युत्पादविनाशयोरभेदः प्रदर्शितः । **पृथिवीद्रव्यत्वेनेति**, अनेन द्रव्यत्वेन सर्वेषां । नित्यत्वादनुत्पादाविनाशित्वं प्रकटीकृतम् **तस्यैवेति**, अनेन तत्तदवयवत्वेन बीजाङ्कुरादिना तद्भेदस्यापि सत्यता दर्शिता। **कारकसद्भावादिति**, अनेन यदा तथाविधकारकसमवधानं तदोत्पद्यते, यदा तु तथाविधकारकसमवधानं तदा विनश्यतीति कालविशेषेणोत्पादविनाशौ प्रकटीकृतौ। तदेवं पूर्वोदितदोषाभावं प्रदर्शयति-**एवं भेदस्येति**, एवञ्चावच्छेदकभेदादेकत्र भेदाभेदौ 20
न विरुद्धाविति भावः । एवमभ्युपगमे द्रव्यमेव निराकृतं भवतीति समाधत्ते-**अत्रोच्यत इति** । अवयवव्यतिरिक्तस्योपलब्धि-लक्षणप्राप्तस्यानुपलब्धेरेवाश्मसिकतामृल्लोष्टादिभेदेभ्यो व्यतिरिक्ता पृथिवी नाम न काचिदस्तीति दर्शयति अय[illegible] । अश्मा पृथिवी सिकता पृथिवी मृत् पृथिवीति प्रत्ययतो यत् स्थितिरूपं द्रव्यं भेदव्यापि मन्यते सा केवलमभिन्ना जातिरेव, न तु द्रव्यम्, अश्मसिकतादिव्यतिरिक्तस्य प्रत्यक्षतो द्रव्यस्यानुपलम्भात्, तस्मात् सर्वभेदव्यापिद्रव्याभावात् द्रव्यं भावश्च वस्त्विति त्वत्पक्षो विहन्यतेऽनेन वचनेन पृथिवीद्रव्यत्वाभेदादित्यादिना, तस्मात् द्रव्यं भिन्नं भिन्नमेवापतितं विनश्यतो बीजादन्यस्यैवाङ्कु- 25
रस्योत्पादात्, अत एव यदेवोत्पद्यते न तदेव विनश्यतीति प्रतिपादयति-**अश्मसिकतेति** । **तद्व्यतिरेकेण**-अश्मसिकतादि-भिन्नत्वेनेत्यर्थः । नन्वेकस्य द्रव्यस्याभावेऽनुवृत्तप्रत्ययो न स्यादित्यत्राह-**किन्त्विति** । न च बीजाङ्कुरादीनामेव द्रव्यता, तेषां प्रत्यक्षेण नानात्वदर्शनादित्याशयेनाह-**बीजस्येति** । निदर्शनमन्यत्वे दर्शयति-**विनंष्टुरिति** । एवञ्चोत्पद्यमानोऽन्यो विनाशी चान्य इति यदेव तदेवेत्यभेदनिर्देशो नोपपन्नः, अत्र ह्येवकारोऽन्यनिवृत्त्यर्थकः, यदा चान्यत्वमुत्पद्यमानविनाशिनोर्वास्तविकं तदा तन्निवृत्तिर्नैरर्थक्येत्याह-**त[illegible]ति** । यदेव तदेवेति यस्यैवोत्पादस्तस्यैव विनाश इति वर्णनात् उत्पादविनाशवैयधिकरण्य- 30
निवृत्तिर्न शक्यते विधातुम्, उत्पाद[illegible]रधिकरणभेदस्य सत्यत्वात्, ततश्च मृत्पांशुसिकतादीनामुत्पादविनाशाधिकरणानां

१ सि. क. सत्यैकेव । २ सि. क. कदाचिद्° । ३ सि. क. °मात्रभिन्नं । ४ सि. क. °न्याङ्कुरउत्प । ५ सि. क. °दृत्तोयज्ञ° । ६ सि. क. °मानमिति । ७ सि. क. °दाविशेष ।

अपि च त्वयैव द्रव्यांशाभ्यां बीजाङ्कुराभ्यां भेद इत्यनेन वचनेनापादितं भेदानां बहुत्वं द्रव्यैकत्वविघाति, किञ्चान्यत्तदनिष्टपरिहारार्थमुत्थितेन ननु पृथिवीद्रव्यत्वाभेदादित्यादिवचनेन पार्थिवत्वमपि नानैवोत्थापितम्, बीजादि भेदकमभेदकादन्यत्, भेदकत्वात्, अभेदकमितरश्च, अभेदकत्वात्, यथा द्रव्यक्रिये इति ।

5 अपि चेत्यादि, त्वयैवाऽऽपादितं भेदानां बहुत्वं द्रव्यैकत्वविघाति, कतमेन वचनेनेति चेत् पार्थिवद्रव्यत्वादुत्पत्तुर्विनंष्टुश्चाभेदो नेतरद्रव्यांशाभ्यां बीजाङ्कुराभ्यां, ताभ्याञ्चानेकत्वमित्यनेन वचनेनापादितम्, किञ्चान्यत्—इदमप्यन्यदनिष्टं तत्परिहारार्थमुत्थितेन त्वयाऽऽपादितम्, कथं? यच्चोदितोऽसि बीजाङ्कुरनानात्वं क्षणिक[वाद]ातिशयः शून्यवादता च भवत इति तत्परिहारार्थमुत्थिते[न] ननु पृथिवीद्रव्यत्वाभेदादित्यादिना वचनेन पार्थिवत्वमपि नानैवोत्थापितम्, कथमिति? तदुच्यते—अभेदकं

10 पार्थिवत्वं, बीजादि भेदकं, बीजादिभेदकञ्चाभेदकादन्यत्, अभेदकञ्च भेदकात्, भेदकत्वादिति स्वभावभेदं हेतुत्वेनाह, इतश्च—अस्मादन्यदभेदकत्वादिति, उभयोर्दृष्टान्तो—द्रव्यक्रिये, यथा द्रव्यात् सर्वभेदनिर्भेदादन्या तथाभूतवस्तुतत्त्वव्यक्तिलक्षणा क्रिया क्रियातश्च द्रव्यं तथा च पार्थिवत्वमभेदकत्वाद्बीजादेर्भेदकाद्भिन्नस्वभावं तद्वद्भेदकत्वान्नाना स्यात् क्रियाया इव द्रव्यमिति ।

आह—

15 ननु घट उत्पद्यमान एव शिवकत्वेनोत्पद्यमानः पिण्डत्वेन विनश्यति पूर्वोत्तरकालयोरपि मृद्द्रव्यपृथिवीद्रव्यत्वाभेदाद्घटाभेदाद्घट एवेति स एवोत्पद्यते स एव विनश्यति, तस्मात् पिण्डत्वेनोत्पद्यमानः शिवकत्वेन नश्यति, तथा पुनर्घटत्वेन विनश्यन् पटत्वेनोत्पद्यते, शिवकत्वेनेव विनश्यंश्छत्रकत्वेनेति ।

---

परस्परं भेदयाथार्थ्यात् तद्भिन्नायाः पृथिव्या अभावेनाभेदसम्पादकं पृथिवीत्वं सामान्यमेवाभिन्नं सर्वभेदानुगतं संवृत्तं, न तु

20 द्रव्यम्, अतश्च त्वत्पक्षस्य भेदनिर्भेदं द्रव्यमित्यस्य विघात इति भावः । ननु त्वयैवोत्पत्तुरङ्कुरस्य बीजस्य विनंष्टुः पार्थिवद्रव्यत्वेनाभेदे सत्यपि बीजादित्वेन भेदं वदता भेदानां द्रव्यैकत्वविघातकं बहुत्वमापादितं न तु मयैवेत्याह—अपि चेति । तदेव वचनं सूचयति—पार्थिवद्रव्यत्वादिति । तथा पार्थिवत्वमपि नानैवेत्यापादितमिति दर्शयति—किञ्चान्यदिति बीजाङ्कुरानानात्वस्याभुनैवोक्तत्वात् यदेवोत्पद्यते तदेव विनश्यतीत्युक्तेः क्षणिकवादातिशयः, अविनष्टानुत्पन्नास्थितत्वात् शून्यवादातिशयश्च बोध्यः । पृथिवीत्वस्य नानात्वं मानेन समर्थयति—अभेदकमिति, पार्थिवत्वादभेदकात् बीजादेर्भेदकत्वादन्यत्वम्, भेदकाच्च

25 बीजादेः पार्थिवत्वमभेदकत्वादन्यत्, बीजादि भेदकमभेदकादन्यत्, अत्र माने बीजादेर्भेदकत्वं स्वभाव एवाभेदकादन्यत्वसाधने हेतुः, अभेदकं पार्थिवत्वं भेदकादन्यत्, अत्राप्यभेदकत्वं स्वभाव एव भेदकादन्यत्वे हेतुः । यथा द्रव्यादन्या क्रिया तथाभूतवस्तुतत्त्वव्यक्तिरूपत्वात् क्रियातश्च द्रव्यमन्यत् सर्वभेदनिर्भेदत्वात् तथाऽत्रापीति दर्शयितुं दृष्टान्तमाह—उभयोरिति, भेदकस्याभेदकादन्यत्वसाधनेऽभेदकस्य च भेदकादन्यत्वसाधने इत्यर्थः । दृष्टान्तं घटयति—यथेति । क्रियाया भिन्नस्वभावस्य द्रव्यस्य यथा नानात्वं असम्भवितादिविभिन्नद्रव्याभावात् तथा पार्थिवत्वमभेदकत्वेऽपि नानैवेति प्रतिभाति, पुनरपि अभेदं साधयितुं वादी शङ्कते—

30 नन्विति, यथा घटस्य पूर्वोत्तरावस्थाः घटाभिन्नमृत्स्वरूपत्वात् घट एव तासामवस्थानामुत्पादाद्विनाशाच्च घट एवोत्पद्यते विनश्यति च, तथा पटकटरथादयोऽपि घट एव घटाभिन्नद्रव्याभिन्नत्वात् शिवकादीनामुत्पादविनाशाभ्यां नानुत्पत्त्यविनाशादिदोषा

---

1 सि. क. पार्थिवद्रव्य त्वमुत्पत्तुर्विनष्टुश्च नेतरद्रव्यांशाशाभ्यां । 2 सि. क. °भेदबहुत्वादि° । 3 सि. क. अभेदकत्वं ।

**ननु घट उत्पद्यमान इत्यादि** यावत् पटत्वेनोत्पद्यत इति, यस्त्वयोक्तं यदेवोत्पद्यते तदेव विनश्यति तत्रानुत्पन्नस्य विनाशस्ववचनविरोधादिक्षणिकवादातिशयशून्यवादतादोषा न सम्भवन्ति, प्रत्यक्षवचनादीनां तथात्वात्, यस्माद्घट उत्पद्यमान एव शिवकत्वेनोत्पद्यमानः पिण्डत्वेन विनश्यति, पूर्वोत्तरकालयोरपि सद्द्रव्यपृथिवीमृत्त्वाभेदाद्घटाभेदात् पिण्डावस्थायां शिवकाद्यवस्थायां मृदादियावत्परमाण्ववस्थायां कपालादियावत्परमाण्ववस्थायाञ्च घट एवेति स एवोत्पद्यते स एव विनश्यति, इति 5
शब्दस्य हेत्वर्थत्वात् तस्माद्घट एव पिण्डत्वेनोत्पद्यमानः शिवकत्वेन नश्यति तस्मान्नानुत्पन्नस्यादिदोषाः, यथा पिण्डत्वेनोत्पद्यमानः शिवकत्वेन घट एव विनश्यति तथा पुनर्घटत्वेन विनश्यन् पटत्वेनोत्पद्यते किमिव? शिवकत्वेनेव विनश्यंश्छत्रकत्वेन—यथा शिवकत्वानन्तरं छत्रकत्वं जायमानं तदुत्पन्नं विनष्टञ्च तथा देशान्तरभावान्तरान्तरितघटविनाशपटसम्भवयोरप्यभेदो वस्तुत्वादिभ्यः, पिण्डशिवकत्ववदिति । 10

**अत्रोच्यते, अयमपरिहारः, उक्तोत्तरत्वात्, अर्थतो हि यदेव शिवकोत्पत्तौ शिवकेनैव विनाश इति तदेवाङ्कुरोत्पत्तावङ्कुरेणैव विनाश इत्युक्तं ततोऽयं दोषो बलादापद्यते शिवकेनैवोत्पत्तौ शिवकेनैव विनंष्टव्यमिति, ततोऽभिन्नत्वात्, यथा त्वदुक्तानन्तरघटोत्पादः, एवं त्वनुत्पत्तौ तस्यैवावस्थितस्य नैवोत्पत्तिः, अत्यन्तं भावादन्यत्वात् खपुष्पवत्, अनुत्पन्नस्य च विनाशाभावः खपुष्पवदेव विनाशस्याप्यभावाद्घटादिभवनाभावः, भवनसम्बन्धस्य तद्व्यतिक्रमस्य चाभावात् सर्वमभूतं नास्तीत्येवमाद्यापद्यते ।** 15

(अत्रोच्यत इति) अत्रोच्यते अयमपरिहारः, उक्तोत्तरत्वात्—नन्वत्रोक्तमेव प्रागङ्कुरस्यैव विनाशित्वादिदोषजातम्, तस्य पिण्डशिवकत्वसंज्ञामात्रपृथक्त्वतोक्तिमात्रभेदान्न परिहारो भवति, यस्मादर्थतो यदेव शिवकोत्पत्तौ शिवकेनैव विनाश इति तदेवाङ्कुरोत्पत्तावङ्कुरेणैव विनाश इत्युक्तं ततोऽयं

इति भावः । तदेव व्याचष्टे—**यस्त्वयोक्तमिति** उत्पत्तुर्विनंष्टुश्चाभेदेऽनुत्पन्नस्य विनाशादोषः उत्पादविनाशयोर्भेदे एव सम्भवात् 20
बीजो विनष्टोऽङ्कुर उत्पन्न इति, अनुत्पन्नस्य विनाशयोरभ्युपगमे स्ववचनविरोधादयो दोषाः, यदेव तदेवेत्यभेदेनोत्पत्तिविनाशाभेदेन च निर्देशात्, तथा क्षणिकवादे उत्पादादन्यक्षणत्वाद्विनाशस्य त्वद्वादे यदेव तदेवोत्पत्त्या देशकालादिभेदाभावात् क्षणिकवादातिशयदोषः, अविनष्टानुत्पन्नास्थितत्वाच्च शून्यवादतेतिप्रोक्ता दोषा न सम्भवन्ति शिवकत्वेनोत्पादस्य पिण्डत्वेन विनाशस्याभ्युपगमात् उभयरूपेण घटस्यैवाभिन्नस्याभ्युपगमाच्च यदेवोत्पद्यते तदेव विनश्यतीत्युत्पादविनाशस्थितिव्यवस्थानाच्च कोऽपि दोष इत्याह—तत्रानुत्पन्नेति । सजातीयप्रवाहे घटाभेदं दर्शयति—**यस्माद्घट इति** । विजातीयप्रवाहेऽपि घटाभेदमुपदर्शयति—**यथा** 25
**पिण्डत्वेनेति,** पिण्डत्वशिवकत्वछत्रकत्वादयो यथा घटस्यावस्थाः तथैव वस्तुत्वादेवं घटत्वपटत्वकटत्वरथत्वादयोऽपि घटस्यैवाऽवस्था इति भावः । **देशान्तरेति** पिण्डत्वशिवकत्वादीनि देशान्तराणि घटत्वपटत्वकटत्वादीनि भावान्तराणि । पूर्वमङ्कुरोत्पत्तौ तस्यैव विनाशित्वप्रसङ्गः बीजोच्छूनमूलादिपूर्वभेदानां हि पत्रनालाद्युत्तरभेदानाञ्च विनाशावस्थत्वादङ्कुर एवैक इत्यङ्कुरोत्पत्त्याऽयमङ्कुर एव विनश्यतीति प्रतिपादितस्य दोषस्यात्रापि समानत्वात्तवायं परिहारोऽपरिहार एवेत्याह—**अत्रोच्यत इति** । एतदेव सूचयति—**नन्वत्रेति,** बीजाङ्कुरादिस्थाने केवलमिह पिण्डशिवकत्वादिकं प्रक्षिप्योक्तं, न तु विशेषः कश्चित् प्रति- 30
पादित इति भावः । उक्तमेवोत्तरमत्रापि घटयति—**यस्मादिति** । पिण्डशिवकादीनां घटाभिन्नत्वात् पूर्वोत्तरावस्थानां विनाशावस्थत्वात् शिवकस्यैकस्यैव सत्यत्वेन शिवकत्वेनोत्पत्तौ शिवकेनैव विनंष्टव्यं ततोऽभिन्नत्वात्, शिवको हि शिवकादभिन्नः, तस्मात्

१ सि. क. घटत्वे० । २ क. ×× । ३ सि. क. °पृथक्ता उक्ति० । ४ सि. क. यस्मादर्थता ।

दोषो बलादापद्यते शिवकेनोत्पत्तौ शिवकेनैव विनंष्टव्यमिति, किं कारणं? ततोऽभिन्नत्वात्, यतो यदभिन्नं तदुत्पत्तौ तेनैव विनंष्टव्यं यथा त्वदुक्तानन्तरघटोत्पाद इति, एवं त्वनुत्पत्तावित्यादि—एवञ्चेदुत्पत्तिर्नेष्यते तस्यैवावस्थितस्य घटस्य नैवोत्पत्तिरस्ति, अत्यन्तं घटाख्याद्भावादन्यत्वात् खपुष्पवत्, अनुत्पन्नस्य च विनाशाभावः खपुष्पवदेव, विनाशस्याप्यभावात् घटादिभवनाभावः, आदिशब्दादुत्प-
5 त्तेरप्यभावाद्घटादीनामुत्पत्तिविनाशशून्यत्वाद्भवनाभावः—अस्तित्वाभावः, उत्पत्तिविनाशौ हि [भवनसम्बन्धतद्व्यतिक्रमौ,] भवनसम्बन्ध[स्य]तद्व्यतिक्रमस्य चाभावात् सर्वमभूतं नास्तीत्येवमाद्यापद्यते, आदिग्रहणादवस्तुसत् अभावो निरुपाख्यमित्यादि ।

अत्र पुनः परिहारः—

**अथोच्येतैक्य एव भिन्नयोरप्यभेदः, यथा मृत्कुम्भावस्था, रूपादिशिवकादियुगपद्-**
**10 युगपद्भाविनियतभवनानि मृद्द्रव्यभवनस्यैव भवनभागा अभिव्यज्यन्ते तांश्च भवनभागान् क्रियापि व्यनक्ति नान्यथेति यद्यभिन्नस्यैवावस्थाः स्युः को दोष इति ।**

**अथोच्येतैक्य एवेत्यादि,** यथा सत्येवैक्ये मृत्कुम्भावस्थयोः सर्वसर्वात्मकत्वाद्भिन्नयोरप्यभेदः तथा बीजाङ्कुरादिभेद इत्यभिप्रायः, यथा मृदः कुम्भावस्था, युगपद्भाविनां रूपरसादीनामयुगपद्भाविनाञ्च शिवकादीनां नियतानि भवनानि मृद्द्रव्यस्यैव कर्तृभवनस्य रूपादिशिवकादित्वेन तेन प्रकारेण नियता
15 एव भवनभागाः मायाकारकपताकिकावन्नानियताभिव्यक्त्योऽभिव्यज्यन्ते प्रथमभवनशब्दस्य कर्तृभवनार्थत्वात्, तांश्च भवनभागान् क्रियाऽपि व्यनक्ति नान्यथा, भावशब्दस्य द्वितीयस्य क्रियावाचित्वात् । यद्यभिन्नस्य मृत्कुम्भाद्ययुगपदवस्थाः रूपादिपृथिव्यादियुग[पदु]त्पत्तिस्थिति[विनाशाः] अभिन्नस्यैवावस्थाः स्युः को दोष इति ।

तदुत्पत्तौ तेनैव विनंष्टव्यम्, यथोत्पद्यमानघटादनन्यो विनश्यमानो घट इत्याह—**शिवकेनेति** । उक्तप्रतिज्ञायां हेतुमाह—**ततोऽ-**
20 **भिन्नत्वादिति** उत्पद्यमानशिवकात् विनश्य[illegible]स्याभिन्नत्वादित्यर्थः । दृष्टान्तमाह—**यथेति,** यथा त्वयोत्पद्यमानघटविनश्यमानघटयोरभेदोऽभ्युपगम्यते तद्वदिति भावः । शिवकपिण्डादेरेवोत्पादविनाशात् घटस्योत्पादानभ्युपगमे विनाशस्याप्यभावाद्घटस्य भवनं न स्यादित्याह—**एवञ्चेदिति । घटाख्यादिति** पिण्डशिवकाद्यवस्थावतो घटस्योत्पादानङ्गीकारे शिवकादेरेवाङ्गीकारे उत्पत्तेर्घटाद्भिन्नत्वेन घटस्य उत्पत्तिर्न स्यादिति भावः । एवं घटस्योत्पादाभावे कथं घटत्वेन विनश्यन् पटत्वेनोत्पद्यत इत्युत्पादविनाशाभावाद्घटस्य भवनाभावेनाभूतस्य नास्तित्वं स्यादित्याह—**अनुत्पन्नस्य चेति** । उत्पादाद्यभावे कथं
25 भवनाभाव इत्यत्राह—**उत्पत्तीति** भवनसम्बन्धस्यैवोत्पत्तित्वात्तद्व्यतिक्रमस्य च विनाशत्वादित्यर्थः । आपाद्यान्तरमाह **आदिग्रहणादिति** । युगपदयुगपद्भाविनो भेदा अभेदपूर्वका एव, अभिन्नस्यैव भेददर्शनात्, न हि धर्मिस्वरूपव्यतिरेकेण भेदभूतधर्मा भवितुमर्हन्ति, तस्मादैक्य एव भेदसम्भवात् तेषां च भेदानां धर्मरूपत्वादेवाश्रयाभेदत ऐक्यसम्भवः, अत एव सर्वसर्वात्मकतापि, अभेदात्मनि द्रव्ये एव धर्माणां युगपदयुगपद्भाविनामभेदेन निलीनत्वात् मायाकारकपताकिकावच्च अभेदेन नियता एव धर्माः क्रिययाऽभिव्यज्यन्त इति नाभूतं नास्तीत्यादिदोषप्रसङ्ग इत्याशङ्कते—**अथोच्येतेति** । तदेव व्याचष्टे—
30 **यथा सत्येवेति,** स्थित्यात्मवस्तुसत्येवावस्थानां सम्भवोऽभेदसम्भवश्च, सामान्यस्यैव विशेषीभवनात् विशेषाणाञ्च सामान्याभेदादिति भावः । वस्तुनः सर्वात्मकत्वादेव नियतानामवस्थानां क्रिययाऽऽविर्भाव इत्याह—**यथा मृद इति** । ननु भेदा-

१ सि. क. सर्वा स० । २ × × सि. । ३ सि. क. यदि भिन्नस्य ।

अत्रोच्यते नन्वस्माभिरपि नोपपद्येते इत्युक्तमनन्यत्वात् सर्वस्य सर्वात्मकत्वाच्च, त्वयाऽभ्युपगतानां स्थित्यादीनां द्रव्यस्वावस्थत्वात् तस्मादविरोधादनन्यत्वमासाम्, अनन्यत्वाच्च पूर्वोत्तराभावात् कः केनाभिभूतो येनैक्यमापद्येरन्, यत इयमनया क्रिययाऽभिव्यज्यत, नेयमिति च, अविद्यमानपार्थक्यात्, पृथक् सिद्धानां ह्यैक्यापत्तिः तन्तुपटवत्, ततः कस्यचिद्व्यक्त्यव्यक्ती नोपपद्येते इति कुत उत्पादादिभेदः? । 5

(अत्रोच्यत इति) अत्रोच्यते—नन्वस्माभिरपीत्यादि[1] यावत् कुत उत्पादादीति, नन्वस्माभिस्ते एव नोपपद्येते इत्युक्तं, व्यक्त्यव्यक्तीत्यभिसम्बध्यते, तथानियतभवनभागद्रव्यावस्थाया व्यञ्जनमव्यञ्जनञ्चेति, कस्मात्? अनन्यत्वात् सर्वस्य सर्वात्मकत्वाच्च, तथानन्यद्द्रव्यमेव, तस्य च स्थित्युत्पत्तिविनाशा अनन्ये, किं कारणं? त्वयाऽभ्युपगतानां स्थित्यादीनां द्रव्यस्वावस्थत्वात्—द्रव्यस्यैव स्वावस्थाः स्थित्यादयः परस्परतोऽनन्य इति हि समाश्रितः त्वयाऽयं पक्षः, परस्परभिन्नस्थित्यादीनां द्रव्यस्वावस्थत्वे 10 सर्वपक्षार्थध्वंसित्वभयात्, तस्माद्द्रव्यस्वावस्थत्वादविरोधः स्थित्यादीनाम्, न यथा स्वप्नजागरणयोर्विरोधः, तस्माद्द्रव्यस्वावस्थत्वादविरोधः, अविरोधाच्चानन्यत्वमासाम्, अनन्यत्वाच्च पूर्वमिदमुत्तरमिदमिति क्रमाभावस्ततः पूर्वोत्तराभावात् कः केनाभिभूतः येनैक्यमापद्येरन् स्थित्यादयः, यतः—एतस्मादियमनया क्रिययाऽभिव्यज्यतेऽवस्था नेयमिति च, कस्मात्? अविद्यमानपार्थक्यात्, पृथक् सिद्धानां ह्यैक्यापत्तिः स्यात् सत्यविरोधे, तन्तुपटवत्[3], तस्मादभिभवैक्यानापत्तेः पूर्वोत्तराभावाद्द्रव्यस्वावस्थत्वे सत्यविरोधाद- 15 नन्यत्वात् कस्यचिद्व्यक्त्यव्यक्ती नोपपद्येते, कुतस्तदनुपपत्तेस्तथानियतभवनभागव्यक्त्यव्यक्तिभावाभ्यामुत्पादादिभेद इति तदवस्थो दोषः ।

किञ्चान्यत्—

अपि च लोकप्रतीतव्यक्तिधर्मविपरीतत्वादुत्पादाद्यभाव इति ब्रूमः, लोके हि पूर्वव्य-

नामेकान्तेनाभेदो भवतामिष्टः, तथा चोत्पत्तिस्थितिविनाशाः द्रव्यादेकान्तेनाभिन्नास्तत्स्वरूपा एव, तस्मात् यैवोत्पत्तिः स एव 20 विनाशः स्यादित्याद्यापत्तय उक्तास्तदवस्था एवेत्युत्तरयति—अत्रोच्यत इति । यतो यदभिन्नं तदुत्पत्तौ तेनैव विनंष्टव्यं ततोऽभिन्नत्वात्, एवं त्वनुत्पत्तौ विनाशाभावेन भवनाभावात् कुम्भादिरूपादीनां व्यक्त्यव्यक्ती न स्यातामित्युक्तं सूचयति—नन्वस्माभिरिति । मृत्कुम्भावस्थयोरेकान्तानन्यत्वात् सर्वेषां सर्वात्मकत्वाच्चेत्यनुपपन्नत्वे हेतू दर्शयति—अनन्यत्वादिति स्थित्युत्पत्तिविनाशानां द्रव्यानन्यत्वात्, स्थित्यादीनामपि परस्परतोऽनन्यत्वेन सर्वात्मकत्वाच्चेति भावः । अन्यथा सर्वसर्वात्मकत्वपक्षभङ्ग इत्याह—परस्परेति, अवस्थानां परस्परं भेदमभ्युपेत्य तासामवस्थावदनन्यत्वे इत्यर्थः । ननु स्थित्युत्पत्तिविना- 25 शानां भिन्नकालत्वेन विरोधात् कथं परस्परमभेद इत्यत्राह—तस्मादिति द्रव्यस्वावस्थत्वादित्यर्थः । अवस्थात्वादेव रूपरसादाविवाविरोधादनन्यत्वेनैकत्वात्पूर्वोत्तरकालता नास्ति स्थित्यादीनां विरोधाद्भेदे सति हि स्वप्नजागरणयोरिव पूर्वोत्तरकालता भवेत्, उक्तञ्च 'असतश्च क्रमो नास्ति स हि भेत्तुं न शक्यते । सतोऽपि चात्मतत्त्वं यत्तत्तथैवावतिष्ठते ॥' इति, एवञ्च द्रव्यमात्रस्यैकस्यैव वस्तुत्वादस्माद्धेतोरयमिदानीमभिभूतोऽस्माच्चायमिदानीमाविर्भूत इत्यसम्भवेनोत्पादाद्यभावादभूतं नास्तीत्युक्तदोषास्तदवस्था एवेत्याह—अनन्यत्वाच्चेति । अथानन्यद्द्रव्यस्य सर्वात्मकत्वमभ्युपेत्य व्यक्त्यव्यक्त्योः सम्भावनयापि व्यञ्जकाभावात्ते न स्यातां, 30 लोके हि यत्र यस्य व्यक्तिस्ततो व्यतिरिक्तस्यैव व्यञ्जकत्वं दृश्यते तादृशञ्चात्र नास्तीत्याह—अपि चेति । अभ्युपगम्येति

1 सि. क. °पीदमित्या° । 2 सि. क. °[illegible] । 3 सि. क. °तन्तुपटत्ववत् ।

क्तिव्यतिरिक्तो व्यञ्जकः प्रसिद्धो न तु तद्द्रव्याव्यतिरिक्तः, यदेवोत्पद्यते तदेव विनश्यतीति द्रव्यस्यावस्थाविभागं ब्रुवता त्वया न ततोऽन्यः संयोगः संयोगी वाऽभ्युपगम्यते, क्रियास्वावस्था द्रव्यभेदनिषेधात्, तदभ्युपगम्य व्यक्तिधर्मस्त्यक्तः, तत्त्यागाच्च व्यक्तिरनुक्तैव, व्यक्तिकारणाभावात् ।

5 अपि चेत्यादि, अभ्युपगम्याभिन्नार्थैक्यापत्तिविषये व्यक्त्यव्यक्ती लोकप्रतीतव्यक्तिधर्मविपरीतत्वात् उत्पादाद्यभाव इति ब्रूमः, लोके हि पूर्ववव्यक्तिव्यतिरिक्तो व्यञ्जनः प्रसिद्धोऽन्यः, उदकाञ्जनदीपादियोगो भूगन्धचक्षुरिन्द्रियशक्त्यभिव्यक्तिघटादिदर्शनहेतुः यथासंख्यम्, भुजिक्रियासाधनं भूयोगिमूलकादिद्रव्यजातमुपलभ्यते यथा न तथा तद्द्रव्य[ा]व्यतिरिक्तम्, यदेवोत्पद्यते तदेव विनश्यतीति द्रव्यस्यावस्थाविभागं ब्रुवता त्वया न ततोऽन्यः संयोगः संयोगी वाऽभ्युपगम्यते द्रव्यक्रियापृथग्भूतः,

10 द्रव्यावस्थामात्रत्वादुत्पादादीनाम्, किं कारणं? क्रियास्वावस्थाद्रव्यभेदनिषेधात्–उत्पादादयः क्रियायाः स्वावस्था इत्येतं पक्षं द्रव्यस्यापि परस्परभिन्नाः सत्योऽवस्था इत्येतञ्च पक्षं यस्मान्निषिद्धवन्तो वयम्, द्रव्यनिर्मूलत्वादिदोषात् तस्मादभ्युपगतं त्वया न किञ्चिद्द्रव्य[व्यति]रिक्तमस्तीति, ततश्च तदभ्युपगम्य व्यक्तिधर्मस्त्यक्तः, तद्विपर्ययधर्मणो द्रव्यमात्रस्याभ्युपगमात्, तत्त्यागाच्च व्यक्तिरनुक्तैव, व्यक्तिकारणाभावात् ।

15 स्यान्मतं निर्हेतुका व्यक्तिरव्यक्तिर्वा द्रव्यधर्मः स्वभावः, यथोक्तं 'सुदूरमपि संधाय संक्षीणोऽपपपत्तिषु । न स्वभावागमावन्ते कश्चिन्न प्रतिपद्यते' (    ) इति, एतच्चायुक्तम्–

---

व्यक्त्यव्यक्ती अभिन्नार्थैक्यापत्तिविषयिण्यावित्यभ्युपगम्येत्यर्थः । दृष्टान्तमाह–उदकेति, उदकयोगो भूमिगन्धव्यञ्जने, अञ्जनयोगः चक्षुरिन्द्रियशक्त्यभिव्यक्तौ, दीपादियोगो घटादिदर्शने हेतुरित्यर्थः । भुजिक्रियायाः साधनं भूसंयोगिमूलकादिद्रव्यं भुजिक्रियाव्यतिरिक्तमेव लोके दृष्टमिति द्रव्यमात्राभ्युपगन्तुस्तव व्यतिरिक्तव्यञ्जकाभावात् कथमुत्पादादि भवेदित्याह–भुजिक्रियेति, उदकादि-

20 निदर्शनं संयोगस्य, मूलकादिनिदर्शनं संयोगिनो द्रव्यस्य, एवञ्च व्यञ्जयद्रव्याद्व्यतिरिक्त एव लोके व्यञ्जको दृश्यते नाव्यतिरिक्तः, नात्र कश्चित्तथाविधो वर्तत इति भावः । तादृशस्य भिन्नस्य कस्यचिदनभ्युपगमादिति दर्शयति यदेवेति, अनेनाभ्युपगमेनोत्पादादयो द्रव्यस्य स्वावस्था इति प्रकाशितम्, तद्व्यञ्जकञ्च तद्व्यतिरिक्तं किञ्चिन्नाभ्युपगम्यते तथा च कथमुत्पादादय इति भावः । उत्पादादयो द्रव्यस्यावस्था इत्यत्र हेतुमाह–क्रियेति, एतदेव समर्थयति–उत्पादादय इति, प्रारम्भेऽस्मिन्नये उत्पादादयोऽवस्थाः किं द्रव्यस्य, उत क्रियाया वा इति विकल्प्योभयत्रैतन्नयवादिना दोषे आविर्भाविते द्रव्यस्याद्रव्यत्वादिदोषभयात् यदेवोत्पद्यते तदेव

25 विनश्यतीति युगपदयुगपद्भाविपृथिव्यादिभेदाविभागद्रव्यस्वावस्थत्वमभ्युपगतं भवद्भिरिति द्रव्यव्यतिरिक्तस्याभावे द्रव्याव्यतिरिक्तया क्रियया भेदानां व्यञ्जनं न स्यात्, यदि स्यात्तर्हि लोकप्रसिद्धस्याभिव्यक्तिस्वभावस्य परित्यागः कृतः स्यादिति भावः । तद्विपर्ययेति व्यक्तिधर्मविपर्ययभूतस्याव्यतिरिक्तद्रव्यस्याभ्युपगमादित्यर्थः । तत्त्यागाच्चेति भिन्नस्यैव व्यञ्जकत्वमिति व्यक्तिधर्मस्य त्यागाद्व्यक्तिर्नैव भवेत्, वस्तुतो द्रव्यभिन्नस्य व्यञ्जनसमर्थस्य कस्यापि कारणस्याभावात्, न हि त्वदनभ्युपगममात्रेण व्यञ्जव्यञ्जकस्वभावोऽन्यथा भवितुमर्हतीति भावः । अथ सर्वहेतुनिराशंसा भावानां व्यक्तिरव्यक्तिश्चेति द्रव्यस्वभावः तद्व्यति-

30 रिक्तस्य कारणस्य बहुधा विचार्यमाणे कस्यापि प्रमाणस्य निरपायं स्थित्यसम्भवादन्ततः स्वभावस्यैव आगमस्यैव वा शरणीकरणीयत्वात्, एवमेव स्वभावः एवमेवास्मदीयसर्वज्ञागमेन प्रतिपादितमिति स्वभाववादमाशङ्कते–स्यान्मतमिति । स्वमत-

---

१ सि. क. पूर्ववृत्ति० । २ सि. क. साधनभूयोगिवभूतकादि० । ३ क. ×× । ४ सि. क. अनुत्तरमेव । ५ सि. स्वपप० ।

अहेतुतो व्यक्तेरिव वाऽव्यक्तेरपि तद्वत्त्वे नित्यमेव व्यक्तिरव्यक्तिर्वा सर्वस्य स्यात्, परिणामान्नैवमिति चेन्न, उक्तदोषतुल्यत्वात्, एवं तावदुत्पादविनाशयोः संयोगेनायं विकल्पः सप्रसंगपरिहारप्रचर्चोऽभिहितः, तथा वक्ष्यमाणेषु समानः प्रचर्चो द्रष्टव्यः ।

(अहेतुत इति) अहेतुतो वा व्यक्ते[रि]वाव्यक्तेरपि तद्वत्त्वे तेन तुल्यं तद्वत्, तस्य भावस्तद्वत्ता व्यक्तिवद्भाव इत्यर्थः, कथं? यथा व्यक्तिर्निर्हेतुका तथैवाव्यक्तिरपि निर्हेतुका, ततः किमिति चेदुच्यते— 5 नित्यमेव व्यक्तिरव्यक्तिर्वा सर्वस्य स्यात्, निर्हेतुकत्वात्, मृदवस्थायां घटाव्यक्तिवद्घटावस्थायामव्यक्ति-र्घटस्य स्यात्, घटावस्थायां घटव्यक्तिवत् मृदवस्थायां व्यक्तिः स्यात्, मृत्पिण्डे घटव्यक्तिवत् गगनेऽपि स्यात्, वियत्यव्यक्तिवन्मृद्घटस्याव्यक्तिर्वा स्यादित्यादि, परिणामान्नैवमिति चेत्—स्यान्मतं यथा त्वयोक्तं न तथा भवितुमर्हति परिणामाभ्युपगमात्, अवस्थितस्य द्रव्यस्य धर्मान्तरनिवृत्तौ धर्मान्तरापत्तिः परिणामः, तस्मान्मृत्पिण्डशिवकादिपरिणामैः स्थित्युत्पत्तिविनाशा भविष्यन्ति, न निर्हेतुकाः, तस्मादेव परिणामात् 10 व्यक्त्यव्यक्ती च स्त इति, एतदपि न, उक्तदोषतुल्यत्वात्, य एतेऽस्माभिर्भावस्यावस्थात्वपक्षे च भिन्नाभिन्नात्मकद्वैधे दोषा उक्तास्ते तुल्या एव परिणामपक्षेऽपि द्रष्टव्याः, परिणामावस्थयोः श्रुतिमात्रभेदात्, उत्पत्तेः प्रादुर्भावत्वात्, विनाश[स्य] निवृत्तित्वात् अवस्थितस्येति च [स्व]शब्देनैव [illegible]त्, परिणामोच्चारणेन च नन्वेवमुभयमप्यवस्त्वित्यादिरादितो ग्रन्थो योज्यो यावदयमेवावधिरिति, तस्मा-दपरिहारः परिणामः, एवं तावदुत्पादविनाशयोः संयोगेनायं विकल्पः सप्रसङ्गपरिहारप्रचर्चोऽभिहितः, 15 तथा वक्ष्यमाणेषु—उत्पादस्थितिसंयोगे स्थित्युत्पादसंयोगे स्थितिविनाशसंयोगे विनाशोत्पा[द]संयोग विनाशस्थितिसंयोगे त्रिकादिसंयोगेषु च समानः प्रचर्चो द्रष्टव्यः, यदैवोत्पद्यते तदैव विनश्यत्यतः प्रभृति यावदयमवधिरिति ग्रन्थयोजनया योजयिष्यते ।

अथोत्पा[द]विनाशसामानाधिकरण्ये दोषदर्शना[द्वि]कल्पान्तरमाश्रीयते [यदैवोत्पद्यते] तदेव

साधिकमभियुक्तोक्तिं व्यनक्ति—यथोक्तमिति, स्पष्टोऽर्थः । समाधत्ते—अहेतुत इति स्वपरकारणनिरपेक्षा व्यक्तिरिति भावः । 20 तस्या इवाव्यक्तेरपि तद्वत्त्वे—व्यक्तितुल्यत्वे इति, एवं व्याचष्टे—अव्यक्तेरपीति । तदेव व्यक्तितुल्यत्वं दर्शयति—यथेति । अहेतुतो भावे नित्यं भावानां सत्त्वमसत्त्वं वा भवेन्न तु कादाचित्कत्वं तथा सर्वं सर्वत्र स्यान्न स्याद्वेत्यादर्शयति—नित्यमेवेति । अथ स्थित्यादयो नाहेतुतो भवन्ति, अपि तु परिणामात् स्युरिति शङ्कते—परिणामादिति । परिणामस्वरूपं दर्शयति—अव-स्थितस्येति, तत्र निवृत्त्यापत्ती विनाशोत्पादौ, अवस्थानं स्थितिः, तदेतत्त्रयं वस्तुनः परिणामित्वादुपपद्यत इति नोक्ता दोषा इति भावः । अत्रापि पक्षे दोषमादर्शयति—उक्तदोषेति, किमिमे उत्पादादयः परिणामभूतस्य पिण्डशिवकादेर्भावस्य, उत 25 परिणामिनो [मृ]दात्मद्रव्यस्येति विकल्पतः परिणामस्य परिणामिनश्च भेदाभेदाभ्यां च दोषस्यैतन्नयारम्भादेतदवधि प्रदर्शितत्वा-दयमपि पक्षो निर्दोषः, परिणामावस्थयोः पर्यायत्वात्, यद्यपि धर्मलक्षणावस्थाभेदैः परिणामस्य त्रैविध्यं, यथा मृदः पिण्ड-शिवकादिः धर्मपरिणामः, श्वस्तनी मृत् अद्यतनी श्वस्तनी नेति लक्षणपरिणामः, नवपुराणादिरवस्थापरिणाम इति तथापि धर्म[लक्षणयोरवस्थान्तर्भावा]त्तेरवस्थापरिणामयोः श्रुतिमात्रभेद उक्त इति ध्येयम् । दोषप्रदर्शनग्रन्थमतिदिशति—नन्वेवमिति । तदेवं यदैवोत्पद्यते तदेव विनश्यतीति उत्पादविनाशसंयोगेन विकल्पे दोषा आदर्शिताः, एवमेवापरेष्वप्युत्पादस्थित्यादिभङ्गेषु 30 विभाव्या इति दर्शयति—एवं तावदिति । भङ्गान् दर्शयति—उत्पा[दे]ति । अथोत्पाद[illegible]त्रयेण किञ्चिद्विचार्यते—अथेति ।

१ सि. °व्यक्तिर्न हेतुकाला । २ सि. क. इति नित्यमेव । ३ सि. क. उत्पत्तिप्रादु० ।

नितिष्ठतीति, अत्रापि हि द्वयी गतिः—तेनाप्युत्पत्तिप्रकारेणावतिष्ठमानं यद्वा स्थित्युत्पत्तिविनाशप्रकारैः सर्वथावतिष्ठमानं तदेवोत्पद्यते तदेव नितिष्ठति चेति, यदि तथोत्पादेनैवावतिष्ठमानमुत्पद्यत नितिष्ठतीत्युच्यते तत उत्पादेनैवावस्थितत्वान्नोत्पद्यत इति उत्पत्तिर्द्विधाऽपि कुतः? उत्पद्यमाने चावस्थानम्? यद्युत्पद्यते कथमवतिष्ठते? यद्यवतिष्ठते कथमुत्पद्यते? इति स्ववचनादिविरोधाः पूर्ववत् ।

**अथोत्पादविनाशसामानाधिकरण्य[1] इत्यादि,** उत्पादविनाशैकाधिकरण्ये दोषदर्शनात् निर्दोषोऽयमिति विकल्पान्तरमाश्रीयते तदेवोत्पद्यते तदेव नितिष्ठतीति, अत्रापि न निर्दोषमेवेति ब्रूमः, अत्रापि हि द्वयी गतिः तेनाप्युत्पत्तिप्रकारेणा[व]तिष्ठमानं[2]—यद्वोत्पादेनैवावतिष्ठमानमुत्पद्यते [3]नितिष्ठतीत्युच्यते यद्वा स्थित्युत्पत्तिविनाशप्रकारैः सर्वथाऽवतिष्ठमानं तदेवोत्पद्यते तदेव [4]नितिष्ठति चेत्युच्यते, यदि तथोत्पादेनैवावतिष्ठमानमुत्पद्यते [5]नितिष्ठतीत्युच्यते तत उत्पादेनैवावस्थितत्वान्नोत्पद्यत इति उत्पत्तिर्द्विधापि कुतः? इति, असंभव इत्यर्थः, अस्ति चोत्पत्तिः, उत्पद्यमाने चावस्थानं? कुत इति वर्तते, यद्युत्पद्यते कथमवतिष्ठते? यद्यवतिष्ठते कथमुत्पद्यते? इति स्ववचन[ादि]विरोध[ा]ः पूर्ववदिति—यथाङ्कुरोत्पत्तिविनाशैकाधिकरण्योदाहरणे स्ववचनादिविरोधास्तथात्राप्युत्पत्तिस्थितिसामानाधिकरण्ये योज्या इति ।

**व्यापिस्वतत्त्वानुमतांशुतन्तुवत्तु [6]प्रदीर्घद्रव्यस्य पूर्वोत्तरतया स्थित्युत्पत्तिविनाशावस्था व्यापिस्वतत्त्वानुमतबीजाङ्कुरत्वादय इत्यस्मिन् प्रकल्पे उत्पत्तिस्थितिसामानाधिकरण्ये न स्ववचनादिविरोधा इत्यत्रोच्यते, एतस्मिन्नपि प्रकल्पे बीजस्यांशूनां वाऽनुत्पादित्वादविनाशित्वाच्च नित्यत्वात् स्थितिरेवेति कुतोऽङ्कुरो बीजात्, कुतोंऽशुभ्यस्तन्तुः? इति त एव विरोधाः, पूर्वस्तम्बानित्यत्वात् बीजानुत्पत्तेः ।**

व्यापीत्यादि यावत् प्रकल्प इति, स्यान्मतं व्यापिस्वतत्त्वानुमतांशुतन्तुवत्तु—व्याप्नोतीति व्यापी

---

अत्रापि भङ्गेऽनुत्पादानवस्थानस्ववचनविरोधादिदोषप्रदिदर्शयिषया विकल्पमारचयति—**अत्रापीति,** उत्पादस्थितिभङ्गेऽपीत्यर्थः । केवलमुत्पत्तिप्रकारेणैवावतिष्ठमानस्य वस्तुनः किमुत्पादस्थिती उच्येते, अथवा उत्पादस्थितिविनाशावस्थस्य वस्तुनो व्यापिन इति द्वैविध्यं दोषाभिधित्सया प्रदर्शयति—**तेनापीति** । प्रथमप्रकारे दोषमाह—**यदीति** । सततमुत्पादक्रियायामेव सत्त्वे विश्रान्त्यभावे उत्पत्तेः पूर्णताया असम्भवेन कथमुत्पद्यते पिण्डकुशूलादीति भावः । **उत्पत्तिर्द्विधापीति,** ऊर्द्ध्वपदनप्रत्यक्षोपलम्भरूपा द्विविधोत्पत्तिरिति भावः । उत्पादक्रियाव्यग्रत्वादेव च स्थिरत्वासम्भव इत्याह—**उत्पद्यमान इति** । उत्पादस्थित्योर्भिन्नकालीनत्वेन कथमुत्पादक्रियाकाले स्थितिक्रिया, स्थितिक्रियाकाले चोत्पादक्रिया, उच्यते च भवता तदेवोत्पद्यते तदेव नितिष्ठतीति स्ववचनविरोधः देशभेदेन कालभेदेन वा ते हि स्याताम्, देशकालभेदस्तु नास्त्येव, यदेव तदेवेत्यभेदेन निर्देशादिति पूर्वोदितमेव स्मारयति—**पूर्ववदिति** । द्वितीयप्रकारे दोषो नास्तीति मन्वानः शङ्कते—**व्यापीति,** तन्त्वादिकार्यस्य व्यापकोंऽशुः, तन्तुपटादिकार्यव्यापनात्, अत एवासौ तन्त्वादीनामात्मभूतः, तन्त्वादिकार्यव्यापनादेव च तत् प्रदीर्घं द्रव्यमुच्यते, व्यापित्वात् प्रदीर्घद्रव्यत्वाच्च स्थितिमानंशुः, तन्तुपटादयः कार्यत्वादुत्पादविनाशवन्तः, कारणस्य कार्यात्मत्वाद्द्रव्यार्थापेक्षयैकत्वात् स्थित्युत्पत्तिविनाशसम्भवात् स्थित्युत्पत्तिविनाशप्रकारैः सर्वथावतिष्ठमानं तदेवोत्पद्यते तदेव नितिष्ठतीत्युच्यत इति नोत्पादस्थित्यनुपपत्तिस्ववचनविरोधादिदोषा इति शङ्कितुरभिप्रायः । एतदेव व्याचष्टे—**स्यान्मतमिति,** व्यापकं कारणं व्याप्यानि

---

1 सि. क. अथ विनाशसामानाधिकरण्येत्यादि । 2 सि. क. माने । 3, 4, 5, सि. क. विनश्यति । 6 सि. क. यथा स्वतत्त्वानुमतां शुतं तु वस्तु ।

अविशेषितत्वात् सर्वस्य व्याप्यस्य कार्यस्य व्यापकं कारणमुच्यते व्यापीति, व्यापिनः स्वतत्त्वमवेत्य-मतोंऽशुः त्वयापि द्रव्यार्थवादाश्रयिणा, व्यापि स्वतत्त्वमस्येति वा विग्रहः, स च व्यापिस्वतत्त्वानुमतांशुरेव तन्तुर्व्याप्यः, कारणमयत्वात् कार्यस्य, किमुक्तं भवति ? यथांशुमयस्तन्तुः अतोंऽशुरेव तन्तुरिति दृष्टान्तः, अंशुरपि तन्तुः तन्तुरप्यंशुरिति वा, तथा बीजमयोऽङ्कुरः, बीजमेवाङ्कुरः, अङ्कुरोऽपि बीजं बीजमप्यङ्कुर इति वा दार्ष्टान्तिकः, तद्वर्णयति–प्रदीर्घद्रव्येत्यादि–प्रकृष्टदीर्घस्य द्राघीयसो द्रव्यस्य मेर्वादेरिव पूर्वोत्तरतया स्थित्युत्पत्तिविनाशावस्था व्यापिस्वतत्त्वानुमतबीजाङ्कुरत्वादय इत्यस्मिन् प्रकल्पे तदेवोत्पद्यते तदेवावतिष्ठत इत्युत्पत्तिस्थितिसामानाधिकरण्ये स्ववचनादिविरोधा न सन्ति, तस्य वस्तुनोऽवस्थामात्रभिन्नस्यानुत्पन्नाविनाशिनः स्थितिरेव स्यादित्यत्रोच्यते, एतस्मिन्नपि प्रकल्पे बीजस्य दार्ष्टान्तिकस्यांशूनां वा दृष्टान्तभूतानां वाशब्दादन्यस्य वा कस्यचिद्वस्तुनः प्रदीर्घस्यानुत्पादित्वादविनाशित्वाच्च नित्यत्वं नित्यत्वात् स्थितिरेव, नोत्पादविनाशाविति कुतोऽङ्कुरो बीजात् ? कुतोंऽशुभ्यस्तन्तुः ? अतोऽङ्कुरतन्त्वनुत्पत्तिरेवेति[1], ततः किमिति चेत् ? इति त एव विरोधाः, उत्तरत्वभावात् पूर्ववत् स्ववचनादिविरोधास्तदवस्था एवेति, पूर्वस्तम्बनित्यत्वाद्वा बीजानुत्पत्तेः, त एव विरोधा इति वर्त्तते, ननु त्वदुक्तेनैव न्यायेन व्यापिस्वतत्त्वानुमतपूर्वस्तम्बबीजत्वं प्रदीर्घद्रव्यस्थितत्वं चेति पूर्वस्तम्ब[स्य]ानुत्पादाविनाशि-

कार्याण्यविशेषेण यतो व्याप्नोति, अत एव तत व्यापीत्युच्यते, पिण्डशिवकस्थासकादिपरम्परपर्यायेषु मृदोऽनुवर्त्तनात् प्रदीर्घद्रव्यत्व तत्, अत एव तस्याः पूर्वकालोत्तरकालाः स्थित्यादयोऽवस्थाः पिण्डादिरूपाः पिण्डाद्यात्मत्वात्तस्याः, तथांशुस्तन्तोः कारणं तन्तुरपि पटस्य, तत्र व्यापिनः कारणस्य तन्तोरात्मतयाऽनुमतोंऽशुः, द्रव्यार्थवादाश्रयात्, अतश्च व्यापिस्वतत्त्वानुमतांशुस्तन्तुर्भवतीति प्रथमव्याख्याऽर्थः, अत्र तन्तुपटादीनामंशुविकारत्वात् अंशुमयस्तन्तुरिति अंशुरेव तन्तुः, एवमङ्कुरपत्रनालकाण्डादीनां बीजस्य व्यापिनः प्रदीर्घद्रव्यस्य विकारत्वाद्बीजमयत्वमतो बीज एवाङ्कुर इति अङ्कुराद्युत्पादादयो बीजस्यैवावस्था इति भावः । व्युत्पत्त्यन्तरमादर्शयति–**व्यापि स्वतत्त्वमिति** । अस्यांशोः स्वतत्त्वं स्वस्वरूपं व्यापि सर्वाणि कार्याणि व्याप्नोतीत्येवमनुमतोंऽशुरेव तन्तुस्तन्तुरेवांशुः, पूर्वव्याख्यायां धर्मपरिणामोऽस्यां चावस्थापरिणाम इति प्रतिभाति, यथा मृदः पिण्डशिवकस्थासकघटादयः, यथा वा घटस्य नवपुराणतादयः, व्याख्यानद्वयेऽपि द्रव्यार्थाश्रयात् व्यापिनो द्रव्यस्योत्पादादयोऽवस्था इति स्थित्युत्पत्तिविनाशप्रकारैरवस्थितं तदेवोत्पद्यते तदेव नितिष्ठतीत्युच्यत इति नोक्तदोष इति शङ्कार्थः । विग्रहद्वयेन कोऽर्थः पर्यवसित इत्यत्राह–**किमुक्तमिति**, आद्यव्युत्पत्त्यनुसारेणाह–**यथांशुमय इति**, अंशोर्व्यापिनस्तन्त्वादेस्स्वतयाऽनुमतत्वात् धर्मिस्वरूपानतिक्रमादेवाभेदात् अंशुरेव तन्तुरिति भावः, अपरव्युत्पत्त्यनुसारेणाह–**अंशुरपीति**, अथ पूर्वापरसकलावस्थासूत्पादविनाशवत्सु प्रदीर्घद्रव्यस्य व्यापिनोऽभ्युपगमेऽवस्थाव्यतिक्रमेऽपि तस्य सद्भावात् कोटस्थ्यमेव तस्य स्यान्निर्विकारनित्यत्वात्, अवस्थानामेवोत्पादविनाशित्वात्, तथा चान्वयिनोंऽशुबीजादेस्तन्त्वङ्कुरादीनामनुत्पत्तिरेव, बीजं विनष्टमङ्कुर उत्पन्न इति हि दृश्यते, बीजस्य नित्यत्वे च कथमेतद्भवेदित्याशयेन समाधत्ते **तस्य वस्तुन इति**, अत्र पक्षे तस्य वस्तुनोऽवस्थामात्रभिन्नस्यानुत्पन्नाविनाशिनः स्थितिरेव स्यादित्युच्यते इति योजना विज्ञेया । तदेव दर्शयति–**एतस्मिन्नपीति**, एवञ्च स्थितिप्रकारेणैव यदि तदवतिष्ठते तर्हि कथमुत्पद्यते येन तदेवोत्पद्यते तदेव नितिष्ठतीति स्यात्, अन्यथा तथैवावतिष्ठमानं तदेवोत्पद्यत इति विरुद्धं स्यादित्यादिविरोधा भवन्तीति दर्शयति–**इति त एवेति**, अवस्थितत्वेनाभिमतस्य बीजादेरप्यनुत्पत्तिरेव पूर्वस्तम्बस्य नित्यत्वादित्याह–**पूर्वस्तम्बेति**, 'स्तम्बो गुच्छस्तृणादिनः' इत्यमरः, अस्य पूर्वस्तम्बस्य स्वतत्त्वं स्वस्वरूपं व्यापि सर्वकार्यव्यापनात्, यद्वाऽस्य व्यापि–कारणं पूर्वस्तम्बः स्वतत्त्वं स्वात्मभूतमिति व्यापिस्वतत्त्वानुमतपूर्वस्तम्बबीजं तच्च प्रदीर्घद्रव्यं, कारणस्य व्यापित्वप्रदीर्घद्रव्यत्वयोस्तत्राभिमतत्वात्, एवञ्च तस्य पूर्वापरकालनिखिलावस्थाव्यापित्वेनानुत्पन्ना-

[1] सि. क. तन्त्वनुपपत्ति० ।

स्वाभि... नित्यत्वाद्बीजा...त्पत्तिरतोऽपि तदेवोत्पद्यते तदेवावतिष्ठत इति स्ववचनादिविरोधा इति दूषणन्यायस्य व्यापितां दर्शयति ।

अथ मा भूवन्नेते दोषा इति स्तम्बादुत्तरकालं बीजोत्पत्तिरिष्यते ततः—

स्तम्बोत्तरबीजोत्पत्तेः हेतोरङ्कुरवत् स्थितिभिन्नोत्पत्तित्वात् सर्वस्य ...व्यात्मनोऽनित्यताऽव्यापि...ता च, एवं पूर्वाद्यभाव एव च, अभेदत्वात् ।

स्तम्बोत्तरबीजोत्पत्तेः हेतोर...रवदित्यादि—यथाङ्कुरो बीजात्स्थितादुत्पद्यमानः स्थितादन्य उत्पद्यते, पूर्वदोषभयात्, पूर्वस्तम्बाच्च बीजं तथा सर्वापि स्थितिभिन्नोत्पत्तिः, तस्मात् स्थितिभिन्नोत्पत्तित्वात् सर्वस्य द्रव्यात्मनोऽनित्यताऽव्यापिता च, यथाङ्कुरो बीजात् स्थितादुत्पन्नोऽनित्योऽव्यापि च तथा त्वदभ्युपगतप्रदीर्घद्रव्यात्मनोऽप्यनित्यत्वमव्यापित्वं च स्यात्तथैव, किञ्चान्यत् एवं—पूर्वाद्यभाव 10 एव च, अभेदत्वात्—पूर्वमिदं बीजादि, उत्तरमिदमङ्कुरादीत्येतस्य चाभावः, कस्मात् ? अभेदत्वात्, अभिन्नं हि तद्वस्तु द्रव्यमक्रियम्, व्यापिस्वतत्त्वबीजाङ्कुरादिप्रादुर्भावस्य क्रियाविषयत्वात्तस्य प्रदीर्घत्वकल्पना भ्रान्तित्वात् किं पूर्वं ? किमुत्तरमिति पूर्वोत्तरस्थित्युत्पत्ति[प्र]कल्पवचनानुपपत्तिः ।

अथोच्येत यदेवोत्पद्यते तदेवावतिष्ठत इत्यनेन वचनेन त्वयमर्थ एवं कथितो भवति उत्पत्तिरेवाऽवस्थानमिति, यदि नोत्पद्यते नावतिष्ठतेऽनुत्पत्तिरवस्थानात्, तस्मात् खपुष्पवैलक्षण्ये-15 नैवोच्यते यदेवोत्पद्यते तदेवावतिष्ठते नानुत्पत्तिकमवतिष्ठत इति; एवं सति य...वोत्पद्यते त...वावतिष्ठत इत्यस्येदं व्याख्यानं संवृत्तं यत एवोत्पद्यते तत एवावतिष्ठत इति, प्राग् काल...स्यात्रैक्यवत् उत्पत्तिस्थित्यो... उत्पत्तिरेवावस्थानमित्यापन्नः कस्थितित्यागात्, न स्थितिरन्या काचिदुत्पत्तेरतश्च क्षणिकत्वापत्तिः, उभयात्यागाभिमतौ चानेकान्तापत्ति...भ्युपगमविराधिनी प्रक्रिया स्यादिति ।

20 अथोच्येतेत्या...दि, यावत् खपुष्पवैलक्षण्येनैवोच्यत इति, स्यात् परिहारार्थव्याख्याऽऽशङ्का[3] तदेवोत्पद्यते तदेवावतिष्ठत इत्यनेन वचनेनेति स पुनरयमर्थ एवं कथितो भवति—उत्पत्तिरेवावस्थानमिति

विनाशित्वात् कौटस्थ्यनित्यत्वेन तदेवोत्पद्यते तदेव नितिष्ठतीति विरुध्यत इति भावः । दूषणन्यायस्येति निखिलेषु कारणेष्वस्य न्यायस्य प्रवर्तनादिति भावः । अथैवं स्तम्बादेर्नित्यत्वेऽपि ततो बीजोत्पत्तेरभ्युपगमे उत्पत्तेः स्थितिसामानाधिकरण्यं न तत्भवतीत्याह—स्तम्बोत्तरेति । पूर्वदोषेति पूर्वस्तम्बनित्यत्वात्तदभिन्नत्वेन बीजानुत्पत्तिदोषभयादित्यर्थः, एवञ्च स्थित-25 त्वेनाभिमतस्यापि बीजादेः स्तम्बादिकार्यतयाऽनित्यत्वं तथा तत्तत्कारणस्यापीति द्रव्यमात्रस्योत्पादादिरेव कार्यमात्रव्यापिकारणस्याभाव इति भावः । एतदेवादर्शयति—यथाऽङ्कुर इति, एवं पूर्वोत्तरभेदानां विनाशानुत्पादाभ्यामसत्त्वात्तस्मात्सर्वेषामङ्कुरादिभावस्य सत्यत्वेन पूर्वोत्तरभावप्रकल्पना न युक्ता वर्तमानैकभावत्वादित्याह—एवमिति, अभिन्नं हीति वर्तमान एको भावो यतोऽभिन्नोऽत एव कर्तव्याभावादक्रियः, अक्रियत्वादेव च क्रियाविषयभूतस्याङ्कुरादिप्रादुर्भावस्य प्रकल्पना कारणस्य व्यापित्वप्रकल्पना च भ्रान्तिरेव, अक्रिये क्रियाविषयताभिमानात् तस्माच्च पूर्वोत्तरभाव उपपद्यत इति भावः । 30 अथ यदेवोत्पद्यते तदेवावतिष्ठते इति वाक्यं प्रकारान्तरेण व्यावर्णयति—अथोच्येतेति, अर्थं दर्शयति—उत्पत्तिरेवेति यदेवोत्पद्यत इतिशब्देनोच्यते तदेवावतिष्ठत इतिशब्देनोच्यत इति प्रकल्पनयोरुत्पादावस्थानयोरेकता प्रतिपादिता भवति, तथा च

१ सि. क. स्थितादन्यदुत्पद्यते । २ सि. क. °मक्रिया । ३ क. ×× सुदूरम्

कथितो भवति, यदि नोत्पद्यतेऽवस्थितामिमतं नावतिष्ठेतानुत्पत्तिरूपत्वात्, तस्मादनुत्पन्नमस्थितं खपुष्पादि, तद्वैलक्षण्येन यदेवोत्पद्यते तदेवावतिष्ठते, नानुत्पन्नमवतिष्ठते, तस्मादुत्पन्नस्यानुत्पत्तिस्थानं न व्य[य]स्येति, अत्रोच्यते—एवं सति यदेवेत्यादि यावत् क्षणिकत्वापत्तिरिति—इत्थं तर्हीदं व्याख्यानं संवृत्तं, यदेवेति—यस्मादित्यर्थः, अव्ययत्वाद्यच्छब्दस्य यत एवोत्पद्यते तत एवावतिष्ठत इति प्रागुक्तोत्पत्तृस्थात्रैक्यवदुत्पत्तिस्थित्यैक्ये[1] उत्पत्तिरेवावस्थानमित्यापन्नम्, किं कारणं ? उक्तस्थितित्यागात्—उत्पत्तिरेव स्थितिरित्यनुमानेन स्थितिरुत्पत्तिरेव कृतेति योक्ता व्यापित्वतत्त्वानुमतांशुतन्तुवत्तु प्रदीर्घद्रव्यपूर्वोत्तरावस्था स्थितिरिति सा त्यक्ता स्यात्, तत्त्यागादुत्पत्तिरेवावस्थानं न स्थितिरन्या काचिदुत्पत्तेरतश्च[2] क्षणिकत्वापत्तिः, उत्पद्यत उत्पद्यत एव नावतिष्ठते किञ्चिदिति सर्वं क्षणिकमित्युक्तं भवति, स्यान्मतं क्षणिकत्वदोषो मा भूदिति केनचित् प्रकारेण स्थितमुत्पद्यते केनचिदितीष्यते ततश्चोभयात्यागाभिमतौ[3] चानेकान्तापत्तिः—यदि स्थित्युत्पत्ती न त्यक्ते त्वया ततस्तेऽभ्युपगमविरोधिनी स्यात् प्रक्रिया अनेकान्तवस्तुतत्त्वमापद्यत इति । 10

अथोच्येतोत्पादपूर्वत्वदोषानपायादिति प्रत्युच्चार्यानुमत्य चोभौ विकल्पौ त्यक्त्वा विनाशप्रधाने विकल्पान्तरे निर्दोषे इत्याश्रयेतेति तत्राद्यस्तावत्तदेव विनश्यति तदेवोत्पद्यत इति, अस्मिन्नपि विकल्पे दोष उच्यते—लोके तावत् प्रत्यक्षादिप्रासिद्धमङ्कुरोत्पत्तौ बीजं विनश्यति, तव पुनर्यदेव विनश्यति बीजं तदेवोत्पद्यते नाङ्कुर इति पूर्ववत् प्रत्यक्षानादिविरोधाः, तत्पूर्वपत्राद्यपोहाच्च लोकादिविरोधाः, तदेव विनश्यति तदेवोत्पद्यत इति वचनेनानन्यभूतस्यैकस्मिन्नेव काले विनाश उत्पादश्चेति क्षणिकवादातिशयादि स्यात् । 15

यस्योत्पत्तियोग्यता तस्यैवावस्थानयोग्यता, नानुत्पत्तुः स्थितिरस्ति, एवंव्यावर्णनफलं तु खपुष्पादीनामनुत्पन्नानां स्थितिव्यावर्तनम्, यद्वा विमतमवतिष्ठते, उत्पत्तिमत्त्वात्, यदि नोत्पद्यते नावतिष्ठेत यथा खपुष्पादि, उत्पद्यते चेदं तस्मादवतिष्ठत इति क्षणिकैकान्तवादनिरसनमिति भावः । एवं सति यद्वस्तूत्पद्यते तद्वस्त्ववतिष्ठत इत्युत्पत्तृस्थात्रोरैक्यं परित्यज्य यस्माद्धेतोरिदमुत्पद्यत इत्युच्यते तस्मादेवावतिष्ठते इत्युच्यत इति पर्यवसितत्वेनोत्पत्तेरेव हेतोरुत्पद्यत इत्यभिधानात्तत एवावतिष्ठत इत्यभिधाने उत्पत्तिरेव स्थितिरित्युक्तं स्यात्, उत्पत्तिव्यतिरिक्तस्थितिपरित्यागात्, यत एव तत एवेत्यभेदेनाभिधानात् तथा च स्थित्यभावात् क्षणिकवाद एवासौ संवृत्त इत्युत्तरयति एवं सतीति, उत्पत्तिरेवावस्थानमित्यर्थः, कथितो भवतीत्युपगमे सतीत्यर्थः । एतदर्थपर्यवसायिव्याख्यां तद्वचनस्य दर्शयति यस्मादित्यर्थ इति, यत्तयतस्ततो हेताविति कोशादिति भावः । प्रागिति यत्तदोः सर्वनामत्वमभ्युपेत्य पूर्वं व्यावर्णितार्थेऽन्विति भावः । व्यापित्वतत्त्वानुमतेत्यादिग्रन्थेन स्थितिरुक्ता सा उत्पत्तिरेवावस्थानमित्यर्थकथनेन परित्यक्तेत्याह—उक्तस्थितीति, यत एवेति शब्देनोद्दिष्टस्योत्पादस्यैव तत इति शब्देन परामर्शात् एवावतिष्ठत इत्यभिधाने उत्पत्तिरेव विनाश इति पर्यवसितो भवतीत्याशयः । तत्र दोषमादर्शयति—अतश्चेति, उत्पत्तिपरम्पराक्रान्तत्वान्नावस्थानं कदापीति क्षणिकवादः, स्थितत्वे हि द्वितीयादिक्षणवृत्तितया क्षणिकत्वं न स्यादिति भावः । क्षणिकवादपरिहाराय यदि केनचित्प्रकारेण स्थितमेव वस्तु केनचित्प्रकारेणोत्पद्यत इति स्वीक्रियते तर्हि सापेक्षयोः स्वीकारेणोत्पाद एव स्थितिरिति तवाभ्युपगमविरोध्यनेकान्तवादः प्रसज्यत इत्याशयेनाह—स्यान्मतमिति । तदेवं यदेवोत्पद्यते तदेव विनश्यति यदेवोत्पद्यते तदेवावतिष्ठत इत्युत्पत्तिप्रधानविकल्पद्वये प्रोक्तान् दोषानभ्युपेत्य विहायैतौ विकल्पौ यदेव विनश्यति तदेवोत्पद्यते यदेव विनश्यति तदेवावतिष्ठत इति विनाशप्रधानौ विकल्पौ श्रयाम इत्याह—अथोच्येतेति । यदेव विनश्यति तदेवोत्पद्यत इति विनाशोत्पादसमानाधिकरणं 20 25 30

1 सि. °स्थित्यैक्योत्पत्तिरनुत्पत्तिरेवा० । 2 सि. स्थितिर्नाना काचिदनुत्पत्तिश्च । 3 सि. °भयत्यागा० ।

अथोच्येतोत्पादपूर्वत्वदोषानित्यादि, यदेवोत्पद्यते तदेव विनश्यति, यदेवोत्पद्यते तदेवावतिष्ठत इत्यथोत्पादप्रधानयोर्विकल्पयोर्ये दोषास्तानपरिहार्यान् प्रत्युच्चार्य अनुमत्य चोभौ विकल्पौ त्यक्त्वा विकल्पान्तरे निर्दोषे मन्यमान आश्रयेत विनाशप्रधाने, तत्राद्यस्तावद्विकल्पः—तदेव विनश्यति तदेवोत्पद्यत इति, अस्मिन्नपि विकल्पे दोष उच्यते—लोके तावत् प्रत्यक्षादिप्रसिद्धमङ्कुरोत्पत्तौ बीजं 5 विनश्यति, त्वत्र पुनर्यदेव विनश्यति बीजं तदेवोत्पद्यते नाङ्कुर इति अङ्कुराप्रादुर्भाव एव प्राप्तः, इति शब्दस्य हेत्वर्थत्वात् ततश्च पूर्ववत् स्ववचनादिविरोधाः, तत्पूर्वपत्राद्यपोहाच्च लोकादिविरोधाः—अङ्कुराभावेऽङ्कुरपूर्वाणां पत्रकाण्डनालपुष्पफलसूक्ष्मैकादीनामुत्तरेषां लोके प्रत्यक्षादिप्रमाणप्रसिद्धानामपलापवदपलापाल्लोकादिविरोधाः, पूर्ववद्वचनलोकद्वाराभ्यां दोषाभिधानमिति, तदेवेत्यादि, तदेव विनश्यति तदेवोत्पद्यत इति वचनेनानन्यभूतस्यैकस्मिन्नेव काले विनाश उत्पादश्चेति क्षणिकवादातिशयः, 10 पूर्वपर्यन्तकाले विनाशोत्पादौ हि क्षणिकवादः, स चानेनातिशय्यते, आदिग्रहणादविनष्टानुत्पन्नास्थितत्वात् खपुष्पवद्बीजाङ्कुरशून्यता स्यादिति ।

अथ विनाशोत्पादैकाधिकरण्ये दोषदर्शनाद्विकल्पान्तरमाश्रीयतेऽत्राप्युक्तवदेव दोषाः स्थानाभिधानेन तु योज्याः, तथा वा सर्वथा वा विनश्यतीत्यादि कुतो विनाशः, विनाशे वा कुतोऽवस्थानमिति त एवाधिकृतास्ते वचनादिविरोधाः क्षणिकवादातिशयनादि च पूर्व- 15 वत् । उत्पादविनाशपूर्वत्वदोषानपरिहार्यान् प्रत्युच्चार्यानुमत्य च चतुरोऽपि विकल्पांस्त्यक्त्वेमौ निर्दोषौ विकल्पावित्याश्रयेत तत्राद्ये तावत्तदेवावतिष्ठते तदेवोत्पद्यत इति विकल्पे पूर्ववद्व्याख्या यावत् क्षणिकवादातिशयनादि, अथ तदेवावतिष्ठते तदेव विनश्यतीति स्थितिपूर्वद्वितीयविकल्पेऽपि व्याख्यानं तदेव योज्यम् ।

अथ विनाशोत्पादैकाधिकरण्य इत्यादि द्वितीयविकल्पे विनाशप्रधानस्थितिपक्षेऽनन्तरो- 20 द्दिष्टेऽप्युक्तवदेव दोषाः स्थानाभिधानेन तु योज्याः, योजनादिक्प्रदर्शनन्तु तथा वा सर्वथा वेति

---

विकल्पं दूषयितुमाह—तत्राद्यस्तावदिति । लोके ह्यन्यद्विनश्यति अन्यदुत्पद्यत इति दृश्यते, त्वन्मतेन तु यदेव विनश्यति तदेवोत्पद्यत इति प्राप्तम्, तथा च बीजस्य विनाशदर्शनात्तस्यैवोत्पादः स्यान्नाङ्कुरादेरित्यङ्कुराद्यनुत्पत्तिप्रसङ्ग इत्याह—लोके तावदिति । पूर्ववदत्रापि विकल्पे स्ववचनलिङ्गप्रत्यक्षानुमानलोकविरोधाः प्रसक्ता इत्याह—ततश्चेति । यदेव विनश्यति तदेवोत्पद्यत इति बीजस्यैव विनाशादुत्पत्त्याऽङ्कुरोत्पत्त्यभावेन तदभाववत् तत्पूर्वकाणां पत्रनालादीनामप्यभावात् लोकविरोधः 25 लोके तेषां दर्शनादित्याह—अङ्कुराभाव इति, अङ्कुरः पूर्वो येषान्तेऽङ्कुरपूर्वास्तेषामिति विग्रहः, अङ्कुरानन्तरभाविनामित्यर्थः । पूर्वं यदेवोत्पद्यते तदेव विनश्यतीत्यत्र यथा वचनलोकादिद्वारेणान्येऽपि विरोधा उक्तास्तथात्रापि विज्ञेया इत्याह—पूर्ववदिति । कालात्मकक्रियारहितद्रव्यस्यैव सकृद्विनाशोत्पादाभ्युपगमेन विभिन्नक्षणभाविविनाशोत्पादाभ्युपगन्तृक्षणिकवादमयं वादोऽतिशेते इत्याह—तदेव विनश्यतीति । अङ्कुरवत्सर्वेषां बीजादिपूर्वोत्तरभावानामविनाशादनुत्पादादस्थितत्वात् खपुष्पवदभावन शून्यतादोषश्चेत्याह—आदिग्रहणादिति, क्षणिकवादातिशयादीत्यत्रादिग्रहणादित्यर्थः । एवं यदेव विनश्यति तदेवावतिष्ठत इति 30 विनाशस्थानाधिकरणावस्थानकल्पेऽपि दोषमतिदिशति अथेति । उक्तदोषयोजनाप्रकारं दर्शयति—योजनादिगिति, तथा वा—

---

१ सि. °दोषा इत्यादि० । २ सि. त्यक्तौ० । ३ सि. °मानः श्रयेत० । ४ सि. अथोत्पादैकाधिकरण्या इत्यादि० । ५ सि. क. विनाश० ।

विनाशप्रकारेण विनाशे उत्पत्तिस्थितिविनाशप्रकारेण वा विनाश इति विकल्प्यते, उत्पत्तिप्रधानविकल्पाभिहितदोषवदत्रापि विनाशप्राधान्येन स्थित्या सह योजितं तथा वा सर्वथा वा विनश्यदवतिष्ठमाने कुतो विनाशः, विनाशे वा कुतोऽवस्थानमिति त एवाधिकृतास्ते वचनादिविरोधाः क्षणिकवादातिशयनादि च पूर्ववत्, एवं तावदुत्पादपूर्वयोर्विनाशपूर्वयोश्चोत्पादस्थितिविकल्पयोर्दोषा उक्ताः, अथोच्यते उत्पादविनाशपूर्वतायामित्यादि पूर्ववदुच्चार्य दोषाननुमत्य च त्यक्त्वा चतुरोऽपि विकल्पान् इमौ निर्दोषौ विकल्पावित्याश्रयेत तत्राद्यस्तावत्तदेवावतिष्ठते तदेवोत्पद्यत इत्यादि यावत् क्षणिकवादातिशयनादीति, पूर्ववदत्रापि व्याख्या कार्या, अवतिष्ठमान इत्युच्चारणेन तु योज्येति, अथ यदेवावतिष्ठते तदेव विनश्यतीति स्थितिपूर्वद्वितीयविकल्पेऽपि व्याख्यानं तदेव योज्यं यावत् क्षणिकवा[दा]तिशयनादीति गतार्थं शून्यता वेति ।

अस्मिन् विकल्पेऽन्यथापि दोषाधिकतयाऽऽह—

**अवतिष्ठते वाऽनन्वयगोचरो व्यतिरेक एव तन्मात्रोपलब्धेश्च सर्वत्रैव तदेवावतिष्ठते तदेव विनश्यतीति व्यपदेशो न सम्भवतीति पूर्ववत्त एव स्ववचनादिविरोधा इति ।**

**अवतिष्ठते वाऽनन्वयेत्यादि** यावत् स्ववचन[ादि]विरोधा इति, अनन्वयगोचर इत्यादि, अनवस्थानम[न]न्वयः, व्यतिरेको विनाशः, अन्वयशून्यो व्यतिरेक एवानन्वयः स एव गोचरो व्यतिरेकः—अर्थशून्यो विनाश एवेत्यर्थः, तन्मात्रोपलब्धेश्च सर्वत्रैव—बीजाङ्कुरपत्रादौ तदेवावतिष्ठते तदेव विनश्यतीति—इत्थमपि व्यपदेशो न सम्भवतीति पूर्ववत्त एव विरोधाः[3] ।

विनाशप्रकारेणावतिष्ठमानं तदेव विनश्यति तदेवावतिष्ठत इत्यर्थः, सर्वथा वा—उत्पत्तिस्थितिविनाशप्रकारैरवतिष्ठमानं तदेव विनश्यति तदेवावतिष्ठत इत्यर्थः । **उत्पत्तिप्रधानेति,** उत्पत्तिप्रकारेणावतिष्ठमानं उत्पत्तिस्थितिविनाशप्रकारैर्वाऽवतिष्ठमानं तदेवोत्पद्यते तदेव तिष्ठतीति विकल्पेऽभिहिता दोषा अत्रापि भवन्तीत्यर्थः । दोषं दर्शयति—**विनश्य[दि]ति** विनाशक्रियाव्यग्रत्वात् पूर्णतया विनाशासम्भवेन कुतो विविधादर्शनानुपलम्भादिरूपो विनाश इति भावः । विनाशस्थित्योर्भिन्नकालीनत्वेन यदि विनाशस्तर्ह्यवस्थानं कुत इत्याह—**विनाशे वेति** । उच्यते च भवता तदेव विनश्यति तदेवावतिष्ठत इति कालाभेदेनातः स्ववचनादिविरोधा इत्याह—**त एवेति** । अत्रापि व्यापिस्वतत्त्वानुमतांशुतन्तुवस्त्वित्यादिग्रन्थयोजनया स्ववचनादिविरोधाः क्षणिकवादातिशयादिदोषा वक्तव्या इत्याह—**[पू]र्ववदिति** । एवं यदेवोत्पद्यते तदेव विनश्यति, यदेवोत्पद्यते तदेव तिष्ठति, यदेव विनश्यति तदेवोत्पद्यते, यदेव विनश्यति तदेवावतिष्ठत इति चतुर्षु विकल्पेषु दोषा उक्ता इत्युपसंहरति—**एवं तावदिति** । एवमुक्तान् दोषाननुमत्य विकल्पानेतान् त्यक्त्वा यदेवावतिष्ठते तदेवोत्पद्यते, यदेवावतिष्ठते तदेव विनश्यतीति विकल्प[द्वयेऽपि] पूर्ववदेव दोषा वाच्या इत्याह—**अथोच्यत इति** । अत्र प्रथमविकल्पे दोषं योजयति—**तत्राद्य इति,** स्थितिसमानाधिकरणोत्पादविकल्प इत्यर्थः, लोकेऽस्थितस्यैवाङ्कुरादेः बीजादुत्पाददर्शनात् न तु यदेवावतिष्ठते बीजादि तदेवोत्पद्यते नाङ्कुर इत्यङ्कुरानुदयात् पत्रनालकाण्डादीनामभावाल्लोका[दि]विरोधाः, यद्यवतिष्ठते कथमुत्पद्यते, यद्युत्पद्यते कथमवतिष्ठते, उच्यते च भवता यदेवावतिष्ठते तदेवोत्पद्यत इति स्ववचनादिविरोधाः । अभिन्न एव काले च स्थित्युत्पादयोरभ्युपगमे [क्षणि]कवादातिशयः, अनुत्पन्नाविनाशास्थितत्वाच्च खपुष्पवदभावा[न]न्यवादता वेति भावः । द्वितीये स्थितिसमाना[धिकरण]विनाशविकल्पेऽपि दोषातिदेशना—**अथेति** । अत्र कल्पे स्थितिव्यतिरेकेण विनाश [एव]ावतिष्ठत इति यदेवावतिष्ठते तदेव विनश्यतीति व्यपदेशोऽपि न सम्भवति, विनाशस्यैव परमार्थत्वेन वस्तुसद्भावरहितत्वात् कोऽवतिष्ठेत, यद्यवतिष्ठते न तर्हि विनश्यति यदि विनश्यति न तर्ह्यवतिष्ठते विरोधादित्याह—**अवतिष्ठत इति** । तद्व्याचष्टे—**अनवस्थानमिति** स्थितिशून्य इत्यर्थः । स्थितिशून्ये वस्त्वभावादाह—**अर्थशून्य इति,**

---

१ सि. क. वा ऽन्वय इत्यादि । २ सि. क. अनन्वयगोचरेत्या[दि] । ३ सि. विरोधाः ।

**अनेनापि प्रकारेण भवताऽशेषसाधनावयवाः ध्वंस्यन्ते तथाव्यवस्थानविनाशात्, तथाव्यवस्थानाविनाश एव हि सपक्षमपि तत्स्यात् न विनाशे, अग्निरत्र धूमादिति यथा, यथा हि धूमो धूमरूपेण व्यवस्थितो व्यवस्थित एवाग्नावाग्नित[या] तद्वत्तया च प्रदेशे, [स्व]न्मते तु विविधाऽदर्शने विनाशे त्वयेष्टयाऽवस्थयाऽवश्यं विनंष्टव्यमित्यव[स्था]नविपरीत[वृ]त्तित्वादस्य [साध]नत्वमसिद्धमतः प्रदेशस्याप्यन्यथावृत्तत्वाद[न]तत्वाद्वाऽऽश्रयासिद्धिः विपरीत[वृत्]तेर्विरुद्धतापि ।**

**अनेनापि प्रकारेणेति,** एवं तावत् पक्षदोषा अभिहिताः, न केवलं पक्षदोषा एव किं तर्हि? अवस्थितार्थविनाशाभ्युपगमेनानेन भवताऽशेषसाधनावयवाः ध्वंस्यन्ते, किं कारणं? तथाव्यवस्थानविनाशात् यथा स्फुटितपृष्ठत्वात् खरं खरविषाणमाका[श]ज[त्वा]दिति वचनवत्, तद्वैधर्म्येण साधनव्यवस्थां दर्शयति—तथाव्यवस्थानाविनाश एव हि सपक्षमपि तत् स्यात्—तद्धि साधनं साधनं भवत् पक्षेण सहापि सतो व्यवस्थितस्यार्थस्याविनाशे भवितुमर्हति, न विनाशे, किमिव? अग्निरत्र धूमादिति यथा, यथा हि धूमो धूमरूपेण व्यवस्थितो व्यवस्थित एवाग्नवाग्नितया तद्वत्तया च प्रदेशे, यदुभयव्युदासानुगृहीतसमुदायार्थसाध्यता यदि धर्मविशिष्टधर्मिसाध्यता सर्वथा व्यवस्थितस्य वस्तुनो व्याप्यो धूमांशो व्यापकेनाग्न्यंशेन व्याप्तः तमंशं व्यवस्थित एव व्यवस्थितं गमयत्यविनष्टमविनष्ट इति स्यात् साधनत्वं साध्यत्वञ्च, स्वन्मते तु पुनर्विविधादर्शने विनाशेऽत्यन्ताभावेऽन्यभवनरूपे वा विपरीतात्मके त्वयेष्टयाऽवस्थयाऽवश्यं विनंष्टव्यमित्यवस्थानविपरीतवृत्तित्वात्—अन्यथाभवनरूपत्वादस्य—धूमाख्यस्यांशस्य पक्षध-

---

बीजाङ्कुराद्यर्थाभावात् कोऽवतिष्ठते? यं यदेवेति पदं गृह्णीयात्, तस्माद्यदेवेत्यादिव्यपदेशो न सम्भवतीत्याह—**तन्मात्रेति,** अर्थशून्यविनाशमात्रेत्यर्थः। तदेवं यदेवावतिष्ठते तदेव विनश्यतीत्यवस्थानधर्मिणि विनाशविधेयतात्मके पक्षे दोषा उक्ताः। तथाऽन्येषु साधनावयवेष्वपि दोषसम्भवात् सर्वे साधनावयवास्त्वया विध्वंसिता इत्याह—**अनेनापीति** । यदेवावतिष्ठते तदेव विनश्यतीति अवस्थितस्यार्थस्य विनाशाभ्युपगमेन विनाशपरमार्थत्वान्न कोऽपि हेतुर्दृष्टान्तो वाऽस्ति येन पक्षसिद्धिर्भवेदित्याह—**अवस्थितार्थेति** । अव्यवस्थितं वस्तु न साधनावयवं भवितुमर्हतीत्यत्र निदर्शनमाह—**यथेति** अस्य वचनस्य न कश्चिद्व्यवस्थितोऽर्थ इति तन्न कस्याप्यर्थस्य साधकमिति भावः। व्यवस्थितोऽर्थो यदि विनाशाक्रान्तो न भवेत् तदैव सोऽर्थं व्यवस्थितं साधयतीति दर्शयति—[तद्वैध]र्म्येणेति, सपक्षमपि—पक्षेण सहितमपि स्यात्, तत् स्यात् साधनं स्यात्। तद्व्याख्याति—**तद्धीति** । **पक्षेण स[हा]पीति,** पक्षधर्मत्वमव्यव[स्थित]स्यैव हेतोरिति दर्शयति। दृष्टान्तमाह—**अग्निरत्रेति,** अग्नितया व्यवस्थित एवाग्नौ अग्निमत्तया व्यवस्थित एव प्रदेशे धूमरूपेण व्यवस्थितो धूमस्साधनं भवितुमर्हतीत्यन्वयः। व्यतिरे[कमु]खेन वा साधनं व्यवस्थितमविनष्टमेव व्यवस्थितेन साध्येन व्याप्तं सत् व्यवस्थितमविनष्टमेव साध्यं गमयतीत्याह—**यदुभयेति,** व्याप्याव्याप[कव्युदासानुगृहीतसमुदा]यार्थसाध्यतेत्यर्थः, यदि वह्निर्न स्यात्तर्हि धूमो न स्यात् इत्युभयव्युदासः, अत्र धूमस्तु दृश्यते तस्मादयमग्निमानित्युभयव्युदासानुगृहीतसमुदायसाध्यता व्यतिरेकव्याप्त्यनुगृहीतसाध्यतेति भावः। **यदि धर्मविशि[ष्टे]ति,** [अन्वयव्याप्त्यनुगृहीताग्निविशि]ष्टपर्वतादिसाध्यतेति भावः। उभयथापि व्यवस्थितो व्यवस्थितमेव गमयतीत्याह—**सर्वथेति** । स्थितिसमानाधिकरणविनाशाभ्युपगन्तुस्तव मते विनाशस्य विविधादर्शनात्यन्ताभावान्यथाभवनात्मकत्वात्त्वदिष्टावस्थाया अस्थिरत्वेनावश्यं विनाशादव्यवस्थितत्वेन कथं साध्यसाधनभावः, पक्षधर्मता वा? साधनस्य धर्मिणोऽप्यव्यवस्थितत्वात् कथं नाश्रयासिद्धिः? साध्यस्यान्यथाभवना[त्] कथं न हेतोर्विरुद्धतेत्याह—**त्वन्मते त्विति** । विरुद्धतोद्भावनञ्च साध्यस्याव्यवस्थितत्वेऽपि साधनस्य पक्षधर्मताऽस्तीत्यभ्यु-

मेतन्मसिद्धमतः प्रदेशस्याप्यन्यथावृत्तत्वादभूतत्वाद्वाऽऽश्रयासिद्धिः, विपरीतवृत्तेर्विरुद्धतापि, सा च पक्षधर्मत्वमभ्युपगम्य, धूमो धूमरूपेणावस्थितो[न]अग्निरग्निरूपेणावस्थानस्यान्यथाभूतत्वात्, अथवाऽवस्थानविपरीतवृत्तित्वादिति त्वन्मतेनेत्थं विरुद्धता, मन्मतसंवादेन तु त्वदीयसर्वहेतुविरुद्धता, अवस्थानविनाशद्वयरूप एवाग्निस्त्वयाऽभ्युपगतः, तत्र यावन्तमंशमग्नित्वव्यवस्थानरूपं स्पृशति तावताऽभ्यन्तरे सपक्षे च दृष्टो यावन्तञ्च विनाशरूपं स्पृशति तावताऽग्नित्वव्यवस्थानाभावः तद्विपरीते वा विपक्षे दृष्टस्तस्मादनैकान्तिकहेतुदोषाः, तस्यैवाग्नेर[वस्थान]विनाशद्वयांशत्वे[त]द्वतः प्रदेशस्य च द्व्यंशस्य व्यवस्थानांशमात्रादर्श[ना]त् वनस्पतिचैतन्ये स्वापवदव्यापि पक्षधर्मे च साधनं तद्वृत्त्यवृत्त्योः, एवं दृष्टान्तेऽपि साध्यसाधनधर्मधर्म्यसिद्धिदोषास्तदव्यावृत्त्यादिदोषाश्च योज्याः । 5

**एवं त्रिकादिभङ्गेष्वपि यावद्योगं दोषाः उक्तवदत्र पक्षे, तस्माद्विपर्ययोऽस्त्विति अन्यदुत्पद्यतेऽन्यद्विनश्यतीत्यादि, यथावस्तुबीजाङ्कुरकर्माद्यात्मधर्माणुरूपपृथिव्यादिवत् ।** 10

**एवं त्रिकादिभङ्गेष्वपि यावद्योगमिति,** एते द्विकसंयोगभङ्गेषु षट्सु दोषा उक्तास्तथा त्रिकादियोगभङ्गेष्वपि वाच्या इत्यतिदिशति, उक्तवदिति, उक्तदिग्गामित्वात्तेषामपि विकल्पानाम्, तत्रैकः त्रिकसंयोगो यदेवोत्पद्यते तदेवावतिष्ठते विनश्यति चेति, यदेवोत्पद्यते तदेव विनश्यत्यवतिष्ठते चेति द्वितीय इत्युत्पत्तिप्रधानौ द्वौ त्रिकसंयोगौ, तथा विनाशप्रधानौ स्थितिप्रधानौ च, अथवा यदेवोत्पद्यते तदेवोत्पद्यते विनश्यतीत्यनुत्पत्तिदोषपरिहारार्थं उत्पत्तिस्वरूपं विनाशसमानाधिकरणमवधारयन् 15 विकल्पये, तथा शेषेष्वपीति द्वयोर्द्वयोरपि धर्मयोस्त्रिकसंयोगाः कार्याः, उत्पादेनाभिभवाद्विनाशस्योत्पादस्य प्रादुर्भावादवस्थानस्योत्पादेन सहभावान्, अन्योन्याभिभवोद्भवमिथुनवृत्तयो हि गुणाः सत्त्वरजस्तमोऽभिधाना उत्पत्तिविनाशस्थित्याख्या भवन्तीति । तथा चतुष्कसंयोगाः पञ्चकसंयोगाः षट्संयोगाश्च सम्भवन्तो योज्याः, यावद्योगमिति, सकलकरणोपायेन यावन्तो भङ्गास्तावन्त इत्यर्थः, यावन्ति वा दर्शनान्यर्थतः सम्भवन्ति तद्दर्शनानुसारेण तावन्तो भङ्गाः कार्या इत्यर्थः, अभिहितसामा- 20 नाधिकरण्यानुपपत्तिदोषदिशा भङ्गोपचयाश्रयेण दोषोपचयमपि वर्द्धयद्भिर्व्याख्येयमित्युपायं दर्शयति अत्र पक्ष इति–व्यवस्थामात्रं स्थित्यादयो न भिन्नाश्च परस्परत इत्यस्मिन् पक्षेऽमी दोषा इति, तस्माद्वि-

पगम्य, अन्यथा साधनादेरप्यव्यवस्थितत्वेन विरुद्धत्वं न स्यादित्याशयेनाह–**सा चेति**, विरुद्धता चेत्यर्थः । विरुद्धतामेव समर्थयति–**धूम इति** । इदं विरुद्धतोद्भावनं त्वन्मतेनोक्तमवस्थानं नास्ति विनाश एवास्तीति तदविनाभावाद्धेतोर्विरुद्धतेति, वस्तुतस्तु सर्वस्यावस्थानविनाशद्वयरूपतया सर्वे एव हेतव उपन्यस्यमाना उभयाविनाभावित्वादुभयस्यैव साधका इत्येकधर्म- 25 मात्रसाधने विरुद्धा एवेत्याशयेनाह–**अथ वेति**, मन्मतसंवादेन–उभयात्मकत्वाश्रयेण, हेतोरवस्थानेनैवाविनाभावित्वाभावात् विपरीतेऽपि वृत्तेरुभयव्याप्यत्वादेकस्यैव साधने विरुद्धा भवन्तीति भावः । मन्मतसंवादमेवाह–**अवस्थानेति** । एकान्तसाध्यविरुद्धाव्यभिचारित्वमादर्श्य विरुद्धाव्यभिचारित्वलक्षणमनैकान्तिकत्वं प्रकाशयति–**तत्र यावन्तमिति** । एवं सम्भवद्भङ्गान्तरेषु दोषातिदेशमाह–**तथा चतुष्कसंयोगा इति** । स्थित्युत्पत्तिविनाशानां परस्परसामानाधिकरण्ये ये ये दोषा अभिहितास्ते सर्वेऽत्र यथासम्भवं योज्या इत्याह–**अभिहितेति** । सर्वप्रभेदनिर्भेदं द्रव्यं स्थित्युत्पादादयो द्रव्यस्यैवावस्थाः, तद्व्यञ्जिका क्रिया 30 ते च स्थित्यादयोऽभिव्यञ्जकात् पूर्वमपि द्रव्याभेदेन वर्तन्त इत्यस्मिन् पक्षे प्रोक्तभङ्गविधानाद्दोषा अमी सम्भवन्तीत्याह–**अत्र**

१ सि. क. गतसूत्रयावन्तमंश० । २ सि. क. °मात्रो दृष्टो० । ३ सि. × ।

पर्ययोऽस्त्विति [illegible]पसंहरति—इत्यन्यदुत्पद्यतेऽन्यद्विन[illegible], आदिग्रहणादन्यद्विनश्यत्यन्यदुत्पद्यते, अन्य[illegible]यत्यन्यदवतिष्ठते, अन्यदवतिष्ठतेऽन्यदुत्पद्यते, अन्यदवतिष्ठतेऽन्यद्विन[illegible], अन्यद्विनश्यत्यन्यदुत्पद्यतेऽन्यदवतिष्ठते, इत्यादिभङ्गाः सम्भवन्तो ग्राह्याः, यथावस्तुबीजाङ्कुरकर्मादात्मधर्माणुस्थूलपृथिव्यादिवत्—यद्वस्तु यथा वस्तु बीजमन्यद्वस्तु विनश्यति, अङ्कुरोऽन्य उत्पद्यते द्रव्यम्, कर्म—गमनमुत्पद्यते स्थानं विनश्यति, आदिग्रहणात् निर्णयो बुद्ध्यादिर्गुण उत्पद्यते संशयबुद्ध्यादिर्विनश्यति, आत्माकाशकालदिङ्मनोद्रव्याणि नोत्पद्यन्ते न विनश्यन्ति अवतिष्ठन्ते एव, तथाणवोऽपि, घटादिस्थूलमुत्पद्यते पिण्डादि विनश्यति, धर्मोऽभिषेचनादिकर्मणोत्पाद्यः, उत्पद्यते गुणः संस्कारः प्रयत्नादिश्च, कार[illegible]दिभिश्च विनश्यति न विभुत्वादिरिति ।

अत्रानुमानं कारणकार्यनानात्वेऽभिधीयते—

**यत्सत् सतोऽन्यत् कार्यम्, तदतुल्यविकल्पत्वात् घटपटवत्, कथम्[illegible]ल्यविकल्पतेति [illegible], अत्र चत्वारो भङ्गाः—कारणं सत् कार्यञ्च, कारणं सत् कार्यमसत् कार्यं सत् कारणमसत्, कार्यमसत् क[illegible] वा, तेषु द्वौ सम्भवेताम्, कार्यकारणयोर्द्वयोरपि सत्त्वं कार्यसत्त्वमेव च, इतरयोरभ्युपगतप्रतिपक्षत्वाद्वादाभावोऽवसितप्रयोजनत्वात् ।**

(**यत्सदिति**) यत्सत् सतोऽन्यत् कार्यं तदतुल्यविकल्पत्वात्, घटपटवत्, यत्त्वया कारणं कार्यञ्च सदित्यभिमतं तत्र बीजादेः पुरुषादेश्च कारणात्तनुभुवनाद्यङ्कुरादिकार्यमन्यदित्यभिप्रायः, पक्षीक्रियते तु सदित्यभिमताद्वस्तुनोऽन्यत् कार्यमिति, विशेषहेतुस्तदतुल्यविकल्पत्वादिति—सता तेनातुल्यो पक्ष इतीति । एवञ्च यदेवोत्पद्यते तदेव विनश्यतीत्यादि नाभ्युपगन्तव्यम्, अपि तु अन्यदुत्पद्यतेऽन्यद्विनश्यतीत्यादिरूपेणाभ्युपेयमित्याह—**इत्यन्यदुत्पद्यत इति** । यावन्तो भङ्गाः पूर्वकल्पे सम्भवन्ति तावन्तोऽत्रापि ग्राह्या इति दर्शयति—**आ[illegible]ग्रहणादिति** । उत्पद्यमानादिभ्योऽन्यस्यैव विनाशादय इत्यर्थे निदर्शनमाह—**यथावस्त्विति**, अङ्कुरादितोऽन्यद्वस्तु बीजं विनश्यति, अङ्कुरोऽन्य उत्पद्यत इति द्रव्यनिदर्शनम्, स्थितिक्रियाऽन्या विनश्यति, गमनक्रिया चान्योत्पद्यते इति कर्मनिदर्शनम्, आदिपदेन गुणनिदर्शनं विज्ञेयं यथा संशयबुद्धिर्विनश्यति अन्या च निर्णयबुद्धिरुत्पद्यत इति भावः । उत्पादविनाशवतोऽन्यस्यैव स्थितिरिति दर्शयति—**आत्मेति** विभूनां निदर्शनमिदम् । अणुनिदर्शनमाह—**तथाणवोऽपीति** स्थितिमात्रधर्माण इति भावः । स्थूलेषूत्पादविनाशौ दर्शयति—**घटादीति** । **धर्म इति** अभिषेचनोपवासब्रह्मचर्यगुरु[illegible]वासवानप्रस्थयज्ञदानप्रोक्षणदिङ्[illegible]माश्च धर्ममुत्पादयन्ति, अभिषेचनं स्नानम्, उपवासः अल्पीकृताहारो निरशनञ्च, ब्रह्मचर्यं 'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ।' इत्यष्टविधमैथुनप्रवृत्तिराहित्यम्, गुरुकुलवासः उपवीतस्य वेदाध्ययनार्थं भिक्षाचर्यादिनियमेन गुरूपसेवनम् । यज्ञो राजसूयादिः, दानं प्रसिद्धम्, प्रोक्षणं द्रव्यादीनां शुचीकरणम्, दिक् कालविशेषे दिग्विशेषाभिमुखोऽनुष्ठानसेवनम्, नक्षत्रं शुभनक्षत्रेऽनुष्ठानम्, मंत्रः गायत्र्यादिः, कालः पूर्वाह्णादिः, नियमः वर्णाश्रमादिर्धर्मस्य निमित्तं कारणम्, अभिषेचनादिक्रियाविशेषेणात्मनि संस्कार उत्पद्यते क्रियाश्च विनश्यन्ति ज्ञानादिभ्यः प्रवृत्तिरुत्पद्यते तन्निमित्तभूता ज्ञानादयो विनश्यन्ति इति दर्शयति—**उत्पद्यत इति** । गुणाः घटादिकारणविनाशेन विनश्यन्तीति दर्शयति—[illegible] । विभुत्वादयो नित्यगुणा अवस्थिता एवेति सूचयति—**नेति** । अथ [illegible]दं साधयति—**यत्सदिति**, इदानीं विधिविपर्ययोक्तमसतोऽन्यत्कार्यमिति चक्रकं असतो वैपरीत्येन वर्तयति । व्याचष्टे—**यत्त्वयेति** बीजादिकारणैः अङ्कु[illegible]दिकार्याणि पुरुषादिवादिमते पुरुषादेर्वा कारणात् तनुभुवनादिकार्याणि भिन्नानीत्यर्थः । पक्षं दर्शयति—**सदित्यभिमतादिति** । हेतुमाह—**तद[illegible]ल्येति** सत्सम्बन्धिवक्ष्यमाणविकल्पासम्बद्धत्वादित्यर्थः । कार्यस्य सद्भूतकारणान्य-

---

१ सि. क. तनुभवानायंकु० ।

विकल्पोऽस्येति कार्यमभिसम्बध्यते, तस्य त्वया कारणादन्यत्वेनाभ्युपगतस्यासिद्धदोषो हेतोः, घटपट-वदिति दृष्टान्तः, यथा घटः पटेनातुल्यविकल्पो लोके पृथुकुक्षिबुध्नवृत्तोर्ध्वग्रीवाद्याकारादिविकल्पः पटाच्चतुरस्रदीर्घादिसंस्थानादिविकल्पादन्यो दृष्टः, तथा कार्यं सतोऽन्यदिति, अत्राह—कथमतुल्यविकल्प-तेति? असिद्धमतुल्यविकल्पत्वमिति चोदकाभिप्रायः, अत्र चत्वारो भङ्गाः—सम्भाव्यास्तु[1] यो वा कारणं सत् कार्यं चेति, यो वा कारणं सत् कार्यमसत्, कार्यं सत् कारणमसत्, कार्यमसत् कारण- 5 ञ्चेति वा, तेषु द्वौ सम्भवेताम्, न द्वौ तद्यथा, इह कार्यकारणयोर्द्वयोरपि सत्त्वं कार्यसत्त्वमेव चेत्ये-तद्विकल्पद्वयं स्यादिति—कारणं सत् कार्यं सत्, कारणमसत् कार्यं सदित्येतौ विकल्पौ भवितुमर्हतो नेतराविति, कस्मात्? इतरयोरभ्युपगतप्रतिपक्षत्वाद्वादाभावात्—अभ्युपगतः प्रतिपक्षो यस्मिन्येन वादिना सोऽभ्युपगतप्रतिपक्षो विकल्पो वादी वा, तद्भावादभ्युपगतप्रतिपक्षत्वात्, किं भवति? वादाभावो भवति, अवसितप्रयोजनत्वात्, परश्चेदभ्युपगच्छति किमिति वादः क्रियते? तौ च विकल्पौ सत् कार- 10 णमसत् कार्यं, असत् कारणमसत् कार्यञ्चेति, यदि त्वमभ्युपगच्छसि, अवसितप्रयोजनः स्यामहम्, ततो वादाभावाद्विकल्पद्वयं स्यादिति ।

किञ्चातः? उच्यते—

तद्यदि तावदुभयसत्त्वमत्र कारणाविर्भाववत् कार्याविर्भावः, उपलब्धिलक्षणप्राप्तत्वे सति तदात्मकसत्त्वाविशिष्टत्वात्, कारणस्वात्मवत्, अथ न कारणाविर्भाववत् कार्यावि- 15 र्भावः, सच्च कार्यमिति निश्चितं ततश्च तद्वैलक्षण्यान्न तर्हि सत् कारणम्, असत्, सद्विलक्ष-णत्वात् खपुष्पवत्, ननु घटसत्त्वं पटसत्त्वविलक्षणम्, न, इतरेतरासत्त्ववैलक्षण्यात्, अथै-वमपि वैलक्षण्ये कारणसत्त्वविनिश्चयो न निवर्त्तते आविर्भावात्मकञ्च तत्, न तर्ह्यनाविर्भावा-त्मकत्वात् कार्यं सत्, खपुष्पवत्, इतरथा हि नित्यमेवाविर्भवेत्, सत्त्वात् कारणवत्, कारणं वा नित्यं नाविर्भवेत्, अनाविर्भावात्मकसत्त्वाविशिष्टत्वात् कार्यवदिति । 20

(तद्यदीति) तद्यदि तावदुभयसत्त्वं—कार्यसत्त्वं कारणसत्त्वञ्चेत्ययं विकल्पः परीक्ष्यते किन्तु तावदसत् कारणं सत् कार्यमिति विकल्पः अत्र—उभयसत्त्वे कारणाविर्भाववत् कार्याविर्भावः, स्यादिति

तवेष्टस्तदतुल्यविकल्पत्वं नासिद्धमित्याह—तस्येति । दृष्टान्तं घटयति—यथेति, अत्र विकल्पशब्देन भेदाः गृहीताः, घटपटयो-र्विशेषाणामन्यत्वात् तदतुल्यविकल्पत्वं विज्ञेयमिति भावः । अतुल्यविकल्पत्वमेव दर्शयितुं शङ्कते—कथमिति । असिद्धतानि-करणाय सद्विकल्पानाह—अत्रेति, कारणं सत् कार्यञ्च सत्, कारणं सत् कार्यमसत्, कारणमसत् कार्यं सत्, कारणमसत् 25 कार्यञ्चासदिति विकल्पाः, तत्र सम्भविनौ विकल्पौ दर्शयति—तद्यथेति, उभयसत्त्वकार्यसत्त्वयोरेव वादविषयतया तदितरविकल्प-विषये वादाभावादिति भावार्थः । तदेवाह—इतरयोरिति, उभयासत्त्वकार्यासत्त्वविकल्पयोरुभयसत्त्वकार्यसत्त्वपक्षयोः प्रतिपक्ष-त्वात्तत्र च वादाभावादित्यर्थः । अभ्युपगतः प्रतिपक्षो यस्मिन् येन वेति बहुव्रीह्याश्रयेणाह—अभ्युपगत इति । तत्र प्रथमं विकल्पमुभयसत्त्वरूपं विचारयति—तद्यदीति । तद्व्याचष्टे कार्यसत्त्वमिति । कारणकार्ययोः सत्त्वाविशेषादेवाविशेषे सदा कारणोपलब्धिवत् कार्यस्याप्युपलम्भः स्यात्, योग्यत्वे सत्यविशेषात्, कारणस्वात्मवदित्याह—उभयसत्त्व इति कार्यमपि 30

[1] सि. क. सम्भाव्यस्तु ।

पक्षार्थः सम्बध्यते, उपलब्धिलक्षणप्राप्तत्वे सति तदात्मकसत्त्वाविशिष्ट[त्वात्,]कारणस्यात्मवत्-यथाऽऽवरणदूरातिसामीप्याद्यनुपलब्धिकारणविरहे सति सत्त्वात्मकं कारणमाविर्भवति नित्यं मृदादि तथोपलब्धिकारणसत्त्वे सति तदात्मकसत्त्वाविशिष्टं कार्यमाविर्भवेन्नित्यमिति, अथेत्यादि, एतेन सत्त्वेऽप्याविर्भावानाविर्भावकृतं वैलक्षण्यमापाद्यते कारणकार्ययोः, ततश्च सद्विलक्षणत्वादसत् कारणमा-

5 पद्यतेऽभ्युपगतप्रत्यक्षादिविरुद्धम्, तस्यानैकाऽन्तिकत्वचोदना तु [ननु]घटसत्त्वं पटसत्त्वविलक्षणमिति, सतो हि घटात् पटो विलक्षणः संश्च दृष्टः, खपुष्पमसन्, तत्र संदेहः किं खपुष्पवदसत् कार्यं स्यात्? घटविलक्षणपटवद्वा स्यात्? इति, अत्रोच्यते न, इतरेतरासत्त्ववैलक्षण्यात्-घटः पटात्मना नास्ति पटोऽपि घटात्मना नास्त्येवेत्यसत्त्वांशाभ्यामेव वैलक्षण्यमनयोरतो विपक्षासिद्धेः सपक्ष एव वृत्तेः नानैकान्तिकः, शेषो ग्रन्थः सत्कार्यवादविपर्ययेण तुल्यगमत्वादुक्तानुसारेणोह्यो यावदनाविर्भाव[त्म]-

10 कसत्त्वाविशिष्टत्वात् कार्यमेवेति प्रथमचक्रकं कार्यसत्त्वप्रसङ्गेनोक्तम् ।

**अथ न कार्यानित्यप्रादुर्भाववत् कारणानित्यप्रादुर्भावः सच्च कारणमिति निश्चितं तद्वैलक्षण्याच्च तर्हि सत् कार्यम्, असत्, सद्विलक्षणत्वात् खपुष्पवत्, इतरः कारणवत्, खपुष्पमपि वा सत्, अनित्यप्रादुर्भावानुपलब्धेः कारणवत्, ननु घटसत्त्वं पटसत्त्वविलक्षणम्, न, इतरेतरासत्त्ववैलक्षण्यात्, अथैवमपि वैलक्षण्ये कार्यसत्त्वविनिश्चयो न निवर्त्तते प्रादुर्भावात्म-**

15 **कञ्च तत्, न तर्ह्यप्रादुर्भावात्मकत्वात् कारणं सत्, न त्वेवं भवत्यतः कारणं सदुपलभ्यत्वात् कृतवत्, कृतमपि वा कारणवदसत्, उपलभ्यत्वात्, सत्त्वे वा विशेषो वक्तव्यः, अविशेषे**

सदाऽऽविर्भवेदिति पक्षः । हेतुमाह-**उपलब्धीति,** अनुपलब्धिकारणविरहे सतीत्यर्थः । अनुपलब्धिकारणान्येव दर्शयन्नाह-**यथेति** । ननु कार्ये सत्त्वनिश्चयेऽपि न कारणाविर्भाववत् सदा कार्यस्याविर्भावः कार्यत्वादेव, सदा प्रादुर्भावे हि कारणमिदं कार्यमिदमिति निर्णय एव न स्यात्, दृश्यते च कारणकार्यभावस्तस्मान्नैष दोष इत्याशङ्कते-**अथेति** । तथा सति कारणस्य

20 सद्भूतकार्यविलक्षणत्वादसत्त्वं प्रसज्यते प्रत्यक्षविरुद्धमित्युत्तरयति-**ततश्चेति** । कारणमसत् सद्विलक्षणत्वात्-सता कार्येण सह विलक्षणत्वात् खपुष्पवदित्यनुमाने व्यभिचारमाशङ्कते-**तस्यानैकान्तिकत्वेति,** अनैकान्तिकत्वमेव संघटयति-**सतो हीति** सद्विलक्षणत्वे सत्त्वसामानाधिकरण्यं घटपटाद्यन्तर्भावेण दृश्यते, असत्त्वसामानाधिकरण्यञ्च खपुष्पाद्यन्तर्भावेण, तथा च कार्ये उभयसमानाधिकरणसद्विलक्षणत्वधर्मदर्शनात् संशय उदेति किमिदं कार्यं घटपटवत् सत्, उत खपुष्पवदसदिति, ततः संशयाधायकत्वाद्धेतुरयमनैकान्तिक इति भावः । समाधत्ते-**इतरेतरेति,** घटपटयोर्नहि सत्त्वेन वैलक्षण्यमस्ति, किन्त्वितरेतराभावा-

25 त्मकासत्त्वविलक्षणत्वमेवेति न हेतोर्विपक्षवृत्तित्वं सपक्ष एव वृत्तेरतो नानैकान्तिकत्वमिति भावः । शेषप्रथमचक्रव्याख्यानं विधिविध्यरे कृतमेव विपर्ययेणात्र विज्ञेयमित्यतिदिशति-**शेषो ग्रन्थ इति,** अथ कारणस्य सद्विलक्षणत्वेऽपि कार्यवदसत्त्वं नेष्यते किन्तु कारणं सदेवेति निश्चयो न त्यज्यते नित्याविर्भावात्मकमेवेष्यते तर्ह्यनाविर्भावात्मकत्वात् कार्यं सन्न स्यात् खपुष्पवत्, आविर्भावात्मकस्य कारणस्य हि सत्त्वमनाविर्भावात्मकस्य कार्यस्यासत्त्वं विनाऽनुपपन्नम्, तदेवं प्रमाणसिद्धं कार्यस्यासत्त्वं यदि नेष्यते तर्हि तस्य नित्यमेवाविर्भावः स्यात् कारणवत्, अनाविर्भावात्मककार्यसत्त्वाविशिष्टत्वादेव वा कारणमपि न नित्यमाविर्भ-

30 वेदिति प्रथमचक्रकं विज्ञेयमिति भावः । यदि कारणानित्यप्रादुर्भाव आपादितो न स्वीक्रियते तदाऽऽह-**अथेति,** इतरः वैधर्म्यदृष्टान्तः । **अनित्येति,** कार्यस्योत्तरकालमेव यथा प्रादुर्भाव उपलभ्यते तथा खपुष्पादेः कारणस्य चानुपलम्भादुभयत्रानित्य-

१ सि. क. तथानुपलब्धि० ।

वलक्षण्यानुपपत्तेः, विशेषोन्नयनेऽपि विशेषस्यासदाश्रयत्वात् ततोऽन्यत्वमेव—तत्रासत्त्वमेव, अघटपटवदिति ।

अथ न कार्यानित्यप्रादुर्भाववादित्यादि कारणासत्त्वप्रसङ्गभङ्गचक्रकं द्वितीयं यावदुपसंहारग्रन्थोऽतः कारणं सदुपलभ्यत्वात्—आविर्भाव[त्म]कत्वात् कृतवदित्यर्थः, स्यान्मतं कृतं घटादिकार्यमकृतात् कार्यात् कारणाच्चान्यद्विलक्षणञ्च तत्तस्मादसदनित्ये, तच्च न विशिष्टं कृतमपि कारणवत् 5 सदुपलभ्यत्वादाविर्भाव[त्म]कत्वात् कारणवदेवेति, उपलभ्यत्वविशेषणमावरणाद्यभावप्रकाशाद्युपलब्धिप्रदर्शकमिति, शेषं प्रागुक्तसत्कार्यवादद्वितीयचक्रकविपर्ययेण तुल्यगमं यावत्ततोऽन्यत्वमेवेति, तत्र किमुक्तं भवति? तद्व्याख्यानार्थमाह—तत्रासत्त्वमेव अघटपटवदिति—घटपटाभाव एव पटो घटस्तथा विशेषोऽपि कल्प्यमानोऽसत्त्वं [अ]सद्द्वारेण स्यात्, नान्यथेत्यविशेषात् वैलक्षण्यानुपपत्तिरिति द्वितीयं चक्रकम् । 10

अथैतत्साम्यमनिच्छतोऽवश्यं कार्यमेव सदित्यवधारणपक्षः स्यात्, कार्यशब्दसमीपे एवकारप्रयोगात्, सत्त्वं कार्य एव नान्यत्रापीति ततश्च कारणमसदिति प्रसक्तम्, तथा च कारणविपरीतानित्यघटादीनां सत्त्वतुल्यं कार्यसत्त्वमिति कार्यासत्त्वनिवृत्त्येकान्तत्यागाद्वाभ्युपगमविरोधः नाममात्रेऽविसंवादः ।

अथैतत्साम्यमित्यादि, पूर्वदोषपरिहारेणान्यतरसत्त्वपरिग्रहे कार्यमसदिति नेच्छतोऽवश्यं 15

प्रादुर्भावानुपलब्धिरूपहेतुसद्भावात् कारणवत् खपुष्पमपि सद्भवेदिति भावः । कारणासत्त्वेति, अतः कारणं सदित्यग्रे उपसंह्रियमाणत्वादिति भावः । अत इति यथा निर्वृत्तो घट आविर्भावात्मकत्वात् सन् तथा कारणमपीति भावः । अथ कृतघटस्य कारणवैलक्षण्यं शङ्कते—स्यान्मतमिति । उपलभ्यमानत्वे सत्यपि यदि कारणस्यासत्त्वं तर्हि कृतमपि तद्वदेवासत् स्यात्, उपलभ्यमानत्वात्, अविशेषात्, अकृतघटात् कारणाच्च कृतं विलक्षणमतोऽसदनित्यमिति प्रतिज्ञामात्रात् विशेषासिद्धेरित्युत्तरयति—तच्च न विशिष्टमिति । आविर्भावात्मकत्वादित्यनुक्त्वोपलभ्यत्वादिति विशेषणाभिधानस्य फलमाह—उपलभ्यत्वेति, 20 आवरणाद्यभावपदेन प्रतिबन्धकाभावः सूचितः, प्रकाशाद्युपलब्धिपदेन चाविर्भावसामग्रीसम्पत्तिः प्रदर्शिता, यदि भवन्मतेन कार्यकारणयोः सत्त्वं तुल्यमेव, तुल्ये च सत्त्वे विशेषो वक्तव्यः, अस्माद्विशेषहेतोः कार्यस्यानित्यप्रादुर्भावः न तु कारणस्य, तद्धि नित्यप्रादुर्भावात्मकमिति, नोच्यते चेद्विशेषहेतुरविशेषोऽनयोः, अविशेषे च वैलक्षण्यानुपपत्तिः घटपटस्वात्मवत्, यथा घट एव घटस्वात्मेति तयोर्न वैलक्षण्यम्, नन्वस्ति विशेषः घटादिकार्यस्य मृत्पिण्डादिकपालादिपटादिस्वरविषाणादिः प्राक्प्रध्वंसेतरेतरात्यन्ताभावरूप इति चेन्न, एवं विशेषोन्नयनेऽपि विशेषस्यासदाश्रयत्वात्ततोऽन्यत्वमेवेति भावनीयमित्यतिदिशति—शेषं 25 प्रागुक्तेति यथा पटाभाव एव घटो घटाभावश्च पट इति विशेषस्य घटपटादेरसदाश्रयेणैव भावादसत्त्वं तथा चाविशेषात् कार्यकारणयोः सत्त्वतुल्यता प्रसक्तेति भावः । अथोभयोः सत्त्वमनिच्छतः भङ्गचतुष्के तृतीयो भङ्गः कारणमसत् कार्यं सदिति कार्यस्यैव सत्त्वरूप इष्यते तदाह—अथैतत्साम्यमिति । पूर्वदोषेति, उभयोः साम्यतालक्षणदोषपरिहारेणेत्यर्थः, पूर्वपक्षपरिहारेणेति वा पाठे उभयसत्त्वपक्षपरिहारेणेत्यर्थः, अन्यतरसत्त्वपरिग्रहे कारणमसत् कार्यं सदिति पक्षस्वीकारे द्वयोरन्यतरसत्त्वाभ्युपगमेऽवधारणस्य प्राप्तेः कार्यमेव सदिति पक्षार्थः सम्पन्नः, कार्यशब्दसमीपे एवकारप्रयोगाच्च यत एवकारस्ततोऽन्य- 30 त्रावधारणमिति न्यायात् कार्यमेव सत् नान्यत् कारणमिति कारणमसदिति प्राप्तम्, एवञ्च कृत्वा कारणमसत् कार्यं सदिति सतोऽसदिति असतश्च सदिति संज्ञा क्रियते, अनिर्वृत्तघटादयो ह्यसन्तः, तेषां सदिति सतः कारणस्यासदिति संज्ञा क्रियत इति न

१ सि. क. अथैतस्मात् सा० ।

कार्यमेव सदित्यवधारणपक्षः स्यात्, स चासत्कारणप्रतिषेधवादविपर्ययेण दोषाभिधानवदिहापि कार्यो यावन्नाममात्रेऽविसंवाद इति, एवञ्च सति कार्यासत्त्वनिवृत्त्यैकान्तत्यागाच्चाभ्युपगमविरोध इत्यादि गतार्थम्।

**अथैवं सत्त्वं नावधार्यते कारणमप्यस्तीतीष्टत्वादिति चेत्, अवैलक्षण्यादि[कृ]ताः पूर्व-**
5 **दोषा एव, अथोच्येत सर्वथा सत्त्वात् मृत्पिण्डाद्[यने]कैककारणता यथैकस्यैवाहेः संवर्त्ते विवर्त्ते च तथा तथा तस्यैवावस्थाना[त्], यदेव कारणसत्त्वं तदेव [का]र्यसत्त्वमपि, यदेव कार्यसत्त्वं तदेव कारणसत्त्वमपीति नावधारणकृतो दोषोऽस्ति नापि पूर्वतुल्यत्वापत्तिदोषः, एकत्वा[त्], अनेकविषयत्वात्तुल्यत्वस्येति।**

(**अथैवमिति**) अथैवं-अथ कार्यमेव सदित्यवधार्यमाणे एते दोषा इति सत्त्वं नावधार्यते
10 कार्यमस्त्येव कारणमप्यस्तीतीष्टत्वादिति चेत्? अवैलक्षण्यादिकृताः पूर्वदोषा एव। अथोच्येत सर्वथा सत्त्वादित्यादि यावदनेकविषयत्वात्तुल्यत्वस्येति, पक्षद्वयोक्तदोषपरिहारार्थमित्थं कल्प्येत सर्वथा सत्त्वात् सर्वेऽपि पिण्डशिवकघटादिप्रभेदा एककारणाः, तथा न कश्चिद्विशेषोऽस्ति, यथैकस्यैवाहेः संवर्त्ते विवर्त्ते[चा]भिन्नस्यैव कारणता, नाहेः पृथग्भूतौ संवर्त्तविवर्त्तौ, तथा तथा तस्यैवावस्थानात् नाप्यहिः संवर्त्तो विवर्त्तो वा न भवति तथेति, तद्भावयति-यदेव कारणेत्यादि यावत् कारणसत्त्वमपीति, नावधा-
15 रणेत्यादुत्तरः, इतिशब्दस्य हेत्वर्थत्वात्, यदि कार्यमेव सत् अथ कारणमेव सदित्युच्येत, यदि सदेव कारणं कार्यञ्चेत्युच्यते सर्वथा तस्य कारणस्य स्वसंवर्त्तविवर्त्तैकरूपत्वान्नावधारणकृतो दोषोऽस्ति परमतापेक्षत्वादवधारणस्यापि, नापि पूर्वतुल्यत्वापत्तिदोषः खपुष्पाद्यसद्विलक्षणप्रादुर्भावाप्रादुर्भावकारण-

तत्र विसंवाद इति प्रागुक्तरीत्याऽत्र भाव्यमित्यतिदिशति-**स चेति**। अथानिर्वृत्तघटादीनामसत्त्वे कार्यमेव सदित्येकान्तपरित्यागापत्तिरित्याह-**एवञ्च सतीति**, कार्यासत्त्वनिवृत्तिः कार्यसत्त्वं तदेकान्तत्यागोऽनन्तरोक्तविधिना प्राप्तः, अनिर्वृत्तघटादीनां
20 सदिति संज्ञामात्रत्वात् सदित्यभ्युपगमविरोधः कार्यमात्रस्य सत्त्वासिद्धेरिति भावः। अथ कार्यमेव सदिति नावधार्यते कारणस्यापि सत्त्वात्, किन्तु कार्यं सदेवेत्यवधार्यते कार्यं नियमात् सद्भवतीति, सत्तु कार्यं वा भवेत् कारणं वा तत्र नाग्रह इत्यादिशङ्कायामाह-**अथैवमिति**। कार्यकारणयोरसत्त्वे आविर्भावानाविर्भावकृतो विशेषो न स्यादित्याद्यविशेषापत्तिदोषः प्रागुक्तस्तदवस्थ एवेत्याह-**अवैलक्षण्यादि[कृता] इति**। ननु कारणकालेऽपि कार्यं सदेव, असतः सद्रूपताऽसम्भवात्, कारणकार्ययोरभेदात् कारणस्यैव हि पिण्डशिवकादयो भेदाः, तस्मान्न तदानीं कारणकार्ययोः कश्चिद्विशेषोऽस्तीति शङ्कते-**अथोच्येतेति**। **पक्षद्वयेति** कारण-
25 कार्ययोरुभयोस्सत्त्वपक्षे प्रोक्ताविशेषापत्तिदोषपरिहारार्थमित्यर्थः, **सर्वथेति**, कारणकाले कारणकार्ययोः सर्वथा सत्त्वादित्यर्थः। एकस्मादेव हि कारणात् मृत्पिण्डशिवकादिप्रभेदाः अहेः संवर्त्तविवर्त्ताविव भवन्ति, कारणस्यैव तेन तेन प्रकारेणावस्थानात् न भेदः कारणात् कार्यस्येति प्ररूपयति-**सर्वेऽपीति**। तत्र व्याप्तिं दर्शयति **यदेवेति** यदेवेत्यादि कारणसत्त्वमपीति नावधारणेत्यादिग्रन्थ उपनयरूप इत्यर्थः, कारणकाले कारणसत्त्वकार्यसत्त्वयोरभेदात् कार्यमेव सत् कार्यं सदेवेत्यवधारणकृतो दोषो नास्तीति भावः। उभयविधावधारणमपि दर्शयति-**यदि कार्यमेवेति**, कार्यमेव सदित्युक्तावप्यभेदात् कारणमेव सदित्युक्तं
30 भवतीत्यर्थः, यदि कार्यं सदेवेत्युच्यते तदापि कारणस्य सत्त्वं न निषिद्धमेवेत्याह-**यदि सदेवेति**। उभयोः सत्त्वे पूर्वोक्ततुल्यत्वापत्तिदोषोऽपि नास्ति, उभयोरभेदादेव, अनेकाश्रयं हि तुल्यत्वम्, इदमनेनाभ्यामेभिर्वा तुल्यमिति दर्शनादित्याशयेनाह-**नापीति**। तुल्यत्वाभावे हेतुमाह-**निरस्तेति**। अथ कारणकार्ययोरेकरूपत्वाभ्युपगमेन सत्त्वाविशेषात्तदवस्थ एवाविशेषदोष

१ सि. क. तथैवं। २ सि. क. 'प्रभेदाभेदाचैककारणता। ३ सि. क. स्वकारणस्य का०। ४ सि. क. पीति इति ता०।

कार्याविलक्षणदोषो वाऽस्ति, एकत्वात्, अनेकं हि तुल्यमतुल्यं वा स्यात्, इदमनेन तुल्यं घटादि पटादिवदिति, निरस्तपूर्वापरभावात्मनि कार्ये कतरद्भिन्नं कारणं नाम, कारणात्मकभावितकार्यत्वाद्वा कतरत् कारणमिति, न त्वस्ति भेदस्तस्माददोष इति ।

अत्रोच्यते एवमप्येकत्वाद्विशेषाभावः, ततो यथैव कारणमनुपादानसिद्धं सामान्यमन्तर्भाविताशेषविशेषसत्त्वात्मकं तथा कार्यमपीति कारणवदेवाक्रमं स्यात् । 5

(अत्रेति) अत्रोच्यते एवमप्येकत्वाद्विशेषाभावस्त्वयाऽधुना उक्तः, ततः किं? तत इति, यथैव कारणमनुपादानेत्यादि यावदक्रमं स्यादिति, विशेषाभावात् कारणवत् कार्यमनुपादानसिद्धम्, अनुपादानसिद्धत्वात् सामान्यं सामान्यत्वाच्चान्तर्भाविताशेषविशेषसत्त्वात्मकमेव तस्य कार्यस्य सामान्यत्वादनुपादानसिद्धत्वादन्तर्भाविताशेषशिवकस्थासकोशकुशूलघटादिविशेषसत्त्वात्मकत्वात्, कार्यमपि कारणवदेवाक्रमं स्यात्, उपलभ्यते च क्रमेण प्राक् पिण्डः पश्चाच्छिवक इत्यादि । 10

अथ मा भूदेष दोष इत्यक्रममेव कार्यं कारणे कार्यस्य सन्निहितत्वात् यदि क्रमवदह्रादिकारणं स्यान्न स्यात् कारणं क्रमवत्त्वात् खपुष्पवत्, युगपत्सन्निहितसर्वधर्मकं कारणमिष्टम्, नो चेत् संवर्तविवर्त्तावह्राविवाऽऽकाशेऽपि स्यातामुभयोरक्रमतुल्यत्वात्, तस्मादक्रममेव सर्वम्, कारणत्वादेव भेदेनाभवदप्यक्रमरूपेण भवदपि तत् सदेवेति ।

अथ मा भूदित्यादि यावत् सदेवेति स्यान्मतं दृश्यत एवाक्रमं कारणम्, अह्राविव संवर्त- 15 विवर्तविवर्त्तसंवर्त्तसद्भावात् कारणे कार्यस्य सन्निहितत्वात् यदि क्रमवदह्रादिकारणं स्यान्न स्यात् [कारणं] क्रमवत्त्वात्—अक्रमत्वाभावादित्यर्थः, अक्रमात् कारणादत्यन्तविलक्षणत्वात् खपुष्पवत्, युगपत्सन्निहितसर्वधर्मकं कारणमिष्टम्, नो चेत् संवर्त्तविवर्त्तावह्राविवाऽऽकाशेऽपि स्याताम्, उभयोरक्रमतुल्यत्वात्, तस्मान्नित्यभूतैरहिसंवर्त्तविवर्त्तादिभिः सहैवाक्रम एवाहिरात्मस्वरूपभूतैः, तस्मात् कारणत्वादक्रममेव सर्वम्, अह्रादिकारणस्वात्मवत्, किमर्थं तर्हि कारणवन्न भेदेन भेदा गृह्यन्ते तदेवेति चेदुच्यते कारणत्वादेव 20 कारणस्वात्मवत्, अहिः संवर्त्तविवर्त्तादिभेदेनाभवन्नपि कारणत्वेनैवाक्रमरूपेण भवन्नपि स एवास्ति गृह्यत एव सत्त्वात्, तदेव कारणं तथा तथा गृह्यत इत्यर्थः ।

---

इत्युपपादयति—अत्रोच्यत इति । अविशेषे दोषमाह—यथैवेति कारणस्य हि पूर्वदृष्टश्रुतानुभूतमुपादानं किञ्चिन्नास्तीत्यनुपादानमत एव सामान्यम्, अत एवान्तर्भावितनिखिलविशेषत्वादक्रमं तथा कार्यमपि स्यादेकत्वात्, निर्विशेषत्वाच्चेति भावः । तत्र दृष्टानुपपत्तिमाह—उपलभ्यते चेति, कार्यस्याक्रमत्वं कारणत्वादेवेष्टमित्याशङ्कते—अथ मा भूदिति । अहौ संवर्त- 25 विवर्त्तादिकार्यस्याक्रमस्यैव सदा सन्निहितत्वात् सदा सन्निहितानां कोऽयं पूर्वापरभावनैयत्यरूपः क्रम इत्याशयेनाह—अह्राविवेति । यदि क्रमवदेव कारणमपि स्यात्तर्हि तत्कारणमेव न भवेत्, असन्निहितसर्वकार्यत्वात् क्रमवत्त्वादित्याह—यदीति । खपुष्पे दृष्टान्ते हेतुसत्त्वार्थं हेतुं प्रतिषेधरूपतया व्याचष्टे—अक्रमत्वाभावादित्यर्थं इति । कारणस्य[illegible] नेष्टमिति दर्शयति युगपदिति । कारणे कार्याणां युगपदसन्निहितत्वे प्रतिनियतकारणात् कार्याभिव्यक्तिर्न स्यादित्याह—नो चेदिति । युगपत्सन्निहितसर्वकार्यत्वादेव कारणतया सर्वमक्रियमेवेत्युपसंहरति—तस्मादिति । ननु युगपत्सर्वेषां कार्याणां सन्निहितत्वे तदानीं 30 भेदा भेदेन कुतो न गृह्यन्त इति शङ्कते—किमर्थमिति । कारणरूपत्वादेव ते तदानीं तत्तद्रूपेण न गृह्यन्ते कारणत्वादेव हि च नकारणस्वात्मनारिव भेदेन न ग्रहणमित्याह—कारणत्वादेवेति । तथा च कारणं भेदेनाभवदपि अक्रमरूपेण भवदपि सदेव

अत्रोच्यते—

तदप्यसत् अनुमानान्तरविरोधात्, खपुष्पमपि तर्हि सत्स्यादनुपलभ्यत्वात् कार्यवत्, कारणञ्च स्यात् अनुपलभ्यत्वात् कार्यवत्, कारणत्वे वा तथा भेदेनाभूतत्वात् सत् स्यात् कार्यवत्, अथैवं नेष्यते कारणमसत् कार्यञ्च सदिष्टं तथाऽनुपलभ्यत्वात् खपुष्पवदेव ततश्चा-
5 नुपादानसिद्धं कारणमसत् सदुपादानसिद्धं कार्यमसच्च सद्भवति, यदि तु [illegible]ना-दित्ववत् कार्यमनुपादानसिद्धं सत्त्वादिति नेष्टं सदिति निश्चयो न व्यावर्त्तते ततस्तद्वैलक्षण्यात् न तर्हि कारणं सदनुपादानादित्वात् खपुष्पवदित्यादि [illegible]प्रवर्त्तनम् ।

(तदप्यसदिति) तदप्यसत् अनुमानान्तरविरोधात्, खपुष्पमपि तर्हि सत् स्यात्, अनुपलभ्यत्वात् कार्यवत्, कारणञ्च स्यात् खपुष्पमनुपलभ्यत्वात् कार्यवत्, कारणत्वे वा तथा भेदेनाभूतत्वात्
10 सत् खपुष्पं स्यात्कार्यवत्, अथैवं नेष्यते कारणमसत् कार्यञ्च सत् त्वदिष्टं तथानुपलभ्यत्वात्—भेदेन क्रमभाविना हि संवर्त्तविवर्त्तादिप्रकारेणानुपलभ्यत्वादित्यर्थः, खपुष्पवदेवेति न चैवमादीष्टम्, ततश्चानुपादानसिद्धं कारणं [असत्] सत् उपादानसिद्धं कार्यमसच्च सद्भवति, यदि त्वित्यादि, यथा कारणमनुपादानसिद्धं [अ]सत्त्वात्तथा कार्यमनुपादानसिद्धं सत्त्वादित्येतन्नेष्टमुपादानसिद्धमेवेष्टम्, असत्त्वापत्तिभयात् सदिति च निश्चयो न व्यावर्त्तते भवतः, ततस्तद्वैलक्षण्यात्—उपादानसिद्धत्ववैलक्षण्यान्न तर्हि कारणं सत्,
15 कस्मात्? अनुपादानादित्वात्—सामान्यत्वादन्तर्भावितशेष[विशेष]सत्त्वात्[illegible] सत्कार्यवैलक्षण्यात्, खपुष्पवदित्यादि, [पूर्ववच्चक्रकद्वयप्रवर्त्तनम्] तदतुल्यविकल्पत्वात् घटपटवत् द्रव्यक्रियावद्वा, कथमतुल्यता?, इह कार्यकारणयोर्द्वयोरपि सत्त्वं कार्यमेवेत्येतद्विकल्पद्वयं स्यात्, इतरयोरभ्युपगतप्रतिपक्षत्वाद्वाराभावात्, तद्यदि तावदुभयसत्त्वं ततस्तदात्मसत्त्वाविशिष्टत्वात् कारणस्वात्मवत्, उपलब्धिलक्षणप्राप्तत्वे यथा कारणस्यानुपादानोपलब्धिस्तथा कार्यस्य स्यात्, अथ न कारणानुपादानवत् कार्यानुपादानं सच्च
20 कार्यमिति निश्चितं तद्वैलक्षण्यान्न तर्हि सत् कारणं असत्, सद्विलक्षणत्वात् खपुष्पवत्, इतरः कृतघटवत्, ननु घटसत्त्वं पटसत्त्वविलक्षणं, न, इतरेतरासत्त्ववैलक्षण्यात्, अथैवमपि वैलक्षण्ये कारणसत्त्वविनिश्चयो न निवर्त्तते, अनुपादानात्मकं च तत्, न तर्ह्यननुपादानात्मकत्वात् कार्यं सत् खपुष्पवत्, इतरथा हि नित्यमेवोपादीयेत सत्त्वात् कारणवत्, कारणञ्चोपादानवत् स्यात्, उपलभ्यसत्त्वाविशिष्टत्वात्, कार्य-

तथा तथा गृह्यत इति सर्वमक्रमात्मकमेवेत्याह—अहिरिति । अथ कारणकाले कार्याणां कारणत्वादेव भेदेनानुपलभ्यत्वे
25 सत्त्वे च खपुष्पमपि सत् कारणञ्च स्यादनुपलभ्यत्वात् कार्यवदिति समाधत्ते—तदप्यसदिति । कारणकाले कार्यं यदि कारणात्मत्वादनुपलभ्यत्वेऽपि सत् स्यात्तर्हि खपुष्पमपि सत् स्यादिति भावः । कारणासत्त्वकार्यसत्त्वयोरङ्गीकारे कार्यसत्त्ववैलक्षण्यात् पर्यवसितमाह—ततश्चेति । अथैवमिति अनुपलभ्यत्वात् कार्यवत् खपुष्पस्य सत्त्वं नेष्यते कार्यसत्त्ववैलक्षण्यात् कारणमसदेवेष्यते खपुष्पवदित्यर्थः । इत्थं कार्यकारणयोरनुपादानसिद्धत्वमभ्युपेत्य विचारः कृतः, अथ तदनभ्युपगम्य विचारः क्रियते—यथा कारणमिति । कारणमसत् कार्यं सदिति भङ्गस्याश्रितत्वेनानुपादानसिद्धस्य कारणस्यासत्त्वेन
30 कार्यस्यानुपादानसिद्धत्वेऽसत्त्वं प्रसज्येतेत्याशयेनाह—अ[illegible]भयादिति । एवं तर्हि सत्त्वस्योपादानसिद्धत्वसहचरितत्वात् कारणे उपादानसिद्धत्वविरहे सत्त्वमपि न भवे[illegible]—उपादानसिद्धत्वेति । तदतुल्येति, तदेव भङ्गचक-

१ सि. क. तच्चावदु०

वदिति प्रथमचक्रकम्, अथ न कार्यानित्योपादानवत् कारणोपादानमसच्च कारणमिति निश्चितम्, तद्वैलक्षण्याच्च तर्हि सत् कार्यमसत्, सद्विलक्षणत्वात् खपुष्पवदितरः कारणवत्, खपुष्पमपि वा सत् अनुपादानानुपलब्धेः कार्यवत्, नन्वित्यादि सोत्तरम्, अथैवमपि वैलक्षण्ये कार्यसत्त्वविनिश्चयो न व्यावर्त्तते, उपादानात्मकञ्च तत्, न तर्ह्यनुपादानात्मकत्वात् गन्धर्वनगरवत् कारणमसत्, न त्वेवं भवत्यतः कारणं सत्, उपलभ्यत्वेऽनुपादानात्मकत्वात् कृतवत्, कृतमपि वा कारणवत्, न तु कार्यमनुपादानानुपलब्ध्यात्मकत्वात् खपुष्पवत्, सत्त्वे वा विशेषो वक्तव्यः, अविशेषे वैलक्षण्यानुपपत्तेः, विशेषोन्नयनेऽपि विशेषस्यासदाश्रयत्वात्ततोऽन्यत्वमेवाघटपटवदिति द्वितीयचक्रकप्रवर्त्तनं कृतम्। 5

तस्मादसत्कार्यमित्युपसंहृते आह–

**नन्वेवमसत्कार्यञ्चेदुत्पद्यते ततोऽसत्त्वादायत्यामपि नाविर्भवेत् कार्यम्, खपुष्पमप्यायत्यां वा प्रादुर्भवेत्, असत्त्वादिति, तच्च नास्ति, तस्मात् सत्कारणे कार्यमित्येतच्च न, सविशेषणासत्त्वात्, अत्यन्तासत एवासत्त्वादनन्यचन्द्रादित्ववत्, नास्ति घटो गेहे मृत्पिण्डे कपालावस्थायां वेत्यादीन्यसत्त्वानि सविशेषणानि, तेषाञ्च सतामिवासतामायत्यामाविर्भावदर्शनात्, अत एव प्रकरणचिन्ता, किं घटादिकार्यमसदाविर्भवेदलातचक्रवत्? उतेतरचक्रवत् सदाविर्भवेत्? इति।** 10

**नन्वेवमित्यादि** यद्येवमसत्कार्यञ्चेदुत्पद्यते ततोऽसत्त्वादायत्यामपि बीजमृत्पिण्डाद्यवस्थानकालादुत्तरकालेऽप्यङ्कुरो नाविर्भवेच्छिवकादि घटादि च कार्यम्, असत्त्वात् खपुष्पमप्यायत्यां वा प्रादुर्भवेदसत्त्वादङ्कुरघटादिवदित्येतदनिष्टं प्रसक्तं, तच्च नास्ति तस्मात् सत् कारणे कार्यमित्येतच्च न, सविशेषणासत्त्वात्–योऽयं हेतुरनिष्टापादनार्थमुक्तोऽसत्त्वादिति एषोऽसिद्धः 'अभूतं नास्तीत्यनर्थान्तरम्' (वैशे० अ० ९, आ. १ सू० ९.) इति वचनादत्यन्तासत एवासत्त्वात्, अनन्यचन्द्रादित्ववत्–यथा नास्त्यन्यश्चन्द्रमा इति द्वितीयचन्द्राभावादनन्योऽयमेवेति सामान्यात् प्रतिषिध्यते चन्द्रमाः, 15 20

कद्रयावर्तनं क्रियते व्याख्यातप्रायत्वात् स्पष्टत्वाच्च न विव्रियते। एवञ्च कार्यकारणयोर्नानात्वात् सतोऽन्यत् कार्यमिति सिद्धे कार्यस्योत्पत्तेः पूर्वमिव पश्चादप्याविर्भावो न स्यात्, खपुष्पवदसत्त्वाविशेषात्, तथाप्याविर्भावे खपुष्पस्याप्याविर्भावः स्यात्, न भवति चैवम्, तस्मात् कारणकालेऽपि कारणे कार्यं सदभ्युपेयमित्याशङ्कते–**नन्वेवमिति**। कार्यखपुष्पयोर्नासत्त्वं सामान्यतः, अपि तु तयोर्विलक्षणमेवासत्त्वं प्रागसत्त्वात्यन्तासत्त्वरूपमित्याशयेन समाधत्ते–**सविशेषणेति**। **बीजेति,** बीजकालेऽङ्कुरो मृत्पिण्डादिकाले शिवकादिघटादि च यथा नोत्पद्यते तथोत्तरकालेऽपीत्यर्थः। असतोऽपि प्रादुर्भावे दोषमाह–**खपुष्पमपीति**। आयत्यामपि न प्रादुर्भवेत् कार्यम्, असत्त्वादित्यत्रासत्त्वहेतुः कार्ये नास्ति, अत्यन्तमसत एवासत्त्वरूपत्वात् गृहमृत्पिण्डकपालादौ घटासत्त्वस्य प्रागादिविशेषणासत्त्वादित्याशयेनोत्तरयति–**सविशेषणेति**। अत्यन्तासत एवासत्त्वे सूत्रकृद्वचनमादर्शयति–**अभूतमिति,** यद्यत्र कदापि न भविष्यति न वा भूतं तस्य वस्तुनस्तत्रात्यन्ताभावो नास्तीति प्रतीतिविषयोऽनर्थान्तरं मन्तव्यः, नास्ति विषयतयार्थान्तरमत्यन्ताभावाभिन्नं यस्येत्यनर्थान्तरमिति सूत्रार्थः, यथा जले पृथिवीत्वं नास्ति पृथिव्यां जलत्वं नास्तीति। निर्विशेषणाभावविषयं निदर्शनमाह–**अनन्येति,** न ह्यत्र किञ्चिद्विशेषणविशिष्टचन्द्रमसः प्रतिषेधः, अन्यचन्द्राभावात्, तद्वत् कार्ये सामान्यात् सत्त्वप्रतिषेधोऽसिद्ध इति भावः। सविशेषणासत्त्वे निदर्शनमाह–**तथा नास्तीति** गृहे घटो नास्तीति कदाचिद्गृहे घटस्यापि सम्भवात् एतत्कालीनघटासत्त्वं प्रतीयते, मृत्पिण्डे घटो नास्तीति घटस्य 25 30

तथा नास्ति घटो गेहे मृत्पिण्डे कपालावस्थायां वेत्यादीन्यसत्त्वानि सविशेषणान्यनन्यचन्द्रादित्वनिद-र्शनसूचितानि, तेषाञ्च सतामसतामायत्यामाविर्भावदर्शनादिति, अत एव प्रक[illegible], 'यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः' (गौत० अ० १ आ० २ सू० ७) इति, यस्मादेवाविर्भवद् द्विविधं दृष्टं सदसच्च, तद्यथा अलातचक्राद्यसत् सच्च रथचक्रादि, तत्र सन्देहः
5 किं घटादिकार्यमसदाविर्भवेत् अलातचक्रवत् ? उतेतरचक्रवत् सदाविर्भवेत् ? इति, यत एव संशयो न यत एव हि निर्णयः, ऐकान्तिको हि हेतुः स्यात् धूमादत्राग्निर्यथेति, असदेव कार्यमिति ।

एवं तर्हि मयापि शक्यं वक्तुं यत्तदसत्ततोऽन्यत् कार्यं तद्विकल्पासमर्थत्वात्, घटपटव-दित्यादि सत्कार्यसाधनप्रपञ्चोऽतीतः सोऽत्र द्रष्टव्यः, उत्तरमत्र वक्तुमशक्यम्, यद्येवं मतिः तदोभयवादसिद्धिर्निवारयितुमशक्यत्वात्, उभयोरन्यतरस्य वा निषेधे प्रमाणाभावात्,
10 ज्ञानाभिधानयोः प्रमाणयोः द्विरूपार्थविषयत्वादुभयरूपार्थस्थितिसत्यत्वात्, नन्वेवं तथार्थ-स्थितिसत्यत्वात् सर्ववादनाथानेकान्तवादाश्रयणं कृतम् ।

एवं तर्हीत्यादि, सत्कार्यवादी पूर्वाभिहितसत्कार्यवादोपपत्तिभिर्विरुद्धाव्यभिचारिचिकी-र्षयाऽऽह-एवं तर्हि मयापि शक्यं वक्तुम्, तद्यथा यत्तदसत् ततोऽन्यत्कार्यम्, तद्विकल्पासमर्थत्वात्, घट-पटवदित्यादि सत्कार्यसाधनप्रपञ्चोऽतीतः सोऽत्र द्रष्टव्य इति पूर्वपक्षः, उत्तरमत्र वक्तुमशक्यम्, यथाऽ-
15 सत्कार्यसाधनानि अन्यानिवर्त्त्यानि तथा सत्कार्यवादसाधनान्यपीति, यद्येवमिति, यद्येवं ब्रवीषि

प्रागसत्त्वं प्रतीयते, उत्तरकाले घटसद्भावात्, कपालावस्थायां घटो नास्तीति अतीतसत्त्वलक्षणं घटासत्त्वं प्रतीयते पूर्वकाले घटस्य सत्त्वात्, कदाचित् सद्रूपाणामेवासतामायत्यामाविर्भावदर्शनात् अत्यन्ताभावरूपमसत्त्वं घटादौ कार्येऽसिद्धमिति भावः । द्वितीय-चन्द्राभावरूपात्यन्तासतो निदर्शनेन कदाचिदसन्ति सूचितानीत्याशयेनाह-अनन्यचन्द्रादित्वेति । हेतोरस्यानैकान्तिकत्व-मपि दर्शयति-अत एवेति, यत एव सतामसतामाविर्भावो दृश्यतेऽत एव सत्त्वासत्त्वसहचरिताविर्भावदर्शनेन संशयो जायते,
20 यावन्निर्णयं सदसत्त्वसंशयानतिवृत्तेः प्रकरणसमो भवति ततश्च संशयाधायकत्वेनासत्त्वमनैकान्तिकत्वं भवतीति भावः । तत्र प्रक-रणसमप्रदर्शकं गौतमीयं सूत्रमुपन्यस्यति-यस्मादिति । निर्णये जाते तु प्रकरणसमोऽयं व्यावर्त्तते इति दर्शयितुं निर्णयार्थमि-त्युक्तम् । आविर्भावस्य सत्त्वासत्त्वसामानाधिकरण्यं दर्शयति-यस्मादेवेति, उभयसहचरितधर्मवत्ताज्ञानस्यापि संशायकत्वादिति भावः । चिन्ताप्रभूतं संशयं दर्शयति-तत्र संदेह इति । संशयसद्भावदशायामन्यतरानिर्णयो नैव भवतीत्यायत्यां प्रादुर्भावा-भावस्य साधकत्वेनोपन्यस्तमसत्त्वं हेतुरेव न भवतीत्याशयेनाह-यत एवेति । अन्यतरनिर्णायकमेव हेतुर्भवेत्, अविनाभाव-
25 स्वभावत्वात्तस्य, यथा वह्न्यविनाभावस्वभावो धूमो हेतुरित्याह-ऐकान्तिक इति । एवमसत्त्वस्यानाविर्भावासाधकत्वात् कार-णावस्थायां कार्यमसदेवेत्याह-असदेवेति । अथ मत्पक्षनिवारणफलस्य त्वदुद्भावितसाधनप्रपञ्चस्य त्वत्पक्षनिवारणायापि समा-नत्वात् तेन त्वन्मते निराकृतेऽर्थतो मदिष्टं कार्यसत्त्वं सेत्स्यतीत्याशयेनाह-एवं तर्हीति । एतदेवाह-सत्कार्यवादीति । अत्रापि पूर्ववद्विकल्पचतुष्टयमुद्भाव्योभयासत्त्वान्यतरासत्त्वपक्षौ गृहीत्वा दोष आपादनीय इति । विधिविधिनयोदितसत्कार्य-साधनप्रपञ्चमतिदिशति-यत्तदसदिति । सत्कार्यासत्कार्यपक्षयोस्तुल्यबलत्वेनेत्थं प्रतिपादितत्वादन्यतरपक्षनिरसनासम्भव-
30 माचष्टे-उत्तरमत्रेति । उभयपक्षसाधनानां तुल्यबलत्वादन्यतरपक्षनिवारणासामर्थ्यं तर्हि स्वस्वसाध्याविनाभूतत्वात् उभय-धर्मसिद्धिरित्याह-यद्येवमिति । ननु नोभयोर्वादयोः सिद्धिः सुन्दोपसुन्दन्यायेन परस्परनिवारितत्वात्, कार्यात् प्राक् कारणे

१ सि. क. सतामेवा० । २ सि. क. सदसत्त्वं ।

इति प्र[...]याह–अहमपि ब्रवीम्येवमपि सत्कार्यसाधनान्यशक्यानि निवर्त्तयितुं सोपनयसप्रपञ्चानां वक्तु युक्तत्वात्, यद्येवं–यथा त्वयोपनयसहितेन प्रत्यवस्थानसहितेन च पूर्वोत्तरपक्षप्रसङ्गेन सत्कार्यासत्कार्यवादयोः तुल्यं समर्थनमिति भवतो यदि मतिः तदोभयवादसिद्धिः–सत्कार्यासत्कार्यवादयोः सिद्धिः, निवारयितुमशक्यत्वात्, स्यान्मतमन्योन्यनिवारितयोरनयोर्वादयोरसिद्धिरेवेति, असद्वादाश्रयणं [वा]श्रेय इत्येतच्चायुक्तम्, उभयोरन्यतरस्य वा निषेधे प्रमाणाभावात्, ज्ञानाभिधानयोः प्रमाणयोर्द्विरूपायविषयत्वा[त्], अतद्विषययोरप्रमाणत्वात्, तस्मादवश्यमुभयरूपार्थस्थितिसत्यत्वम्, ततः किमिति चेदुच्यते, नन्वेवं तथार्थस्थितिसत्यत्वात् सर्ववादनाथानेकान्तवादाश्रयणं कृतम्, त्वयेति वाक्यशेषः। 5

अनेकान्तवादो हि वा[द]नायकः सर्ववादविरोधाविरोधयोर्निग्रहा[नु]ग्रहसमर्थत्वादरिविजिगीष्वा[दी]नामिवोदासीन[नृ]पः, स चेत्थं–स्यादन्यत् स्यादनन्य[त्] कारणात् कार्यम्, तदतत्समर्थवि[कल्प]त्वात्, एकपुरुषपितृपुत्रादिवदिति सदसद्वाद्युभयोपनीतहेतुसामर्थ्यादेवानेकान्तसिद्धेः, 10 न च तेन सह कस्यचिद्विरोधः, तस्मात् परित्यक्तप[क्षपाता]भिनिविष्टैरात्महितगवेषिभिः [सर्व]शरण्यमाराध्यः शरणश्च नयसमूहात्मकत्वा[त्], यद्यसौ सर्वैराराध्यः शरणश्च वादानां किमर्थं वादिभिः सह विवदते, दृष्टश्च विवादः, तस्माद्विरोधा[दि]त्वाच्छपवादिवदनाराध्योऽशरणश्चेत्यत्रोच्यते, मम तेन स[हा]विरोध एव तथापि त्व[त्प्र]तिपत्त्यैकान्तवस्त्व[नु]पपत्तेर्भ्रमः।

(अनेकान्तवादो हीति) अनेकान्तवादो हि वादनायकः सर्ववादविरोधाविरोधयोर्निग्रहानुग्रहसमर्थत्वात्, अरिविजिगीष्वादीनामिवोदासीननृपः, स चेत्थं स्यादन्यत् स्यादनन्यत् कारणा[त्] कार्यमित्यादि, कुतः? तदतत्समर्थविकल्पत्वात् तस्मिन्नतस्मिंश्च विकल्पे समर्थत्वात् कारणे कार्यं सदनन्यत् असदन्यदिति वा पक्षे समर्थो विकल्पोऽस्येति, अनन्तरोक्तविकलादेशहेतुद्वयसमाहारैकरूपोऽयं हेतुः पक्षद्वयसाधनसमर्थः, को दृष्टान्तः? एकपुरुषपितृपुत्रादिवत्–यथैक एव पुरुषोऽपेक्षाविशेषोपनीतैः पितृपुत्रभ्रातृभागिनेयमातुलादिभिरन्यैश्चान्योऽ[न]न्यश्च तेन तेन प्रकारेण सम्बन्धश्च कारणकार्यनित्यानि- 15 20

कार्यस्यादर्शनाद्वाऽसत्कार्यवादाश्रयणमेव श्रेय इत्याशङ्कते–स्यान्मतमिति। समाधत्ते–उभयोरिति वस्तुनः सदसदात्मतया ज्ञानस्य शब्दस्य वा तथाविधवस्तुप्रत्यायकतया सदसत्त्वयोरन्यतरस्य प्रतिषेधे नास्ति सामर्थ्यम्, किन्तूभयधर्मात्मकस्यानिराकृतान्यतरधर्मात्मनो वा बोधन एव सामर्थ्यादिति भावः। उभयनिषेधविषयस्यान्यतरनिषेधविषयस्य वा ज्ञानस्याभिधानस्य वाऽऽभासत्वमेव, न तु प्रमाणत्वमित्याह–अतदिति। एवञ्चोभयात्मकतायाः सत्यत्वेऽभ्युपगतेऽनेकान्तवादाश्रयणमेव कृतमित्याह–नन्वेव[म]िति। [...] दर्शयति–अनेकान्तवादो हीति। कथं विरोधाविरोधयोर्निग्रहानुग्रहौ क्रियेते इत्यत्राह–स चेत्थमिति घटादिकार्यं सद्रूप्यमृत्पृथिव्यादिकारणात् पर्यायार्थतयाऽन्यः पृथुबुध्नोदराद्याकारतया पूर्वं सदादेरभावात्, पूर्वमपि घटादेः सत्त्वेऽनुपलम्भायोगात्, तथा तत् सदादिभ्यो द्रव्यार्थतयाऽनन्यः, सदादिव्यतिरिक्ततया[ऽ]नुपलम्भात् तथा च स्यात् कारणात् कार्यमन्यत्, स्यादनन्यदिति भावः। साधनमत्राह–तदतदिति, कथञ्चित्सदसत्त्वपक्षयोरेव सङ्गतार्थत्वात्, एकान्तपक्षे च परस्परं पूर्वोदितविधिना विरोधादिति भावः। तदेव भावयति–कारणे कार्य[मि]ति, कारणकाले कारणे कार्यस्य सत्त्वादेवानन्यत्व[म]नन्यत्वादेव वा सत्त्वम्, असत्त्वादेवान्यत्वमन्यत्वादेव वाऽसत्त्वमिति पक्षयोःकथञ्चिदन्यानन्यत्वाभ्यामेव विकल्पाः भङ्गाः सङ्गतार्था भवन्ति यथा कथञ्चिदनन्यान्यत्वाभ्यामेवैकः पुरुषः पितृपुत्रभ्रातृभागिनेयादिर्भवतीति भावः। उभयात्मकतायां प्रत्येकपक्षोदिता हेतव एव समुचिता हेतुत्वमवलम्बन्त इत्याह–अनन्तरोक्तेति। वस्त्वंशमात्रप्ररूपको विकलादेशः। दृष्टान्तं घटयति–यथैक इति। निरवच्छिन्नसत्त्वासत्त्वयोरेवैकत्र वृत्तौ विरोधेन सापेक्षयोस्तयोरेकत्र 25 30

१ सि. क. °तानि। २ सि. क. °तानि।

त्या पर्यायार्पणीयश्चेति, अस्य हेतोर्भावनोक्तसाधनद्वयादेवाधिगम्या विकल्पभङ्गकैर्व्याख्यातैव, सदसद्वा-गुभयापनीतहेतुसामर्थ्यादेवानेकान्तसिद्धेः, न च तेन सह कस्यचिद्विरोधः, तस्मात् परित्यक्तपक्षरागैरन-भिनिविष्टैरात्महितगवेषिभिः कुशलैः—अन्यथा हितप्राप्त्यसम्भवादाश्रयणीय इति परि...आराध्यः शरणञ्च नयसमूहात्मकत्वात्, अनन्यसाधारणोत्साहप्रभुमंत्रशक्तियुतभरतचक्रवर्तिवद्विजिगीषुभिरिति,

5 यद्यसौ सर्वैराराध्यः शरणञ्च वादानां किमर्थं वादिभिः सह विवदते ? दृष्टश्च विवादः तस्माद्विरोधा-दित्वाच्छेषवादिवदनाराध्योऽशरणञ्च तथापि च दर्शनात्तेन सहेत्यत्रोच्यते, मम तेन सह[।]विरोध एव तथापि च—किन्तु वयं त्वत्प्रतिपत्त्यैकान्तवस्त्वनुपपत्तेर्ब्रूमः—वयं त्वदनुग्रहार्थं त्वदनुशासिन इति न दोषः।

इदानीं नैगमनय उभयविधिरात्ममतस्वरूपं वक्तुकामः परमतं प्राग्दूषितं प्रत्युच्चारयन्नित्थमुपसं-हरति—

10 **यत्तद्भूयते येन भूयते द्रव्येण तस्य भवनसामान्यस्योत्सर्जनविधिः प्रवृत्त्यात्मकस्तस्यवा-पवादविधानमित्येष उभयविधिस्त्वयेष्ट एवं न भवति किन्तु सत्ताद्रव्यत्वादिगगनादिद्रव्या-णामेषां सर्वव्यापिता अण्वादिसहितानां विभुत्वपरिमण्डलत्वादिगुणसहितानां नित्यत्वञ्चे-त्युत्सर्गः ।**

**यत्तद्भूयत इत्यादि,** यत्तद्भवति तेन भवता यद्भूयते द्रव्येण तस्य भवनसामान्यं क्षेत्रतः

15 सर्वत्वं कालतो नित्यत्वञ्च सर्वात्मकं तस्योत्सर्जनं विधानं स एव विधिः प्रागुक्तः पश्चाद्द्वितीयः प्रवृत्त्या-त्मक[ः] भूताभूतभेदात्मकः तस्यैवापवादस्तस्य च विधानमित्येष उभयविधिस्त्वयेष्ट एवं [न] भवति, कस्तर्हीति चेत् ? सत्ताद्रव्य[त्व]ादीति यावन्नित्यत्वञ्चोत्सर्ग इति, सत्ता—महासामान्यं द्रव्यत्वं पृथिव्या-

न विरोध इत्याह—**न च तेन सहेति** । अनेकान्तवाद एव हिताहितप्राप्तिपरिहारायालमिति विभाव्यायमेव समाश्रयणीयः श्रेयोऽभिलाषुकैर्विचक्षणैरित्याह—**तस्मादिति** । इदंविधस्यैव शरणत्वे दृष्टान्तमाह—**अनन्येति**, इतरेषां समाश्रयणे हि न

20 विजयप्राप्तिः, अपि तु स्वस्थानाद्भ्रंशोऽपीति भावः । नन्वनेकान्तवादस्य सर्ववादनायकत्वेन सर्वैः सहाविरोधे केनापि सह विरोधमूलवादप्रसङ्ग एव न भवेत्, दृश्यते च विवदमानोऽयमपीतर इव, तस्मादत्रापि विरोधादिसम्भवादितरवादिवदनाराध्य एवाशरणयोग्यत्वादित्याशङ्क्य समाधत्ते—**यद्यसाविति,** त्वत्प्रतिपत्त्या त्वदभिप्रायेणैव, त्वय्यनुकम्पया वेत्यर्थः । **नैगमनय इति** धर्मधर्मिणोर्गुणप्रधानभावेन निरूपणपरो नयो द्रव्यपर्याययोरुभयोर्विधिर्यस्मिन् स नय इदानीं स्वमतमुपस्थापयतीति भावः । कर्तृसाधनाविनाभाविभावसाधनं भावशब्दमुभयविधिनोक्तं प्रदर्श्य स्वमतं दर्शयति—**यत्तद्भूयत इति,** यत्तद्भूयत इति

25 भवनस्य कर्तृप्रधानभूतं द्रव्यं सर्वप्रभेदनिर्भेदं बीजभूतमिति सामान्यविधानं तच्च सर्वात्मकं नित्यञ्च, येन भूयत इत्यनेन भवतो द्रव्यस्य यद्भवनं प्रवृत्तिरूपा क्रिया तथासन्निहितवस्तुतत्त्वव्यक्तिलक्षणा भूताभूतभावत्वाद्द्रव्याद्व्यतिरिक्ता द्रव्ये गुणभूतेत्यपवाद-विधानं पूर्वोदितोभयविध्यराभिमतं न युक्तमिति दर्शयति—**यत्त...भवतीति** । एतन्नयाभिमतमाचष्टे—**सत्तेति,** क्षेत्रतः सर्वगतानां कालतो नित्यभूतानां वस्तूनां विधानमुत्सर्गविधिः सामान्यविधिरिति भाति । तत्र जातिरूपं सामान्यं महासामान्यसामान्यविशे-षोभयात्मकमाकाशकालदिगात्मद्रव्याणि च सर्वगतानि, एतान्येव द्रव्याणि चतुर्विधपरमाणुमनःसहितानि परममह...

30 विभुत्वं अणुपरिमाणलक्षणं पारिमाण्डल्यमित्यादीनि नित्यवस्तूनीत्येवं विधानमुत्सर्गविधिरिति दर्शयति—**महासामान्यमिति** स्वेतरनिखिलजातिव्यापकमित्यर्थः, सामान्यत्वन्तु समानप्रतीत्यभिधानप्रयोजकत्वाद्विज्ञेयम्, सामान्यविशेषत्वञ्च किञ्चिज्जातिव्या-पकत्वे सति किञ्चिज्जातिव्याप्यत्वम्, विशेषत्वं तु विशेषकत्वादिति ध्येयम् । अथ विशेषकधर्मवतां विधानस्वरूपमपवादविधानं दर्श-

१ सि. क. व्युत्पद्यते । २ सि. क. तथापि । ३ सि. क. °वस्त्वा० ।

दिषु सामान्यं, आदिग्रहणात् गुणत्वकर्मत्वे च रूपादि[षु]गमनादिषु च सामान्यविशेषाः, गगनादीनि—आकाशात्मदिक्कालद्रव्याणि विभक्तसर्वगतानि, द्रव्याणामेषां सर्वव्यापिता—सर्वगतत्वम्, अण्वादिसहित[नां]नित्यत्वञ्चेति, तेषां द्रव्याणामणूनाञ्च नित्यत्वं कालव्यापिता पार्थिवादिचतुर्विधाणुद्रव्याणाञ्चेति, आदिग्रहणान्मनोद्रव्यसहितानामिति, विभुत्वपरिमण्डलत्वादिगुणसहितानां—ते च गुणास्तानि च द्रव्याणि नित्यानीत्यर्थः, एष उत्सर्गः सामान्यविधिः । 5

**आरब्धद्रव्यगुणानां कर्मणश्चानित्यत्वादन्यत्वम्, पुनश्च द्रव्यगुणकर्मणां परस्परतः स्वजातिप्रभेदेभ्यश्च सत्तासमवायसामान्यविशेषान्त्यविशेषेभ्यश्च नित्येभ्योऽनित्यानां कार्यकारणतया चेत्यपवादः, तयोर्विधिरेष विधिनियमविधिः ।**

**आरब्धद्रव्येत्यादि** यावदपवाद इति, पार्थिवाप्यतैजसवायव्यैश्चतुर्विधैरणुभिः संयोगापेक्षैः समानजातीयैः समानजातीयानि द्व्यणुकादीनि तदाद्युत्तरवृद्ध्या महापृथिव्यादिपर्यन्तानि आरब्धद्रव्याणि 10 द्वे बहूनि वा द्रव्यान्तराण्यारभन्ते चतुर्विधान्येव, 'येषामधिकृतमारम्भसामर्थ्यं तैरारब्धे कार्यद्रव्ये तत्समवेता नियमत एव गुणान्तरमारभन्ते' ( ) इति वचनात्, चित्रादय आरब्धगुणाः, तेषामुभयेषामारब्धद्रव्याणामारब्धगुणानाञ्चानित्यत्वात् प्रागुक्तेभ्यो विशेषः, तथा कर्मणश्च सप्रभेदस्य, एवं तावन्नित्यानित्यसर्वगतासर्वगतभेदेनान्यत्वम्, पुनश्च द्रव्यगुणकर्मणां परस्परतो द्रव्येभ्यो गुणानाञ्च कर्मणाञ्च, गुणेभ्यो द्रव्याणां कर्मणाञ्च कर्मभ्यो द्रव्याणां गुणानाञ्च परस्परत इति, स्वजातिप्रभेदेभ्य- 15 श्चान्यत्वम्, द्रव्यजातेः परस्परतः—पृथिव्या उदकादिभ्यः, उदकस्य पृथिवीसहितेभ्योऽन्येभ्यः, एवं ज्वलनपवनगगनदिक्कालात्ममनसामितरेभ्योऽन्यत्वमिति, सत्तासमवायसामान्यविशेषान्त्यविशेषेभ्यश्चान्य-[त्वं]नित्येभ्योऽनित्यानाञ्च, कार्यकारणतया च—'द्रव्यगुणकर्मणां द्रव्यं कारणं सामान्यम्' (वै० अ० १ आ० १ सू० १८) इत्यादि 'संयोगविभागाः[च] कर्मणाम्' (वै० अ० १ आ० १ सू ३०) इत्यादि कार्यकारणनानात्वेन चान्यत्वमित्यपवादः, तयोरुत्सर्गापवादयोर्विधिः—सामान्यविशेषयोः विधिनियम- 20 योरित्यर्थः, एष विधिनियमविधिः, न प्राक्तनः त्वत्परिकल्पितः ।

यति-**आरब्धेति**। आरब्धद्रव्याणि पृथिव्यप्तेजोवायूनां परमाणुभिरारब्धानि द्व्यणुकत्र्यणुकादिमहापृथिव्यन्तादिपर्यन्तानीति दर्शयति-**पार्थिवाप्येति,** अणवः समवायिकारणं परस्परं संयोगोऽसमवायिकारणं पार्थिवादिपरमाणवः स्वसजातीयानेव द्व्यणुकादीनारभन्ते न विजातीयानवादिद्व्यणुकादीनिति भावः । **द्वे बहूनि वेति** द्वाभ्यां परमाणुभ्यामुत्पन्नानि द्व्यणुकानि बहुभिर्द्व्यणुकैरारब्धानि त्र्यणुकादीनि, एवं चतुर्विधपार्थिवादिद्व्यणुकादीनामारम्भो नान्यथेति भावः । आरब्धगुणान् दर्शयति-[illegible]ति पृथिव्यप्ते- 25 जोवायुपरमाणुभिर्द्वाभ्यां बहुभिर्वा स्वसंयोगापेक्षैः तुल्यजातीयैरारब्धे कार्यद्रव्ये कारणसमवेता गुणाः स्वसजातीयगुणारम्भकत्वनियमात् गुणान्तरमारभन्त इति शुक्लनीलपीतादयो गुणाः आरब्धगुणा इत्यर्थः । एतेषामुत्पन्नद्रव्याणामुत्पन्नगुणानाञ्चानित्यत्वादेव पूर्वोदितनित्यद्रव्यगुणेभ्यो विशेष इत्याह-**तेषामुभयेषामिति** । उत्क्षेपणादिसप्रभेदं कर्म स्वसजातीयानारम्भकत्वादनित्यत्वाच्च द्रव्यगुणाभ्यां विशेष इत्याशयेनाह-**तथा कर्मणश्चेति** । द्रव्यगुणकर्मणां परस्परतोऽन्यत्वमाह-**पुनश्चेति** । द्रव्यावान्तरभेदानां पृथिव्यादीनां परस्परं भेदमाह-**स्वजातीति** । सामान्यपरिहीनेभ्योऽपि सत्तादिभ्यो द्रव्यगुणकर्मणामन्यत्वमाह-**सत्ता- 30 समवायेति** । कार्यकारणभेदेन द्रव्यगुणकर्मणां भेदमभिधाय विधिनियमविधानमुपसंहरति-**कार्यकारणतयेति** । तत्रैव

१ सि. क. °नित्यानाञ्चेत्यपवा° छ्याः । २ सि. क. °णां कार्यम् ।

यदप्युक्तं त्वया तथाभूतसन्निहितवस्तुशक्तिव्यक्तिः क्रिया [illegible] बीजं द्रव्यमिति च तन्न भवति, क्रिया हि प्रागभूतनिर्वृत्त्यर्था, जगत्प्रलयकाले च का त्वदिष्टव्यापारलक्षणा क्रिया मदिष्टादृष्टचोदिताणुगतकर्मण्यसति ? न हि सा निर्वृत्तमेव निर्वर्तयितुं निरर्थकं वा प्रवर्त्तते, सा चानेकद्रव्यतायां सत्यां भवति, अनेकद्रव्यत्वञ्चादृष्टचोदिताणुकर्मान्तरेण न भवि-
5 तुमर्हति, भेद[बीजमात्र]द्रव्यशक्तिव्यक्तौ वा न कश्चिदुपकारोऽस्त्यस्य जगतः, न चे[देव]मिष्यते तदा नित्यैकस्तिमितगगनवदारम्भाभावात् क्रिया निर्विषयैव स्यात् ।

(यदप्युक्तमिति) यदप्युक्तं त्वया तथाभूतसन्निहितवस्तुशक्तिव्यक्तिः क्रिया द्रव्याभेदे सर्वप्रभेदनिर्भेदं बीजं द्रव्यमिति च, तन्न भवति, यस्मात् क्रिया हि प्रागभूतनिर्वृत्त्यर्था जगत्प्रलयकाले च का त्वदिष्टव्यापारलक्षणा क्रिया मदिष्टादृष्टचोदिताणुगतकर्मण्यसति ? सा ह्यदृष्टचोदिताणुकर्मजनिताऽ-
10 धर्मनिवृत्त्यर्था जगत्सृष्ट्यर्था च स्यात्, कर्मैव च नः क्रिया, न हि सा निर्वृत्तमेव निर्वर्त्तयितुं क्रीडितमेवास्तीवति [नि]रर्थकं वा प्रवर्त्तते, सा चानेकद्रव्यतायां सत्यां भवति, अनेकद्रव्यत्वञ्चादृष्टचोदिताणुकर्मान्तरेण न भवितुमर्हति, कस्मात् ? अदृष्टवशादणुषु कर्म सम्भवात्, द्व्यणुकादनेकद्रव्योत्पत्तेः तत्समवायाच्च तत्रानेकाणुकृताग्न्यूर्ध्वज्वलनादिलोकस्थितिकरसर्वकार्योपपत्तेर्नैकस्य कस्यचित् त्वदिष्टनित्यस्य क्रियाऽस्ति, भेदबीजमात्रद्रव्यशक्तिव्यक्तौ वा न कश्चिदुपकारोऽस्त्यस्य जगतः, किं कारणं ? यस्मादुक्तं 'अणुमनसो-
15 श्चाद्यं कर्मेत्यदृष्टकारितम्' (वैशेषिकसूत्रच्छाया अ० ५ आ० २ सू० १३) इति, न चेदेवमिष्यते यदाऽदृष्टपरिगृहीतेष्वेषु कर्म न भवति तदा चैक्येन स्तिमितगगनवत्तदेकं द्रव्यं निःक्रियत्वान्न

सूत्रमुपन्यस्यति-द्रव्येति द्रव्यगुणकर्मणामेकं द्रव्यं समवायिकारणमित्यर्थः । संयोगविभागाः कर्मणां कार्यमित्यर्थः, तदेवं विशेषस्यापवादलक्षणस्य विधिः, उत्सर्गः सामान्यं विधिः, अपवादः विशेषः नियमः, एनयोर्विधिः विधानं विधिनियमविधिरिति विधिनियमयोः प्रधानत्वायुक्तः, तयोर्गुणप्रधानभावे पूर्वोक्तप्रकारेण दोषदर्शनादयुक्त इति भावः । पुनरपि उभयनयोदितद्रव्य-
20 क्रिययोरनुपपत्तिमाह-यदप्युक्तमिति । द्रव्यमेव सर्वविशेषात्मकं क्रियया विशेषा आविर्भवन्तीति भवद्दर्शने प्रलयकाले क्रियाया अपि विनाशेन सृष्टिकाले कथं सृष्टिः, क्रियाया अभावात् । अस्मन्मतेन तु निखिलात्मगतादृष्टवासनाप्रेरणयाऽणुषु कर्मोदयात् सृष्टिर्भवतीति भावः । पूर्वनयोदितस्य द्रव्यक्रियोभयस्यानुपपत्तिं दर्शयति-य[स्मादिति], भवद्भिः प्रवृत्तिमद्द्रव्यं क्रिया च प्रवृत्तिः, क्रियाऽन्तर्निलीनवस्तुशक्तिव्यञ्जिका द्रव्यमेव तथा तथा भवतीत्युच्यते, एवञ्च तद्द्रव्यमनेकद्रव्यमेव भवेत्, मृदादिघटादिवत्, तच्च कार्यत्वाद्विनाशीति तद्विनाशे नित्यैकद्रव्याभावात् प्रागभूतनिर्वृत्त्यर्था क्रिया क्व समवैतु ? अदृष्टप्रेरिताणुकर्म-
25 जनितानेकद्रव्याभावात्, न च द्रव्यं सततप्रवृत्तिमदिति युक्तम्, निष्कारणनिरर्थकप्रवृत्तिप्रसङ्गात्, तदेवाह-न हि सेति । त्वदभ्युपगता मृत्पिण्डाद्यङ्कुराद्याविर्भाविका क्रिया सत्यनेकद्रव्यत्वे सम्भवति, अनेकद्रव्यत्वस्य कार्यभूतत्वेनादृष्टप्रेरितपरमाणुक्रियाव्यतिरेकेणासम्भवः, नहि क्रिया सततसम्प्रवृत्तिरूपा, निष्कारणनिष्प्रयोजनत्वप्रसङ्गात्, किन्तु प्राण्यदृष्टवशादेव परमाणुषु द्व्यणुकाद्यारम्भकक्रियाया उदयः प्राणिगणार्जितादृष्टफलोपभोगाय, तदा च द्व्यणुकादिक्रमेणानेकद्रव्योत्पत्तिः, न तु त्वदिष्टस्य सर्वप्रभेदनिर्भेदस्य कूटस्थनित्यस्य द्रव्यस्य गगनादेरिव क्रियायाः सम्भव इति भावः । अदृष्ट[वदा]त्मसंयोगासमवायिकारणकं सर्गाद्य-
30 कालीनं कर्म भवतीत्यत्राभियुक्तोक्तिं दर्शयति-यस्मादुक्तमिति 'अग्नेरूर्ध्वज्वलनं वायोस्तिर्यक् पवनं मनसश्चाद्यं कर्मादृष्टकारितम्' (वैशे० ५-२-१३) इति वैशेषिकं सूत्रम्, । प्राण्यदृष्टप्रेरिताणुकर्मभिर्द्व्यणुकादिक्रमेणानेकद्रव्योत्पत्त्य[भावे] समानासमानजातीयकारणाभावादनेकद्रव्यासम्भवान्नित्यं स्तिमितगगनवदेकं द्रव्यं भवेत्, न हि तत्र क्रिया सम्भवति [निष्क्रिय]त्वमानादित्याशयेनाह-

१ सि. क. सर्वभेदप्रभेद० । २ सि. क. न च [illegible] ।

किञ्चिदारभेत, ततश्चारम्भाभावात्तदपि न भवेदेव कर्म, कर्म ह्यारम्भस्वरूपं कल्प्यते, तस्य स्वरूपाभा-
वात् खपुष्पवदभावः, तदभावात् द्व्यणुकादिकार्यं न भवेत्, तदभूतेः क्रिया निर्विषयैव स्यात्,
यथानेकद्रव्यविषया न भवत्यारम्भाभावादनेकद्रव्यत्वानुपपत्तेरेवाण्वाकाशाद्येकद्रव्यविषयाऽपि न भव-
त्येव सा त्वदिष्टाऽस्मदिष्टकर्मविलक्षणा, तेषां नित्यैकस्तिमितगगनवदारम्भाभावादगुणवतो द्रव्यस्य गुणा-
रम्भात् कर्म अगुणमक्रियञ्चास्मन्मतेन, त्वन्मतेनापि गुणादीनां क्रियात्वात् क्रियायाश्च द्रव्यप्रधानायाः 5
निःक्रियत्वादेवेति क्रियानिर्विषयता सुप्रकृष्यते एवन्तावत् क्रिया द्रव्यं नारभत इत्युक्तम् ।

इदानीं त्वदिष्टं द्रव्यञ्च भव्ये भवच भवदेषाति द्रव्यमित्ययुक्तमिति वक्ष्यामः, कथम् ?—

**आरब्धद्रव्यभूतावपि च द्रव्यादेः कारणकार्यलक्षणारम्भानारम्भभेदादन्यत्वा[च] तद-
भूतेः, सामान्या[दी]नाञ्च, स्वाश्रयस्य स्वानुरूपप्रत्ययाधानहेतुत्वात्, ततस्त्वदु[क्तद्रव्यभवन]लक्ष-
णभवनानुपपत्तेरु[भ]यस्यापि भवनस्याभावः, किन्तु द्रव्यादिषड्भेदस्य सप्रभेदस्यैव भावः ।** 10

**(आरब्ध[द्र]व्येति)** अभ्युपेत्याप्यारब्धद्रव्यं कारणे कार्यस्यासत्त्वात् वर्णितोपपत्तिवत् कारणद्र-
व्याभ्यामन्यत्वात् कार्यद्रव्याणाम्, न हि तदेव द्रव्यं भवतीति, अथवाऽयमप्यपवादविधिः—आरब्धद्रव्य-
भूतावपि च पूर्वद्रव्येभ्यः कारणभूतेभ्यः कार्यभूतानामन्यत्वात्, गुणकर्मत्वादिना तस्यैव वाऽभावात्—
द्रव्यस्येति, किञ्च लक्षणारम्भानारम्भभेदाद्वाऽन्यत्वादेव, अन्यत्वमिति विशेषकारणम्, 'क्रियावत्०'
( वैशे० अ० १ आ० १ सू० १५ ) इत्यादि द्रव्यलक्षणम्, 'द्रव्याश्रयी०' ( वैशे० अ० १ आ० 15
१ सू० १६) इत्यादिगुण[ लक्षणम् ], 'एकद्रव्यं०' (वैशे० अ० १ आ० १ सू० १७) [इत्यादि ]कर्म-
लक्षणम्, इत्थं लक्षणभेदान्नानैव द्रव्यगुणकर्माणीति, द्रव्येष्वानारम्भकेभ्यो गगनादिभ्यः पृथिव्यादे-

न चैवमिति । कुतः क्रियाया असम्भव इत्यत्राह—**आरम्भाभावादिति,** स्तिमिताद्द्रव्यात् कस्यचिदारम्भाभावात् कथं
क्रिया भवेत्, न हि सा द्रव्यवन्नित्याऽभिमता, प्रवृत्तिः क्रिया परिणाम इति तस्या आरम्भस्वरूपत्वाभ्युपगमात्, न हि मृदादेः
पिण्डीभवनं निष्क्रियान्मृदादेर्भवितुमर्हति प्रागपि तत्प्रसङ्गात्, तस्मात्स्वरूपाभावान् कथं क्रिया भवेत्? तदभावे च कथं वा द्व्यणु- 20
कादिद्रव्यं स्यात्? एवं द्रव्याभावे क्रिया क भवेदिति निर्विषयैव स्यादिति भावः । एतदेव स्फुटयति—**यथानेकेति । आरब्धेति,**
आरब्धद्रव्यस्याङ्गीकारेऽपि नहि तदेव द्रव्यं भवति गुणो वा कर्म वा, कार्यकारणादिभेदेनान्यत्वावश्यकत्वात्, तत्र कारणद्रव्यात्
कार्यद्रव्यमन्यत्, कारणे कार्यस्यासत्त्वात्, अत एव च न गुणत्वेन कर्मत्वादिना वा तदेव द्रव्यं भवति, द्रव्यत्वगुणत्वकर्मत्वा-
दीनां सङ्करप्रसङ्गेन द्रवणरूपणपचनादीनामभेदः कारणकार्ययोरभेदात् स्यात्, तस्मान्न तस्यैव तथाभवनमिति भावः । अथ
लक्षणादिभेदेन द्रव्यादीनामन्यत्वमाह—**किञ्चेति ।** तत्र द्रव्यादिलक्षणं सूत्रैः प्रदर्श्यते—**क्रियावदिति** 'क्रियागुणवत् समवायि- 25
कारणमिति द्रव्यलक्षणम्' ( वै० १-१-१५ ) क्रियाश्च गुणाश्च विद्यन्तेऽस्मिन्निति क्रियागुणवत्, समवायिकारण[मु]पादानकारणं
द्रव्यमिति तदर्थः । गुणलक्षणमाह—**द्रव्याश्रयीति ।** 'द्रव्याश्रय्यगुणवान् संयोगविभागेष्वकारणमनपेक्ष इति गुणलक्षणम्'
( वै० १-१-१६ ) द्रव्यमाश्रयितुं शीलमस्येति द्रव्याश्रयी, एतच्च द्रव्येऽप्यस्तीत्यतोऽगुणवानिति, तथापि कर्मण्यतिव्याप्तिरतः
[सं]योगविभागेष्वकारणमिति, एतदपि संयोगविभागादावव्याप्तमतोऽनपेक्ष इति, संयोगविभागेष्वनपेक्षः सन् यः कारणं भवति
स गुणः, संयोगस्य विभागं प्रति विभागस्य संयोगं प्रति अनपेक्षकारणत्वाभावान्नाव्याप्तिरिति तदर्थः । क्रियालक्षणमाह— 30
एक[द्र]व्यमिति, 'एकद्रव्यमगुणं संयोगविभागे[ष्वनपेक्षका]रणमिति कर्मलक्षणम्' ( वै० १-१-१७ ) एकमेव द्रव्यमाश्रयो यस्य
तदेकद्रव्यं न विद्यते गुणोऽस्मिन्नित्यगुणं परमाण्वतिप्रसङ्गनिवारकमिदम्, रूपादावतिप्रसङ्गवारणाय शेषपदम्, मिलितौ संयोग-
विभागौ प्रति यदनपेक्षकारणं तत्कर्मेत्यर्थः । तदेवं लक्षणभेदाल्लक्ष्याणां द्रव्यादीनां परस्परं भेदः लक्षणस्य व्यावर्तकत्वादित्याह—
[इ]त्थमिति । द्रव्याणां गुणानां कर्मणां च परस्परं आरम्भानारम्भाभ्यां भेदमाह—द्रव्येष्विति, अत्रारम्भकत्वं द्रव्यानारम्भ-

१ सि. क. निर्विषयतैव । २ सि. क. कर्मागुणा अगुणमक्रियाश्चा० । ३ सि. क. भवत्येव । ४ सि. क. °कर्मत्वा-
दिना । ५ सि. क. °करणं ।

रारम्भक[स्य] नानात्वम्, गुणानामपि संयोगविभागरूपादीनामारम्भकाणां वि[भु]त्वाद्यनारम्भकेभ्यो नानात्वम्, कर्मणोऽवयविद्रव्यसंयोगविभागारम्भिणोऽनारम्भकेभ्यो भेदः, अन्या[ना]रभ्यत्वाच्चाकाशगुणस्य शब्दस्येतरेभ्यो विशेषः, तदभावात्तेषां, विरोधाविरोधकार्यकारणप्रकरणकृते च नानात्वम्, आदिग्रहणात् गुणकर्मणां तदभूतेरिति–द्रव्यमेव द्रव्यं भवति न गुणा न कर्माणि, गुणानामगुणाकर्मत्वात्,
5 कर्मणश्चागुणाकर्मत्वाद्द्रव्येभ्यो विशेषः, सामान्यादीनाञ्चेति, सामान्यस्य सामान्यविशेषाणामन्त्यविशेषाणाञ्चेतरेभ्योऽनारभ्यत्वात्, समवायस्य च, आश्रयित्वे सत्यपि परस्परतश्च स्वाश्रयस्य स्वानुरूपप्रत्ययाधानहेतुत्वादित्येवमादिविशेषहेतुसद्भावात् सर्वमन्यदेव, ततः किम्? ततस्त्वदुक्तद्रव्यस्वरूपलक्षणभवनानुपपत्तिः–सर्वप्रभेदनिर्भेदं बीजं द्रव्यं तस्यैव द्रव्यस्य तथाभूतशक्तिसन्निहितव्यक्तिभाव इत्येवं स्वरूपलक्षणस्य भवनस्यानुपपत्तिः, द्रव्यभवनभिन्नभवनात्मकत्वात् गुणादीनां द्रव्यान्तराणां सत्तासमवायाद्या-
10 श्रितपदार्थानाम्, इतिशब्दो हेत्वर्थे, तस्मात् कारणादुभयस्यापि–सामान्यस्य द्रव्यभवनस्यैकरूपस्योत्सर्गस्य क्रियाभवनस्य चापवादस्य भूतादिभेदस्याभावः। कथं तर्हि तयोर्भाव इति चेदुच्यते–द्रव्यादिषड्भेदस्य सप्रभेदस्यैव–पृथक् पृथक् स्वरूपस्यैव विशेषधर्मकस्य भावः।

यदपि च तस्य सन्मात्रं तदपि नात्मनैव, यदुच्यते यदयं भवति स्वयमेव यदनेन भूयत इति, नैष पुनर्भावो भवति, कस्तर्हि? अन्येनान्येन भूयते, सोऽन्य एवास्य भावः, सत्ता, येन
15 च भूयते सोऽपि चास्य भावः न केवलं सत्तैव, [यत्]सम्बन्धात् [स]दिति भवति, सापि सत्ता भावः, भावेऽप्युभयता, उत्सर्गात् अपवादात्, सा उत्सृज्यते नियम्यते च द्विविधो हि भाव इति, [अ]भावसम्बन्धिन्या सत्तया द्रव्यगुणकर्मसु सदिति भवति।

---

कर्म विशेषं, आकाशादीनामपि शब्दाद्यारम्भकत्वात्। विभुत्वादीति, परममहत्परिमाणाणुपरिमाणादीनां कस्याप्यकारणत्वादिति भावः। अनारम्भकेभ्य इति, द्रव्यारम्भयोग्यसंयोगाजनकेभ्य इत्यर्थः, केनापि कर्मणा द्रव्यानिष्पत्तेः, उत्तरसंयोगेन
20 विनष्टे कर्मणि द्रव्योत्पत्तेरिति बोध्यम्। शब्दस्य पृथिव्याद्यनारभ्यत्वाद्रूपादिभ्यो विशेषः रूपादीनामन्यानारभ्यत्वाभावादित्याह–अन्यानारभ्यत्वाच्चेति। एवं द्रव्यं कार्यकारणाविरोधि, गुणाः कार्यकारणोभयविरोधिनः, कर्म कार्यविरोधि, तदेवं प्रोक्तहेतुभिर्द्रव्यगुणकर्मणामन्यत्वेन न द्रव्यमेव तथा भवतीत्याह–विरोधेति। द्रव्यादेरित्यत्रादिपदप्रयोजनमाह–आदिग्रहणादिति। द्रव्यमेव द्रव्यलक्षणभाग्भवति न गुणाः कर्माणि द्रव्यलक्षणानि भवन्ति तेषां निर्गुणत्वान्निष्क्रियत्वाच्चेत्याह–द्रव्यमेवेति। सामान्या[दी]नां द्रव्यादिभ्यो विशेषमाह–सामान्यादीनाञ्चेतीति, सामान्यपदेन सत्ता महासामान्यं द्रव्यत्वादयः सामान्य-
25 विशेषा विवक्षिताः, आदिना अन्त्यविशेषाः, समवायश्च, एतेषां नित्यत्वेनानारभ्यत्वादारभ्येभ्यो द्रव्यादिभ्योऽन्यत्वमिति भावः। अत्र भावार्थस्त्वेवं सम्भाव्यते सत्तायाः द्रव्यत्वादीनाञ्च स्वाधारेषु द्रव्यादिषु स्वाश्रयादिभ्यः परस्परतश्च द्रव्यत्वादेः सत् द्रव्यं गुणः कर्म चेत्यादिस्वानुरूपप्रत्ययाधानहेतुत्वात् विशेषः, एवं स्वाश्रयेषु नित्यद्रव्येषु वर्तमानानां विशेषाणां प्रत्याधारं विलक्षणोऽयं विलक्षणोऽयमिति व्यावृत्तिप्रत्ययाधानहेतुत्वात् स्वाश्रयेभ्यः परस्परतश्चान्यत्वम्, तथा समवायस्यापि द्रव्यादिपञ्चसु स्वाश्रयेषु इहेति प्रत्ययाधानसमर्थत्वात् तेभ्योऽन्यत्वम्, सामान्यस्य स्वानुरूपप्रत्ययः अनुवृत्तिप्रत्ययः, विशेषस्य स व्यावृत्तिप्रत्ययः, समवायस्य
30 च स इहेति प्रत्यय इति अनुगतहेतुना सामान्यादीनामन्यत्वमभिहितमिति। पूर्वनयोदितभवनानुपपत्तिं निगमयति–ततस्त्वदुक्तेति। यदपि सर्वप्रभेदनिर्भेदं द्रव्यं यतो भवति स्वयमेव, न त्वर्थान्तरापेक्षया यदनेन भूयतेऽतो भावः स्वयमेवेति तदयुक्तमिति दर्शयति–यदपि चेति। द्रव्यं हि भाव इतीच्छता भवनक्रियासम्बन्धादेव द्रव्यस्य भावत्वमुक्तं स्यान्न स्वतः, अन्यथा

---

१ अन्येनारभ्य विशेष इत्यन्यः पाठो [वि]शेष स्तत्राग्रे दृष्टोऽपि अत्रावश्यकत्वप्रतिभासनाद्योजितः। २ सि. क. °त्वेवादि°। ३ सि. क. °कस्याभावः।

(**यदपि चेति**) यदपि च तस्य सन्मात्रं–स्वरूपसत्त्वं तदपि नात्मनैव–यदुच्यते यदयं भवति स्वयमेव–अर्थान्तरनिरपेक्षं स्वतंत्रम्, भक्त्यन्तरेण[1] तदेव व्यक्तीकरोति यदनेन भूयत इति स्वभावसम्बन्ध इत्यर्थः, अयं त्वयेष्टः स एवास्य भाव इति नैष पुनर्भावो भवति, कस्तर्हि ? अन्येनान्येन भूयते–अन्यापेक्षेण स्वतया तद्भिन्नेन, सोऽन्य एवास्य भावः, कोऽसौ ? सत्ता–महासामान्यम्, येन च भूयते सोऽपि चास्य भावः–सद्व्यपदेशार्हस्य द्रव्यादेः सतोऽपि भावः, न केवलं सत्तैव, यत्सम्बन्धात् भवतीति 5 भवति सापि सत्ताभावः, सच्च द्रव्यादि भवतीत्यर्थः, भावेऽप्युभयता उत्सर्गात् [अपवादात्]–सत्ताया-मपि उभयता–सामान्यविशेषता सोत्सृज्यते नियम्यते च–सोऽप्युत्सृज्यते भावः सर्वगत इति, नियम्यते स्वगत एवेति सत्तान्तरसम्बन्धनिरपेक्षसद्भावे सति मा भूत् सम्बन्धानवस्था, द्विविधो हि भाव इति सर्वस्य वस्तुनः उत्सर्गापवादौ पृथक् पृथक् विभिन्नरूपौ दर्शयति, तद्व्याख्या स्वभावसम्बन्धिन्येत्यादि गतार्थं यावत् द्रव्यगुणकर्मसु सदिति भवति, स्वरूपसत्ता नार्थान्तरमपेक्षते सम्बन्धसत्ता त्वपेक्षत इत्यर्थः। 10

**न तु भवत्येव भावः सद्द्रव्यगुणकर्मवत् सद्द्रव्यादिः, सद्भावसामान्येऽपि भावानां प्रति-स्वं स्वभावभेदात् सत्तास्वतत्त्वासमवायात् स्वरूपसत्तायाः सतामपि सामान्यविशेषसमवायानां समत्वात् स्वसद्भावादेव सतामितरेभ्यो विशेषः ।**

**न तु भवत्येत्यादि,** न तु भावः सत्ता सद्द्रव्यगुणकर्मवत् सद्द्रव्यादिः सद्भावसामान्येऽपि भावानां प्रतिस्वं स्वभावभेदात्–द्रव्यगुणकर्मसद्वैधर्म्यात् सन्न भवति न द्रव्यं भवति न घटादिर्भवति 15 द्रव्यत्वघटत्वादिसम्बद्धद्रव्यादिघटादिवत् न सद्द्रव्यादि भवतीत्यर्थः, किं कारणम् ? सत्तास्वतत्त्वा-समवायात्–सत्तासमवायो द्रव्यत्वगुणत्वकर्मत्वघटत्वादिस्वतत्त्वसमवायो वा सत्तायां यतो नास्ति, "ते

भवति द्रवतीति द्रव्यमिति व्युत्पत्तिप्रदर्शनानवकाशः स्यात्, भ्वादिधात्वर्थप्रवृत्तिनिमित्तधर्मयोगिन एव भावत्वादन्येन धर्मेण भवति न स्वत इत्याशयेन समाधत्ते–**अन्येनान्येनेति** स्वतया[2]–स्वधर्मेण, स्वस्माद्भिन्नधर्मापेक्षं स्वस्य भावत्वं स च धर्मः सत्ता भावपदवाच्येति विज्ञेयम् । सत्तासम्बन्धादेव द्रव्यं भावो भवतीत्यनियमः किन्तु स्वरूपसत्तयाऽपि भावो भवतीत्याह–**येन** 20 **चेति,** न केवलं सत्तैव भाव उच्यते, किन्तु भवनाश्रयं सत्तासम्बन्धि च यत्तदपि भाव उच्यत इति भावः । एवञ्च भावस्यापि सामान्यविशेषता प्रोक्तेत्याह–**भावेऽप्युभयतेति,** सत्तायाः स्वविषयसर्वगतत्वादुत्सर्गता–सामान्यता, सत्तायाः सत्त्वे सत्तान्त-रापेक्षायामनवस्थाप्रसङ्गेन स्वत एव सद्रूपताङ्गीकारात् स्वरूपसत्त्वेन स्वगतत्वादपवादता-विशेषतेत्युभयतेति भावः । एवमेवाह–**सोत्सृज्यत इति** । स्वरूपसत्त्वसम्बन्धसत्त्वरूपतो भावस्य द्वैविध्यदर्शनात् सर्वे भावा एवंविधा इत्याह–**द्विविधो हीति** । द्रव्यादीनां स्वरूपसत्त्वं स्वत एव, संबन्धसत्त्वन्तु सत्तापेक्षयेत्याह–**स्वभावेति,** स्वभावसत्तया सम्बन्धिसत्तया च द्रव्यादौ सद्व्य- 25 पदेश इति भावः । इत्थं स्वरूपसम्बन्धवैलक्षण्यमुक्त्वा विशेषान्तरमाह–**न त्विति** । सत्तापि भवति द्रव्यादिरपि भवतीत्युभयो-र्भावस्य समानत्वेऽपि द्रव्यादिरेव सन् भवति द्रव्यादिर्भवति न तु सत्ता, द्रव्यगुणकर्मरूपात् सतो विलक्षणत्वादिति वर्णयति–**न तु भाव इति,** सद्द्रव्यगुणकर्मवदिति वैधर्म्योदाहरणम् । सामान्यद्रव्यव्यपदेशं विशेषद्रव्यव्यपदेशं वा नार्हतीत्याशयेनाह–**न द्रव्यं भवति न घटादिर्भवतीति** । तात्पर्यमाह–**द्रव्यत्वेति** । यत्र च सामान्यधर्मो विशेषधर्मो वा समवैति स एव सद्व्यादिव्यपदेशार्हो भवति नान्य इति स्वभावभेदे कारणमाह–**सत्तास्वतत्त्वेति** । दृष्टान्तदार्ष्टान्तिकयोर्हेतुं संघट- 30 यति–**सत्तासमवाय इति** । ननु सत्तासमवायादेव द्रव्यत्वादिसमवायादेव च द्रव्यादयः सद्व्यादयो भवन्ति न तु सद्व्यादि-

१ सि. क. व्यभक्त्यन्तरेण । २ सि. क. स्वतया । ३ सि. क. सच्च भवति । ४ सि. क. न हि ।

हि द्रव्यादयः सत्तास्वतत्त्वसमवायात् सद्द्रव्यघटा[illegible] भवन्तीत्येषोऽपि विशेषः। किमर्थं सत्तास्वतत्त्वसमवायाद्द्रव्यादि सद्भवति न पुनर्द्रव्यादिसमवायात् सत्तादिस्वतत्त्वानि द्रव्यादीनि न भवन्तीति चेत् उच्यते स्वरूपसत्तायाः सतामपि सामान्यविशेषसमवायानां समत्वात् स्वसद्भावादेव सतां सम्बन्धसद्भावशून्यानां सत्तादीनामितरेभ्यो विशेषः।

5 स तु सम्बद्धद्रव्यादीनामस्तीति दर्शयति–

[illegible]ण्डवस्त्वर्थान्तर[illegible]तसत्तादिसमवायादेव स्वा[illegible]रूपा विशेष्ये [illegible]द्धिरनुप्रवर्त्तते न त्व[illegible]हीते विशेषणे, विशेषप्रत्ययस्य गगनादि[illegible]न्धिष्व[illegible]भाववत्।

[illegible]ण्डवस्त्वर्था[illegible]न्त[illegible]त्यादि गतार्थं यावद्विशेष्ये बुद्धिरनुप्रवर्त्तेत इति, विशेषणस्व[illegible]प्रत्ययनिमित्तत्वाद्विशेषणानाम्, सत्तादिसम्बन्धानुरूपप्रत्ययहेतुत्वं सामान्यादीनाम्, स्वाश्रयेषु दण्डनिमित्तदण्डिप्र-
10 त्ययवत् द्रव्यगुणकर्मणाम्, न त्वगृहीते विशेषणे, स्वेत्यादिविशेषप्रत्ययस्य गगनादिष्वतत्सम्बन्धिष्वभाववदिति।

एवमेव ह्युभयस्येवोभयप्राधान्यस्यापि विधिः, अत्यन्ताव[illegible] पदार्थ[illegible]भेदाना[illegible] न तु पूर्वनयेष्टः, अस्वातन्त्र्ये कर्त्तृत्वाभावात्, अस्माभिस्त्वदनुकम्पयाऽभ्युपगतेऽपि कर्त्तृत्वे [illegible] च प्राधान्यमिति विधानात् क्रियायाः प्राधान्याविधानाद्भावो न भवितुमर्हति।

15 (एवमेवेति) [1]एवमेव ह्युभयस्येवोभयप्राधान्यस्यापि [2]विधिर्यथाऽस्माभिरुक्तस्तथैव सामान्यस्य विशेषस्य च विधिः सम्भवति, अत्यन्तविशेषरूपत्वात् पदार्थषड्भेदानाम्–तथा सामान्यविशेषद्वयविधिरपि भवितुमर्हति, न तु पूर्वनयेष्टो द्रव्यक्रिययोरुभयप्राधान्याभावात्, अस्वातंत्र्ये कर्तृत्वाभा-

समवायात् सत्ताद्रव्यत्वादय इति कुत इत्याशङ्कते–किमर्थमिति। सद्द्रव्यादयो हि सत्तासमवायाद्द्रव्यत्वादिसमवायात् सद्द्रव्यादयो भवन्ति सत् द्रव्यं गुणः कर्म पृथिवी रूपमित्यादि, तथा यदि सत्ताद्रव्यत्वादयः सद्द्रव्यादयो भवेयुस्तर्हि सत्तासमवायो द्रव्यत्वा-
20 दिसमवायश्च स्यात्, न चैव इष्यते सामान्यविशेषसमवायानां स्वरूपसत्त्वस्यैवैकस्याभिमतत्वात्, स्वसद्भावादेव स[illegible]त्तादित्याशयेन समाधत्ते–स्वरूपसत्ताया इति। सोऽयं विशेषः सद्द्रव्यादीनामस्तीति दर्शयति–द[illegible]वस्त्विति। [illegible]ण्डादर्थान्तरभूतस्य दण्डस्य सम्बन्धात् पुरुषे यथा स्वानुरूपा दण्डीति विशिष्टबुद्धिरुद्भवति तथा द्रव्याद्यर्थान्तरभूतसत्तादिसमवायात् द्रव्यादौ विशेष्ये स्वानुरूपा सत् द्रव्यमित्यादिप्रतीतिरुपजायते इत्याशयं वर्णयति–[illegible]। न हि केवलमस्तित्वमात्रेण [illegible] भवितुमर्हति, किन्तु ज्ञातं सत् यत् स्वाकारानुरक्तया बुद्ध्या विशेष्यं रंजयति तद्विशेषणं भवति, यदा च विशेषणं न गृहीतं तदा
25 कथं विशेष्ये स्वानुरूपां बुद्धिं जनयेत्, स्वस्यैवाज्ञातत्वात्, यथा अन्तराले आकाशे दिग्द्रव्ये वा अतत्सम्बद्धे घटत्वासम्बद्धे घट इत्यादिस्वानुरूपविशेषप्रत्ययस्याभाव इत्याशयेनाह–न त्वगृहीत इति। एवं सत्ताद्रव्यत्वादिगगनादिद्रव्याणामित्यायुक्तरीत्यैव सामान्यविशेषयोर्विधिर्भवितुमर्हति न तु पूर्वनयात[illegible]तोभयविधिरत्यन्ताभ[illegible]रूपत्वा[illegible] प[illegible]र्थानामिति ज्ञापयति–एवमेव हीति यथाऽस्माभिरुक्तस्तथैवेत्यर्थः। यथाऽस्मदुक्त[illegible]वोभयविधिर्युक्तस्तथैवात्रैवोभयस्य प्राधान्येन विधानमपि सम्भवति, पदार्थानामत्यन्तभिन्नत्वेन सर्वेषां प्राधान्येन प्र[illegible]–उभयप्राधान्यस्यापीति, अतो न पौनरुक्त्य-
30 मिति ध्येयम्। सामान्यविशेषोभयविधिः षट्पदार्थानामत्यन्तभेद[illegible]यामेव सम्भवति न तु गुणप्रधानभावे तत्रैकस्यैव विधिसम्भवादित्याशयेनाह–अत्यन्तेति। कथं पूर्वनये न सम्भवतीत्यत्राह–अस्वातंत्र्ये इति स्वतंत्रो हि कर्ता, क्रिया तु गुणभूतत्वान्न स्वतंत्रभूता, द्रव्यस्यैव च तथाभूतेरभ्युपगमादिति भावः। कर्तृत्वाभ्युपगमेऽपि द्रव्य[illegible]भयाभावत्वं न अवस्थेय,

१ सि. क. 'स्वतत्त्वास०। २ सि. क. एवमेवायुभयस्यैवो०। ३ सि. क. विधे०।

वादिति, अस्माभिस्त्वदनुकम्पयाऽभ्युपगतेऽपि कर्तृत्वे—स्वतंत्रभवनात्मके द्रव्यस्यैव च प्राधान्यमिति विधानात् क्रियायाः प्राधान्याविधानात् भावः—द्रव्यं कर्तृ स्वातंत्र्यात्, न क्रिया प्राधान्याभावादित्येवं युक्त्या प्राप्तत्वेऽपि त्वदनुकम्पया तयोः कर्तृत्वे वाऽभ्युपगतेऽपि न भवितुमर्हति, उभयप्राधान्याभावादित्यर्थः ।

किं कारणमुभयप्राधान्यं नास्तीति चेदुच्यते— 5

तथाभूतार्थविषयत्वात् सन्निधानस्य तथातथाभवद्भावाभिमुखसन्निहितघटादिभवनगेहवत् क्रियया न किञ्चित् प्रयोजनम्, सम्भाव्यमानमपि प्रयोजनमभिव्यक्तिमात्रं स्यात्, तस्या अपि तद्भवनतंत्रत्वाद्द्रव्यभवनस्यैव प्राधान्यस्योपकारमात्रार्थत्वाद्व्यक्तेरप्राधान्यम् ।

(तथाभूतार्थेति) तथाभूतार्थविषयत्वात् सन्निधानस्य—द्रव्यं हि सन्निहितभवनमिष्यते तथातथाभवद्भावाभिमुखसन्निहितघटादिभवनगेहवत्—गेहसन्निहितघटवत् सर्वथा तेषां क्रियाऽव्यक्त्याभिमतानां द्रव्ये सन्निधानाभ्युपगमात् प्रदीपेनेव गेहे सन्निहितानां घटादीनां क्रियया न किञ्चित् प्रयोजनम्, सम्भाव्यमानमपि प्रयोजनमभिव्यक्तिमात्रं स्यात् तस्या व्यक्तेरपि तद्भवनतंत्रत्वात् द्रव्यभवनस्यैव प्राधान्यस्योपकारमात्रार्थत्वात् व्यक्तेरप्राधान्यमिति । 10

अयन्तूभयप्रधानविधिः, आरब्धानारब्धद्रव्याणां पार्थिवपरमाणुद्व्यणुकादीनां भावसम्बन्धाभिव्यङ्ग्याभेदेऽपि सति स्वभावादिभेदाम्नानात्वम्, भावसत्त्वस्यात्यन्तव्यञ्जनस्वातंत्र्यात्, अन्यथा भूतेः, यद्येवं न स्यान्नैव स्यात् सत्तासम्बन्धराहित्यात् खपुष्पवत्, पृथिव्युदकज्वलनपवनगगनकालदिगात्ममनसां द्रव्याणामपीतरेतराभावात्मनाऽसतामेव सत्तातो द्रव्यत्वादन्योऽन्यतश्च तेन तेन प्रकारेणान्यता, अन्यत्व एवेतरेतरासतां भावादिसम्बन्धः, गुणकर्मणोरप्येवमेव, न चास्य भावस्यान्यस्माद्व्यक्तता, स्वपरप्रकाशहेतुत्वात् [illegible], तस्मात् स्वभावसद्भावेन सत एवासत्त्वं सम्बन्धसद्भावाभावात्, नेतरेतरासत्त्वात्, यथा गुणोऽगुण इति, एवं 15 20

उभयोः प्राधान्यानङ्गीकारादित्याह—अभ्युपगतेऽपीति । उभयविधप्रयोजकोभयप्राधान्यस्याभावे कारणमाह—तथाभूतेति । तेन तेन क्रमसहभाविभवनेनाविनाभाविसन्निहितवस्तु द्रव्यं भवति, सदक्रमभाविनो हि भावा द्रव्ये सन्निहिताः सत्कार्यवादाङ्गीकारात्, तथा च तदेव द्रव्यं तेन तेन प्रकारेण भवति ततश्च किं क्रियया, न हि गृहे विद्यमानस्य घटस्य प्रदीपः किमपि करोति, ततश्च क्रियायाः कर्तृत्वाभावाद्भावत्वं नास्त्येवेति दर्शयति—द्रव्यं हीति । यथा गृहे सर्वं वस्तु सन्निहितं तथा द्रव्येऽपि सर्वं वस्तु सन्निहितमिति अविद्यमानसम्पादकक्रियाया व्यर्थत्वेत्याह—गेहेति । यथा प्रदीपो विद्यमानस्यैव घटादेर्व्यञ्जकस्तथा क्रियापि द्रव्ये विद्यमानस्यैव भावस्य व्यञ्जिकाऽस्तु इत्यत्राह—सम्भाव्यमानमपीति । तथापि तस्या अप्राधान्यमेवेत्याह—तस्या इति, तस्या अभिव्यक्तेरपि द्रव्यं यदा तेन तेन प्रकारेण भवति तदैवाभिव्यञ्जकत्वात् द्रव्यभवनमेव प्रधानं क्रियाकृताभिव्यक्तिरप्रधानम्, न हि गृहे घटाभवने प्रदीपोऽभिव्यञ्जयति, क्रमयोगपद्येनानन्तकार्यभवनशक्तिमद्द्रव्यं तथाभवतश्च भावान् क्रिया प्रकाशयतीति द्रव्यस्य तथाभवनापेक्षित्वेन क्रियाया अभिव्यञ्जिकाया अप्राधान्यमिति भावः । इदानीं स्वमतेनोभयप्राधान्यविधानं सम्यक्त इति दर्शयति—अयन्त्विति, पार्थिवपरमाण्वादिद्रव्याणि अनारब्धद्रव्याणि, नित्यद्रव्याणि, द्व्यणुकादिद्रव्याणि आरब्धद्रव्याणि कार्यद्रव्याणीति योजना । अस्मिन् हि नये द्रव्यादिषट्पदार्था अधिकृताः, तदधिकारानुसारेणैव प्राधान्येन 25 30

१ सि. क. °कम्पाभ्युप० । २ सि. क. स्वातंत्र्यात् क्रिया । ३ सि. क. प्राप्तेऽपि ।

सामान्यं सामान्यमेव, योऽप्यसौ स्वभावसद्भावः कार्यद्रव्यादीनां यतो भावसम्बन्धानपेक्ष-स्तस्मादेवासन्निति न, किन्तर्हि ? तन्न भवतीति भवत्येव अभूत्वा भावात् भूत्वा च भावात् सदसद्भावद्वैरूप्यम्, किञ्चित्तु परमाण्वाकाशकालदिगात्मनोद्रव्यादि भवदेव भवति स्वसद्भा-वादेव, सामान्यविशेषेऽप्युभयता कर्मणि च, स्वभावसम्बन्धसद्भावाभ्यां भेदाभेदौ, एवं 5 साधर्म्यवैधर्म्याभ्यां षट्पदार्थेषु वैशेषिकमिति।

(**अयन्त्विति**) अयन्तूभयप्रधानविधिरिति निगमनम्, तुशब्दो विशेषणार्थः, एवं ह्यसौ विशिष्टार्थाधिकारापरित्यागेनैव सामान्यविशेषयोर्विधिरिति, कीदृश इति चेत् तन्निदर्शयति—आरब्धा-नारब्धेत्यादि सप्रभेदषट्पदार्थपरस्परान्यत्वप्रदर्शनार्थो ग्रन्थो यावत् कर्मणि तु स्वभावसम्बन्धसद्भावा-भ्यामिति, प्रायो गतार्थः, तथापि किञ्चिदुच्यते—पार्थिवादिपरमाणुद्व्यणुकाद्यारब्धानामपि स्वभावभेदा-10 द्देशकालाभेदेऽपि नानात्वम्, परमाण्वाकाशादीनामनारब्धानाञ्च तत एव, भावसम्बन्धाभिव्यक्त्यभेदे-ऽपि सति, आरभ्याणाञ्च कादाचित्कत्वादितरेषां नित्यत्वाद्विशेषः, भावसत्त्वस्य—सत्तासत्त्वस्य स्वभावसद्भावेऽपि [वि]शेषः, कस्मात् ? अत्यन्तव्यञ्जनस्वातंत्र्यात्—इतरे व्यज्यन्ते स तु व्यनक्त्येवेति, अन्यथा भूतेः—एवमन्येन प्रकारेण भवनात् सर्वत्र सन्निहितमेव भवतीत्यभावादन्यथाऽभूतेरिति, यद्येवं भावव्यञ्जनस्वातन्त्र्यं न स्यात्—नैव स्यात् सत्तासम्बन्धरहितत्वात् खपुष्पवत्—भावो हि सद्भावसद्व्यञ्ज-15 नस्वातंत्र्याभावात् खपुष्पवन्न स्यादिति, पृथिव्युदकेत्यादि, एतान्यपि द्रव्याणि इतरेतराभावात्मना न सन्ति, असतामेव सत्तासम्बन्धात् सत्त्वं भवति द्रव्यसत्त्वसम्बन्धाद्द्रव्यत्वं भवति, ततश्च सत्तातो द्रव्यत्वाच्चान्योऽन्यतश्च तेन तेन प्रकारेणान्यता, अन्यत्व एवेतरेतरासतां भावादिसम्बन्धः—अन्यत्व एवासति सत्त्वमिति, गुणकर्मणोरप्येवमेवेति, भावगुणत्वकर्मत्वादिभिः सम्बन्धात् इतरेतरासतामेव सद्गुणकर्मत्वान्यत्वानि, एवं भावोऽसतां सम्बन्धात् सत्त्वं जनयति द्रव्यादीनामित्युक्तम्, तथा 20 किं भावस्य सम्बन्धोऽन्येन जन्यते, नेत्युच्यते—न चास्येत्यादि, स हि स्वयं सम्बन्धादन्येषां सदभिधा-

सामान्यविशेषयोर्विधानं प्रदर्श्यत इति द्रव्यक्रियाभवनविधानाद्विशिष्टमिति व्याचष्टे—**तुशब्द इति**। कार्यद्रव्याणामकार्यद्रव्या-णाञ्च सत्तारूपेणाभेदेऽपि पृथिवीत्वादिस्वरूपभेदाद्भेदः तथा नित्यत्वानित्यत्वाभ्यां वा भेदः इति दर्शयति—**पार्थिवेति** तत एव स्वभावभेदादेवेत्यर्थः। सत्तासम्बन्धस्य सर्वत्राविशेषतया तेनाभेदेऽभिव्यक्ते सत्यपीत्याशयेनाह—**भावेति**। कादाचित्क-त्वात्—अनित्यत्वादित्यर्थः। सर्वेषां स्वभावतः सत्त्वेऽपि सत्तासम्बन्धेनैव सत्त्वं तस्या अभिव्यक्तीकरणे अत्यन्तं स्वातंत्र्यादि-25 त्याह—**भावसत्त्वस्येति**। स्वातंत्र्ये हेतुमाह—**अन्यथेति** कारणेऽसत एव कार्यस्य भवनाङ्गीकारादिति भावः, सन्निहितमेव-कारणे सन्निहितमेव कार्यमित्यर्थः। यदि वस्तुनः सद्रूपतया व्यञ्जने सत्तायाः स्वातंत्र्यं न स्यात्तर्हि वस्तु सदेव न स्यात् सत्ता-सम्बन्धाभावादित्याह—**यद्येवमिति**। असती पृथिवी जलाद्यात्मना, असज्जलादि पृथ्व्यात्मना इत्येवमितरेतरात्मनाऽसतामेव पृथिव्यादीनां सत्तासम्बन्धात् सद्रूपता द्रव्यत्वादिसम्बन्धाद्द्रव्यादिरूपता सत्ताद्रव्यत्वाद्योस्तद्वतोश्च परस्परं भेदः पूर्वमसता-मेव भावत्वादिसम्बन्धादित्याह—**एतान्यपीति**। एवं गुणादीनामितरेतरात्मनाऽसतां [illegible] सद्गुणादिरूपते-30 त्याह—**गुणकर्मणोरिति**। भावः सत्ता सा कथं सती, अपरसत्तासम्बन्धात् सत्त्वेऽनवस्थाप्रसङ्गादित्यत्राह—**किं भावस्येति**, स्वरूपत एव सत्तायाः सद्रूपता, स्वतस्सद्रूपत्वाभावेऽपरत्र सत्प्रत्ययाभिधानहेतुत्वासम्भवात्, तस्मात् प्रदीपवत् स्वस्मिन् परत्र

१ सि. क. व्यञ्जनास्वातंत्र्ये वन। २ सि. क. भावादिसम्बन्धाभ्यन्य एवा०। ३ सि. क. सत्वमन्यवत्व एवेति।

नप्रत्ययहेतुर्नान्यस्मात् सदभिधानप्रत्ययौ लभते, स्वपरप्रकाशहेतुत्वात् प्रदीपवत्—न हि प्रदीपो घटादि-प्रकाशनसमर्थः स्वप्रकाशने घटादीनपेक्षते तथा सत्तापि, तस्मात्तस्य स्वभावसद्भावेन सत एवासत्त्वं सम्बन्धसद्भावाभावात्, नेतरेतरासत्त्वात्, यथा गुणोऽगुण इति नास्य गुणोऽस्तीत्यगुण उच्यते, न तु गुणो न भवतीति, कस्मात् ? गुणान्तरसम्बन्धाभावात्, न स्वयमगुणत्वादिति, एवं सामान्यं सामान्यमेवेति गतार्थम्, एवं तावत्स्वत एव भावः सत्त्वान्तरानपेक्षः सन्, योऽप्यसौ स्वभावसद्भावः का- 5
र्यद्रव्यादीनां परतो भावसम्बन्धादादेयः तस्मादेवासन्निति न, किं तर्हि ? तत्र भवतीति भवत्येव, अभूत्वा भावात् भूत्वा च भावात् कार्यस्य, स्वसद्भावेनैवासत्सद्भवति, सदप्यसद्भवतीति तस्य स्वसद्भावस्य कार्यस्य सदसद्भावद्वैरूप्यम्, तदतत्समर्थविकल्पत्वादेकपुरुषपितृपुत्रत्वादिवदिति भावितमेव, तस्मात् सर्वमन्यथाऽन्यथैव सामान्यविशेषात्मकं भवति, किञ्चिन्त्वित्यादि—इदं पुनर्भवत्येव भवति स्वसद्भावादेव, नाभूत्वा, न सत्त्वसम्बन्धात् परमाण्वाकाशकालदिगात्ममनोद्रव्यादि, आदिग्रहणात् 10
समवायविभुपरिमण्डलपरमाणुगुणादि, सर्वत्र चेतरासत्त्वा[द]न्यथात्वमिति विशेषः, स्वपरभावसत्त्वं सामान्यम्, विशेषेऽप्युभयतेति, सामान्यविशेषाः द्रव्य[त्व]गुणत्वकर्मत्वादयः, अन्त्यविशेषा योगिनामेकाकाशदेशस्थानामन्यत्वकराः, कर्मणि च स्वभावसद्भावेन कर्मत्वसम्बन्धसद्भावेन स्वेतरेभ्यो भेदाभेदौ एवं द्रव्यगुणयोर्द्रव्यत्वगुणत्वसम्बन्धसद्भावात् स्वभावसद्भावादित्येवमादिसाधर्म्यवैधर्म्याभ्यां षट्पदार्थेषु

---

च सत्प्रत्ययव्यवहारौ जनयतः, तत एव सत्ता पृथिव्यादिवन्नेतरेतरात्मनाऽसती सती भवति, अपि तु सदा सद्रूपैवेत्याशयेनाह— 15
**सहि स्वयमिति**। सत्ताया इतरेतरासद्भावाभावे कारणमाह—**यथा गुण इति** गुणे गुणान्तराभावात् गुणोऽगुण उच्यते न त्वसौ गुणो न भवतीति, स्वतस्तस्य गुणत्वात्, एवं सत्तादिसामान्यमपि तत्र सामान्यान्तराभावादेव निःसामान्यमुच्यते न तु स्वयं सामान्यं न भवतीति स्वतस्तस्य सामान्यत्वादिति भावः। कार्यद्रव्यादीनां सदसद्भावद्वैरूप्यं दर्शयति—**योऽप्यसाविति**, कार्यद्रव्यादीनि स्वरूपसन्त्यपि परतः सत्तासम्बन्धात् सन्ति भवन्तीति स्वरूपसत्त्वं तेषामसदिति तान्यसद्रूपाण्येवेति शङ्कितुरभिप्राय इति भाति। समाधत्ते—**तत्रेति**, अभूत्वैव कार्यं भवतीति न, किन्तु भूत्वाऽपि भवति, प्राक् सत्तासम्बन्धाभावात् पश्चात्तत्सम्बन्धाद- 20
भूत्वा भवनं पूर्वं स्वरूपसत्त्वात् ततः सत्तासम्बन्धात् सत्त्वाद्भूत्वा भवनं तस्मिन्पक्षे तस्मिंश्च विकल्पे समर्थत्वात् स्यादन्यत् स्यादनन्यत् कारणात् कार्यमिति, तथा कारणं कार्यं सदनन्यत् असदन्यदिति पक्षे समर्थोऽविकल्पोऽस्तीति पूर्वमुक्तत्वादिति भावः। तस्मात् सर्वं कार्यं स्वातिरिक्तसामान्यादिसम्बन्धात् सामान्यविशेषात्मकं भवतीति दर्शयति—**तस्मादिति**। नित्यवस्त्वपेक्षयाऽऽह—**इदं पुनरिति** परमाण्वाकाशकालदिगात्ममनोद्रव्यादीत्यर्थः, परमाण्वादिद्रव्यादीनामाकाशाद्यन्यद्रव्यात्मनाऽसत्त्वमपीत्याह—**सर्वत्र चेति**। सामान्यविशेषेऽप्युभयतेति मूलं व्याचष्टे—**स्वपरेति** सामान्यपदेन महासामान्यविवक्षणं तस्य स्वरूपसत्त्वे सति, 25
परभावस्य सत्त्वापादकत्वात् स्वपरभावसत्त्वमितरेतरात्मना चासत्त्वमेवं विशेषस्यापि स्वरूपसत्त्वादितरेतरात्मना चासत्त्वा-दुभयतेत्याशयः प्रतिभाति। सामान्यपदेन सामान्यविशेषस्य विवक्षणं त्वाह—**सामान्येति**, अपरत्रानुवृत्तिव्यावृत्तिहेतुत्वादुभय-तेति भावः। विशेषपदार्थमाह **अन्त्येति**, अन्तेषु भवा अन्त्याः स्वाश्रयव्यावर्त्तकत्वाद्विशेषाः, तुल्याकृतिगुणक्रियेषु नित्यद्रव्येषु योगिनां येभ्यो निमित्तेभ्यो विलक्षणोऽयं विलक्षणोऽयमिति मतिरुदेति तेऽन्त्या विशेषाः स्वरूपसन्तोऽन्यव्यावर्त्तकाः। इत्थं षट्पदार्थानां सामान्यविशेषता सदसद्रूपताऽन्यानन्यरूपतेत्यादि साधर्म्यवैधर्म्ये प्रदर्शिते, इत्थमेव च विधिनियमयोर्विधानं सम्पद्यत 30
इत्युपसंहरति—**इत्येवमादीति** यथोपलब्धग्रन्थाधारेण संशोध्य व्याख्यातोऽयं ग्रन्थो न तु वैशेषिकाशयेनेति विज्ञेयम्। अथ

---

१ सि. क. सत्येवासत्कम्। २ सि. क. सत्त्वान्तरानपेक्षः। ३ सि. क. °द्भावेव। ४ सि. क. सत्त्वान०।
५ क. °गुण त्वाकर्म त्वादयः, सि. गुण त्वादयः। ६ सि. क. °स्थानामन्यत्व०।

विशेषा एव वैशेषिकं विशेषप्रयोजनं वा वैशेषिकमिति विधिनियमयोर्विधिरुपपद्यते, न त्वदिष्टैकवस्तुनि विधिनियमविधिरिति ।

अत्राह किमयं द्रव्यास्तिकभेदः? पर्यायास्तिकभेदो वा? इत्यत्रोच्यते–

**नैगमैकदेशत्वात् द्रव्यास्तिकोऽयम्, द्रव्यमपि द्रव्यत्वसामान्यविशेषसम्बन्धात्, जातिः**
5 **शब्दार्थः, अन्त्यञ्च पदं वाक्यार्थः, स च पूर्वपदज्ञानाहितसंस्कारापेक्षोऽन्त्यपदप्रत्ययः ।**

(**नैगमैकदेशत्वादिति**) नैगमैकदेशत्वाद्द्रव्यास्तिकः [अयम्] द्रव्यमस्तीत्यस्य मतिः, न पूर्ववद्द्रव्यमेवास्ति वाद्यन्तरवत् सदसद्वास्त्येव द्रव्यमिति निगमशक्तो निरुक्तार्थभेदः, तेषु द्रव्यमपीत्यादि–द्रव्यत्वसामान्यविशेषसम्बन्धाद्द्रव्यं न भव्यद्रवणगुणसन्द्रावसमुदायाद्यात्मकम्, जातिः शब्दार्थ इति–सर्वशब्दानां जातिवाचित्वमेव, आकाशादीनामपि जातिवज्जातिरित्युपचारात्, अन्त्यञ्च पदं
10 वाक्यार्थः–यथा देवदत्तः काष्ठैः स्थाल्यामोदनं पचतीत्यत्रान्त्येन पचतिपदव्यञ्जनेन सह परस्परसंसर्गलक्षणस्यान्वयव्यतिरेकवतोऽर्थस्य परिपूर्णत्वात्, स च वाक्यार्थः पूर्वपदज्ञानाहितसंस्कारापेक्षोऽन्त्यपदप्रत्ययः, प्रत्येकं पदैर्हि स्वांशार्थविपर्ययैरुत्पादितानि विज्ञानानि संस्कारमादधति, अतोऽन्त्यपदज्ञानं पूर्वपदज्ञानसंस्कारपरिपाकवशात् सम्बन्ध्यन्तरव्यवच्छेदि परस्परसंसर्गविषयमुपजायत इति सम्बन्धान्वयव्यतिरेकवानन्त्यपदार्थव्यक्तिर्वाक्यार्थ इति, यथाह–'नादैराहितबीजायामन्त्येन ध्वनिना सह ।

---

15 प्रधानभूते नयद्वये कस्मिन्नन्तर्भावोऽस्य नयस्य, तत्र यदि द्रव्यास्तिकनये तर्हि तस्यापि त्रैविध्यात् कतमस्मिन् समावेश इत्यत्राह–**नैगमेति** । अत्राभिप्रेतं द्रव्यास्तिकशब्दार्थं दर्शयति–**द्रव्यमस्तीति** निरवधारणा व्युत्पत्तिरभिमता, नैगमनयस्य हि पर्याया अपि विषया इति, न तु वादान्तरे यथा सदेव असदेव वा द्रव्यं नास्तीति वेति प्ररूप्यते तद्वदिति, नैगमनयशक्त्यैवात्र व्युत्पत्तिर्द्रव्यशब्दस्येति भावः । द्रव्यशब्दार्थोऽपि द्रव्यत्वजातिविशिष्ट एव, न तु भव्यं द्रवणं गुणसन्द्रावो गुणसमुदायो वाऽन्तराभिमत इत्याह–**द्रव्यमपीति** । पदस्यार्थमाह–**जातिः शब्दार्थ इति**, गोत्वादिसामान्यमेव गवादिशब्दार्थो न व्यक्तिः आनन्त्या-
20 व्यभिचाराच्च, यत्र सामान्यं नास्ति यथाऽऽकाशादौ तत्र तद्वाचकाः शब्दा आकाशत्वादिधर्मविशेषे जातित्वमुपचर्य तानेव बोधयन्ति, अतच्छब्दस्य तच्छब्देनाभिधानमुपचारः । वाक्यार्थं दर्शयति–**अन्त्यञ्चेति** वाक्यार्थः वाक्यशब्दार्थः अन्त्यपदस्यैव वाक्यत्वम्, तत्कथमित्यत्राह–**यथेति**, आदौ प्रथमपदज्ञानं तेन संस्कारः प्रभवति, ततो द्वितीयपदज्ञानं ततः पूर्वपदज्ञानजनितसंस्कारसहितेन द्वितीयपदज्ञानेन विशिष्टसंस्कारो जन्यते, ततश्च तृतीयपदज्ञानं ततश्च पूर्वसंस्कारसहितेन तेन विशिष्टसंस्कारोदयः, इत्थं यावदन्त्यपदज्ञानं पूर्वपूर्वपदज्ञानजनितसंस्कारसहितं जायते, एवञ्च तथाविधपूर्वपदज्ञानजनितसंस्कारसहितोऽन्त्यपद-
25 प्रत्यय एव वाक्यपदेनाभिधीयत इत्याशयेनाह–**स चेति**, भेदः संसर्गो वा वाक्यार्थो भवति, तत्र भेदः पदार्थानां परस्परं व्यवच्छेदः, संसर्गः पदार्थानामन्योऽन्येनानुरञ्जनं तदेतत्सूचयति–**सम्बन्ध्यन्तरेति**, सम्बन्ध्यन्तरव्यवच्छेदीत्यनेन भेदः परस्परसंसर्गविषयमित्यनेन च संसर्गः सूचितः । उक्तार्थे संवादमाह–**नादैरिति** नादैर्ध्वनिभिराहितं समर्पितं बीजं त्वक्परिच्छेदयोग्यसंस्काररूपं यस्यां बुद्धौ तस्यां आवृत्तः अभ्यस्तः परिपाको यस्याः तस्यां, प्रथमेन ध्वनिना किञ्चिद्भावनाबीजमाहितं तेन च कश्चित् परिपाकः कार्यजननशक्तिविशेषः आहितः, एवं द्वितीयतृतीयादिना, तत उद्बुद्धसंस्कारायां बुद्धौ अन्त्येन ध्वनिना सह अन्त्यध्वन्यवधारणसम-
30 कालं शब्दोऽवधार्यते, यदाऽन्त्यो ध्वनिरवधार्यते तदा गौरित्येवं शब्दोऽवधार्यते इति कारिकार्थः । एवंविधं पदं वाक्यं वा गृहीतसङ्केतस्य पुरुषस्य वाक्यार्थप्रत्ययजनकं न त्वगृहीतस्य, यथा म्लेच्छेन यवादिपदस्य कङ्ग्वादौ प्रयुक्तस्य तदर्थापरिज्ञानमित्याशये-

---

१ सि. क. वाद्युत्तरवद् । २ सि. °सामान्यविशेषणसम्बन्धत्वा द्रव्यं, क. सामान्यविशेषविशेषणसंबंधं वा द्रव्यं । ४ सि. क. सम्बन्धोन्व० ।

आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥' ( **वाक्य० कां० १ श्लो० ८५** ) इति, स च कृतसङ्केतेरेव पदादिशब्दार्थज्ञस्य पुरुष[स्य]प्रत्ययहेतुर्वाक्यार्थः शब्दो वा, नाकृतसङ्केतेः, म्लेच्छप्रयुक्तशब्दार्थापरिज्ञानवत् ।

नैताः स्वमनीषिका उच्यन्ते किं तर्हि ? अस्य नयस्य यतो निर्गमः–

**तन्निर्गमसूत्रं 'इमाणं भंते' इत्यादि यावत् 'संठाणपज्जवेहिं' ( जीवा० ३–१–७८ ) इति भेदवचनात्, वर्णादिपर्यवादिषु सङ्गृहीतसमासद्वयत्वात् वर्णः पर्यवः समन्ताद्भवितैकवाक्यभावात् वर्णस्यैव परितो भावाद्गमनाच्च, वर्णेभ्य एव गुणान्तरं चित्रवर्णः पाकजो वा तदारम्भनियमादेव पृथिव्यादिषु भवति समन्ताद्गच्छति वा घटादीनि वा द्रव्याण्यारब्धानि तैरप्यन्यारब्धद्रव्याणि प्रागभावप्रध्वंसात्मकानि वर्णाद्यात्मकान्येव च गृह्यन्ते, तस्मात्तैर्घटाद्यात्मभूतैर्वर्णादिपर्यवैरशाश्वती रत्नप्रभा, वर्ण एव च पर्यवो यथासम्भवं श्यामादय आरब्धानारब्धद्रव्यगताः कारणगुणपूर्वकाश्चतुर्विधे पार्थिवेष्वेव पाकजाः तैः, एवं गन्धादिभिरपि ।** 5 10

( **तदिति** ) तन्निर्गमसूत्रं 'इमाणं भंते' इत्यादि यावत् 'संठाणपज्जवेहिं' इति, एतमेवागमं भेदवचनादिति हेतुत्वेनाह नयचक्रकारः, व्याचष्टे च–वर्णादिपर्यवादिष्वित्यादि, पर्यायशब्दस्य परिगमनार्थस्य पर्यवशब्दस्य भाववाचिनो ग्रहणात्, वर्णादीनि पर्यवाणि यस्मिन् समन्ततो भावः, अवतेर्धातोर्भावार्थस्य रक्षणादिदण्डके पाठात्, वर्णादय एव पर्यायाः पर्यवा इति कर्मधारयो वा सरूपैकशेषत्वात्–सङ्गृहीतसमासद्वयत्वात् समन्ताद्गमनत्वात् समन्ताद्भावत्वात् पर्यायाणां पर्यवाणाञ्च, अत्र केनार्थेन पर्यायपर्यवार्थयोरेकस्योक्तौ द्वितीयस्यापि सैव निरुक्तिरिति मन्यमान आह–वर्णः पर्यवः समन्ताद्भवितैकवाक्यभावात् द्रव्यगुणकर्मणां सप्रभेदानां सत्तासमवायसम्बन्धप्रधानानां संसृष्टरूपाणामेकवाक्यभावादिति बहुव्रीहिं दर्शयति–वर्णस्यैव परितो भावाद्गमनाच्चेति, कथं पुनस्तत्परिगमनं पर्यवनञ्चेति ? 15

नाह–**स चेति** । एतन्नयमूलभूतार्षवचनमुपदर्शयति–**तन्निर्गमसूत्रमिति** । पृथिव्यादेः शाश्वताशाश्वतत्वप्रतिपादनाय 20 प्रोक्तमिदं वचनं वर्णादिपर्यायैरशाश्वतत्वप्रतिपादनाद्भेदवचनमेतीति, अत्रार्थे मूलं भवतीति मत्वाऽऽह–**एतमेवेति** । वर्णपर्यवादिशब्दस्य बहुव्रीहिकर्मधारयोभयसमासपरत्वमाह–**वर्णादीति** । वर्णपर्यवेत्यादौ पर्यवपदेन पर्यायपर्यवयोरुभयोर्ग्रहणं, परितो गमनं पर्यायः समन्ताद्भवनं पर्यव इति दर्शयति–**पर्यायशब्दस्येति** । बहुव्रीहिसमासं दर्शयति–**वर्णादीनीति** । **अवतेर्धातो**भावार्थत्वं दर्शयति–**अवतेरिति**, अव रक्षणगतिकान्तिप्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिष्विति भावार्थेऽवधातोः प्रसिद्धः समन्ततो भावः पर्यवशब्दस्येति भावः । **कर्मधारयसमासं दर्शयति–वर्णादय 25 एवेति**, पर्यायाश्च पर्यवाश्च पर्यवाः प्राकृतशब्दापेक्षया स्वरूपत्वात्सरूपैकशेषः, वर्णादय एव पर्यवाः वर्णादिपर्यवाः, यद्वा पर्यवशब्देनैवोभयोर्ग्रहणं ततश्चैको वर्णपर्यवशब्दो बहुव्रीहिसमासविषयः, अपरश्च कर्मधारयविषयः, तयोर्द्वन्द्वे सरूपैकशेषः । तथा च तत्पदेन समासद्वयं सङ्गृहीतं भवतीति दर्शयति–**सरूपेति** । एकेन शब्देनोभयोर्ग्रहणं केन धर्मेणेत्याशङ्क्य समाधत्ते–**अवेति**, समन्ताद्भवनधर्मस्यैकत्वेनोभयोर्ग्रहणं, सप्रभेदानि हि द्रव्यगुणकर्माणि सत्तापेक्षयाऽभिन्नानि तस्मात्तेन धर्मेणोभयोर्ग्रहणमिति भावः, एकवाक्यभावात् एकरूपत्वादित्यर्थः । वर्ण एव पर्यवो यस्मिन्निति बहुव्रीहौ वर्णानां वर्ण एव पर्यव इत्यर्थलाभात् कथं तत्परि- 30 गमनं पर्यवनञ्चेति शङ्कते–**कथमिति** कार्यगुणानां कारणगुणपूर्वकत्वात् पृथिव्यां पाकजत्वाच्च वर्णेभ्यो वर्णोत्पत्तिरिति समा-

१–२ सि. क. सङ्गीत० । ३ सि. क. परिगमनामि । ४ सि. क. वेतेर्धा० ।

तद्भावयितुं सोपपत्तिकं सनिदर्शनम् -वर्णेभ्य एवेत्यादि यावद्गृह्यन्त इति, वर्णेभ्य एव रूपादिभ्यो गुणान्तरं चित्रवर्णो रक्तश्यामपाण्ड्वादिः पाकजो वा तदारम्भनियमादेवेति, यथोक्तं-'येषामधिकृतमारम्भसामर्थ्यम्' ( ) इति, पृथिव्यादिषु वर्णान्तरं भवति समन्ताद्गच्छति वा तानि वर्णादिपर्यवाः पर्याया वा, घटादीनि वा द्रव्याण्यारब्धानि तैरप्यन्यारब्धद्रव्याणि प्रागभावप्रध्वंसात्मकानि वर्णाद्या-
5 त्मकान्येव मृत्पिण्डाद्यवस्थानानि घटादीनि कपालादीनि च गृह्यन्ते, तस्मात्तैः प्रागभावप्रध्वंसात्मकैर्घटाद्यात्मभूतैर्वर्णादिपर्यवैरशाश्वती, कार्यकारणभूतैरित्यर्थः, कर्मधारये वा वर्ण एव च पर्यवो गुणो यथासम्भवमित्यादि, गुणा इमे, तैरशाश्वतीति च वर्तते, वर्णादिपर्यवैरिति सम्बन्धः, यथासम्भवमारब्धानारब्धद्रव्यगताः केचित् श्यामादयोऽनारब्धचतुर्विधाणुगतास्तदारब्धद्रव्यान्तरे कारणगुणपूर्वकाश्चतुर्विधे, पार्थिवेष्वेव रक्तादयः पाकजाः संयोगविभागौ [स]क्रियेषु पृथक्त्वं सर्वद्रव्येषु परत्वापरत्वे
10 दिग्देशकालापेक्षे तल्लिङ्गे, आदिग्रहणात् गन्धशब्दज्ञानादयोऽसाधारणगुणाः पृथिव्याकाशात्मादीनां, एकत्वादिसंख्याः सर्वद्रव्यसाधारणाः, एवं गंधादिभिरिति तृतीयानिर्देशादेभिश्चाशाश्वती, नित्या [च] रूपादिमूर्त्तिसंस्थानसामान्यधर्मैर्द्रव्यार्थतो रत्नप्रभेत्यर्थः ।

इति विधिनियमविध्यरः षष्ठो नयो नैगमभेदो द्रव्यास्तिकान्तःपाती परिसमाप्तः, अयं चैष च सविभागविन्यस्तश्चक्रार इवार इति सम्पिण्ड्यैकस्य त्रिशतभेदस्य संक्षेपेण षड्भेदाः,
15 एषु च पर्यवशब्दो भाववचनः समन्ताद्भवनात् पर्यायशब्दः समन्ताद्गतिवचनः द्रव्यस्य वर्णाद्यात्मना परितो गमनादिति ।

( इतीति ) इति [विधिनियमविध्यरः] षष्ठो नयो नैगमभेदो द्रव्यास्तिकान्तःपाती परिसमाप्तः, इतिशब्दस्य समाप्त्यर्थत्वात्, विधिनियमविध्यर इति नामनिर्देशः, अयश्चैष च सविभागविन्यस्तश्चक्रार इवार इति, अयश्चेत्यतीता एष च षष्ठः, सम्पिण्ड्यैकस्य त्रिशतभेदस्य संक्षेपेण षड् भेदाः, तत्र विधिः,

20 वर्ते-वर्णेभ्य एवेति । पृथिव्यादेः कार्यभूता घटादयोऽपि वर्णात्मकाः, तेभ्यो वर्णपर्यवस्य भावादित्याशयेनाह-पृथिव्यादिष्विति पृथिव्यादिसन्तानभूतकार्यस्य घटादेस्तत्प्रागभावतत्प्रध्वंसस्यापि वर्णत्वात् पृथिव्यादेः कार्याणि द्रव्यगुणकर्माणि वर्णपर्यवा एव, तैः रत्नप्रभाऽशाश्वतीति भावः । कर्मधारयसमासापेक्षया तात्पर्यमाह-कर्मधारये वेति । अत्र पक्षे वर्णपर्यवशब्देन गुणानामेव ग्रहणमिति सूचयति-गुणा इम इति । शेषं पूरयति-अशाश्वतीति । भावार्थमादर्शयति-यथा सम्भवमिति पृथिव्यादिच॰ विधपरमाणुगताः श्यामादयो गुणा नित्यद्रव्यगताः, तदारब्धद्व्यणुकादिगतास्तु कारणगुणपूर्वकाः रूपादयः पृथि-
25 व्यान्तु रूपादयः पाकजा अपि, सर्वद्रव्येषु संयोगविभागौ पृथिव्यप्तेजोवायुमनःसु सक्रियेषु पृथक्त्वं गुणः, परत्वापरत्वे दिक्कृते कालकृते च, श्यामादय इत्यत्रादिग्रहणात् गन्धशब्दज्ञानादीनां ग्रहणं, तत्र गन्धः पृथिव्यां शब्द आकाशे ज्ञानादय आत्मनि, एकत्वादिसंख्यास्तु सर्वद्रव्यगताः, एवंभूतैर्वर्णपर्यवैर्गुणैः रत्नप्रभाऽशाश्वतीति भावः । रत्नप्रभायाः शाश्वतत्वमपि रूपादिसामान्येन मूर्त्या संस्थानसामान्येन द्रव्यत्वादिसामान्यधर्मेण चेति दर्शयति-नित्येति । एतन्नयनिरूपणं सङ्गृह्णाति-इतीति । इति ... करणप्रकारादिसमाप्तिष्विति कोशादितिशब्दस्यानेकार्थत्वेनात्र विवक्षितमर्थं दर्शयति-इतिशब्दस्येति । उक्तानां नयानां
30 षण्णां द्रव्यार्थिकत्वात् प्रान्ते प्रत्येकं चक्रस्यारत्वं रूपयति-अयश्चेति । अधुनैव निरूपितत्वेन बुद्धिस्थत्वात् प्रत्यक्षविषयेदंशब्देनातीतानां पञ्चानां नयानां ग्रहणम्, समीपतरवर्तित्वाच्च षष्ठस्य नयस्यैतच्छब्देनेति दर्शयति-अयश्चेत्यतीता इति । सम्पि-

१ सि. क. वर्णाद्यनात्म० । २ सि. क. °सम्भव इत्या० । ३ सि. क. स्वर्णादि० । ४ सि. क. °निर्देशोऽयं तवचक्रस-विभा० । ५ सि. क. अयं चेत्यतीतान्यं चेतं च षष्ठं ।

विधिविधिः, विधेर्विधिनियमनं, विधेर्नियमः विधिनियमं पष्ठश्चायं विधिनियमविधिरिति षड्भेदो द्रव्यास्तिक उपवर्णितः, षडप्येते भेदा द्रव्यास्तिकस्यैवेत्यर्थः, एषु च षट्सु नयेषु पर्यवशब्दो भाववचनः, समन्ताद्भवनात् पर्यवः, सर्वात्मना भवनात्, पर्यायशब्दः समन्ताद्गतिवचनः, समन्ताद्गमनपर्यायद्रव्यस्य वर्णाद्यात्मना पर्यायः, द्रव्यस्य वर्णाद्यात्मना परितो गमनात् अयञ्च विग्रहार्थः, षण्णामपि सामान्येनेष्टं द्रव्यं विशेषेण तु यथा दर्शनमेव विध्यादिषु प्रत्येकं व्याख्यातमस्वरूपभेदमनुगन्तव्यं सर्वगतिसामान्यमत्यजद्भिः, सर्वस्य सर्वात्मकत्वात्, एकस्य सर्वात्मकत्वात्, एकैकस्य सर्वात्मकत्वात् सर्वस्य चैकैकात्मकत्वात् सर्वगतिमेव यथादर्शनमाह द्रव्यशब्दार्थसूत्रम्, तत्र व्याख्यातमेव यथादर्शनं द्रव्यप्राधान्यात्, पर्यायोपसर्जनादिहान्ते पर्यायशब्दो व्याख्यात इति ।

द्रव्यार्थनयविकल्पाः समाप्ताः ॥

---

षडप्येतेति, नैगमसङ्ग्रहव्यवहाररूपद्रव्यार्थिकनयस्य मिलित्वा त्रिशतभेदत्वात् तस्यैवैते संक्षेपेण षड्भेदा इत्यर्थः । नामग्राहं षड्भेदानाचष्टे-तत्रेति । द्रव्यप्राधान्येष्वेषु नयेषु पर्यवपर्यायशब्दयोरर्थमाह-एषु चेति, पर्यवपर्यायशब्दयोरर्थमभिधाय भावार्थमाचष्टे-षण्णामपीति, प्रथमस्य सर्वप्रमाणाविरोधितव्यवहारसमवस्थलोकपरिभावदेव सामान्यविशेषौ घटादिविषयौ नान्यथेति विधिरिति व्यवहारैकदेशविषयत्वाद्विशेषमर्दाणंद्रव्यविषयत्वाद्द्रव्यार्थता, द्वितीयस्य यदृच्छतया विधिः सर्वात्मकत्वेन सिद्ध्यति लोके यच्च तथाऽन्यथा च भवति एष विधिविधिरव्यवस्थितव्याख्याननैकत्वभेद इति सर्वस्यैकात्मकत्वात् भवनलक्षणद्रव्यविषयत्वाद्द्रव्यार्थता, तृतीयस्य पूर्वोदितनयवादस्वरूपस्य विधेः सर्वतो विधानात्मा विधिर्विधीयते नियम्यते च न सर्वं एकात्मकं किन्तु सर्वं सर्वात्मकमिति गुणसन्द्रावलक्षणद्रव्यार्थता, चतुर्थस्य एकैकस्य प्रकृतिपुरुषस्य सर्वरूपद्रव्यभवनपरमार्थत्वादेकं सर्वं सर्वमेकञ्चेति विधिनियम्यत्वादेकैकस्य सर्वसर्वात्मकत्वात् द्रव्यत्वजीवत्वचेतनत्वमूर्तत्वादिधर्मापरित्यागेनाविच्छेदेन सर्वभेदेषु व्यापनशीलत्वाद्द्रव्यार्थता, पञ्चमस्य भवितृभवनयोरन्यतरप्राधान्येऽसत्त्वापत्तेः प्राधान्यादुभयौ विधिनियमाविति कर्तृसाधनाविनाभाविभावसाधनद्रव्यशब्दार्थत्वात् सर्वात्मकयभावनाद्द्रव्यार्थता, षष्ठस्य द्रव्यादिषट्पदार्थानां साधर्म्यवैधर्म्ययोः परतः सत्त्वस्यासतो भवनस्य स्वतश्च सत्ताया विधानात् विधिनियमविधिरूपत्वाद्द्रव्यत्वाभिसम्बन्धाच्च द्रव्यार्थतेति भावः । तत्तद्ग्रन्थप्रान्तभागेषु द्रव्यशब्दार्थसूत्रं तत्तदभिप्रायानुरूपं व्याख्यातमेव द्रव्यप्राधान्यात्, न तु पर्यवशब्दार्थ उक्तः, उपसर्जनत्वात्, न त्वसम्मतत्वात्, सम्मतत्वादुपसर्जनत्वादेव चेह स शब्दो व्याख्यात इत्याह-यथादर्शनमाहेति ।

इति विजयलब्धिसूरिविरचिते विषमपदविवेचने नयचक्रशास्त्रस्य
षष्ठो विधिनियमविध्यरः समाप्तः ।
समाप्ताश्च द्रव्यप्राधान्यभङ्गाः ।



# श्रीलब्धिसूरीश्वर जैनग्रन्थमाला

## प्रकाशितग्रन्थसूची



| क्रम | ग्रन्थ | मूल्य |
|---|---|---|
| १ | जैनव्रतविधिसंग्रह | ०–८–० |
| २ | हीरप्रश्नोत्तराणि | ०-१२-० |
| ३ | श्रीपालचरित्रम् | भेट |
| ४ | तत्त्वन्यायविभाकरः ( मूलः ) | ०–८–० |
| ५ | पञ्चसूत्रम् | भेट |
| ६ | हरिश्चन्द्रकथानकम् | भेट |
| ७ | वैराग्यरसमञ्जरी | भेट |
| ८ | चैत्यवन्दनचतुर्विंशतिः | ०–२–० |
| ९ | कविकुलकिरीट | ०–८–० |
| १० | मूर्तिमंडन ( गुजराती ) | ०–४–० |
| ११ | मूर्तिमंडन ( हिन्दी ) | भेट |
| १२ | आरम्भसिद्धिः ( सटीका ) | २–८–० |
| १३ | तत्त्वन्यायविभाकरः ( सटीकः ) | ५–०–० |
| १४ | दीपालिकाकल्पः | भेट |
| १५ | सम्मतितत्त्वसोपानम् | ५–०–० |
| १६ | सूत्रार्थमुक्तावली | ५–०–० |
| १७ | सकलार्हत्स्तोत्रम् ( सटीकम् ) | भेट |
| १८ | आत्मानन्दस्तवनावली | ०–४–० |
| १९ | धन्यनारी | भेट |
| २० | द्वादशारनयचक्रम् १ भागः | ६–०–० |
| २१ | प्रगतिनी दिशा | २–०–० |
| २२ | नूतनस्तवनावली | ४–०–० |
| २३ | श्राद्धविधिप्रकरण ( गुजराती ) | ५–०–० |
| २४ | श्रेयांसनाथचरित्रम् | भेट |
| २५ | जैनमतका स्वरूप | भेट |
| २६ | द्वादशारनयचक्रम् २ भागः | ६–०–० |

---

## प्रकाश्यमानग्रन्थसूची

१ आवश्यकमुक्तावली

२ कविकुलकिरीट २ भागः



# जैनतर्कशास्त्रना महत्त्वना ग्रन्थरत्नो



## द्वादशारनयचक्र : : प्रथमभाग

जैनतर्कसाहित्यमां द्वादशारनयचक्रनुं अति महत्त्वनुं स्थान छे. महावादी श्री मल्लवादीसूरिजीए, आ ग्रन्थमां जैनतर्कोने खूबज विशद अने विशिष्ट शैलीमां निरूप्यां छे. श्रीसिंहसूरगणि क्षमाश्रमण-कृत न्यायागमानुसारिणी विस्तृत व्याख्यार्थी अलंकृत आ प्रथम भागमां, प्रथम अने द्वितीय एम बे अर आपवामां आव्या छे. पू. श्रीविजयलब्धिसूरीश्वरजी महाराज कृत 'विषमपद विवेचन' नामक विस्तृत टिप्पणो पण साथेज अपायेलां होई, वांचकोने ग्रन्थनुं हार्द समजवामां घणीज सरलता थाय तेम छे.

मूल्य ६ रुपिया.



## तत्त्वन्यायविभाकर (सटीक)

जैनन्याय अने तत्त्वज्ञानना अभ्यासीओ माटे आ ग्रन्थ घणोज महत्त्वनो छे. अनेक न्याय-ग्रन्थोमां विकीर्ण थयेलां जैन न्यायना विचारोनुं आ ग्रन्थमां संकलन करायेलुं होवाथी, अभ्यासी-ओने अनेक ग्रन्थोनो सार आ एकज ग्रन्थमांथी मली रहे छे. पू. आचार्य देवश्री विजयलब्धि-सूरीश्वरजी महाराज विरचित आ ग्रन्थ स्वोपज्ञ-टीकासहित प्रकाशित थयो छे. अनेक दर्शन पंडितोए आनी प्रशंसा करेली छे.

मूल्य ५ रुपिया.



## सम्मति-तत्त्व-सोपान

पू. आचार्यश्री सिद्धसेन दिवाकरजी प्रणीत सम्मति प्रकरण अने पू. आचार्यश्री अभयदेव-सूरिकृत तेनी तत्त्वबोधिनीवृत्ति, न्याय साहित्यनां महामूलां रत्नो छे. विशालकाय आ ग्रन्थनुं संक्षिप्त संकलन आमां करवामां आव्युं छे. सटीक सम्मतिप्रकरणनो अभ्यास करतां पहेलां आनो अभ्यास करवाथी सरस मार्गदर्शन मलवानो संभव छे. आ संक्षिप्तीकरण पू. आचार्यदेव श्रीमद् विजय लब्धिसूरीश्वरजी महाराजाए कर्युं छे.

मूल्य ५ रुपिया.

